# जैमिनीयन्यायमालाविस्तरः ।

श्रीमाधवाचार्य्यविरचितः ।

वि, ए, उपाधिधारिणा

श्रीजीवानन्द विद्यासागरभट्टाचार्य्येण

संस्कृतः प्रकाशितश्च ।


कलिकातानगर्य्याम् ।

सरस्वतीयन्त्रे मुद्रितः

इं १८८३ ।

# जैमिनीयन्यायमालाविस्तरस्य

## प्रथमोऽध्यायः ।

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
युक्तिं मानवतीं विदन् स्थिरधृतिर्भेदे विशेषार्थभाक्
आसाहःक्रमकृत्ययुक्तिनिपुणः स्वाध्यातिदेशोन्नतिः ।
नित्यस्फूर्त्यधिकारवान् गतसदाबाधः स्वतन्त्रेश्वरो
जागर्त्ति श्रुतिमत्प्रसङ्गचरितः श्रीबुक्कणक्ष्मापतिः ॥ २ ॥
यद् ब्रह्म प्रतिपाद्यते प्रगुणयत् तत् पञ्च मूर्तिप्रथां
तत्रायं स्थितिमूर्तिमाकलयति श्रीबुक्कणक्ष्मापतिः ।
विद्यातीर्थमुनिस्तदात्मनि लसन् मूर्त्तिस्त्वनुग्राहिका
तेनास्य स्वगुणैरखण्डितपदं सार्वज्ञमुद्योतते ॥ ३ ॥
इन्द्रस्याङ्गिरसो नलस्य सुमतिः शैब्यस्य मेधातिथिः
धौम्यो धर्मसुतस्य वैण्यनृपतेः स्वौजा निमेर्गौतमिः ।
प्रत्यग्दृष्टिरसन्धतीसहचरो रामस्य पुण्यात्मनो
यद्वत् तस्य विभोरभूत् कुलगुरुर्मन्त्री तथा माधवः ॥ ४ ॥
स खलु प्राज्ञजीवातुः सर्वशास्त्रविशारदः ।
अकरोत् जैमिनिमते न्यायमालां गरीयसीम् ॥ ५ ॥
तां प्रशस्य सभामध्ये वीरश्रीबुक्कभूपतिः ।
कुरु विस्तरमस्यास्त्वमिति माधवमादिशत् ॥ ६ ॥

स भव्याद् भारतीतीर्थयतीन्द्रचतुराननात् ।
कृपामव्याहतां लब्ध्वा परार्घ्यप्रतिमोऽभवत् ॥ ७ ॥
तन्नत्वा माधवाचार्यो विद्वदानन्ददायिनीम् ।
जैमिनीयन्यायमालां व्याचष्टे बालबुद्धये ॥ ८ ॥

न्यायमालाया आदौ स्वकीयग्रन्थत्वद्योतनाय स्वमुद्रा-उपन्नकायगर्भं देवतानमस्कारप्रतिपादकं श्लोकं पठति । वागीशाद्या इति ।

इष्टदेवता नमस्कृत्य चिकीर्षितार्थपरिपालनाय पालके वाग्मिनि विद्यमानं महिमानमनुस्मारयति युक्ति मान मतामिति । अत्र चिकीर्षितधर्मशास्त्रे वर्तमानानां द्वादशा-ध्यायानां च प्रतिपाद्या अर्था ये च नीतिशास्त्रोक्ता राजधर्मास्ते सर्वेऽप्यस्मिन् भूपतौ उपलभ्यन्ते । नीतिपक्षे प्रक्रियोगः सन्धिः । सा च शक्तिः मानवती । मानः सत्कारः तद्रूपे सामभेददानदण्डरूपे उपायेषु प्रथमः उपायः । वैरिणो भेदो द्वितीय उपायः । एताभ्यां दानदण्डावप्युप-लक्ष्येते । एतैश्चतुर्भिरुपायैर्विशेषेणार्थं धनं भजति प्राप्नोति । एतावता शक्तित्रयं कथितः । अवशिष्टेन स्वराज्यप्रतिपालन-प्रकारः प्रतिपाद्यते । व्यासेषु अमात्यप्रभृतिषु पुरुषेषु परमोद्योगस्य व्यापारस्य योग्यो नान्यस्य इत्येवमूहापोहः । इ-कुशलः । राजसभायामेते तपस्विनः पूज्या विप्रा दक्षिण-भागे उपवेशनीया एते च भृत्या वामभागे इति क्रमं करोति । तत् तत् धामेषु अधिकृतान् पुरुषान् उचितबुद्धि-पटानेन प्रयोक्तुं निपुणः । समुद्रपर्यन्तत्वं नारिबहुलस्य देशस्य उन्नतिः समस्तभोग्यवस्तुसम्पत्तिः । सा च परराष्ट्र-

निवासिभिः सकलप्राणिभिः श्लाघ्यते ; इदं कर्त्तव्यमिदं नेत्येवं कार्य्याकार्य्यविषया स्फुर्त्तिस्तस्यामधिकारोऽस्य राज्ञो नित्यः । सर्वत्राप्रतिहतबुद्धित्वात् । गतो विनिवारितः सतां तपस्विनाम् आबाधो विघ्नो येनासौ गतसदाबाधः । देशान्तराधिपतीनां राज्ञाम् एतदधीनत्वेनापरप्रेष्यत्वादयं स्वतन्त्रः । जगदीश्वरस्य विद्यातीर्थमुनेर्भोगमूर्त्तित्वेनायं सेश्वरः । यस्य सभायां गोष्ठीरूपः प्रसङ्गो वेदार्थविषयत्वेन श्रुतिमान् । यदीयं चरितमपि निरन्तरं वेदोक्तकर्म्मार्थानुष्ठानरूपत्वेन श्रुतिमत् भवति । सोऽयं श्रुतिमतप्रसङ्गचरितः । एवंविधो बुक्कणभूपतिः अन्तः परमेश्वरध्याने बहिः प्रजापालने च नित्यं जागर्त्ति । यथा नीतिशास्त्रोक्तेषु सामभेदादिषु अयं कुशलः । तथा सर्वज्ञावतारत्वात् धर्मशास्त्रोक्तेषु प्रमाणादिप्रसङ्गान्तेषु अध्यायार्थेषु कुशलः । ते च अध्यायार्था उपरिष्टात् प्रदर्शयिष्यन्ते ।

राज्ञः सर्वज्ञत्वं सोपपत्तिकं प्रकटयति यद् ब्रह्म प्रतिपाद्यत इत्यादिना । सर्वासूपनिषत्सु प्रतीयमानं यत् परं ब्रह्म तदेव शिवागमेषु सृष्टिस्थितिसंहारनिरोधनानुग्रहलक्षणपञ्चकृत्यसिद्ध्यर्थं सद्योजाततत्पुरुषाघोरवामदेवसद्योजातलक्षणानां पञ्चानां मूर्त्तीनां प्रथां प्रसिद्धिं विस्तारं वा प्रगुणयति प्रकटीकरोतीति प्रतिपाद्यते । तत्र तासु मूर्त्तिष्वयं भूपालः स्थितिमूर्त्तिं धत्ते । तस्या मूर्त्तेरात्मनि लसन् विद्यातीर्थमुनिः कृत्स्नस्य जगतोऽनुग्राहिका मूर्त्तिरित्युच्यते । यस्मादयं भूपो वेदान्तोक्तं परं ब्रह्म यस्माच्चागमोक्ता महेश्वरस्य स्थितिमूर्त्तिर्यस्माच्च श्रीविद्यातीर्थमुनि

स्वदात्मनि संनिधाय प्रकाशते। तस्मात् सर्वज्ञत्वमस्य राज्ञ उत्कर्षेणाविद्वदङ्गनागोपालमविवादेन प्रतिभासते।

उक्तगुणोपेतस्य राज्ञो मन्त्रिणं नानापुराणप्रसिद्धदृष्टान्तैर्हितकारितया प्रशंसति। इन्द्रस्याङ्गिरस इति।

चिकीर्षितग्रन्थे श्रद्धातिशयमुत्पादयितुं कर्तृगौरवं प्रकटयति।

श्रुतिस्मृतिसदाचारपालको माधवो बुधः।
स्मार्तं व्याख्याय सर्वार्थं द्विजार्थं श्रौत उद्यतः॥ ८॥

सर्ववर्णाश्रमानुग्रहाय पुराणसारपराशरस्मृतिव्याख्यानादिना स्मार्तो धर्मः पूर्वं व्याख्यातः। इदानीं द्विजानां विशेषानुग्रहाय श्रौतधर्मव्याख्यानाय प्रवृत्तः।

---

ग्रन्थसारिप्सुर्गुरुकमत्यपावकं सकलवेदशास्त्रप्रवर्तकत्वेनालोचितेष्टदेवतारूपं परमेश्वरमादौ नमस्कृत्य श्रोतृप्रवृत्तिसिद्ध्यर्थं विषयप्रयोजने दर्शयंस्तं ग्रन्थं प्रतिजानीते।

प्रणम्य परमात्मानं श्रीविद्यातीर्थरूपिणम्।
जैमिनीयन्यायमाला श्लोकैः संगृह्यते स्फुटम्॥ १॥

जैमिनिप्रोक्तानि धर्मनिर्णायकान्यधिकरणानि न्यायास्तेऽस्य ग्रन्थस्य विषयः। पठितुं सुशकैः कतिपयैरेव श्लोकैस्तेषां स्फुटीभावः प्रयोजनम्। न्यायमाला संगृह्यत इति ग्रन्थनामनिर्देशपूर्विका प्रतिज्ञा। तस्य करिष्यमाणग्रन्थस्य प्रकारं दर्शयति।

एको विषयसन्देहपूर्वपक्षावभासकः।
श्लोकोऽपरस्तु सिद्धान्तवादी प्रायेण कथ्यते॥ २॥

चत्वारोऽवयवा एक श्लोकेनोक्ताः क्वचित् क्वचित्।
यत्र क्वापि बहुश्लोकैरुच्यन्तेऽतो न विस्तरः॥ ३॥

एकैकस्याधिकरणस्य विषयः सन्देहः सङ्गतिः पूर्वपक्ष सिद्धान्तश्चेति पञ्चावयवाः। तत्र सङ्गतिरनन्तरमेव व्युत्पादयिष्यमाणेन प्रकारेण प्रत्यधिकरणं स्वयमेवोहितुं शक्यते। अवशिष्टानां चतुर्णामवयवानां संग्राहकाः क्वचित् बहवः श्लोकाः क्वचिदेक इत्यावापोद्वापाभ्यामन्ततः प्रत्यधिकरणं श्लोकद्वित्वे संख्या पर्य्यवस्यति। अतो बहुत्वात् बिभ्यता ग्रन्थगौरवशङ्का न कर्त्तव्या। तमेव ग्रन्थबाहुल्याभावं स्फुटीकुर्वन् रूपकव्याजेन सुबोधत्वं दर्शयति।

सर्वथापि सहस्रे द्वे नातिक्रामति संग्रहः।
मीमांसासागरस्तेन क्रीडापुष्करिणी भवेत्॥ ४॥

श्लोकेन श्लोकाभ्यां श्लोकैर्वा यथासम्भवं न्यायः संगृह्यताम्। सर्वथापि सहस्रन्यायसंग्रहरूपो ग्रन्थः श्लोकसहस्रद्वयपूर्त्तेरर्वागेव समाप्यते। न तु सहस्रद्वयमतिक्रामति भाष्यटीकादीनां बहुत्वाद् दुरवगाहत्वाच्च मीमांसा सागरसमा पूर्वमासीत्। क्रियमाणेन त्वनेनैव ग्रन्थेन दोषदूरहितेन राजपुत्राणां बालानां क्रीड़ार्थं निर्मितया नातिदीर्घ पुष्करिण्या समा भविष्यति। यद्यपि शास्त्रदीपिकादौ क्वचित् क्वचित् संग्रहश्लोकोऽस्ति तथापि न सर्वत्र विद्यते। यत्रास्ति तत्रापि विषयसंशययोरसंग्रहात् श्लोकपाठमात्रेणाधिकरणमुपन्यसितुं शक्यते। अतो न क्वापि गतार्थत्वं शङ्कनीयम्। सङ्गतिं व्युत्पादयति।

शास्त्रेऽध्याये तथा पादे न्यायसङ्गतयस्त्रिधा।

शास्त्रादिविषये ज्ञाते तत्तत्सङ्गतिरूह्यताम् ॥ ५ ॥

शास्त्रसङ्गतिरध्यायसङ्गतिः पादसङ्गतिश्चेति त्रिविधा सङ्गतिः। सा च शास्त्रादीनां त्रयाणामसाधारणे विषये ज्ञाते सति स्वयमेवोहितुं शक्या। शास्त्रस्याध्यायानां चासाधारणं विषयं दर्शयति।

धर्मो द्वादशलक्षण्यां व्युत्पाद्यस्तत्र लक्षणैः।
प्रमाणभेदशेषत्वप्रयुक्तिक्रमसंज्ञकाः ॥ ६ ॥
अधिकारोऽतिदेशश्च सामान्येन विशेषतः।
ऊहो बाधश्च तन्त्रञ्च प्रसङ्गश्चोदिताः क्रमात् ॥ ७ ॥

लक्षणान्यध्यायाः। द्वादशानां लक्षणानां समाहारो द्वादशलक्षणी। तादृशस्य द्वादशाध्यायोपेतस्य शास्त्रस्य धर्मो विषयः। प्रमाणादयः प्रसङ्गान्ता द्वादशपदार्थाः क्रमाद् द्वादशानामध्यायानां विषयाः। प्रथमेऽध्याये विध्यर्थवादादिरूपं धर्मे प्रमाणं निरूपितम्। द्वितीये यागदानादिकर्मभेदः। तृतीये प्रयाजादीनां दर्शपूर्णमासाद्यर्थत्वेन तच्छेषत्वम्। चतुर्थे गोदोहनस्य पुरुषार्थत्वप्रयुक्त्यानुष्ठानम्। न तु क्रत्वर्थत्वप्रयुक्त्येत्येवमादयः। पञ्चमे क्रमनियतिविशेषत्वादयः। षष्ठे कर्तुरधिकारो नान्धादेरित्यादयः। सप्तमे समानमितरच्छ्येनेनेत्यादिप्रत्यक्षवचनेनाग्निहोत्रादिनाम्नानुमितवचनेन च सामान्यतोऽतिदेशः। अष्टमे सौर्यं चरुं निर्वपेदित्यत्र निर्वापस्तद्धितेन देवतानिर्देश एकदेवतात्वमौषधद्रव्यकत्वमित्यादिलिङ्गेनाग्नेयपुरोडाशेऽतिकर्तव्यतैव नान्यस्येत्येवमादिर्विशेषतोऽतिदेशः। नवमे प्रकृतावग्नये जुष्टं निर्वपामि इति पठिते मन्त्रे विकृतौ सौर्यचरा-

वह्निपदपरित्यागेन सूर्य्यपदप्रक्षेपेण सूर्य्याय जुष्टं निर्व्वपामि इत्येवमाद्यूहः। दशमे कृष्णलेषु चोदकप्राप्तस्यावघातस्य वितुषीकरणासम्भवेन लोप इत्येवमादिर्बाधः। एकादशे बहूनामाग्नेयादीनां प्रधानानां सकृदनुष्ठितेन प्रयाजाद्यङ्गेनोपकार इत्यादितन्त्रम्। द्वादशे प्रधानस्य पशोरुपकारायानुष्ठितेन प्रयाजाद्यङ्गेन पश्वङ्गपुरोडाशेऽप्युपकार इत्यादिप्रसङ्गः। पादानामसाधारणं विषयं दर्शयति।

विध्यर्थवादस्मृतयो नाम चेति चतुर्विधम्।
प्रथमाध्यायगैः पादैश्चतुर्भिर्मानमीरितम्॥ ८॥

प्रथमे पादे विधिरूपं मानमीरितम्। द्वितीयेऽर्थवादरूपम्। अर्थवादो मन्त्रस्याप्युपलक्षकः। तृतीये स्मृतिरूपम्। स्मृतिराचारमप्युपलक्षयति। चतुर्थे उद्भिच्चित्रादिनामरूपम्॥

उपोद्घातः कर्मभेदमानं तस्यापवादगीः।
प्रयोगभेद इत्येते द्वितीयाध्यायपादगाः॥ ९॥

द्वितीयाध्यायस्य प्रथमे पादे आख्यातमेवापूर्व्वबोधकमपूर्व्वमद्भाव इत्यादिकः कर्मभेदचिन्तोपयुक्त उपोद्घातो वर्णितः। द्वितीये धातुभेदपुनरुक्त्यादिभिः कर्मभेदः। तृतीये रथन्तरादीनां कर्मभेदप्रामाण्यापवादः। चतुर्थे नित्यकाम्ययोः प्रयोगयोर्भेदः।

श्रुतिर्लिङ्गं च वाक्यादि विरोधप्रतिपत्तयः।
अनारभ्योक्तिबह्वर्थस्वाम्यर्था अष्टपादगाः॥ १०॥

तृतीयाध्यायस्य प्रथमे पादे शेषत्वबोधकानां श्रुति-

लिङ्गादीनां मध्ये श्रुतिर्विचारिता। द्वितीये लिङ्गम्। तृतीये वाक्यप्रकरणादि। चतुर्थे निवीतोपवीतादिष्वर्थवादत्वविधित्वादिनिर्णयहेतुः श्रुत्यादेः परस्परविरोधसद्भावः। पञ्चमे प्रतिपत्तिकर्माणि। षष्ठेऽनारभ्याधीतानि। सप्तमे बहुप्रधानोपकारकप्रयाजादीनि। अष्टमे याजमानानि॥

प्रधानस्य प्रयोक्तृत्वमप्रधानप्रयोक्तृता।

फलचिन्ता जघन्याङ्गचिन्तेत्येते चतुर्थगाः॥ ११॥

चतुर्थाध्यायस्य प्रथमे पादे प्रधानभूतामिक्षादध्यानयनस्य प्रयोजिकेत्यादिप्रधानप्रयोक्तृत्वं विचारितम्। द्वितीये त्वप्रधानम्। वत्सापाकरणं शाखाच्छेदे प्रयोजकमित्याद्यप्रधानप्रयोक्तृत्वम्। तृतीये जुहूपर्णमयीत्वादेरपापश्लोकश्रवणादिफलभावाभावचिन्ता। चतुर्थे राजसूयगतजघन्याङ्गाक्षद्यूतादिचिन्ता।

श्रुत्यादिभिः क्रमस्तस्य विशेषो वृद्ध्यवर्धने।

श्रुत्यादेर्बलता चेति पञ्चमाध्यायपादगाः॥ १२॥

पञ्चमाध्यायस्य प्रथमे पादे श्रुत्यर्थपाठादिभिः क्रमो निरूपितः। द्वितीये वाजपेयगतेषु सप्तदशसु पशुष्वेकैकधर्मसमापनमित्यादिक्रमविशेषः। तृतीये पञ्चप्रयाजादीनामावर्त्तनेनैकादश्यमित्यादिवृद्धिः। अदाभ्यग्रहचितिष्वोरमावृत्तिरित्यादिवृद्ध्यभावः। चतुर्थे क्रमनियामकानां श्रुत्यर्थपाठादीनां प्रबलदुर्बलभावः।

अधिकारी तस्य धर्माः प्रतिनिध्यर्थलोपने।

दीक्षा सत्रं देयवह्नी षष्ठे पादेष्वमी स्थिताः॥ १३॥

षष्ठाध्यायस्य प्रथमे पादे कर्माधिकारः कर्त्तुरस्त्यन्यादेर्नास्ति स्त्रिया अस्ति । योऽस्ति स च पत्न्या सहेत्येवमादिनाधिकारी निरूपितः । द्वितीये सत्राधिकारिणां प्रत्येक कृत्स्नं फलम् । दर्शपूर्णमासयोः कर्त्रैक्यनियमः । काम्यकर्मसमापनीयमित्येवमादयोऽधिकारिधर्मा उक्ताः । तृतीये द्रव्यस्य प्रतिनिधिरस्ति । देवादीनामग्न्यादीनामधिकारिणश्च स नास्तीत्यादिनिरूपणम् । चतुर्थे पदार्थलोपनं विचारितम् । अवत्तनाशे सत्याज्येन यजेत् । इडायष्टेनाभिमर्षति शेषान्न ग्राह्यमित्यादिकम् । पञ्चमे कालापराधेन चन्द्रोदये सत्यभ्युदयेष्टिः प्रायश्चित्तम् । ज्योतिष्टोमस्यैकादयो दीक्षाः । द्वादशाहस्य द्वादश दीक्षा इत्यादि निरूपितम् । षष्ठे सत्राधिकारिणस्तुल्य कल्पा एव । सत्र विप्रस्यैवेत्येवमादिकं चिन्तितम् । सप्तमे पित्रादिकं न देयम् । महाभूमिर्न देयेत्येवमादिर्देयविचारः । अष्टमे लौकिकाग्नौ उपनयनहोमः । स्थपतीष्टिस्तत्रैवेत्येवमाद्यग्निविचारः कृतः ।

प्रत्यक्षात्त्वतिदेशोऽस्य शेषः साम निरूपणम् ।
नामलिङ्गातिदेशौ द्वौ सप्तमाध्यायपादगाः ॥ १४ ॥

सप्तमाध्यायस्य प्रथमे पादे समानमितरच्छ्येनेनेत्यादिप्रत्यक्षवचनातिदेशः । द्वितीये रथन्तरशब्देन गानमात्राभिधायिना गानस्यैवातिदेश्यत्वमित्येतादृशः पूर्वोक्तातिदेशस्य शेषो विचारितः । तृतीयेऽग्निहोत्रनाम्नातिदेशः । चतुर्थे निर्वापोपधद्रव्यादिलिङ्गातिदेशः ।

स्पष्टलिङ्गाद्यथा स्पष्टात् प्रबलादपवादतः ।

अतिदेशविशेषाः स्युरष्टमाध्यायपादगाः ॥ १५ ॥

अष्टमाध्यायस्य प्रथमे पादे स्पष्टेन लिङ्गेनातिदेशविशेषः। तद् यथा। सौर्य्यचरावतिदेशकानि निर्वापस्तद्धितेन देवतानिर्देश एकदेवतात्वमौषधद्रव्यकत्वमित्यादीनि स्पष्टान्याग्नेयलिङ्गानि। द्वितीये त्वस्पष्टैर्लिङ्गैरतिदेशः। तद् यथा। वाजिने हविः सामान्येन लिङ्गेन पयोविध्यन्तोऽतिदिश्यते। तत्र लिङ्गमस्पष्टम्। शीघ्रं तद्बुद्ध्यनुत्पादनात्। तृतीये प्रबलेन लिङ्गेनातिदेशः। तद् यथा। आभिचारिकेष्टावाग्नावैष्णवसारस्वतबार्हस्पत्येषु हविःषु त्रित्वेन लिङ्गेन यथाक्रममाग्नेयादिविध्यन्ते प्राप्ते द्विदेवत्यत्वेन लिङ्गेन प्रथम आग्नावैष्णवे तृतीयस्याग्नीषोमीयस्य विध्यन्तोऽतिदिष्टः। प्रबलञ्च द्विदेवत्यत्वम्। शब्दोच्चारणमात्रेण सहसा प्रतिभासात्। क्रमस्तु विलम्बितप्रतीत्या दुर्बलः। चतुर्थे दर्विहोमेष्वतिदेशोऽपोद्यते।

ऊहारम्भोऽथ सामोहो मन्त्रोहस्तत्प्रसङ्गतः।
नवमाध्यायपादेषु चतुर्ष्वेते प्रकीर्त्तिताः ॥ १६ ॥

नवमाध्यायस्य प्रथमे पादे उपोद्घातपूर्वकमूहविचारप्रारम्भः। तत्र प्रयाजादयो धर्मा अपूर्वप्रयुक्ताः। अवघातप्रमन्त्रादिष्व विवक्षितं व्रीह्यग्न्यादिस्वरूपं साधनविशेषत्वमात्रं विवक्षितमित्यादिरुपोद्घातः। सवितृश्विपूषशब्दानां विकृतिषु नास्त्यूहः। अग्निशब्दस्यास्त्यूह इत्यादिक ऊहविचारारम्भः। द्वितीये सपरिकरः सामोहः। तृतीये मन्त्रोहः। चतुर्थे मन्त्रोहप्रसङ्गापतितो विचारः।

द्वारलोपोऽस्य विस्तारः कार्य्यैकत्वं समुच्चयः।
ग्रहसामप्रकीर्णानि नञर्थश्चाष्टपादगाः॥ १७॥

दशमाध्यायस्य प्रथमे पादे बाधहेतुर्द्वारलोपो निरूपितः। तद् यथा। स्वयंकृता वेदिर्भवतीत्यत्र वेदिनिष्पादनरूपस्य द्वारस्य लोपेन निष्पादकानामुद्धननादीनां बाधः। कृष्णलेषु वितुषीकरणरूपस्य द्वारस्य लोपेनावघातस्य बाधः। द्वितीये संक्षेपेणोक्तस्य द्वारलोपस्य बहुभिरुदाहरणैर्विस्तारः। तृतीये बाधकारणं कार्य्यैकत्वम्। तद् यथा। प्रकृतौ गवाश्वादिदक्षिणाया ऋत्विक्परिक्रयः कार्य्यं। तथा विकृतिरूपे भूनाम्न्येकाहे धेनुरूपाया दक्षिणायास्तदेव कार्य्यम्। ततो धेन्वा गवाश्वादिदक्षिणा विकृतौ चोदकप्राप्ता बाध्यते। चतुर्थे नक्षत्रेष्टिविहिता उपहोमाश्चोदकप्राप्तैर्नारिष्टहोमैः सह समुच्चीयन्त इत्यादिःसमुच्चयः। पञ्चमे षोडशिग्रहः प्रकृतिगामी। स चाग्रयणपात्रादेव ग्रहीतव्य इत्यादिर्बाधप्रसङ्गागतो ग्रहादिविचारः। षष्ठे साम त्वचे गेयमित्यादिर्बाधप्रसङ्गागतः सामविचारः। सप्तमे पशुङ्गेषु हविर्भेदः। एहमेधीयमपूर्वकर्मेत्यादिर्बाधप्रसङ्गागतः प्रकीर्णविचारः। अष्टमे नानुयाजेष्विति पर्य्युदासो न सोम इत्यर्थवादो नातिरात्र इति प्रतिषेध इत्यादिर्बाधोपयुक्तो नञर्थविचारः।

उपोद्घातस्तथा तन्त्रावापौ तन्त्रस्य विस्तृतिः।
आवापविस्तृतिश्चैका दशाध्यायस्य पादगाः॥ १८॥

एकादशाध्यायस्य प्रथमे पादे तन्त्रस्योपोद्घातो वर्णितः। द्वितीये तन्त्रावापौ संक्षेपेणोक्तौ। तृतीये तन्त्रमुदा-

इत्यबाहुल्येन प्रपञ्चितम्। चतुर्थे तथैवावापः प्रपञ्चितः।

प्रसङ्गस्तन्त्रिनिर्णीतिः समुच्चयविकल्पने।

द्वादशाध्यायपादार्था इति पादार्थसंग्रहः ॥ १९ ॥

द्वादशाध्यायस्य प्रथमे पादे पशुधर्माणां पशुपुरोडाशे प्रसङ्गः। सौमिकवेदिकस्तरकालीनकर्मसु प्रसङ्ग इत्यादिविचारः। द्वितीये सवनीयपशोस्तन्त्रित्वम्। ननु सवनीयपुरोडाशानाम्। विकृतिस्तन्त्रिणी न प्रकृतिः अन्वारम्भणीया विकृतिष्वपि स्यात्। ननु प्रकृतावेवेत्यादिविचारः। तृतीये त्वग्वासमसोः समुच्चयः। आधारगतानामङ्गत्वसत्त्वत्वादीनां समुच्चय इत्यादिकं प्राधान्येन। यवव्रीह्योर्विकल्प इत्यादिकं समुच्चयापवादत्वेनात्यल्पं चिन्तितम्। चतुर्थे ऐन्द्राबार्हस्पत्ययाज्यानुवाक्ययुगलयोर्विकल्प इत्यादिकं प्राधान्येन। याज्यानुवाक्ययोः समुच्चय इत्यादिकं विकल्पापवादत्वेनात्यल्पं चिन्तितम्। तदेवं द्वादशाध्यायगतेषु षष्टिसंख्याकेषु पादेषु प्रतिपाद्या अर्थाः संगृहीताः। ननु यथोक्तेभ्यः पादार्थेभ्योऽन्येऽप्यर्था बहवस्तत्तत्पादेषु विचार्यन्ते। तेषां कथं तत्तत्पादान्तर्भाव इत्याशङ्क्याह।

उपोद्घातापवादाभ्यां प्रसङ्गानुप्रसङ्गतः।

तत्तत्पादगतत्वेन विचारान्तरमुन्नयेत ॥ २० ॥

यथोक्तपादप्रतिपाद्यादन्येष्वर्थेषु यथोचितं कश्चिदुपोद्घातः कश्चिदपवादः कश्चित् प्रसङ्गपतितः कश्चिदनुप्रसङ्गपतित इत्येवं पादान्तर्भाव उन्नेयः। ननु सन्त्वेवमध्या-

यानां पादानां च व्यवस्थिता अर्थाः। तदीयस्तु क्रमः कथमवगन्तव्य इत्यत आह।

शास्त्रे पूर्वोत्तरोभावोऽध्यायानामभिधास्यते।

पादानान्तु तमत्रैव लेशादव्युत्पादयामहे॥ २१॥

एकस्मिन्नध्याये समाप्ते सत्यध्यायान्तरारम्भे तयोरध्याययोः पूर्वोत्तरोभावो वक्ष्यते। प्रथमाध्यायगतानां पादानां पूर्वोत्तरोभाव उदाहृते सति तद्व्युत्पत्त्या पादान्तरेष्वपि तस्योत्प्रेक्षितुं शक्यतया तमुदाहरति।

विधिः साक्षान्मिति धर्म्मे तस्य शेषोऽर्थवादगीः।

वेदमूला स्मृतिर्नाम वाक्यांशोऽमोष्वतः क्रमः॥ २२॥

जिज्ञास्यत्वेन प्रतिज्ञाते धर्मे विधिवाक्यं साक्षात्प्रमाणमिति तद्विचारः प्रथमे पादे युक्तः। अर्थवादवाक्यस्य विधिद्वारा प्रामाण्यात् विध्यनन्तरभावित्वम्। स्मृतिवाक्यस्य सार्थवादविधिरूपवेदमूलतया प्रामाण्यात् अर्थवादोत्तरभावित्वम्। नामधेयस्य वाक्यैकदेशत्वेन पूर्वोक्तत्रिविधवाक्यविचारोत्तरकालीनत्वम्। अनेन न्यायेनोत्तराध्यायगतपादानां परस्परं क्रम ऊह्यः। इत्थं शास्त्रस्याध्यायानां पादानां च क्रमविशेषविशिष्टानामसाधारणं प्रतिपाद्यमर्थं निरूप्य तन्निर्णयफलं दर्शयति।

ऊहित्वा सङ्गतीस्तिस्रस्तथा चान्तरसङ्गतिम्।

उद्देशाक्षेपदृष्टान्तप्रत्युदाहरणादिकम्॥ २३॥

शास्त्रादिप्रतिपाद्यार्थसम्बन्धितयाधिकरणे योजिते सति तस्याधिकरणस्य शास्त्रसङ्गतिरध्यायसङ्गतिः पादसङ्गतिश्चेति तिस्र ऊहिता भवन्ति। तद्यथा। प्रथमाध्यायप्रथम-

पादस्य द्वितीयाधिकरणे धर्मस्य लक्षणप्रमाणराहित्यं पूर्वपक्षीकृत्य तत्सद्भावः प्रतिपादितः। तस्याधिकरणस्य धर्मसम्बन्धितया धर्मविचारशास्त्रे सङ्गतिः। प्रमाणविचाररूपत्वात् प्रथमाध्याये सङ्गतिः। विधिवाक्यस्य प्रमाणत्वोपन्यासात् प्रथमपादे सङ्गतिः। एवमेतत् सङ्गतित्रयमूहितम्। तथा पूर्वोत्तराधिकरणयोः परस्परमवान्तरसङ्गतिरूहनीया। सा चानेकरूपा। आक्षेपसङ्गतिर्दृष्टान्तसङ्गतिः प्रत्युदाहरणसङ्गतिः प्रासङ्गिकसङ्गतिरुपोद्घातसङ्गतिरपवादसङ्गतिश्चेत्येवमादिरूपा। तासामाक्षेपादिसङ्गतीनामूहं व्युत्पादयति

पूर्वन्यायस्य सिद्धान्तयुक्तिं वीक्ष्य परे नये।
पूर्वपक्षस्य युक्तिं च तत्राक्षेपादि योजयेत्॥ २४॥

तदेतत् सर्वं योजयित्वा प्रदर्श्यते। प्रथमाध्याये प्रथमपादस्य प्रथमाधिकरणगतो धर्मविचारशास्त्रं वैधमिति सिद्धान्तः। अर्थज्ञानहेतावध्ययने नियमविधेः सम्भवादिति तद्युक्तिः। द्वितीयाधिकरणे धर्मे लक्षणं प्रमाणं च नास्तीति पूर्वपक्षः। लौकिकाकारहीनत्वात् प्रत्यक्षाद्यप्रवृत्तेश्चेति तद्युक्तिः। तया युक्त्या धर्मस्य लक्षणप्रमाणरहितत्वे सति नरविषाणसमो धर्म इति तद्विचारशास्त्रस्य विधेयत्वमनुपपन्नमित्याक्षेपसङ्गतिः। यथा प्रथमाधिकरणे नियमविधिसम्भवेन हेतुना विचार शास्त्रस्य विधेयत्वमुक्तम्। तथा द्वितीयाधिकरणे लौकिकाकारहीनत्वप्रत्यक्षाद्यप्रवृत्तिरूपेण हेतुना धर्मे लक्षणप्रमाणे न स्त इति दृष्टान्तसङ्गतिः। यथा प्रथमाधिकरणसिद्धान्ते पूर्वोक्तयुक्तिरवलोक्यते। तथा

द्वितीयाधिकरणसिद्धान्ते काञ्चिदपि युक्तिं न पश्याम इति प्रत्युदाहरणसङ्गतिः। एते दृष्टान्तप्रत्युदाहरणसङ्गती मन्दबुद्धिभिरपि सर्वत्रोत्प्रेक्षितुं शक्येते। पञ्चमाधिकरणे विधिवाक्यस्य निरपेक्षत्वात् प्रामाण्यं वर्णितम्। तस्य च वाक्यस्य शब्दार्थयोर्मध्ये शब्दकोटिनिविष्टत्वात् वाक्यप्रसङ्गेन शब्दनित्यत्वं षष्ठाधिकरणे वर्ण्यत इति प्रासङ्गिकसङ्गतिः। सप्तमाध्यायस्य चतुर्थे पादे द्वितीयाधिकरणेन सौर्यादिविकृतिषु वैदिकमङ्गजातमुपदेष्टुं तदुपयोगित्वेन प्रथमाधिकरणे धर्मसापेक्षत्वं साधितम्। तत्र प्रथमाधिकरणमुपोद्घातः। सेयमुत्तराधिकरणेन सह पूर्वाधिकरणस्योपोद्घातसङ्गतिः। प्रथमाध्यायस्य तृतीयपादस्य प्रथमाधिकरणेऽष्टकादिस्मृतेः प्रामाण्यमुक्तम्। द्वितीयाधिकरणे सर्ववेष्टनस्मृतेः पूर्ववत् प्राप्तं प्रामाण्यमपोद्यते। सेयमपवादसङ्गतिः। अनया दिशा सर्वत्र सङ्गतिरूहनीया।

इत्थं सङ्गतीर्व्युत्पाद्याथ प्रत्यधिकरणं विषयसंशयपूर्वपक्षसिद्धान्तांश्चतुरोऽवयवान् संजिघृक्षुः प्रथमाध्यायस्य प्रथमपादे प्रथमाधिकरणं भट्टमतेनारचयति।

स्वाध्यायोऽध्येय इत्यस्य विधानस्य प्रयुक्तितः।
विचारशास्त्रं नारभ्यमारभ्यं वेति संशयः ॥ १ ॥
अर्थधीहेतुताधीतेर्लौकिकत्वावघातवत्।
नियामकं नचैवातो वेधारम्भो न सम्भवी ॥ २ ॥
दृष्टापूर्ववदस्त्यत्र क्रत्वपूर्वं नियामकम्।
अर्थनिर्णायकं शास्त्रमत आरभ्यतां विधेः ॥ ३ ॥

चोदनालक्षणोऽर्थो धर्मो इत्यारभ्यान्वाहार्य्ये च दर्शनादित्ये-

तदन्तं जैमिनिप्रोक्तं सूत्रजातं धर्मविचारशास्त्रम्। तदेतद्स्य प्रथमाधिकरणस्य विषयः। स्वाध्यायोऽध्येतव्य इत्यध्ययनविधिरक्षरग्रहणमात्रपर्य्यवसायीति केचिन्मन्यन्ते। अपरे त्वेवमाहुः। अर्थज्ञानरूपदृष्टप्रयोजनायेदमध्ययनं विधीयते। अर्थज्ञानञ्च विचारमन्तरेण न सम्भवति। ततो विधिर्विचारशास्त्रस्य प्रयोजक इति तत्रैवं संशयः। इदं विचारशास्त्रं किं विधिप्रयुक्त्या नारम्भणीयमुतारम्भणीयमिति। तत्र अर्थज्ञानायाध्ययनस्य विधिरिति वदन् वादी प्रष्टव्यः। किमत्यन्तमप्राप्तमध्ययनं विधीयते। किंवा पक्षेऽप्राप्तमवघातवन्नियम्यत इति। नाद्यः। विमतं वेदाध्ययनमर्थज्ञानहेतुः। अध्ययनत्वात्। भारताध्ययनवत्। इत्यनुमानेनैव विधिनिरपेक्षेण प्राप्तत्वात्। तर्ह्यस्तु द्वितीयः पक्षः। अवघातवन्नियमविधित्वसम्भवात्। यथा नखैरवघातेन वा तण्डुलनिष्पत्तिसम्भवात् पक्षेऽप्राप्तोऽवघातो विधिनावश्यं कर्त्तव्य इति नियम्यते। तथा लिखितपाठेन गुरुपूर्वकाध्ययनेन वार्थज्ञानसम्भवात् पक्षेऽप्राप्तमध्ययन विधिना नियम्यत इति चेत्। न। वैषम्यात्। अवघातनिष्पन्नैरेव तण्डुलैरवान्तरापूर्वद्वारेण दर्शपूर्णमासौ परमापूर्वं जनयतः। नान्यथा। ततो दर्शपूर्णमासापूर्वमवघातस्य नियमहेतुः। अत्र तु लिखितपाठजन्येनैवार्थज्ञानेन क्रत्वनुष्ठानसिद्धेरध्ययनस्य नियमहेतुर्नास्ति। अतो द्विविधविध्यसम्भवादर्थज्ञानहेतुविचारशास्त्रारम्भस्य वैधत्वं नास्ति। तर्हि श्रूयमाणस्य विधेः का गतिरिति चेत्। स्वर्गाद्यक्षरग्रहणमात्रं विधेयमिति वदामः। अश्रुतोऽपि स्वर्गो विश्वजि-

न्यायेन कल्पनीयः। स स्वर्गः स्यात् सर्वान् प्रत्यविशेषादिति सूत्रेण विश्वजित्यश्रूयमाणमप्यधिकारिणं सम्पादयितुं तद्विशेषणं स्वर्गफलं युक्त्या स्थापितम्। तद्वदध्ययनेऽप्यस्तु। एतदेवाभिप्रेत्योक्तम्। विनापि विधिना दृष्टलाभान्नहि तदर्थता। कल्प्यस्तु विधिसामर्थ्यात् स्वर्गो विश्वजिदादिवदिति। एवञ्च सति वेदमधीत्य स्नायादिति शास्त्रमनुगृह्यते। अस्मिञ्छास्त्रे वेदाध्ययनसमावर्त्तनयोर्नैरन्तर्यं प्रतीयते। तत्पक्षे त्वधीतेऽपि वेदे धर्मविचाराय गुरुकुल एवाधिवासः कर्त्तव्यः। तथा सति तन्नैरन्तर्यं बाध्येत। तस्माद्विचारशास्त्रस्य वैधत्वाभावात् पाठमात्रेण धर्मसिद्धेः समावर्त्तनशास्त्राच्च धर्मविचारशास्त्रं नारम्भणीयमिति पूर्वपक्षः। अत्रोच्यते। यदुक्तं लोकसिद्धत्वान्नाप्राप्तविधिरिति। तत्तथैवास्तु। नियमविधित्वं तु न वारयितुं शक्यम्। यथा दर्शपूर्णमासजन्यं परमापूर्वमवघातनियमजन्यस्यावान्तरापूर्वस्य कल्पकम्। एवमशेषक्रतुजन्यमपूर्वजातं क्रतुज्ञानसाधनाध्ययननियमजन्यस्यापूर्वस्य कल्पकं भविष्यति। नियमादृष्टानङ्गीकारे च श्रूयमाणो विधिरनर्थकः स्यात्। न च विश्वजिन्न्यायेन स्वर्गार्थत्वं युक्तम्। दृष्टफलेऽर्थज्ञाने सम्भवत्यदृष्टस्य कल्पयितुमशक्यत्वात्। अत एवोक्तम् लभ्यमाने फले दृष्टे नादृष्टपरिकल्पना। विधेस्तु नियमार्थत्वान्नानर्थक्यं भविष्यतीति। नन्वेवमपि श्रुतव्याकरणाद्यङ्गस्याधीतवेदस्य पुरुषस्यार्थज्ञानसम्भवाद्विचारशास्त्रस्य वैयर्थ्यमिति चेत्। न। ज्ञानमात्रसम्भवेऽपि निर्णयस्य विचाराधीनत्वात्। अक्ताः शर्करा उपदधातीत्यत्र घृतेनैव न तैलादिनेत्ययं निर्णयो व्याकरणेन

निगमेन निरुक्तेन वा न सिध्यति। विचारशास्त्रं तु तेजो-वै घृतमिति वाक्यशेषादर्थं निर्णेष्यति। अतो विचारो वैधः। वेदमधीत्य स्नायादिति शास्त्रं त्वध्ययनसमावर्त्तनयोः पूर्वापरीभावसमानकर्तृकत्वे एवाचष्टे न त्वानन्तर्य्यम्। तस्माद्विधिवशादेव विचारशास्त्र-मारम्भणीयमिति सिद्धान्तः। अस्मिन्नेवाधिकरणे गुरुमतमाह।

अथवाध्यापनात् सिद्धे नैवास्त्यध्ययने विधिः।
तेन पूर्वोत्तरौ पक्षौ प्रसाध्यावन्यहेतुभिः॥ ४॥
विधेयाध्यापनं सिध्येद् बालस्यार्थधियं विना।
तेन निर्विषयं शास्त्रं निष्फलं चेत्युपेक्ष्यताम्॥ ५॥
स्वतः प्रामाण्यबोधस्य विवक्षानपनोदनात्।
विषयादिसमुत्पादे शास्त्रमारभ्यतां ततः॥ ६॥

अष्टवर्षं ब्राह्मणमुपनयीत। तमध्यापयीतेत्यध्यापनं विहितम्। नचात्र नियोज्याभावः। आचार्य्यत्वकामिना नियोज्यत्वात्। उपनयीतेत्यनेनाचार्य्यकरणे विहितेनात्मने-पदेन नियोज्यविशेषणमाचार्य्यत्वं प्रतीयते। उपनयने यो नियोज्यः स एवाध्यापनेऽपि। तयोरेकप्रयोजनत्वात्। एवञ्च सत्याचार्य्यकर्तृकमध्यापनं माणवककर्तृ-केणाध्ययनेन विना न सिध्यतीत्यध्यापनविधिप्रयुक्त्यैवा-ध्ययनानुष्ठानसिद्धेर्न पृथगध्ययने विधिरभ्युपगन्तव्यः। श्रूयमाणं विधिवाक्यं नित्यानुवादत्वेनाप्युपपद्यते। ततो-ऽध्ययनविधिमुपजीव्य पूर्वमुपन्यस्तौ पूर्वोत्तरपक्षावन्यथा वर्णनीयौ। विषयसंशययोस्तु नास्ति विप्रतिपत्तिः। विचार-

शास्त्रं विषय. । अवैधं वैधं वेति संशयः। तत्र वैधत्ववादी प्रष्टव्यः। विधेयमाचार्य्यकर्तृकमध्यापनं किं माणवकस्यार्थज्ञानमपि प्रयुञ्जीत किंवा पाठमात्रम्। नाद्यः। अन्तरेणाप्यर्थज्ञानमध्यापनसिद्धेः। पाठमात्रे तु विचारस्य विषयो न सम्भवति। आपाततः प्रतीतः सन्दिग्धोऽर्थो विषयः। तथा सति यत्रार्थप्रतीतिरेव नास्ति तत्र सन्देहस्य का कथा। निर्णयो विचारस्य फलम्। सोऽपि विषयवद् दूरापेतः। अतो विषयप्रयोजनाभावाद् विचारशास्त्रं नारम्भणीयमिति पूर्वपक्षः॥ अत्रोच्यते। मानाम्नाध्यापनेनार्थावबोधः प्रयुज्यताम्। तथापि साङ्गवेदाध्यायिनो निगमनिरुक्तव्याकरणैर्व्युत्पन्नस्य पौरुषेयग्रन्थेष्विव वेदेऽप्यर्थावबोधः स्वत एव प्राप्नोति। ननु यथा विषं भुङ्क्ष्वेत्यत्र प्रतीयमानोऽप्यर्थो न विवक्षितः। तथा वेदार्थस्याविवक्षायां विषयाद्यभावस्तदवस्थ इति चेन्न। न विवक्षाया अपनोदितुमशक्यत्वात्। विषभोजनवाक्यस्याप्तप्रणीतत्वेन बाधा मा भूदिति मुख्यार्थस्तत्र परित्यक्तः। वेदे तु कुतो न विवक्षितार्थत्वम्। विवक्षिते च वेदार्थे यत्र पुरुषस्य सन्देहः स सर्वोऽपि विचारशास्त्रस्य विषयः। तन्निर्णयः प्रयोजनम्। ततोऽध्यापनविधिप्रयुक्तेनाध्ययनेन न बुध्यमानस्यार्थस्य विचार्यत्वाद् विचारशास्त्रस्य वैधत्वं सिद्धम्। द्वितीयाधिकरणं भट्टमतेनारचयति।

विचारविषयो धर्मो लक्षणेन विवर्जितः।
मानेन वाथवोपेतस्ताभ्यामिति विचिन्त्यते ॥ ७ ॥
लौकिकाकारहीनस्य तस्य किं नामलक्षणम्।

मानशङ्का तु दूरेऽत्र प्रत्यक्षाद्यप्रवर्त्तनात् ॥ ८ ॥
चोदनागम्य आकारो ह्यर्थत्वे सति लक्षणम् ।
अत एव प्रमाणञ्च चोदनैवात्र नो कुतः ॥ ९ ॥

लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिः । अत एवाहुः मानाधीना मेयसिद्धिर्मानसिद्धिश्च लक्षणादिति । सजातीयविजातीयव्यावर्त्तको लक्ष्यगतः कश्चिल्लोकप्रसिद्ध आकारो लक्षणम् । तेन च लक्षणेन लक्ष्ये वस्तुनि सम्भावनाबुद्धौ जातायां प्रमातुमुद्युक्तः प्रमाणेन तदवगच्छति । तद्यथा । सास्नादिमती गौरित्युपश्रुत्य चतुष्पात्सु जीवेषु तल्लक्षणलक्षितपदार्थमन्विष्येयं गौरिति चक्षुषावगच्छति । एवञ्च सत्यलौकिकत्वाद्धर्मस्य नास्ति लक्षणम् । तत्र कुतः प्रमातुमुद्योगः । कथञ्चिदुद्योगेऽपि न तत्र प्रमाणसद्भावः शङ्कितुमपि शक्यः । न तावदत्र प्रत्यक्षं संक्रमते । धर्मस्य रूपादिरहितत्वात् । अत एव व्याप्तिग्रहणाभावान्नास्त्यनुमानम् । प्रत्यक्षानुमानमूलश्च शब्दस्य सङ्गतिग्रहः । ततो व्युत्पत्त्यभावान्नागमोऽपि तत्र प्रवर्त्तते । तस्माद् धर्मो लक्षणप्रमाणरहित इति प्राप्ते ब्रूमः । माभूत् । चक्षुरादिगम्यो लौकिक आकारः । तथापि चोदनागम्यः स्वर्गफलसाधनत्वादिलक्षण आकारोऽस्ति । तेनार्थत्वे सति चोदनागम्योऽर्थो धर्म इति लक्षणं भवति । अर्थो धर्म इत्युक्ते ब्रह्मणि चक्षुरन्तादौ घटादौ चातिव्याप्तिः । तद्व्यवच्छेदाय चोदनागम्य इत्युक्तम् । तावत्येवोक्ते विधिगम्येऽनर्थफलत्वेनानर्थरूपे श्येनाद्यभिचारकर्मण्यतिव्याप्तिः । तद्व्यवच्छेदायार्थ इत्युक्तम् । यद्यपि श्येनस्य शत्रुवधः फलं न तु

रकः। तथापि तस्य बधस्य नरकहेतुत्वात् बधद्वारा श्येनोऽनर्थः। नचैवमग्नीषोमीयपशुहिंसाया अपि बधत्वेन नरकहेतुत्वं स्यादितिमशङ्कनीयम्। तस्याः क्रत्वङ्गत्वेन क्रतुफलस्वर्गव्यतिरेकेण फलान्तराभावात्। यत चोदनागम्यत्वे सत्यर्थत्वं धर्मलक्षणम्। अतएव गम्ये धर्मे विधिवाक्यं प्रमाणम्। यद्यपि प्रत्यक्षानुमानयोरविषयो धर्मः तथापि प्रसिद्धपदसमभिव्याहारेण व्युत्पत्तिः। सम्भवति। तस्माल्लक्षणप्रमाणाभ्यामुपेतो धर्मः। अस्मिन्नेवाधिकरणे गुरुमतमाह।

यद्वा जिज्ञास्यवेदार्थः किं मन्त्राद्यवबोधितः।
सिद्धार्थोऽप्यथ विध्येकगम्यः कार्य्यार्थ एव वा॥ १०॥
सिद्धे पुत्रजन्मादौ व्युत्पत्तेरुपपत्तितः।
मन्त्रादिगम्यसिद्धस्य वेदार्थत्वेऽपि का क्षतिः॥ ११॥
हर्षहेतुबहुत्वेन व्युत्पत्तिः पुत्रजन्मनि।
दुर्लभा सुलभा कार्ये वेदार्थोऽतः स एव हि॥ १२॥

अथातो धर्मजिज्ञासेत्यत्राथशब्देन कृत्स्नवेदाध्ययनानन्तर्य्यमुच्यते। अतःशब्देन कृत्स्नस्य वेदस्य विवक्षितार्थत्वं हेतुः क्रियते। उक्तशब्दद्वयानुसारेण धर्मशब्दोऽपि कृत्स्नवेदार्थमाचष्टे। ततः सूत्रे वेदार्थो जिज्ञास्य इति प्रतिज्ञा कृता। अत्र संशयः किं मन्त्रार्थवादप्रतीतः सिद्धार्थोऽपि वेदार्थो भवति। किंवा विधिवाक्यप्रतीतः कार्य्यार्थ एव वेदार्थ इति। तत्र लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधक इति न्यायेन व्युत्पत्त्यनुसारी वेदार्थो वर्णनीयः। व्युत्पत्तिश्च सिद्धार्थेऽप्यस्ति। पुत्रस्ते जात इति वार्त्ताहार-

व्याहारजन्यं श्रोतुर्हर्षमनुमाय बालो हर्षहेतौ पुत्रजन्मनि सङ्गतिं प्रतिपद्यते। ततो मन्त्रार्थवादप्रतीतोऽप्यर्थो वेदार्थ इति प्राप्ते ब्रूमः। पुत्रजन्मवद्धर्महेतूनां धनलाभादीनां बहुत्वादस्य वाक्यस्य पुत्रजन्मैवार्थ इति निर्णयो दुर्लभः। गामानयेति वाक्येतु गवानयनरूपां मध्यमवृद्धप्रवृत्तिमवलोक्य सङ्गतिग्रहणं सुलभम्। तस्मात् कार्य्यरूप एव वेदार्थ इति। तृतीयाधिकरणं भट्टमतेनारचयति।

धर्मस्य ज्ञापकं मानं यदुक्तं चोदनात्मकम्।
एतत् किं न परीक्ष्यं स्यात् किंवा सम्यक् परीक्ष्यताम् ॥१३॥
मानापदेशान्मेयस्य सिद्धत्वात् किं परीक्षया।
मैवं विचारशास्त्रेऽस्मिन् परीक्षापेक्ष्यते कुतः ॥ १४ ॥
अथ द्वितीयः अस्मिन्नेवाधिकरणे गुरुमतमाह।
आदौ परीक्ष्यो वेदार्थश्चोदनामानताथवा।
वेदार्थस्य प्रधानत्वात् प्रथमं तत्परीक्षणम् ॥ १५ ॥
चोदनामानतैवात्र प्रथमं साध्यतां गता।
अनपेक्षतया तस्य यतो मुख्यत्वमाश्रितम् ॥ १६ ॥

द्वितीयाध्यायाद्यैः कर्मभेदशेषशेषित्वादिरूपो वेदार्थः सूत्रकारेण परीक्षिष्यते। चोदनाप्रामाण्यस्य तु प्रथमेऽध्याये परीक्षा। तदेतदयुक्तम्। कुतः। वेदार्थस्य प्रधानत्वेनादौ परीक्षणीयत्वात्। प्रधानभूतो हि वेदार्थः। पुरुषार्थत्वेनानुष्ठेयत्वात्। प्रमाणन्तु तद्बोधनाय प्रवृत्तम्। तच्छेषतया न प्रधानमिति प्राप्ते ब्रूमः। अस्त्वनुष्ठानोपाधौ वेदार्थप्रमाणयोः प्रधानोपसर्जनभावः। प्रमाणप्रमेयभावोपाधौ तु प्रमाणस्य मुख्यत्वम्। निरपेक्षत्वात्। नहि स्वतः प्रामाण्य

प्रादिनां मते सापेक्षता प्रामाण्यस्यास्ति। प्रमेयन्तु सापेक्षम्। मानाधीना मेयसिद्धिरित्युक्तत्वात्। तदेतन्मुख्यत्वमाश्रित्य सूत्रकारः प्रमाणपरीक्षामादौ चकारेति युज्यते। अथान्यत् प्राधान्यमाश्रित्य धर्मविचार एवादौ कस्मान्न कृतः। अपरीक्षितेन प्रमाणेन धर्मस्यासिद्धौ तद्विचारस्याप्यसिद्धेः। तदेवमधिकरणत्रये व्युत्पादनाय भट्टप्राभाकरमतभेद उपन्यस्तः। अथ प्रायेण भाट्टमतमेवोपन्यस्यते। चतुर्थाधिकरणमारचयति।

प्रत्यक्षादिभिरप्येष गम्यते विधिनैव वा।
अक्षादीनां प्रमाणत्वान्मेयधर्मावभासिता॥ १७॥
वर्त्तमानैकविषयमक्षं धर्मस्तु भाव्यसौ।
अक्षमूलाऽनुमानादिस्तेन विधयैकमेयता॥ १८॥

अक्षं प्रत्यक्षम। प्रत्यक्षादीनां प्रमाणत्वात् प्रमेयावभासकत्वम्। तावदविवादम्। धर्मश्च प्रमेयः। असन्दिग्धाविपर्य्यस्तत्वे सति बुध्यमानत्वात् घटादिवत्। तस्मात् प्रत्यक्षादिभिरप्येष धर्मो गम्यत इति प्राप्ते ब्रूमः। धर्मस्य प्रमेयत्वेऽपि प्रत्यक्षयोग्यता नास्ति। प्रत्यक्षस्य वर्त्तमानमात्रविषयत्वात्। यस्तु प्रत्यक्षस्यात्यन्तमविषयस्तत्रानुमानादीनां कैव कथा। क्वचित् प्रत्यक्षेण गृहीते व्याप्त्यादौ पश्चादनुमानादीनां प्रवृत्तिः। तस्माद् विधिनैव धर्मो गम्यते। पञ्चमाधिकरण मारचयति।

अबोधको बोधको वा न तावद् बोधकोविधिः।
अतो ऽलौकिके धर्मे ग्रहणं दुर्घटं यतः॥ १९॥
समभिव्याहृते धर्मे शक्तिग्रहण सम्भवात्।

बोधकस्य विधेर्मानत्वमनपेक्षतया स्थितम् ॥ २० ॥

यथा धर्मे प्रत्यक्षादीनां प्रामाण्यं नास्ति । तथा विधेरपि नास्ति प्रामाण्यम् । शक्तिग्रहणपूर्वकं हि प्रामाण्यमाप्तवाक्यस्य लोके दृष्टम् । शक्तिश्च लोकप्रसिद्धे गवादौ गृह्यते । धर्मस्त्वलौकिकः । अतस्तत्र शक्तिग्रहणं दुर्घटम् । तस्माद् विधेरबोधकत्वान्न धर्मे प्रामाण्यमिति प्राप्ते ब्रूमः । यथा प्रभिन्नकमलोदरे मधूनि मधुकरः पिबतीत्यत्र मधुकरपदस्यार्थमजानन्नन्यपदार्थमवगत्य तत्समभिव्याहारात् कमलमध्यगते मधुपानं कुर्वति दृश्यमाने भ्रमरे मधुकरशब्दस्य सङ्गतिं गृहीत्वा वाक्यार्थं प्रतिपद्यते । तथा कारीर्या वृष्टिकामो यजेतेत्यत्र लोकप्रसिद्धार्थवृष्ट्यादिपदसमभिव्याहारादलौकिकभावनायां विधेः सङ्गतिं गृहीत्वा विधिवाक्यार्थं पुरुषो बुद्ध्यते । तस्मादबोधकत्वलक्षणमप्रामाण्यं नास्ति । न च संवादाभावादप्रामाण्यम् । समनन्तरभाविप्रतिनियतदृष्टफले वृष्ट्यादौ संवादस्यापि सम्भवात् । अनियतदृष्टफले चित्रायागादौ प्रतिनियतजन्मान्तरफले ज्योतिष्टोमादौ च संवादः कथमिति चेत । एवं तर्हि स्वतः प्रामाण्याभ्युपगमान्नास्ति क्वापि संवादाद्यपेक्षा । तस्मादबोधकत्वसापेक्षत्वयोरप्रामाण्यकारणयोरभावाद्विधेः स्वतः सिद्धं प्रामाण्यं नापह्नोतुं शक्यम् । षष्ठाधिकरणमारचयति ।

विभ्वादिरूपोऽयः शब्दः सोऽनित्योऽथाविनश्वरः ।
अनित्यो वर्णरूपत्वात् वर्णे जन्मोपलम्भनात् ॥ २१ ॥

अबाधितप्रत्यभिज्ञाबलाद्वर्णस्य नित्यता ।

उच्चारणप्रयत्नेन व्यज्यतेऽसौ न जन्यते ॥ २२ ॥

शब्दनित्यत्ववादिनो वैयाकरणास्तावदेवं मन्यन्ते । वर्णसमूहश्रवणानन्तरमिदमेकं पदमिति प्रत्ययो मानसप्रत्यक्षेणोत्पद्यते । तस्य च प्रत्ययस्य वर्णव्यतिरिक्तः कश्चित् स्फोटनामकः पदार्थो विषयः । स च नित्यः । स एव शब्दो न तु वर्ण इति । तदेतन्नैयायिकादयो न सहन्ते । वर्णेष्वेवैकार्थावच्छेदोपाधिना पदैक्यबुद्धेरुपपत्तेर्वर्णातिरिक्ता स्फोटकल्पना निरर्थिका । तस्माद्वर्णानामेव शब्दत्वम् । वर्णाश्च प्रति पुरुषं प्रत्युच्चारणं च जन्मविनाशवन्त उपलभ्यन्ते । तस्मादनित्यः शब्दः । तस्य च कारणदोषसम्भवाद्वेदस्याप्रामाण्यमिति पूर्वपक्षः । बहुभिः पुरुषैः प्रत्येकं बहुकृत्व उच्चारिते गोशब्दे त एवेमे गकारादयो वर्णा इत्यबाधितप्रत्यभिज्ञा जायते । तद्बलान्नित्या वर्णाः । न च वर्णानां जन्माभावे बहुकृत्व उच्चारणप्रयत्ना व्यर्था इति शङ्कनीयम् । तत्प्रयत्नस्य व्यञ्जकत्वाङ्गीकारात् । एवं सति पुरुषभेदादुच्चारणभेदा यथायोगमुदात्तादिभेदैः पटुमृदुत्वादिभेदैश्चोपेतान् ध्वनिविशेषानुत्पाद्य चरितार्था भविष्यन्ति । तस्मान्नित्ये शब्दे कारणदोषाभावान्नास्त्यप्रामाण्यम् ।

सप्तमाधिकरणमारचयति ।

वेदवाक्यममानं स्यान्मानं वा नास्य मानता ।
पृथक् सङ्केतशून्याया अनपेक्षत्ववर्जनात् ॥ २३ ॥
वेदेऽपि लोकवन्नैव वाक्यार्थे सङ्गतिः पृथक् ।
गृहीतव्या ततो वाक्यं प्रमाणं नैरपेक्ष्यतः ॥ २४ ॥

यद्यपि वर्णानां नित्यत्वादेकार्थावच्छेदकस्यापि पदस्य वर्णरूपतया नित्यत्वाद्वर्णपदद्वारा वेदस्य कारणसापेक्षत्वं नास्ति। तथाप्यग्निहोत्रं जुहुयात् स्वर्गकाम इत्यादि वाक्यस्य वाक्यार्थे सङ्गतिग्रहणमपेक्षितम्। ततोनैरपेक्ष्याभावात् प्रामाण्यं नास्तीति प्राप्ते ब्रूमः। लोके गामानयेत्यादि पदप्रयोगेषु पदपदार्थयोरेव सङ्गतिर्गृह्यते। वाक्यं त्वाकाङ्क्षा योग्यता सन्निधिवशात् स्वार्थं प्रतिपादयतीत्यविवादम्। तथा वेदवाक्यस्यापि प्रत्यायकत्वादनपेक्षत्वेन प्रामाण्यमविरुद्धम्।

अष्टमाधिकरणमारचयति।

पौरुषेयं न वा वेदवाक्यं स्यात् पौरुषेयता।

काठकादि समाख्यानाद्वाक्यत्वाच्चान्यवाक्यवत् ॥ २५॥

समाख्याध्यापकत्वेन वाक्यत्वं तु पराहतम्।

तत्कर्त्रनुपलम्भेन स्यात्ततोऽपौरुषेयता ॥ २६ ॥

काठकं कौथुमं तैत्तिरीयकमित्यादि समाख्यानम्। तद्वेदविषया लोके दृष्टाः। तद्धितप्रत्ययश्च तेन प्रोक्तमित्यस्मिन्नर्थे वर्त्तते। तथा सति व्यासेन प्रोक्तं वैयासिकं भारतमित्यादाविव पौरुषेयत्वं प्रतीयते। किञ्च। विमतं वेदवाक्यं पौरुषेयम्। वाक्यत्वात्। कालिदासादिवाक्यवदिति प्राप्ते ब्रूमः। अध्ययनसम्प्रदायप्रवर्त्तकत्वेन समाख्योपपद्यते। कालिदासादिग्रन्थेषु तत्सर्गावसाने कर्त्तार उपलभ्यन्ते। तथा वेदस्यापि पौरुषेयत्वे तत्कर्त्तोपलभ्येत न चोपलभ्यते। अतो वाक्यत्वहेतुः प्रतिकूलतर्कपराहतः। तस्मादपौरुषेयो वेदः। तथा सति पुरुषबुद्धि-

दोषकृतस्या प्रामाण्यस्यानाशङ्कनीय त्वाद्विधिवाक्यस्य धर्मे प्रामाण्यं सुस्थितम् । इति माधवीये जैमिनीयन्यायमाला-विस्तरे प्रथमाध्यायस्य प्रथमः पादः ।

---

द्वितीयपादस्य प्रथमाधिकरण मारचयति ।

वायुर्वा इत्येवमादे रर्थवादस्य मानता ।
न विधेयेऽस्ति धर्मे किं किंवासौ तत्र विद्यते ॥१॥
विध्यर्थवादशब्दानां मिथोऽपेक्षा परिक्षयात् ।
नास्त्येकवाक्यता धर्मे प्रामाण्यं सम्भवेत् कुतः ॥२॥
विध्यर्थवादौ साकाङ्क्षौ प्राशस्त्य पुरुषार्थयोः ।
तेनैकवाक्यता तस्माद्वादानां धर्ममानता ॥ ३ ॥

काम्यपशुकाण्डे विध्यर्थवादौ श्रूयेते । वायव्यं श्वेत-मालभेत भूतिकाम इति विधिः । वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयती-त्यर्थवादः । तत्र विधिवाक्य गता वायव्यादिशब्दा अर्थ-वादशब्द नैरपेक्ष्ये णैव विशिष्ट मर्थं विदधति । अर्थवाद-शब्दाश्चेतरनैरपेक्ष्येणैव भूतार्थ मन्वाचक्षते । क्षिप्रगामी वायुः स्वोचितेन भागेन तोषितो भागप्रदायैश्वर्यं प्रयच्छ-तीत्युक्ते रामायण भारतादाविव वृत्तान्तः कश्चित् प्रती-यते । न त्वनुष्ठेयं किञ्चित् । अत एकवाक्यत्वा भावा न्नास्त्यर्थवादस्य धर्मे प्रामाण्यमिति प्राप्ते ब्रूमः । माभूत्-पदैकवाक्यता । वाक्यैकवाक्यता तु विद्यते । विधि-वाक्य तावत् पुरुषं प्रेरयितुं विधेयार्थस्य प्राशस्त्यमपेक्षते । अर्थवादवाक्यञ्च फलवदर्थावबोधपर्य्यवसिताध्ययनविधि-

परिगृहीतत्वेन पुरुषार्थमपेक्षते। ततः पुरुषार्थपर्य्यवसितविध्यपेक्षितप्राशस्त्यं लक्षणावृत्त्या समर्पयदर्थवादवाक्यं विधिवाक्येन सहैकवाक्यतामापद्यते। यतः क्षिप्रगामिस्वभावतया शीघ्रफलप्रदो वायुरस्य पशोर्देवता। ततः प्रशस्तमिमं वायव्यं पशुमालभेतेति वाक्ययोरन्वयः। तस्मादर्थवादो धर्मे प्रमाणम्।

अस्मिन्नेवाधिकरणे मतान्तरमनूद्य पूर्वोत्तरपक्षावाह।

वादोक्तहेत्वपेक्षत्वान्न विधेर्मानतेति चेत्।
सत्यन्वये स्तुतिद्वारा नापेक्षेति गुरुर्जगौ ॥ ४॥

यतो वायुः क्षिप्रमेव फलप्रदः। अतो वायव्यमालभेतेत्येवमर्थवादोक्तहेतुमपेक्ष्य विधिः पुरुषं नियुङ्क्ते। ततः सापेक्षत्वादप्रामाण्यमिति पूर्वपक्षः। विमतं कर्मानुष्ठेयम्। फलप्रददेवतोपेतत्वात्। राजसेवादिवदित्यनुमानं यद्यर्थवादे विवक्ष्यते। तदानीमागमप्रमाणस्य विधिवाक्यस्य मानान्तरसापेक्षत्वं स्यात्। न त्वेवं विवक्षितम्। किन्तु फलप्रददेवतातोषकत्वोपन्यासमुखेन कर्मप्राशस्त्यमुपलक्ष्यते। तथा सति प्रशस्तं कर्मानुष्ठेयमित्यस्मिन्नर्थे सार्थवादस्य विधेः पर्य्यवसानादेकवाक्यता लभ्यते। तत् कुतः सापेक्षत्वम्। तस्माद् विधिः प्रमाणमिति राद्धान्तः। द्वितीयाधिकरणमारचयति।

ऊर्जोऽवरुद्ध्या इत्येष विधिर्वान्निगदो न किम्।
यूपौडुम्बरतां स्तौति स्तौति वा तद्विधित्सया ॥ ५॥
चतुर्थ्या फलतालाभाद् यूपौडुम्बरताफलम्।
ऊर्जोऽवरोधं कथयन् कथं स्तुतिपरो भवेत् ॥ ६॥

अस्तुतौडुम्बरत्वस्याविधानात् कस्य तत्फलम्।

अर्थद्वैधे वाक्यभेदस्तेन स्तावक एव सः॥ ७॥

इदमाम्नायते। औडुम्बरो यूपो भवत्यूर्ग्वा उडुम्बर ऊर्क पशव ऊर्जैवास्मा ऊर्जं पशूनाप्नोत्यूर्जोऽवरुद्ध्या इति। अमृतशब्दाभिधेयोऽत्यन्तसारभूतः सूक्ष्मोऽन्नरस ऊर्गुच्यते। उडुम्बररूपयोर्जा यजमानार्थमध्वर्युः पशुरूपामूर्जमाप्नोति। ततो यूपस्यौडुम्बरत्वमूर्जः सम्पादनाय सम्भवतीत्यर्थः। अत्रावरुद्ध्या इति तादर्थ्ये चतुर्थी। तया फलत्वं गम्यते। धनलाभाय राजसेवेत्यादौ तादर्थ्यदर्शनात्। न च फलपरस्य वचनस्य स्तावकत्वं युज्यते। अन्यथा स्वर्गकाम इत्यस्यापि ज्योतिष्टोमस्तावकत्वप्रसङ्गादिति प्राप्ते ब्रूमः। अयमूर्जोऽवरोधः कस्य फलम्। किमविहितस्यौडुम्बरत्वस्य उत विहितस्य। नाद्यः। अनुष्ठानमन्तरेण द्रव्यमात्रान् फलानुत्पत्तेः। द्वितीये किं मन्त्रविधिः प्रत्यक्ष उतानेय.। नाद्यः औडुम्बरो यूपो भवतीत्यत्र लिङ्प्रत्ययाश्रवणात्। द्वितीये स्तुत्या समुन्नेयः। न चात्र स्तुतिमङ्गी करोषि। अथाच्येत। विधिना यूपौडुम्बरत्वं स्तूयते। तत्फलं चावबोध्यत इति तर्हि वाक्यं भिद्येत। ततः फलविधिवन्निगद्यमानमप्येतद्वाक्यं स्तावकमेव। अत्रैव गुरुमतेन पूर्वोत्तरपक्षावाह।

आप्नोतीति विधित्वस्य वादत्वस्याप्यनिर्णयात्।

न प्रमा चोदनेत्येतन्न वादो ह्येकवाक्यतः॥ ८॥

ऊर्जं पशूनाप्नोतीत्येतस्यापूर्वार्थत्वाद् विधित्वं प्रतिभासते। लिङाद्यभावादर्थवादत्वम्। अतः सन्दिग्ध

त्वान्न प्रामाण्यं चोदनाया इति पूर्वपक्षः। एकवाक्यत्वलाभि-नार्थवादत्वं निर्णीयते अतः प्रमाणं चोदनेति राद्धान्तः। तृतीयाधिकरणमारचयति।

तेन ह्यन्नमिति प्रोक्तो वादो हेतुरुत स्तुतिः।
हिना श्रुता हेतुतातः शूर्पादन्यच्च साधनम्॥ ९॥
शूर्पसाधनता श्रौती नाश्रौतैः सा विकल्प्यते।
अतो निरर्थको हेतुः स्तुतिस्तस्मात् प्रवर्त्तिका॥ १०॥

इदमाम्नायते। शूर्पेण जुहोति तेन ह्यन्नं क्रियत इति। अयमर्थवादो विधेये शूर्पे हेतुत्वेनान्वेति। हिशब्दस्य हेतु-वाचित्वात् यस्मादन्नसाधनं तस्माच्छूर्पेण होतव्यमित्युक्ते यद् यदन्न साधनं दर्वीपिठरादि तेन तेन सर्वेण होतव्य-मिति लभ्यते। ततः पिठरादयः शूर्पेण सह विकल्पन्त इति प्राप्ते ब्रूमः। शूर्पस्य होमसाधनत्वं श्रौतम्। तृतीयया तदवगमात्। पिठरादीनां त्वानुमानिकम्। अतोऽसमान-बलत्वान्न विकल्पो युक्तः। ततो हेतुर्व्यर्थः। स्तुतिस्तु प्ररो-चनार्थोपयुक्ता। तस्मात् स्तुतित्वेनान्वयः। चतुर्थाधिकरण-मारचयति।

मन्त्रा उरु प्रथस्वेति किमदृष्टैकहेतवः।
यागेषूत पुरोडाश प्रथनादेश्च भासकाः॥ ११॥
ब्राह्मणेनापि तज्ज्ञानान्मन्त्राः पुण्यैकहेतवः।
न तज्ज्ञानस्य दृष्टत्वाददृष्टं वरमद्य त्वतः॥ १२॥

उरु प्रथस्वेत्ययं कश्चिन्मन्त्रः। तस्यायमर्थः। भोः पुरोडाश! त्वमुरु विपुलता यथा भवति तथा प्रसरेत्येव-मादयो मन्त्रा यागप्रयोगेषूच्चार्यमाणा अदृष्टमेव जन-

न्ति। न त्वर्थप्रकाशनाय तदुच्चारणम्। पुरोडाशप्रथन-लक्षणस्यार्थस्य ब्राह्मणवाक्येनापि प्राप्तत्वात्। उरु प्रथस्वेति पुरोडाशं प्रथयतीति हि ब्राह्मणवाक्यम्। नैतद्युक्तम्। अर्थप्रत्यायनस्य दृष्टप्रयोजनस्य सम्भवे सति केवलादृष्टस्य कल्पयितुमशक्यत्वात्। तस्माद् दृश्यमानार्थानुस्मरणमेव यागप्रयोगे मन्त्रोच्चारणस्य प्रयोजनम्। ब्राह्मणवाक्येनाप्यर्थानुस्मरणसम्भवे मन्त्रेणैवानुस्मरणीयमिति यो नियमस्तस्य दृष्टासम्भवाददृष्टं प्रयोजनमस्तु। अत्रैव मतान्तरेण पूर्वोत्तरपक्षावाह।

मन्त्रब्राह्मणयोर्यद्वा कलहो विनियोजने।
न मन्त्रलिङ्गसिद्धार्थमनुवक्तीतरत्ततः॥ १३॥

अस्य मन्त्रस्य लिङ्गेन विनियोगे ब्राह्मणवाक्यमविवक्षितार्थं स्यात्। वाक्येन विनियोगे मन्त्रलिङ्गं न विवक्ष्येतेत्युभयोर्विरोधादप्रामाण्यं चोदनाया इति पूर्वपक्षः। नायं विरोधः। प्रबलेन लिङ्गेन विनियोगसिद्धौ वाक्यस्यानुवादकत्वादिति राद्धान्तः।

इति माधवीये जैमिनीय न्याय मालाविस्तरे
प्रथमाध्यायस्य द्वितीयः पादः।

---

तृतीय पादस्य प्रथमाधिकरण मारचयति।

अष्टकादि स्मृतेर्धर्मे न मात्वं मानताथवा।
निर्मूलत्वान्न मानं सा वेदार्थोक्तौ निरर्थता॥ १॥
वैदिकैः स्मर्यमाणत्वात् सम्भाव्या वेदमूलता।
विप्रकीर्णार्थसंक्षेपात् सार्थत्वादस्ति मानता॥ २॥

अष्टकाः कर्त्तव्या इत्यादि स्मृति वाक्यं न धर्मे प्रमाणम्। पौरुषेय वाक्यत्वे सति मूलप्रमाणरहितत्वात्। विप्रलम्भकवाक्यवत्। अथ मूलप्रमाणवत्त्वाय वेदार्थ एव स्मृतिभिरुच्यते इति मन्येथाः। तर्हि वेदेनैव तदर्थस्याधिगतत्वादियं स्मृतिरनर्थी स्यात्। तदानीमनुवादकत्वादप्रामाण्यमिति प्राप्ते ब्रूमः। विमता स्मृतिर्वेदमूला वैदिकमन्वादिप्रणीतस्मृतित्वात्। उपनयनाध्ययनादिस्मृतिवत्। न च वैयर्थ्यं शङ्कनीयम्। अस्मदादीनां प्रत्यक्षेषु परोक्षेषु नानावेदेषु विप्रकीर्णस्यानुष्ठेयार्थस्यैकत्र सञ्चिप्यमाणत्वात्। तस्मादियं स्मृतिर्धर्मे प्रमाणम्।

अस्मिन्नेव मतान्तरेण पूर्वोत्तरपक्षावाह।

न मा स्मार्त्ताष्टकाङ्गत्वाद् यां जना इति मन्त्रगीः।

तन्न स्मृतेर्मूलवेदोऽनुमितं मात्वसम्भवात् ॥ ३ ॥

यां जनाः प्रतिनन्दन्तीत्ययं मन्त्रोऽष्टकाश्राद्धस्याङ्गम्। तच्च श्राद्धं स्मार्त्तम्। न हि तस्य प्रतिपादकं वेदवाक्यमुपलभामहे। तस्मादिदं मन्त्रवाक्यं न धर्मे प्रमाणमिति चेत्। न। तन्मूलस्य वेदस्यानुमेयत्वात्। अनुमानञ्च दर्शितम्। तस्मादसौ मन्त्रो धर्मे प्रमाणम्।

द्वितीयाधिकरणमारचयति।

औडुम्बरी वेष्टनीया सर्वत्येषा स्मृतिर्मितिः।

अमितिर्वेति सन्देहे मितिः स्यादष्टकादिवत् ॥ ४ ॥

औडुम्बरीं स्पृशन् गायेदिति प्रत्यक्षवेदतः।

विरोधान्मूलवेदस्याननुमानान्न मानता ॥ ५ ॥

ज्योतिष्टोमे सदोनामकस्य मण्डपस्य मध्ये काचिदौ-

दुम्बरी शाखा निखन्यते। तस्याश्च वाससा वेष्टनं स्मर्यते। औदुम्बरी सर्वा वेष्टयितव्येति सा पूर्वन्यायेन प्रमाणमिति प्राप्ते ब्रूमः। औदुम्बरीं स्पृष्ट्वोद्गायेदित्यनेन प्रत्यक्षवेदवचनेन स्पर्शो विधीयते। न च सर्ववेष्टने स्पर्शः सम्भवति। अतो मूलवेदानुमानं कालात्ययापदिष्टम्। तस्माद् विप्रलम्भकवाक्यवन्निर्मूला स्मृतिरप्रमाणम्। अत्रैव मतान्तरमाह।

प्रत्यक्षानुमितश्रुत्योर्द्वयोर्वा व्याघातदर्शनात्।
अमानत्वे शङ्किते बाधोऽनुमानस्यात्र वर्ण्यते॥ ६॥
परप्रत्यक्षवेदोऽत्र मूलं चेद् वेष्टनस्य तत्।
अस्त्येवमप्यनुष्ठानं स्वप्रत्यक्षानुरोधतः॥ ७॥

स्पर्शसर्ववेष्टनविषययोः प्रत्यक्षानुमितयोः श्रुत्योः परस्परविरोधादुभयोरप्रामाण्यमिति पूर्वपक्षः। अनुमानस्य कालात्ययापदिष्टत्वेन विरुद्धश्रुत्यभावेन स्पर्शश्रुतिः स्वार्थे प्रमाणम्। अथ पुरुषान्तरप्रत्यक्षवेदः सर्ववेष्टनस्मृतेर्मूलमित्युच्यते। तर्हि माभूत्तस्या अप्रामाण्यम्। तथापि परप्रत्यक्षात् स्वप्रत्यक्षस्याभ्यर्हितत्वेन स्पर्श एवात्रानुष्ठेयो न सर्ववेष्टनम्। तृतीयाधिकरणमारचयति।

वैसर्जनाख्यहोमीयवासो ग्रहणसंस्मृतिः।
प्रमा नवा श्रुत्यबाधात् प्रमा स्यादष्टकादिवत्॥ ८॥
दृष्टलोभैकमूलत्वसम्भवे श्रुत्यकल्पनात्।
सर्ववेष्टनवद्बाधहीनाप्येषा न हि प्रमा॥ ९॥

ज्योतिष्टोमेऽग्नीषोमीयस्य पशोस्तन्त्रे प्रक्रान्ते वैसर्जनहोमो विहितः। तत्र यजमानं पत्नीं पुत्रांश्च स्वादृश्याहतेन वाससा संच्छाद्य वाससोऽन्ते स्रुग्दण्डमुपनिबध्य

जुहोति। तस्मिन्वासस्येवं स्मर्य्यते। वैसर्जनहोमीयं वासोऽध्वर्य्युर्गृह्णातीति सेयं स्मृतिः सर्व्ववेष्टनस्मृतिवत् प्रत्यक्षश्रुत्या न बाध्यते। ततोऽष्टकादिस्मृतिवत् प्रमाणमिति प्राप्ते ब्रूमः। कदाचित् कश्चिदध्वर्य्युर्लोभादेतद्वासो जग्राह। तन्मूलैवैषा स्मृतिरित्यपि कल्पना सम्भवतीति। दृष्टानुसारिणी चेयं कल्पना। दक्षिणया परिक्रीतानामृत्विजां लोभदर्शनात्। तथा सत्यस्याः स्मृतेरन्यथाप्युपपत्तावष्टकादिवन्न मूलश्रुतिः कल्पयितुं शक्यते। अतो बाधाभावेऽपि मूलवेदाभावान्न प्रमाणम्। चतुर्थाधिकरणं भाष्यमतेनारचयति।

आचान्ते नैत्यमा मा वा स्मृतिरेषा न मा भवेत्।
वेदं कृत्वेति यः श्रौतःक्रमस्तेन विरोधतः॥ १०॥
आचान्त्यादिः पदार्थोऽत्र क्रमो धर्मः पदार्थगः।
धर्मस्य धर्म्यपेक्षत्वाद्बाधादस्ति मानता॥ ११॥

स्मृत आचामेदिति विहितं पुरुषार्थमाचमनम्। यदा तु मध्ये क्षुतादिनिमित्तं प्राप्नोति। तदा नैमित्तिकमाचमनं क्रवङ्गत्वेन स्मृत्या विधीयते। आचान्तेन कर्त्तव्यमिति सेयं स्मृतिर्न प्रमाणम्। कुतः। विरुद्धत्वात्। वेदं कृत्वा वेदिं करोतीति श्रुतौ पूर्व्वकालवाचिना क्त्वाप्रत्ययेन क्रमः प्रतीयते। वेदो नाम दर्भमयं सम्मार्जनसाधनम्। वेदिराहवनीयगार्हपत्यमध्यवर्त्तिनी चतुरङ्गुलखाता भूमिः। तयोर्मध्ये यदा क्षुतादिनिमित्तमाचमनं कुर्य्यात्। तदा श्रुत्युक्तं नैरन्तर्य्यं विरुध्येत। तस्माद्वेष्टनस्मृतिवदाचमनं स्मृतिर्न प्रमाणमिति प्राप्ते ब्रूमः। वेदवेद्यादि

श्रुत्युक्ता पदार्था वदाचमनादयः स्मृत्युक्तो अनुष्ठेयपदार्थाः। क्रमस्तु पदार्थनिष्ठो धर्मः। स च पदार्थानुपजीवति। तत उपजीव्य विरोधात् क्रम एव बाध्यते। न तु क्रमेणाचमनस्य बाधोऽस्ति तस्मादियं स्मृतिः प्रमाणम्।

अस्मिन्नेव वार्त्तिककारः प्रकारान्तरेण विचारद्वयं चकार। तत्र प्रथमं विचारं दर्शयति।

शाक्योक्ताहिंसनं धर्मो न वा धर्मः श्रुतत्वतः।
न धर्मो नहि पूतं स्याद् गोक्षीरं श्वदृतौ धृतम् ॥ १२॥

ब्रह्मचर्यमहिंसां च परिग्रहं च सत्यं च यत्नेन रक्षेदिति। श्रुतावहिंसादिधर्मत्वेनोक्तः स एव धर्मः शाक्येनाप्युक्तः। तस्मात् शाक्यस्मृतिर्धर्मे प्रमाणमिति चेत्। न। स्वरूपेण धर्मस्यापि गोक्षीरन्यायेन शाक्यसम्बन्धे सत्यधर्मत्वप्रसङ्गात्। तदीयग्रन्थे नाहिंसादिर्नावगन्तव्यः। तस्मान्न सा धर्मे प्रमाणम्। विचारान्तरं दर्शयति।

सदाचारोऽप्रमा मा वा निर्मूलत्वादमानता।
अष्टकादेरिवैतस्य समूलत्वात् प्रमाणता ॥ १३ ॥

होलाकोत्सवादिसदाचारस्य मूलभूतवेदाभावादप्रामाण्यमिति चेत्। न। वैदिकैः शिष्टैः परिगृहीतत्वेनाष्टकादिवत् वेदमूलत्वात्। अत एव मन्वादिभिर्ग्रन्थगौरवभयाद्विशेषाकारेणानुपदिष्टोऽपि सदाचारः सामान्याकारेणोपदिष्टः। श्रुतिः स्मृतिः सदाचार इत्येवं धर्मे प्रमाणोपन्यासात् तस्माच्छिष्टाचारः प्रमाणम्। पञ्चमाधिकरणमारचयति।

यवादिशब्दाः किं द्व्यर्था नो वार्य्यम्लेच्छ साम्यतः।

दीर्घशूकप्रियंग्वाद्या द्वयेऽप्यर्थौ विकल्पिता: ॥ १४ ॥
यवान्या इति शास्त्रस्थप्रसिद्धिस्तु बलीयसी ।
शास्त्रीयधर्मे तेनात्र प्रियंग्वादिर्न गृह्यते ॥ १५ ॥

यवमयश्चरुर्भवति । वाराही उपानहौ उपमुञ्चत इति श्रूयते । तत्र यवशब्दमार्य्या दीर्घशूकेषु प्रयुञ्जते वराहशब्दं च शूकरे । म्लेच्छास्तु यवशब्दं प्रियङ्गुषु वराहशब्दं कृष्णशकुनौ । तथा सति लोकव्यवहारेण निश्चेतव्येषु शब्दार्थेष्वार्य्यम्लेच्छप्रसिद्धयो: समत्वबलत्वादुभयविधा अप्यर्थौ विकल्पेन स्वीकार्य्या इति प्राप्ते ब्रूम: । शास्त्रीयधर्मावबोधे शास्त्रप्रसिद्धिर्बलीयसी । प्रत्यासन्नत्वादविच्छिन्नपारम्पर्य्यागतत्वाच्च । शास्त्रे च यवविध्यर्थवाद एव श्रूयते । यवान्या ओषधयो म्लायन्ते । अथैते मोदमाना इवोत्तिष्ठन्तीति । इतरौषधिविनाशकालेऽभिवृद्धिर्दीर्घशूकेषु दृश्यते । न तु प्रियङ्गुषु । तेषामितरौषधिपाकात् पूर्वं पच्यमानत्वात् । उपानद्विध्यर्थवादश्चैवं भवति । वराहं गावो ऽनुधावन्तीति गवामनुधावनं शूकरे सम्भवति । न तु कृष्णशकुनौ । तस्माद्दीर्घशूकादिर्यवादिशब्दार्थ: । अत्र वार्त्तिककार: पीलुशब्दमुदाजहार । तं च म्लेच्छा हस्तिनि प्रयुञ्जते । आर्य्यास्तु वृक्षे । तत्राविप्लुत व्यवहारस्यार्य्येषु सम्भवाद्वृक्ष एव पीलुशब्दार्थ: । अस्मिन्नेवाधिकरणे गुरुमतमाह ।

यवाद्यर्थानिर्णयेन तद्वाक्यं न प्रमेति चेत् ।
न शास्त्रस्य बलित्वेन तत्प्रसिद्ध्यार्थनिर्णयात् ॥ १६ ॥

स्पष्टोऽर्थ: ।

अस्मिन्नेवाधिकरणे वार्त्तिककारमतेन वर्णकान्तरमारचयति ।

यो मातुलविवाहादौ शिष्टाचारः स मा न वा ।
इतराचारवन्मात्व ममात्वं स्मार्त्तबाधनात् ॥ १७ ॥
स्मृतिमूलो हि सर्वत्र शिष्टाचारस्ततोऽत्र च ।
अनुमेया स्मृतिः स्मृत्या बाध्या प्रत्यक्षया तु सा ॥१८॥

केषुचिद्दक्षिणदेशेषु मातुलस्य दुहितरं शिष्टाः परिणयन्ति । सोऽयमाचारः प्रमाणम् । शिष्टाचारत्वात् । होलाकाद्याचारवदिति चेत् । न । स्मृतिविरुद्धत्वेन कालात्ययापदिष्टत्वात् । तथा च स्मृतिः । मातुलस्य सुतामूढ़ा मातृगोत्रां तथैव च । समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेदिति । न च स्मृत्याचारयोर्मूलवेदानुमापकत्वसाम्यात् समबलत्वमिति वाच्यम् । होलाकादिसदाचारस्य मन्वादिस्मृतिवद्वेदानुमापकत्वायोगात् । न होदानीन्तनाः शिष्टा मन्वादिवद्देशकालविप्रकृष्टं वेदं दिव्यज्ञानेन साक्षात्कर्त्तुं शक्नुवन्ति येन शिष्टाचारो मूलवेदमनुमापयेत् । शक्नोति तु यः कोऽपि शिष्टो यत्र क्वापि देशविशेषे कालविशेषे च यं कञ्चिदपि होलाकाद्याचारस्य मूलभूतं स्मृतिग्रन्थमवलोकयितुम् । तस्मात् शिष्टाचारेण स्मृतिरेवानुमातुं शक्यते । न तु श्रुतिः । अनुमिता च स्मृतिर्विरुद्धया प्रत्यक्षया स्मृत्या बाध्यते । अत एवाहुः । आचारात् तु स्मृतिं ज्ञात्वा स्मृतेश्च श्रुतिकल्पनम् । तेन व्यन्तरितं तेषां प्रामाण्यं विप्रकृष्यते । तस्मादप्रामाण्यमीदृशस्याचारस्याभ्युपेयम् । तत्रैवापरं वर्णकमारचयति ।

लौकिको वाक्यगो वार्थस्त्रिवृदादेः समस्ततः ।
उभौ विध्यर्थवादैकवाक्यत्वादस्त्रिवृदन्तिमः ॥ १९ ॥

त्रिवृद्बहिष्पवमानमिति श्रुतौ त्रिवृच्छब्दस्य त्रैगुण्यं लोकसिद्धोऽर्थः । वाक्यशेषात् तु एकस्यामृचि तिसृषु सूक्तेष्ववस्थितानां बहिष्पवमानात्मकस्तोत्रनिष्पादनक्षमाणामुपास्मै गायता नर इत्यादीनामृचां नवकमर्थः । तत्र धर्मनिर्णये वेदस्य प्रबलत्वेऽपि पदपदार्थनिर्णये लोकवेदयोः समानबलत्वादुभावर्थौ विकल्पेन ग्रहीतव्याविति चेत् । मैवम् । लौकिकार्थस्वीकारपक्षे विधिवाक्येऽर्थस्त्रैगुण्यमर्थवादवाक्ये स्तोत्रीयाणामृचां नवकमित्येव विध्यर्थवादयोर्वैयधिकरण्यादेकवाक्यत्वं न स्यात् । अत एकवाक्यत्वाय स्तोत्रीयाणां नवकमेव विधिवाक्ये नियतोऽर्थः । षष्ठाधिकरणमारचयति ।

कल्प्यः पिकादिशब्दार्थो ग्राह्यो वा म्लेच्छरूढितः ।
कल्प्य आर्यैष्वसिद्धत्वादनार्याणामनादरात् ॥ २० ॥
ग्राह्या म्लेच्छप्रसिद्धिस्तु विरोधादर्शने सति ।
पिकनेमादिशब्दानां कोकिलाद्यर्थता ततः ॥ २१ ॥

आर्याः पिकादिशब्दं न क्वाप्यर्थे प्रयुञ्जते । म्लेच्छाश्च न प्रमाणभूताः । तस्मान्निगमनिरुक्तव्याकरणैः पिकनेमादिशब्दानामर्थः कल्पनीय इति चेत् । मैवम् । आर्यप्रसिद्धिविरोधस्यादृष्टत्वेनेदृशे विषये म्लेच्छप्रसिद्धेरप्यादरणीयत्वात् । कल्प्यमानादव्यवस्थितादर्थाद्वरं म्लेच्छरूढिः । यद्यप्यार्या अपि रूढेरभावस्तत्र निरुक्तादयः सारितार्थाः । तस्मादनार्यप्रसिद्ध्या पिकः कोकिलः । नेमशब्दोऽर्धवाची । तामरस-

शब्दः पशुवाचीत्येव द्रष्टव्यम्। अस्मिन्नेवाधिकरणे गुरु-मतमाह।

अर्थाबोधादप्रमाणं पिकालम्बनचोदना।
नैवं म्लेच्छप्रसिद्ध्यापि तद्बोधादविरुद्धया॥ २२॥

स्पष्टोऽर्थः। सप्तमाधिकरणमारचयति।

अपौरुषेयाः कल्पाद्याः कृत्रिमा वा न कृत्रिमाः।
श्रुतिस्मृत्योर्धर्मबुद्धेः स्वतो मानं यतः समम्॥ २३॥
पुंनामोक्तेः पौरुषेयाः काठकाद्यसमत्वतः।
तत्रोपलेभिरे केचिदापस्तम्बादिकर्तृताम्॥ २४॥

बौधायनापस्तम्बाश्वलायनकात्यायनादिनामाङ्किताः कल्पसूत्रादिग्रन्था निगमनिरुक्तषडङ्गग्रन्था मन्वादिस्मृतयश्चा-पौरुषेयाः। धर्मबुद्धिजनकत्वात्। वेदवत्। न च मूल-प्रमाणसापेक्षत्वेन वेदवैषम्यमिति शङ्कनीयम्। उत्पन्नाया बुद्धेः स्वतः प्रामाण्याङ्गीकारेण निरपेक्षत्वात्। मैवम्। उक्ता-नुमानस्य कालात्ययापदिष्टत्वात्। बौधायनसूत्रमापस्तम्बसूत्र-मित्येवं पुरुषनाम्ना ते ग्रन्था उच्यन्ते। न च काठकादि-समाख्यावत् प्रवचननिमित्तत्वं युक्तम्। तद्ग्रन्थनिर्माण-काले तदानीन्तनैः कैश्चिदुपलब्धत्वात्। तच्चाविच्छिन्नपार-म्पर्येणानुवर्त्तते। ततः कालिदासादिग्रन्थवत् पौरुषेयाः। तथापि वेदमूलत्वात् प्रमाणम्। अत्रैव गुरुमतमाह।

कल्पे सर्वतिथौ दर्शकार्य्यतोक्तेः श्रुतिर्न मा।
न कल्पो मा श्रवेदत्वप्रहाणाद्दुर्बलत्वतः॥ २५॥

सर्वतिथौ दर्शयागकर्त्तव्यतां कल्पसूत्रकार आह। सर्वासु तिथिष्वमावास्या कर्त्तव्येति। श्रुतिस्त्वमावास्यायामेव

तिथौ तत्कर्त्तव्यतां ब्रूते। ततः कल्पसूत्ररूपेण वेदेन विरुद्धत्वादियं श्रुतिर्न मानमिति चेत्। मैवम्। कल्पस्य वेदत्वं नाद्यापि सिद्धम्। किन्तु प्रयत्नेन साधनीयम्। न च तत् साधयितुं शक्यम् पौरुषेयत्वस्य समाख्यया तत्कर्त्तुरुपलम्भेन च साधितत्वात्। अतः कल्पसूत्रस्य दुर्बलतया न श्रुतेरप्रामाण्यम्। अष्टमाधिकरणमारचयति।

होलाकादेर्व्यवस्था स्यात् साधारण्यमुतायिमः।
देशभेदेन दृष्टत्वात् साम्यं मूलसमत्वतः॥ २६॥

होलाकादिशिष्टाचाराणां हारीतादिस्मृतिविशेषाणां चानुष्ठातृपुरुषभेदेन व्यवस्थितं प्रामाण्यम्। कुतः। देशविशेषे तेषां दृष्टत्वात्। होलाकादयः प्राच्यैरेव क्रियन्ते। वसन्तोत्सवो होलाका। आह्नीनेबुकादयो दाक्षिणात्यैः। स्वस्वकुलागत करञ्जार्कादिस्थावरदेवतापूजादिकमाह्नीनेबुकशब्देनोच्यते। उदृषभयज्ञादय उदीच्यैः। ज्येष्ठमासस्य पौर्णमास्यां बलीवर्दानभ्यर्च्य धावयन्ति। सोऽयमुदृषभयज्ञः। एवं हारीतादिस्मृतिः काचित् क्वचिद्देशविशेषे दृश्यते। तस्माद्व्यवस्थितं प्रामाण्यमिति चेत्। मैवम्। तन्मूलत्वेनानुमितस्य वेदस्य सर्वसाधारणत्वेन तेषामपि सर्वसाधारणत्वात्। अत्रैव गुरुमतमाह।

प्राच्यादिपदयुक्तायाः श्रुतेरनुमितौ सत्याम्।
अर्थाबोधादमानत्वं चेन्न सामान्यानुमानतः॥ २७॥

प्राच्यादिभिर्व्यवस्थया होलाकादिष्वनुष्ठीयमानेषु तन्मूलश्रुतिरपि प्राच्यादिपदयुक्तैवानुमातव्या। तत्र प्राच्यादिपदस्यार्थो न बुध्यते। ये पुरुषाः कस्मिंश्चित् काले प्राच्यां

निवसन्ति त एव कालान्तरे प्रतीच्यां दिशि निवसन्त उपलभ्यन्ते। तत्र श्रौतप्राच्यादिपदस्यार्थाबोधादप्रमाणं श्रुतिरिति चेत्। *नैवम्। अनुष्ठानसामान्यस्य मूलश्रुतिकल्पकत्वात्। अतः प्राच्यादिपदराहित्ये सत्यर्थं बोधादनुमिता श्रुतिः प्रमाणम्*। नवमाधिकरणमारचयति।

गागाव्यादिषु साधुत्वे प्रयोगे वा न कश्चन।
नियमोऽत्रास्ति वा नास्ति व्याकृतेर्मूलवर्जनात् ॥२८॥
साधूनेव प्रयुञ्जीत गवाद्या एव साधवः।
इत्यस्ति नियमः पूर्वपूर्वव्याकृतिमूलतः ॥ २९ ॥

व्याकरणाभिज्ञैः सास्नादिमद्वस्तुनि गौरित्येव शब्दः प्रयुज्यते। तदनभिज्ञैस्तु स्वस्वदेशीयभाषामनुसृत्य गावी गोणी गोता गोपोतलिकेत्येवमादयः शब्दाः प्रयुज्यन्ते। तत्र ईदृश एव शब्दः साधुर्नेदृश इत्यस्मिन्नर्थे नियामकं नास्ति। तथा प्रयोगेऽपि तन्नास्ति। ईदृश एव शब्दः प्रयोक्तव्यो नेदृश इति न तावद् व्यवहारो नियामकः। तस्य सर्वेषु शब्देषु समानत्वात्। नापि व्याकरणस्मृतिर्नियामिका। तस्या निर्मूलत्वेनाप्रमाणत्वात्। न ह्यभियुक्तप्रयोगस्तन्मूलम् अन्योन्याश्रयत्वप्रसङ्गात्। व्याकरणस्मृतेः प्रामाण्यसिद्धौ तदनुसारेण प्रयोक्तॄणामभियुक्तत्वसिद्धिः। तत्सिद्धौ तत्प्रयोगमूलतया व्याकरणस्य प्रामाण्यम्। तस्मान्नास्ति साधुत्वप्रयोगयोर्नियम इति प्राप्ते ब्रूमः। साधूनेव शब्दान् प्रयुञ्जीत न त्वपशब्दानित्यस्ति नियमः। उभयत्र क्रमेण गुणदोषवादिनो वेदवाक्ययोः श्रवणात्। एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवतीति गुण-

वाक्यम्। तस्माद् ब्राह्मणेन न म्लेच्छितवै नापभाषितवै। म्लेच्छो ह वा एष यदपशब्द इति शेषवाक्यम्। यथा प्रयोगनियमस्तथा साधुत्वेऽपि नियमो द्रष्टव्यः। गवाद्या एव साधवो न तु गाव्यादय इत्यस्मिन्नर्थे। व्याकरणस्य नियामकत्वात्। न च निर्मूलत्वम्। पूर्वपूर्वव्याकरणस्य तन्मूलत्वात्। एतदेवाभिप्रेत्योक्तम्। तत्र यूपादिकरणवद्व्याकरणपरम्परायामादित्वादनुपालम्भ इति व्याकरणप्रामाण्यं साक्षादेव वेदेनाप्यभ्यस्तम्। तथा चाथर्वणिका आमनन्ति। द्वे विद्ये वेदितव्ये इति ह स्माहुर्यद् ब्रह्मविदो वदन्ति। परा चैवापरा च। तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति। तैत्तिरीयब्राह्मणेऽपि व्याकरणस्योपादेयता श्रूयते। वाग्वै पराच्यव्याकृतावदत्ते देवा इन्द्रमब्रुवन्निमां नो वाचं व्याकुर्विति। सोऽब्रवीद्वरं वृणे मह्यं चैवैष वायवे च सह गृह्याता इति तस्मादैन्द्रवायवः सह प्रगृह्यते। तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्। तस्मादियं व्याकृता वागुद्यत इति। व्याकर्त्तारश्च पाणिनिकात्यायनपतञ्जलयो मन्वादिसमानाः। तस्मात् साधूनामेव प्रयोगे गवादीनामेव साधुत्वे व्याकरणस्मृतिः प्रमाणम्। अत्रैव गुरुमतमाह।

अश्वालम्भनशास्त्रस्य दन्त्यतालव्यसंशयात्।
अमात्वे ऽदन्त्यनिर्णीतिरामोक्तव्याकृतेर्बलात्॥ ३०॥

श्वमालभेते त्यत्राकारवकारयोर्मध्यवर्त्तिनो वर्णस्य दन्त्यत्वे स्वं धनम् तद्रहितं दरिद्रमालभेतेत्यर्थो भवति।

तालव्यत्वे तुरङ्गमवाचित्वम्। ततः संशयादप्रामाण्यमिति चेत्। न। व्याकरणानुसारेणाशू व्याप्ताविल्यस्माद्धातो रौणादिके व प्रत्यये कृते तालव्यत्वनिर्णयात्। तस्मादश्वालम्भनशास्त्रं प्रमाणम्। दशमाधिकरणे प्रथमवर्णकमारचयति।

लोके पदपदार्थौ यौ न तौ वेदे ऽथवात्र तौ।
रूपभेदात् पदं भिन्नमुत्तानादिभिदा स्फुटा॥ २१॥
वर्णैकत्वात् पदैकत्वं क्वाचित्की रूपभिन्नता।
प्रायिकेण पदैक्येन तदर्थैक्यं तथाविधम्॥ २२॥

वैदिकौ पदपदार्थौ लौकिकाभ्यां पद पदार्थाभ्यामन्यौ। कुतः। रूप भेदात्। पदे तावद्रूपभेदो दृश्यते। आत्मशब्द आकारादित्वेन लोके नियतः। वेदे तु क्वचिदाकाररहितः पठ्यते। प्रयतं पुरुषं त्मनेति। ब्राह्मणा इति लोके। वेदे त्वन्यथा पठ्यते। ब्राह्मणासः पितरः सोम्यास इति। अर्थभेदो ऽपि स्फुटः। उत्तानावै देवगवा वहन्तीति श्रूयते। मनुष्यगवास्त्ववाञ्चो वहन्ति। वेदे वनस्पतिर्हिरण्यपर्णः। तथाच श्रूयते। देवेभ्यो वनस्पते हवींषि हिरण्यपर्ण प्रदिवस्ते अर्थमिति। तस्माल्लोकवेदयोः पदपदार्थावन्याविति प्राप्ते ब्रूमः। य एव लौकिकाः पदार्थास्त एव वैदिकाः। तथाहि वर्णानां तावन्नित्यत्वं प्रथमे पादे साधितम्। यथा प्रयोक्तॄणां पुरुषाणां भेदेऽप्येकैकस्य पुरुषस्य बहुकृत्व उच्चारणभेदेऽपि त एवामी वर्णा इति प्रत्यभिज्ञानाद्वर्णैक्यम्। तथा यानि लोके गवादिपदानि तान्येव वेदे विधीयमानानीत्य-

बाधितप्रत्यभिज्ञया पदैकत्वमभ्युपेयम्। अतो देवास इत्यादिपदभेदस्तु क्वाचित्कः। नैतावता बहुतरप्रत्यभिज्ञावगतं पदैक्यमपोढुं शक्यम्। अन्यथा सोऽयं देवदत्त इति प्रत्यभिज्ञातं देवदत्तैक्यमपि देशादिभेदसाक्षिणापोह्येत। पदैक्ये चार्थैकत्व मवश्यम्भावि। अन्यथा वेदे पृथग्व्युत्पत्त्यभावादबोधकत्वं प्रसज्येत। एत देवाभिप्रेत्योक्तम्। लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधक इति स्वरुयूपाहवनीयादिशब्दानां तदर्थानां चालौकिकत्वेऽपि प्रसिद्धपदसमभिव्याहाराद् व्युत्पत्तिः सम्भवति। उत्तानवहनादिकं त्वर्थवादः। अस्तु वा तथा वहनम्। तथाप्युत्तानादिशब्दास्तदर्थाश्च लोकसिद्धा एव। तस्माद् यएव लौकिकाः पदपदार्थास्त एव वैदिकाः।

द्वितीयवर्णकमारचयति।

व्यक्ति र्व्रीह्यादिशब्दार्थ आकृतिर्वा क्रियान्वयात्।
व्यक्तिर्व्युत्पत्तिवेलायामाकृत्या सोपलक्ष्यते॥ ३३॥
शक्तिग्रहादियुक्तिभ्य आकृतेरर्थतोचिता।
क्रियापर्य्यवसानाय व्यक्तिस्तत्रोपलक्ष्यताम्॥ ३४॥

व्रीहीनवहन्ति। पशुमालभेत। गामानय। ब्राह्मणो न हन्तव्य इत्यादिप्रयोगेषु व्रीह्यादिशब्दानां व्यक्तिरर्थः। कुतः। अवहननादिक्रियाभिव्यक्तेरन्वेतुं शक्यत्वात्। न ह्याकृतिरवहन्तुमालब्धुमपनेतुं वा योग्या। नन्वानन्त्यव्यभिचाराभ्यां न व्यक्तौ व्युत्पत्तिः सम्भवति। अनन्ता हि गोव्यक्तयः। अतीतानामनागतानामनेकदेशवर्त्तिनां गवामियत्ताया अनवधारणात्। किञ्च। शुक्लव्यक्तौ

व्युत्पन्नो गोशब्दः खण्डव्यक्तौ प्रयुज्यमानस्तां व्यभिचरेत्। तत्र कथं व्युत्पत्तिरिति चेत्। एवं तर्हि व्युत्पत्तिकाले सा व्यक्तिराकृत्योपलक्ष्यतामिति प्राप्ते ब्रूमः। अन्वयव्यतिरेकाभ्यामाकृतेः शक्तिग्रहणनिमित्तत्वाच्छब्दार्थत्वं तस्या एवोचितम्। किञ्च। गोशब्द उच्चारिते व्यक्तिवादिनः संशया भवेत्। तस्मादाकृतेरेवाभिधेयत्वम्। यद्याकृतावबहननादिक्रिया न पर्यवस्येत्। तर्हि व्यक्तिस्तत्रोपलक्षणीया। किञ्च। श्येनचितं चिन्वीतेत्यादावाकृतेरेव सादृश्यप्रतियोगितया कार्य्यान्वयो दृश्यते। तस्मादाकृतिः शब्दार्थः। अत्रैव गुरुमतमाह।

गवादिचोदना नो वा जातिव्यक्त्यो रनिर्णयात्।
आनन्त्यव्यभिचाराभ्यां न व्यक्तिरिति निर्णयः ॥२१॥

स्पष्टोऽर्थः।

इति माधवीये जैमिनीयन्यायमालाविस्तरे प्रथमाध्यायस्य तृतीयःपादः।

———०———

चतुर्थपादस्य प्रथमाधिकरणं वार्त्तिककारोक्तमारचयति।

उद्भिदादिपदं धर्मे किममानमुत प्रमा।
विध्यर्थवादमन्त्रांशेष्वनन्तर्भावतो न सा ॥ १ ॥
अन्तर्भावो विधावुद्भिदा यजेतेति दृश्यते।
नामत्वेनान्वयो वाक्ये वक्ष्यतेऽतः प्रमैव तत् ॥ २ ॥

उद्भिदा यजेत। विश्वजिता यजेतेत्येवं समाम्नायते। तत्रोद्भिदादिपदं न धर्मे प्रमाणम्। कुतः। प्रमाणत्वेनाभिमतेषु त्रिषु वेदविभागेष्वनन्तर्भावात्। तथाहि

विधिः साक्षात् प्रमाणम्। अर्थवादमन्त्रौ तु विध्यन्वयेन। तत्र न तावदुद्भिदादि पदं विधायकं भवति। विध्यर्थरूपाया भावनाया अंशेषु भाव्यकरणेऽतिकर्त्तव्यताकपेषु कस्याप्यवाचकत्वात्। नाप्यर्थवादत्वम्। स्तुतिवृद्धेरभावात् नापि मन्त्रत्वम्। उत्तमपुरुषादीनां मन्त्रलिङ्गानामभावात्। तथा चोक्तम्। उत्तमामन्त्रणा स्यन्तेत्वान्तरूपाद्यभावतः। मन्त्रप्रसिद्ध्यभावाच्च मन्त्रतैषां न युज्यत इति। अग्नये जुष्टं निर्वपामीत्युत्तमपुरुषः। अग्ने यशस्विन् यशसे समर्पये त्यामन्त्रणम्। उर्जी चासि वसो चासीत्यस्यन्तरूपम्। इषे त्वोर्जे त्वेति त्वान्तरूपम्। आदिशब्दे नाशीर्देवताप्रतिपादनादयः। एवमादिष्वनन्तर्भावादमानमिति चेत्। न विध्यंशे करणेऽन्तर्भावात्। यद्यपि लिङादिन सह समानपदोपात्तो यजिधात्वर्थः करणम्। तथापि तस्य यजेर्नामत्वे नोद्भिदादिपदमन्वेति। तस्मात् प्रमाणम्। द्वितीयाधिकरणमारचयति।

गुणोऽयं नामधेयं वा खनित्रेऽस्य निरुक्तितः।
ज्योतिष्टोमं समाश्रित्य पश्वर्थं गुणचोदना॥ ३॥
फलोद्भिदात् समानैषा निरुक्तिर्योगनाम्न्यपि।
नामत्व मुचितं यागसामानाधिकरण्यतः॥ ४॥

उद्भिदा यजेत पशुकाम इत्यत्र तृतीयान्ते नोद्भित्पदेन योऽर्थो विवक्षितः सोऽयं यागे कश्चिद्गुणः स्यात्। दध्ना जुहोतीत्यनेन गुणविधिना समानत्वात्। यथोच्येत। दधि शब्दार्थो लोकप्रसिद्धः। उद्भि-

शब्दार्थस्त्वप्रसिद्ध इति । तन्न । रूढ्यभावेऽप्यवयवार्थ-
निरुक्त्या तत्प्रसिद्धेः । उद्भिद्यते भूमिरनेनेतिव्युत्पत्त्या
खनित्रवाच्यसौ शब्दः । न चात्र पशुफलकः कश्चिद्यागो
विधीयत इति वाच्यम् । पशूनां गुणफलत्वात् । यथा
गोदोहनेन पशुकामस्येत्यत्र पशवो गोदोहनगुणस्य फलम् ।
तथेह खनित्रगुणस्य फलमस्तु । यदि चमसेनापः प्रणयेदिति
विहितं प्रकृतमपां प्रणयनमाश्रित्य गोदोहनं विधीयते ।
तर्ह्यत्रापि ज्योतिष्टोमेन यजेतेति विहितं प्रकृतं ज्योतिष्टो-
ममाश्रित्य खनित्रं विधीयताम् तस्माद्गुणविधिरिति प्राप्ते
ब्रूमः । पशुकामो यजेतेत्यस्य पदद्वयस्यायमर्थः । पशु-
रूपं फलं यागेन करणेन कुर्यादिति । तत्र केन यागे-
नेत्यपेक्षायामुद्भिदेति तृतीयान्तपदं यागनामत्वेनान्वेति ।
उद्भिद्यते पशुफलमनेन यागेनेति निरुक्त्या नामत्वमुद्भित्-
पदस्योपपद्यते । एवमपि गुणविधिनामधेयत्वयोः शब्दनिर्व-
चनमात्रान्न निर्णय इति चेत् । नैवम् सामानाधिकरण्यस्य
निर्णायकत्वात् । उद्भिन्नामकेन यागेन फलं कुर्यादित्युक्ते
सामानाधिकरण्यं लभ्यते । गुणत्वे तु खनित्रेण साध्यो
यो यागस्तेनेत्येवं वैयधिकरण्यं स्यात् । यदि खनित्रवता
यागेनेति सामानाधिकरण्यं युज्येत । तदा मत्वर्थलक्षणा
प्रसज्येत । तस्मादुद्भिदादिपदं नामधेयम् । दध्ना जुहोति ।
व्रीहिभिर्यजेतेत्यादिषु द्रव्यविशेषे दध्यादिशब्दानामत्यन्त-
रूढतया यागनामत्वासम्भवादगत्या गुणत्वमाश्रितम् । सोमेन
यजेतेत्यत्राप्यप्रसिद्धार्थनामधेयत्वकल्पनातो वरं प्रसिद्धार्थ-
द्वारेण लक्षणाश्रयणमित्यभिप्रेत्य सोमद्रव्यवता यागेनेति

मत्वर्थलक्षणा स्वीकृता। उद्भिच्छब्दस्य तु लोकप्रसिद्धार्थाभावादुक्तरीत्या नामत्वं युक्तम्। प्रयोजनन्तु नाम्नः सर्वत्र व्यवहार एव। न ह्यन्तरेण नामधेयमृत्विग्वरणादिष्वनेनाहं यक्ष्य इत्याख्यातोपायो लघुः कश्चिदस्ति। तस्मादुद्भिदादिपदं नामधेयम्। अत्रैव गुरुमतमाह।

लौकिके गणयागेऽस्य विधेः सापेक्षतेति चेत्।
निरुक्त्या श्रौतयागस्य नामत्वान्निरपेक्षता॥ ५॥

उद्भिदा यजेतेत्ययं गुणविधिः। न चास्य कश्चिच्छ्रौत आश्रयो लभ्यते। ततो लौकिको मातृगणयागादिराश्रयत्वेनापेक्षणीयः। तस्मिन् यागे गुणोऽयं विधीयते। तथा सति सापेक्षत्वादप्रामाण्यमस्याश्चोदनाया इति चेत्। मैवम्। पूर्वोक्तनिरुक्त्या श्रौतयागनामत्वे सति निरपेक्षत्वात्। तृतीयाधिकरणमारचयति।

यच्चित्रया यजेतेति तद्गुणो नाम वा भवेत्।
चित्रस्त्रीत्वगुणारूढेरग्नीषोमीयके पशौ॥ ६॥
द्वयोर्विधौ वाक्यभेदो वैशिष्ट्ये गौरवं ततः।
स्यान्नामपृष्ठाज्यवद्धिष्ववमानेषु तत् तथा॥ ७॥

चित्रया यजेत पशुकाम इत्याम्नायते। तत्र चित्राशब्दो नोद्भिच्छब्दवद्यौगिकः। किन्तु रूढ्या चित्रत्वं स्त्रीत्वञ्चाभिधत्ते। ततो न पूर्वन्यायेन नामत्वम्। तथा सत्यग्नीषोमीयं पशुमालभेतेति विहितं पशुयागमत्र यजेतेत्यनेन पदेनानूद्य तस्मिन् पशौ चित्रत्वस्त्रीत्वगुणौ विधीयेते इति प्राप्ते ब्रूमः। चित्रत्वं स्त्रीत्वं चेति द्वावेतौ गुणौ। तयोर्द्वयोर्विधाने वाक्यं भिद्येत। तथा चोक्तम्। प्राप्ते कर्मणि

नानेको विधातुं शक्यते गुणः। अप्राप्ते तु विधीयेरन् बहवोऽप्येकयत्नत इति। अथ वाक्यभेदपरिहाराय गुणद्वयविशिष्टं पशुद्रव्यरूपं कारकं विधीयते। तदा गौरवं स्यात्। तस्माच्चित्राशब्दः पूर्ववद्यजिसामानाधिकरण्येन यागनामधेयं भवति। चित्रत्वञ्च तस्य विलक्षणद्रव्यद्वारेणोपपद्यते। दधि मधु घृतमापो धानास्तण्डुलास्तत्संसृष्टं प्राजापत्यमिति दध्यादीनि विचित्राणि प्रदेयद्रव्याणि षडाम्नातानि। तदेतच्चित्रानामकस्य यागस्योत्पत्तिवाक्यम्। यागस्वरूपभूतयोर्दध्यादिद्रव्यप्रजापतिदेवतयोरत्रोपदिश्यमानत्वात्। उत्पन्नस्य तस्य यागस्य चित्रया यजेत पशुकाम इत्येतत् फलवाक्यम्। एवं सति प्रकृतार्थौ लभ्येते। अग्नीषोमीयपश्वनुवादेन गुणविधाने प्रकृतहाना प्रकृतप्रक्रिये प्रसज्येयाताम्। लिङ्प्रत्ययस्य चानुवादकत्वाङ्गीकारान्मुख्यो विध्यर्थो बाध्येत। तस्माच्चित्रापदं नामधेयम्।

यथा चित्राशब्दे नामधेयत्वम्। तथा वहिष्पवमानशब्दे आज्यशब्दे पृष्ठशब्दे च तत्कर्मनामधेयत्वं योजनीयम्। एवं हि श्रूयते। त्रिवृद्वहिष्पवमानम्। पञ्चदशान्याज्यानि। सप्तदशानि पृष्ठानीति। अस्य वाक्यत्रयस्यार्थो विव्रियते। सामगानामुत्तराग्रन्थे तृचात्मकानि सूक्तान्याम्नातानि। तत्रोपास्मै गायता नर इत्याद्यं सूक्तम्। दविद्युतत्या रुचेति द्वितीयम्। पवमानस्य ते कव इति तृतीयम्। ज्योतिष्टोमस्य प्रातःसवनानुष्ठाने तेषु सूक्तेषु गायत्रं साम गातव्यम्। तदिदं सूक्तत्रयगान-

साध्यं स्तोत्रं वहिष्पवमानमित्युच्यते। तत्रावस्थितानामृचां पवमानार्थत्वात्। वहिःसम्बन्धाच्च। न खल्विदं स्तोत्रमितरस्तोत्रवत् सदोनामकस्य मण्डपस्य मध्ये औडुम्बर्याः स्तम्भशाखायाः सन्निधौ प्रयुज्यते। किन्तु सदसो वहिः प्रसर्पद्भिः प्रयुज्यते। तस्य च वहिष्पवमानस्य त्रिवृन्नामकस्तोमो भवति। तस्य च स्तोमस्य विधायकं ब्राह्मणवाक्यमेवमाम्नायते। तिसृभ्यो हिंकरोति स प्रथमया तिसृभ्यो हिंकरोति स मध्यमया तिसृभ्यो हिंकरोति स उत्तमयोद्यती त्रिवृतो विष्टुतिरिति। अयमर्थः। सूक्तत्रयपठितानां नवानामृचां गानं त्रिभिः पर्य्यायैः कर्त्तव्यम्। तत्र प्रथमे पर्य्याये त्रिषु सूक्तेषु आद्यास्तिस्र ऋचः। द्वितीये पर्य्याये मध्यमाः। तृतीये पर्य्याये चोत्तमाः। तिसृभ्य इति तृतीयार्थे पञ्चमी। हिंकरोति गायतीत्यर्थः। सेयं यथोक्तप्रकारोपेता गीतिस्त्रिवृत्स्तोमस्य विष्टुतिः स्तुतिप्रकारविशेषः। अस्या विष्टुतेरुद्यती नामेति। एवं परिवर्त्तिनी कुलायिनीति द्वे विष्टुती। तयोः परिवर्त्तिन्येवमाम्नायते। तिसृभ्यो हिंकरोति स पराचीभिस्तिसृभ्यो हिंकरोति स पराचीभिस्तिसृभ्यो हिंकरोति स पराचीभिः परिवर्त्तिनी त्रिवृतो विष्टुतिरिति। पराचीभिरनुक्रमेणाम्नाताभिरित्यर्थः। कुलायिन्येवमाम्नायते। तिसृभ्यो हिंकरोति स पराचीभिस्तिसृभ्यो हिंकरोति या मध्यमा सा प्रथमा योत्तमा सा मध्यमा या प्रथमा सोत्तमा तिसृभ्यो हिंकरोति योत्तमा सा प्रथमा या प्रथमा सा मध्यमा या मध्यमा सोत्तमा कुलायिनी त्रिवृतो विष्टुति-

रिति । अत्र प्रथमसूक्ते पाठक्रम एव । द्वितीये मध्यमोत्तमप्रथमाः । तृतीये तूत्तमप्रथममध्यमा इत्येवं व्यत्ययेन मन्त्रा मातव्याः । तदिदं विष्टुतित्रयं विकल्पितम् । त्रिवृच्छब्दस्य हि त्रयं स्तोमस्वरूपमर्थो न तु त्रैगुण्यमिति पूर्वपादे निर्णीतम् ।

उत्तराग्रन्थे बहिष्पवमानसूक्तेभ्य ऊर्ध्वं चत्वारि सूक्तान्याम्नातानि । अग्न आ याहि वीतय इत्याद्यं सूक्तम् । आ नो मित्रावरुणेति द्वितीयम् । आ याहि सुषमा हि त इति तृतीयम् । इन्द्राग्नी आ गतं सुतमिति चतुर्थम् । तान्येतानि प्रातःसवने गायत्रसाम्ना गीयमानानि चत्वार्याज्यस्तोत्राणीत्युच्यन्ते । तन्निर्वचनं च श्रूयते । यदाजिमीयुस्तदाज्यानाम् आज्यत्वमिति । तेष्वाज्यस्तोत्रेषु पञ्चदशनामकः स्तोमो भवति । तस्य स्तोमस्य विष्टुतिरेवमाम्नायते । पञ्चभ्यो हिंकरोति स तिसृभिः स एकया स एकया पञ्चभ्यो हिंकरोति स एकया स तिसृभिः स एकया पञ्चभ्यो हिंकरोति स एकया स एकया स तिसृभिरित्येकं सूक्तं त्रिरावर्त्तनीयम् । तत्र प्रथमावृत्तौ प्रथमाया ऋचस्त्रिरभ्यासः । द्वितीयावृत्तौ मध्यमायाः । तृतीयावृत्तावुत्तमायाः । सोऽयं पञ्चदशस्तोमः ।

एतेभ्यश्चतुर्भ्यः सूक्तेभ्य ऊर्ध्वमुत्तराग्रन्थे त्रीणि माध्यन्दिनपवमानसूक्तान्याम्नाय तत ऊर्ध्वं च चत्वारि सूक्तान्याम्नातानि । तेष्वभि त्वा शूर नोनुम इत्याद्यम् । कया नश्चित्र आ भुवदिति द्वितीयम् । तं वो दस्ममृतीषहमिति तृतीयम् । तरोभिर्वो विदद्वसुमिति चतुर्थम् । एतानि

अमेव रथन्तरवामदेव्यनौधसकालेयसामभिर्माध्यन्दिन-सवने गीयमानानि पृष्ठस्तोत्राणीत्युच्यन्ते। स्पर्शनात् पृष्ठानीत्येवं निरुक्तिर्द्रष्टव्या। तेषु स्तोत्रेषु सप्तदशस्तोमो भवति। तस्य स्तोमस्य विष्टुतिरेवमाम्नायते। पञ्चभ्यो हिंकरोति स तिसृभिः स एकया स एकया पञ्चभ्यो हिंकरोति स एकया स तिसृभिः स एकया सप्तभ्यो हिंकरोति स एकया स तिसृभिः स तिसृभिरिति। अत्र प्रथमावृत्तौ प्रथमाया ऋचस्त्रिरभ्यासः। द्वितीयावृत्तौ मध्यमायाः। तृतीयावृत्तौ मध्यमोत्तमयोः. सोऽयं सप्तदशस्तोमः।

अत्र त्रिष्वपि वाक्येषु त्रिवृत्पञ्चदशसप्तदशशब्दा गुण-विधायकत्वेन सम्मताः। यदि बहिष्पवमानाज्यपृष्ठशब्दा अपि गुणविधायकाः स्युः। तदा प्रत्युदाहरणं गुणद्वय-विधानाद्वाक्यभेदः स्यात्। तस्माद्बहिष्पवमानादिशब्दाः स्तोत्रनामधेयानि। तैर्नामभिः कर्माण्यनूद्य त्रिवृदादिगुणा विधीयन्ते।

चतुर्थाधिकरणमारचयति।

अग्निहोत्रं जुहोत्याघारमाघारयतीत्यमू।
विधेयौ गुणसंस्कारावाहोस्वित् कर्मनामनी ॥ ८ ॥
अग्नये होत्रमत्रेति बहुव्रीहिगतोऽनलः।
गुणो विधेयो नामत्वे रूपं न स्यात् क्षरद्घृते ॥ ९ ॥
संस्क्रियाघारमाघारयतीत्युक्ता द्वितीयया।
आघारेत्वग्निहोत्रेति यौगिके कर्मनामनी ॥ १० ॥
अग्निर्ज्योतिरिति प्रोक्तो मन्त्राद्देवस्तथा घृतम्।

चतुर्थ्यन्तहोतवाक्योक्तं द्वितीयायास्त्वियं गतिः॥ ११॥
नासाधिते हि धात्वर्थे करणत्वं ततोऽस्य सा।
साध्यतां वक्ति संस्कारो नैवाशङ्कः क्रिया त्वतः॥१२॥

अग्निहोत्रं जुहोति। आघारमाघारयतीत्यत्राग्निहोत्रशब्दस्य कर्मनामत्वे द्रव्यदेवतयोरभावाद् यागस्य स्वरूपमेव न सिध्येत्। ततोऽग्नि देवतारूपो गुणोऽनेन दर्विहोमे विधीयते। आघारशब्दश्च घृ चरणदीप्त्योरित्यस्माद्धातोरुत्पन्नः चरद्घृतमाचष्टे। तस्मिंश्च घृते द्वितीयाविभक्त्या संस्कार्यत्वं प्रतीयते। तच्च संस्कृतं घृतमुपांशुयाजे द्रव्यं भवति। तस्मादग्निहोत्राघारशब्दौ गुणसंस्कारयोर्विधायकाविति प्राप्ते ब्रूमः। अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति। सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातरिति विहितेन मन्त्रेण प्राप्तत्वाद् देवता न विधेया। ततोऽग्निसूर्यदेवताकस्य सायंप्रातःकालयोर्नियमेनानुष्ठेयस्य कर्मणोऽग्निहोत्रमिति यौगिकं नामधेयम्। योगश्च बहुव्रीहिणा दर्शितः। चतुर्थ्यन्तहोत वा एतद्भूत् तस्याघारमाघार्य्येत्यनेनैवाज्यद्रव्यस्य प्राप्ततया चरद्घृतसंस्कारस्याविधेयत्वादाघारशब्दोऽपि यौगिक कर्मनामधेयम्। यस्मिन् कर्मणि नैरृतीं दिशमारभ्यैशानीं दिशमवधिं कृत्वा सन्तत्या घृतं क्षार्य्यते तस्य कर्मण एतन्नाम। ननु नामधेयत्वे सत्युद्भिदा यजेत ज्योतिष्टोमेन यजेतेत्यादाविव धात्वर्थेन करणेन सामानाधिकरण्यायाग्निहोत्रेण जुहोत्याघारेणाघारयतीति तृतीयया भवितव्यम्। नैष दोषः। अनुष्ठानादूर्ध्वं धात्वर्थस्य सिद्धत्वाकारेण करणत्वेऽपि ततः पूर्वं

साध्यत्वाकारं वस्तुमग्निहोत्रमाघारमिति द्वितीयायां युक्तत्वात्। न चात्र द्वितीयानुसारेण व्रीहीन् प्रोक्षतीत्यादाविव संस्कारः शङ्कनीयः। व्रीहिशब्दवदग्निहोत्राघारशब्दयोः प्रसिद्धद्रव्यवाचकत्वाभावेन क्रियावाचित्वाभ्युपगमात्। तस्मादग्निहोत्राघारशब्दौ दर्विहोमोपांशुयाजयोर्गुणसंस्कारविधायिनौ न भवतः। किन्तु कर्मान्तरयोर्नामनी।

पञ्चमाधिकरणमारचयति।

श्येनेनाभिचरन् मर्त्यो यजेतेति श्रुतौ गुणः।
विधीयते पक्षिरूपो नाम वा तस्य कर्मणः॥ १३॥
श्येनेनेति गुणः काम्यः सौमिकः सोमबाधया।
न चित्रावद् वाक्यभेदो रूढेश्चैवमनुग्रहः॥ १४॥
यथा वै श्येन इत्युक्ता ह्युपमानोपमेयता।
नैकस्मिंस्तेन गौण्यास्य वृत्त्या स्यात् कर्मनामता॥१५॥

श्येनेनाभिचरन् यजेतेत्यत्र नामत्वे द्रव्यदेवतयोरभावाद् यागस्वरूपमपि न सिध्येत्। ततः सोमयागे नित्यं सोमद्रव्यं बाधित्वा सोमस्य स्थाने पक्षिद्रव्यरूपो गुणः काम्यो विधीयते। तथा सति श्येनशब्दस्य पक्षिणि लोकसिद्धा रूढिरभ्युपगता भवति। न च गुणविधित्वे चित्रायामिव वाक्यभेद आपादयितुं शक्यः। चित्रत्वस्त्रीत्ववद्गुणद्वयाभावादिति प्राप्ते ब्रूमः। यथा वै श्येनो निपत्यादत्ते। एवमयं द्विषन्तं भ्रातृव्यमादत्ते यमभिचरति श्येनेनेति वाक्येनैक उपमानोपमेयभावः पक्षिण्येकस्मिन् बुध्यते। तस्मात् पक्षिण उपमानस्य गुण उपमेये कर्मण्यस्तीति श्येनशब्दस्याभिचारकर्मनामत्वम्। सन्दंशेनाभिचरन् यजेत

गवाभिचर्य्यमाणो यजेतेत्यत्र सन्दंशगोशब्दयोर्नामत्वं श्येनशब्दवद् द्रष्टव्यम्। यथा संदंशेन दूरादानमादत्ते। यथा गावो गोपायन्तीति वाक्यशेषाभ्यामुपमानोपमेयभावाभिधानात्।

षष्ठाधिकरणमारचयति।

यजेत वाजपेयेन स्वाराज्यार्थीत्यसौ गुणः।
नाम वा गुणता तन्त्रयोगाद् गुणफलद्वये॥ १६॥
साधारणयजेः कर्मकरणत्वेन तन्त्रता।
त्रिकद्वयं विरुद्धं स्यात् तन्त्रतायां फलं प्रति॥ १७॥
उपादेयविधेयत्वगुणत्वाख्यं त्रिकं यजेः।
उद्देश्यानूक्तिमुख्यत्वत्रिकं तस्य गुणं प्रति॥ १८॥
त्यक्ता तन्त्रं तदावृत्तौ वाक्यं भिद्येत तेन सः।
वाजपेयेतिशब्दोऽपि कर्मनामाग्निहोत्रवत्॥ १९॥

वाजपेयेन स्वाराज्यकामो यजेतेत्यत्र वाजपेयशब्देन गुणो विधीयते। अन्नवाची वाजशब्दः। तच्चान्नं पेयं सुराद्रव्यम्। तच्चात्र गुणः। सुराग्रहाणामनुष्ठेयत्वात्। ननु गुणत्वे वाजपेयगुणवता यागेन स्वाराज्यं भावयेदित्येवं मत्वर्थलक्षणा प्रसज्येत। मैवम्। सकृदुच्चारितस्य यजेतेत्याख्यातस्य वाजपेयगुणे स्वाराज्यफले च तन्त्रेण सम्बन्धाङ्गीकाराद् वाजपेयेन द्रव्येण स्वाराज्याय यजेतेत्येवमुभयसम्बन्धः। ननु गुणसम्बन्धे सति वाजपेयगुणेन यागं कुर्य्यादिति यजेः कर्मकारकत्वं भवति। फलसम्बन्धे तु यागेन स्वाराज्यं सम्पादयेदिति करणकारकत्वम्। ततः कथमुभयसम्बन्ध इति चेत्। नायं दोषः। यजेः साधारण-

र्गुणयोर्विधानाद् वाक्यभेद इति शङ्कनीयम्। कर्मणोऽप्राप्तत्वेन गुणद्वयविशिष्टस्य कर्मण एकेन वाक्येन विधानात्। तस्मादाग्नेयशब्देन देवतागुणो विधीयते।

अत्र गुरुमतमाह।

यदाग्नेय इति प्रोक्तं न मानं विध्यसम्भवात्।
इति चेन्न विशिष्टार्थविधौ सत्यप्रमा कुतः॥ २२॥

उदाहृतवाक्ये देवताराहित्यप्रसङ्गेन नामत्वाभावाद्गुणयोर्विधौ वाक्यभेदाच्च विध्यसम्भवादप्रामाण्यमिति पूर्वपक्षः। गुणद्वयविशिष्टकर्मविधिसम्भवात् प्रामाण्यमिति सिद्धान्तः।

अष्टमाधिकरणमारचयति।

बर्हिराज्यपुरोडाशशब्दाः संस्कारवाचिनः।
जात्यर्था वा शास्त्ररूढेस्ते स्युः संस्कारवाचिनः॥२३॥
जातिं त्यक्त्वा न संस्कारे प्रयुक्ता लोकवेदयोः।
विनापि संस्कृतिं लोके दृष्टत्वाज्जातिवाचिनः॥ २४॥

दर्शपूर्णमासयोः श्रूयते। बर्हिर्लुनाति। आज्यं विलापयति। पुरोडाशं पर्य्यग्निं करोतीति। तत्र बर्हिरादिशब्दानां शास्त्रे सर्वत्र संस्कृतेष्वेव तृणादिषु प्रयोगात् पोत्रादिशब्देषु शास्त्रीयरूढिप्राबल्यस्योक्तत्वाद् यूपाहवनीयादिशब्दवत् संस्कारवाचिनो बर्हिरादिशब्दा इति चेत्। मैवम्। अन्वयव्यतिरेकाभ्यां जातिवाचित्वात्। यत्र यत्र बर्हिरादिशब्दप्रयोगस्तत्र तत्र जातिरित्यस्यां व्याप्तौ लोके वेदे च नास्ति व्यभिचारः। संस्कारव्याप्तौ तु लौकिकप्रयोगे व्यभिचारो दृश्यते। क्वचिद् देशविशेषे

लौकिकव्यवहारे जातिमात्रमुपजीव्य विना संस्कारं ते शब्दाः प्रयुज्यन्ते। बर्हिराहाय गावो गता इति। क्रय्य माज्यमिति। पुरोडाशेन मे माता प्रहेलकं ददातीति च। तस्माज्जातिवाचिनः। प्रयोजनन्तु बर्हिषा यूपावटमवस्तृणातीत्यत्र विना संस्कारेणास्तरणसिद्धिः।

अत्र गुरुमतमाह।

बर्हिरादौ निमित्तस्य दुर्वचत्वान्न मेति चेत्।
जातेस्तत्र निमित्तत्वात् तद्युक्ता चोदना प्रमा॥२५॥

स्पष्टोऽर्थः। नवमाधिकरणमारचयति।

प्रोक्षणीः संस्कृतिर्जातिर्योगो वा सर्वभूमिषु।
तद्योक्तेः संस्कृतिर्जातिः स्याद्रूढेः प्रबलत्वतः॥ २६॥
अन्योन्याश्रयतो नाद्यो न जातिः कल्प्यशक्तितः।
योगः स्यात् कॢप्तशक्तित्वात् कॢप्तिर्व्याकरणाद्भवेत्॥२७॥

दर्शपूर्णमासयोः श्रूयते। प्रोक्षणीरासादयेति। तत्र प्रोक्षणीः शब्दस्याभिमन्त्रणासादनादिसंस्कृतिः प्रवृत्तिनिमित्तम्। कुतः। सर्वेषु वैदिकप्रयोगप्रदेशेषु संस्कृतानामेवापां प्रोक्षणीशब्देनोच्यमानत्वादित्येकः पक्षः। लोके जलक्रीडायां प्रोक्षणीभिरुद्वेजिताः स्म इत्यसंस्कृतास्वप्सु प्रयोगाद् बर्हिरादिशब्दवज्जातौ रूढत्वादुदकत्वजातिः प्रवृत्तिनिमित्तम्। न च प्रकर्षेणोक्ष्यत आभिरिति योगोऽत्र शङ्कनीयः। रूढेः प्रबलत्वादिति पक्षान्तरम्। तत्र न तावत् संस्कारो युक्तः। अन्योन्याश्रयत्वात्। विहितेष्वभिमन्त्रणादिषु संस्कारेष्वनुष्ठितेषु पश्चात् संस्कृतास्वप्सु प्रोक्षणीशब्दप्रवृत्तिः। तत्प्रवृत्तौ सत्यां प्रोक्षणीशब्देनापोऽ-

नूयाभिमन्त्रणादिविधिरिति। नापि जातिपक्षो युक्तः। उदकजातौ प्रोक्षणीशब्दस्य वृद्धव्यवहारे पूर्वमक्लृप्तत्वेनेतः परं शक्तेः कल्पनीयत्वात्। ततो गोशब्दवदश्वकर्णशब्दवच्च रूढो न भवति। योगस्तु व्याकरणेन क्लृप्तः। सोपसर्गादुक्षतेः करणे ल्युट्प्रत्ययेन व्युत्पादनात्। तस्मात् प्रोक्षणीशब्दो यौगिकः। इतरादिः प्रोक्षणत्वं प्रयोजनम्।

दशमाधिकरणमारचयति।

रूढिर्योगो योगरूढिर्वा निर्मन्थ्यस्य वर्त्तनम्।
आद्यौ पूर्ववदन्त्योऽचिरजातनवनीतवत्॥ २८॥

अग्निचयने श्रूयते। निर्मन्थ्येनेष्टकाः पचन्तीति। तत्र निर्मन्थ्यशब्दस्य स्वार्थे कीदृशी वृत्तिरिति संशये बर्हिरादिशब्दवल्लौकिकवैदिकसाधारण्यादग्निजातौ रूढिरित्येकः पक्षः। प्रोक्षणीशब्दवद्रूढेरक्लृप्तत्वादरणिनिर्मन्थनजन्यत्वाच्च योग इति पक्षान्तरम्। लौकिकनिर्मन्थनेन चिरनिर्मन्थनेन च जन्यं वारयितुं योगरूढिः पङ्कजादिशब्दवदाश्रयणीया। आधानकाले निर्मन्थ्यगार्हपत्ये नित्यं धृतोऽग्निश्चिरनिर्मथितः। सद्य एवालौकिकमन्थनेन जातोऽग्निरचिरनिर्मथितः। तेनेष्टकाः पच्यन्ते। यथा पुराणनूतनयोर्घृतयोर्नवनीतजन्यत्वे समानेऽपि योगरूढ्या नूतनमेव नावनीतमिति व्यवह्रियते। तद्वत्।

एकादशाधिकरणमारचयति।

चातुर्मास्याद्यपर्वप्रोक्ताग्न्येयाद्यष्टकान्तिके।
वैश्वदेवेति शब्दोक्तो गुणः संघस्य नाम वा॥ २९॥
नामत्वे रूपराहित्यादविधिर्गुणता ततः।

अग्न्यादिभिर्विकल्प्यन्ते विश्वदेवास्तु सप्तसु ॥ ३० ॥
अनूद्याष्टौ यजेतेति तत्संघे नाम वर्णितम्।
अविधित्वेऽप्यर्थवत् स्यान्नाम प्राक्प्रवणादिषु ॥ ३१ ॥
इज्यन्तेऽत्र यजन्ते वा विश्वे देवा इतीदृशी।
निरुक्तिर्न विकल्प्यः स्यादुत्पत्त्युत्पन्नशिष्टतः ॥ ३२ ॥

चातुर्मास्ययागस्य चत्वारि पर्वाणि। वैश्वदेवो वरुणप्रघासः साकमेधः शुनासीरीयश्चेति। तेषु प्रथमे पर्वण्यष्टौ यागा विहिताः। आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुम्। सावित्रं द्वादशकपालम्। सारस्वतं चरुम्। पौष्णं चरुम्। मारुतं सप्तकपालम्। वैश्वदेवीमामिक्षाम्। द्यावापृथिव्यमेककपालमिति। तेषामष्टानां यागानां सन्निधाविदमाम्नायते। वैश्वदेवेन यजेतेति। तत्राग्नेयादीन् यागान् यजेतेत्यनूद्य वैश्वदेवशब्देन देवतारूपो गुणस्तेषु विधीयते। यद्यपि वैश्वदेव्यामामिक्षायां विश्वदेवाः प्राप्तास्तथाप्याग्नेयादिषु सप्तसु यागेष्वप्राप्तत्वात् विधीयन्ते। तेष्वप्यग्न्यादिदेवताः सन्तीति चेत्। तर्हि गत्यभावात् तेषु देवता विकल्प्यन्ताम्। नामधेयत्वे तु नाममात्रस्याविधेयत्वाद् द्रव्यदेवतयोरभावेन यागस्यात्र स्वरूपासम्भवाच्छ्रूयमाणो विधिरनर्थकः स्यात्। तस्माद् गुणविधिरिति प्राप्ते ब्रूमः। उत्पत्तिवाक्यैर्विहितानाग्नेयादीनष्टौ यागान् यजेत इत्यनूद्याष्टानां संघे वैश्वदेवशब्दो नामत्वेनोपवर्ण्यते। न च विधित्वाभावेऽपि नामोपदेशवैयर्थ्यम्। प्राचीनप्रवणे वैश्वदेवेन यजेतेत्यादिषु वैश्वदेवशब्देनैकेनैवाष्टानां संघस्य व्यवहर्त्तव्यत्वात्। नामप्रवृत्तिनिमित्तभूता निरुक्ति-

द्विधा। आमिक्षायागे विश्वेषां देवानामिज्यमानतया तत्सहचरितार्थानां सर्वेषां छत्रिन्यायेन वैश्वदेवत्वम्। अथवा विश्वे देवा अष्टानां कर्त्तार इति वैश्वदेवत्वम्। तथाच ब्राह्मणम्। यद्विश्वे देवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वमिति। देवताविकल्पस्तु समानबलत्वाभावान्न युज्यते। अग्न्यादय उत्पत्तिशिष्टत्वात् प्रबलाः। विश्वे देवा उत्पन्नशिष्टत्वाद् दुर्बलाः। तस्माद्वैश्वदेवशब्दः कर्म-नामधेयम्। अत्र गुरुमतमाह।

गुणनामत्वसन्देहादप्रमा चोदनेति चेत्।
नोक्तन्यायेन संघस्य नामधेयत्वनिर्णयात्॥ २३॥

स्पष्टोऽर्थः। द्वादशाधिकरणमारचयति।

यद्द्वादशकपालेष्टेर्वैश्वानर्या अनन्तरम्।
श्रुतमष्टाकपालादि तद्गुणो नाम वा स्तुतिः॥ २४॥
अन्तर्भावादष्टतादेर्नाम स्यादग्निहोत्रवत्।
द्रव्यं द्रव्यान्तरे नो चेद् गुणस्तर्हि फले त्वसौ॥ २५॥
वाक्यैक्यमुपसंहाराद् विस्पष्टं तत् तु बाध्यते।
नानागुणविधौ तस्मादंशद्वारांशिसंस्तुतिः॥ २६॥

काम्येष्टिकाण्डे श्रूयते। वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते। यदष्टाकपालो भवति गायत्र्यै-वैनं ब्रह्मवर्चसेन पुनाति। यन्नवकपालस्त्रिवृतैवास्मिं-स्तेजो दधाति। यद्दशकपालो विराजैवास्मिन्नन्नाद्यं दधाति। यदेकादशकपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति। यद्द्वादशकपालो जगत्यैवास्मिन् पशून् दधाति। यस्मि-ञ्जात एतामिष्टिं निर्वपति। पूत एव स तेजस्व्यन्नाद

इन्द्रियावी पशुमान् भवतीति । अत्राष्टत्वादिसंख्या-सामान्यात् पुरोडाशादीनां गायत्र्यादिरूपत्वकल्पना कृता । इष्टिविधायके वाक्ये येयं द्वादशसंख्या तस्यामष्टत्वादिसंख्यानामन्तर्भावात्ताः संख्यानिमित्तीकृत्याग्निहोत्रशब्दवदष्टाकपालादिशब्दाः कर्मनामधेयानीत्येकः पक्षः । नात्र द्वादशकपालशब्दः संख्यापरः । किन्तु पुरोडाशद्रव्यपरः । द्वादशसु कपालेषु संस्कृत इति व्युत्पत्तेः एवमेवाष्टाकपालादिशब्दा अपि । तथा सति द्रव्यस्य द्रव्यान्तरेऽनन्तर्भावान्नामधेयस्य निमित्तं नास्तीति चेत् । एवं तर्हि पुरोडाशद्रव्यरूपो गुणो विधीयताम् । न चोत्पत्तिशिष्टद्वादशकपालपुरोडाशावरुद्धत्वादष्टाकपालादेरनवकाश इति वाच्यम् । ब्रह्मवर्चसादिफलाय तद्विध्युपपत्तेरित्यपरः पक्षः । अयमप्यनुपपन्नः । बहूनां गुणानां विधौ वाक्यभेदापत्तेः । न च भिन्नान्येवैतानि वाक्यानीति वाच्यम् । वैश्वानरं द्वादशकपालं निर्वपेदिति विहितस्य यस्मिञ्जात एतामित्युपसंहारेण वाक्यैकत्वावगमात् । तस्मादंशैरष्टाकपालादिभिरंशी द्वादशकपालः स्तूयते । अत्र गुरुमतमाह ।

अगुणत्वादनामत्वादमन्त्रत्वादनन्वये ।
अष्टत्वाद्यप्रमाणं चेन्नार्थवादतयान्वयात् ॥ ३७ ॥

उक्तरीत्या गुणत्वं नामत्वञ्च न सम्भवति । उत्तमपुरुषाभ्यर्थनाद्यभावान्न मन्त्रत्वम् । अतोऽष्टाकपालादीनामनन्वयादप्रामाण्यं वाक्यस्येति चेत् । नैवम् । स्तावकत्वेनान्वयसंभवात् ।

त्रयोदशाधिकरणमारचयति ।

यजमानः प्रस्तरोऽत्र गुणो वा नाम वा स्तुतिः ।
सामानाधिकरण्येन स्यादेकस्यान्यनामता ॥ ३८ ॥
गुणो वा यजमानोऽस्तु कार्ये प्रस्तरलक्षिते ।
अंशांशित्वाद्यभावेन पूर्ववन्नात्र संस्तुतिः ॥ ३९ ॥
अर्थभेदादनामत्वं गुणश्चेत् प्रक्रियेत सः ।
यागसाधकताद्वारा विधेयप्रस्तरस्तुतिः ॥ ४० ॥

इदमाम्नायते । यजमानः प्रस्तर इति । तत्र यजमानस्य प्रस्तरशब्दो नामधेयम् । प्रस्तरस्य वा यजमानशब्दो नामधेयम् । कुतः । उद्भिदा यागेनेत्यादाविव सामानाधिकरण्यादित्येकः पक्षः । गुणविधिरित्यपरः पक्षः । तत्रापि यजमानकार्ये जपादौ प्रस्तरस्याचेतनस्य सामर्थ्याभावाद् गुणत्वं नास्ति । प्रस्तरकार्ये स्रुग्धारणादौ यजमानस्य शक्तत्वाद् यजमानरूपो गुणो विधीयते । एवं सति पश्चाच्छ्रुतस्य प्रस्तरशब्दस्य कार्यलक्षकत्वेऽपि प्रथमश्रुतो यजमानशब्दो मुख्यवृत्तिर्भविष्यति । न चात्र पूर्वन्यायेन स्तुतिः सम्भवति । अष्टाकपालद्वादशकपालयोरिव प्रस्तरयजमानयोरंशांशित्वाभावात् । वायुर्वै क्षेपिष्ठा देवता । ऊर्जोऽवरुद्धा इत्यादिवत् स्तुतिरिति चेत् न । क्षिप्रत्वादिधर्मवत् कस्यचिदुत्कर्षस्याप्रतीतेः । तस्मान्नामगुणयोरन्यतरत्वमिति प्राप्ते ब्रूमः । गोमहिषयोरिवार्थभेदस्यात्यन्तप्रसिद्धत्वान्नामत्वं न युक्तम् । गुणपक्षे त्वग्नौ प्रहरणस्य प्रस्तरकार्यत्वाद् यजमाने प्रहृते सति कर्मलोपः स्यात् । तस्माद् विधेयः प्रस्तरो यजमानशब्देन स्तूयते यथा सिंहो

देवदत्त इत्यत्र सिंहगुणेन शौर्यादिनोपेतो देवदत्तः सिंहशब्देन स्तूयते। तथा यजमानगुणेन यागसाधनत्वेन युक्तः प्रस्तरो यजमानशब्देन स्तूयते। एवं यजमान एककपाल इत्यादिषु द्रष्टव्यम्। चतुर्दशाधिकरणमारचयति।

आग्नेयो ब्राह्मणोऽत्रापि पूर्ववत् सर्वनिर्णयः।
द्वारन्तु मुखजन्यत्वमाग्नेयत्वेन संस्तवे ॥ ४१ ॥

इदमाम्नायते। आग्नेयो वै ब्राह्मण इति। अत्रात्यन्तप्रसिद्धाभेदादाग्नेयशब्दो न ब्राह्मणस्य नामधेयम्। नाप्यग्निदेवतारूपो गुणो विधीयते। आग्नेयं सूक्तमाग्नेयं हविरित्येवं देवतातद्धितस्य सूक्तहविर्विषयत्वात् न ब्राह्मणः सूक्तम्। नापि हविः। अतः सम्बन्धवाचितद्धितान्तेनाग्नेयशब्देन ब्राह्मणः स्तूयते। यद्यपि ब्राह्मणो नाग्निसम्बन्धः तथाप्यग्निसम्बन्धो मुखजन्यत्वगुणो ब्राह्मणे विद्यते। तथा चाग्निब्राह्मणयोर्मुखजन्यत्वं कस्मिंश्चिदर्थवादे समाम्नायते। प्रजापतिरकामयत प्रजाः सृजेयेति। स मुखतस्त्रिवृतं निरमिमीत। तमग्निर्देवतान्वसृज्यत गायत्री छन्दो रथन्तरं साम ब्राह्मणो मनुष्याणामजः पशूनाम। तस्मात्ते मुख्याः। मुखतो ह्यसृज्यन्तेति। तस्मात् द्वारेण ग्नेयशब्दः स्तावकः। एवमैन्द्रो राजन्यो वैश्यो वैश्वदेव इत्यादिषु द्रष्टव्यम्। पञ्चदशाधिकरणमारचयति।

आदित्यो यूप इत्यत्र स्तुतिरादित्यशब्दतः।
द्वारं चाक्षुषसारूप्यं घृताक्ते तैजसेऽस्ति तत् ॥ ४२ ॥

आदित्ये यच्चक्षुर्गम्यं तेजस्वित्वं तद् यूपेऽप्यस्ति। घृताक्तस्य यूपस्य तेजस्वित्वाध्यवसायात्। तत आदित्यशब्देन

इष्टकाः सृष्टय इत्युच्यन्ते । सृष्टिमानासामुपधाने मन्त्र इति विगृह्य तद्वानासामुपधान इत्यादिव्याकरणसूत्र-सिद्धप्रक्रियया मन्निष्पादनात् । सृष्टिशब्दोपेतास्त्वोपधानमन्त्रा एकयास्तुवतेत्यस्मिन्ननुवाके समाम्नाताः ।• ब्रह्मासृज्यत भूतान्यसृज्यन्तेत्यादिना सृजतिधातोस्तेषु प्रयुक्तत्वात् ते मन्त्रा अत्र सृष्टिशब्देनोपधाने गुणत्वेन विधीयन्ते । कुतः । उपदधातीत्यनेनाख्यातेनाभिसम्बन्धात् । न चार्थवादत्वमस्य सम्भवति । विध्यन्तरेण सहैकवाक्यत्वाभावादिति प्राप्ते ब्रूमः । अग्निचयनप्रकरणे पठितत्वात्तेषां मन्त्राणां सामान्यत चयनसम्बन्धोऽवगम्यते । विशेषसम्बन्धः सृजतिलिङ्गा-दवगन्तव्यः । तथा सति प्राप्तत्वान्न ते मन्त्रा अत्र विधीयन्ते । किन्तु तान् मन्त्राननूद्येष्टकोपधानं विधीयते । सृष्टिशब्दे-नानुवादस्तु वक्ष्यमाणार्थवादोपपत्त्यर्थः । यथा सृष्टमेवावरुन्ध इति वक्ष्यमाणोऽर्थवादः । यदि विधिवाक्ये मन्त्राणामनु-वादकः सृष्टिशब्दो न स्यात् । तदानीमर्थवादे सृष्टिशब्द-प्रयोगात् विध्यर्थवादयोर्वैयधिकरण्यमन्तरः स्यात् । तस्मा-न्मन्त्रानुवादी सृष्टिशब्दो न गुणविधायकः किन्त्वर्थवादः । ननु प्रथममन्त्रे सृजतिधातुर्न प्रयुक्तः । एकयास्तुवत । प्रजा अधीयन्तेति तत्पाठात् । बाढम् । तथापि द्वितीया-दिषु बहुषु मन्त्रेषु सृजतिधातुप्रयोगाद् भूमरूपं सादृश्य-मस्ति यत्र सर्वाणि वाक्यानि सृष्टिशब्दोपेतानि तत्र यथा इष्टकोपधानता तथात्रापीति भूमगुणयोगेन सृष्ट्यसृष्टिसंघे सृष्टिशब्दप्रयोगः ।

अष्टादशाधिकरणमारचयति ।

स्तृष्टिवत्प्राणभृत्त्वत्र सादृश्यं लिङ्गभूमतः।
अत्रैकमन्त्रगो लिङ्गसमवायो विशिष्यते॥ ५०॥

प्राणभृत उपदधातीत्यत्रापि सृष्टिन्यायेन मन्त्रविधिरिति पूर्वपक्षः। लिङ्गप्रकरणप्राप्तमन्त्रानुवादेनेष्टकोपधानविधिः। एतस्यैव प्राणान् दधातीत्यस्य वक्ष्यमाणार्थवादस्योपपत्तये प्राणभृच्छब्देन मन्त्रानुवादः। पूर्वत्र द्वितीयादिमन्त्रेषु सृष्टिलिङ्गानां बाहुल्यम्। इह तु प्रथममन्त्र एव प्राणभृल्लिङ्गमाम्नायते। अयं पुरोभुवस्तस्य प्राणो भौवायन इत्येकस्यैव मन्त्रस्य प्राणभृत्त्वेऽपि छत्त्रिणो गच्छन्तीतिवत्तत्सहचरिताः सर्वे मन्त्राः प्राणभृच्छब्देन लक्ष्यन्ते। तदेवं यजमानकार्य्यसिद्ध्यादयो गुणवृत्तिहेतवो निर्णीताः। तथा चोक्तम्। तत्सिद्धिजातिसारूप्यप्रशंसालिङ्गभूमभिः। षड्भिः सर्वत्र शब्दानां गौणी वृत्तिः प्रकल्पितेति।

एकोनविंशाधिकरणमारचयति।

शर्करा उपधत्तेऽक्तास्तेजो वै घृतमत्र किम्।
तैलादिनाञ्जिता अक्ता घृतेनैवाथवाञ्जनम्॥ ५१॥
तैलादिनापि मुख्यत्वादसंजातविरोधनात्।
अप्राप्तार्थत्वतश्चास्य विधेर्वादाद् बलित्वतः॥ ५२॥
सामान्यमननुष्ठेयं विशेषस्तु विधौ न हि।
घृतेनैवाञ्जनं वाक्यशेषात् संदिग्धनिर्णयात्॥ ५३॥
अर्थवादगता चेयं स्तुतिर्घृतमुपेयुषी।
बोधयन्ती विधेयत्वं घृतस्य गमयेद् विधिम्॥ ५४॥

अक्ताः शर्करा उपदधाति तेजो वै घृतमिति श्रूयते। मृत्तिकामिश्राः क्षुद्रपाषाणाः शर्कराः। ताश्च घृततैल-

वमादीनामन्यतमेन द्रव्येणाञ्जनीयाः। कुतः। अञ्जनसाधनसामान्यबोधकस्य विधिवाक्यस्य घृतविशेषबोधकादर्थवादात् प्रबलत्वात्। तत्प्राबल्ये च मुख्यत्वादयस्त्रयो हेतवः। स्वार्थतया विधेर्मुख्यत्वम्। प्रथमश्रुतत्वाच्चासंजातविरोधित्वम्। अनधिगतार्थबोधकत्वात् प्रामाण्यम्। अर्थवादस्तु विधिस्तावकत्वान्न मुख्यः। चरमश्रुतत्वात् सञ्जातविरोधी। ज्ञातार्थानुवादित्वात् अप्रमाणम्। तस्माद् येन केनाप्यञ्जनमिति प्राप्ते ब्रूमः। विधिवाक्येन किमञ्जनसामान्यं विधीयते तद्विशेषो वा। नाद्यः, सामान्यस्याननुष्ठेयत्वात्। न द्वितीयः घृततैलादिविशेषवाचकशब्दाभावात्। ततः उक्तरीत्या प्रबलमपि विधिवाक्यमनुष्ठानयोग्ये विशेषे सन्देहजनकत्वान्निर्णयहेतुमर्थवादमपेक्षते। न तु तेन सह विरुध्यते। अर्थवादेऽपि घृतस्य विधिर्नास्तीति चेत् न विधेरुन्नेयत्वात्। तेजो वै घृतमित्येवं तेजस्त्वेन घृतस्य स्तूयमानत्वाद् विधेयत्वं गम्यते। स्तूयते स विधीयत इति न्यायात्। तेन विधेयत्वेन विधायकः शब्दः कल्पते घृतेनाङ्क्त इति। तस्माद् घृतेनैवाञ्जनम्। विशाधिकरणमारचयति।

स्रुवेणाथ स्वधितिना हस्तेनावद्यतीत्यमी।
आज्ये मांसे पुरोडाशे संकीर्णा वा व्यवस्थिताः॥५५॥
व्यवस्थापकराहित्यात् स्रुवाद्या अव्यवस्थिताः।
व्यवस्थापकतायुक्तः स्वद्वशेन व्यवस्थितिः॥ ५६ ॥

स्रुवेणावद्यति। स्वधितिनावद्यति। हस्तेनावद्यतीति श्रूयते। अत्रावदेयेष्वाज्यमांसपुरोडाशेषु हविःष्वमी

स्रुवाद्या अवदानहेतवः सर्वार्थाः । कुतः । व्यवस्थापकस्य शब्दस्याभावादिति चेत् । मैवम् । शक्तेर्व्यवस्थापकत्वात् । आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणीति न्यायात् । कटे भुङ्क्ते कांस्यपात्र्यां भुङ्क्त इत्यत्र लौकिकास्तत्तद्वस्तु-शक्त्यनुसारेण व्यवस्थां कल्पयन्ति । कट आसीनः कांस्य-पात्र्यामोदनं निधायेति । वेदेऽप्यञ्जलिना सक्तून् प्रदाव्ये जुहुयादित्यत्र यद्यपि द्विहस्तसंयोगोऽञ्जलिस्तथापि गुरुदेवतादिप्रसादनार्थाञ्जलिवन्निश्छिद्रसंयोगो न भवति । तादृशेऽञ्जलौ सक्तूनामवकाशाभावात् । अतः सामर्थ्यात् संयुक्तप्रसृतिद्वयात्मको मध्यगतावकाशोपेतो-ऽञ्जलिर्गृहीतः । एवमत्रापि द्रवद्रव्यस्याज्यस्य स्रुवो योग्यः । छेदनीयमांसस्य शस्त्रविशेषः स्वधितिः । संहतस्य पुरोडाशस्य हस्त इत्यनेन प्रकारेण स्रुवाद्या व्यवस्थिताः ।

इति माधवीये जैमिनीयन्यायमालाविस्तरे प्रथमस्याध्यायस्य चतुर्थः पादः । समाप्तश्च प्रथमोऽध्यायः ।

# द्वितीयोऽध्यायः।

प्रमाणमुपजीव्यत्वात् प्रथमेऽध्याय ईरितम्।
मानाधीनस्य धर्मस्य द्वितीये भेद उच्यते॥ १॥

अनेन प्रथमद्वितीययोरध्याययोः पूर्वोत्तरभाव उपपादितः।

द्वितीयाध्यायस्य प्रथमपादे प्रथमाधिकरणे प्रथमवर्णकमारचयति।

विधिवाक्ये पदैः सर्वैरपूर्वं प्रतिपाद्यते।
प्रत्येकमथवैकेन सर्वैस्तत्प्रतिपादनम्॥ १॥
फलान्वयित्वात् सर्वेषां प्रधानान्वयलाभतः।
लाघवादेकबोध्यत्वं तच्छेषस्तु पदान्तरम्॥ २॥

विधिवाक्यमदृष्टार्थमखिलमत्रोदाहरणम्। विधिवाक्ये यावन्ति पदानि सन्ति तानि सर्वाणि क्रियाकारकसम्बन्धमनादृत्य प्रत्येकमपूर्वस्य प्रतिपादकानि। कुतः। अपूर्वस्य फलत्वेन सर्वेषां पदानां फलान्वयित्वात्। अपूर्वप्रतिपादनाभावेऽपि क्रियाकारकयोः परस्परान्वयोऽस्त्येवेति चेत्। सत्यम्। तथापि प्रधानान्वयो लभ्यते। फलं हि प्रधानम्। पुरुषार्थतया साध्यमानत्वादिति प्राप्ते ब्रूमः। अपूर्वस्यात्यन्तमदृष्टत्वादेककल्पनयैव वाक्यस्योपपत्तावनेककल्पने गौरवं स्यात्। तस्मादेकमपूर्वमेकेन शब्देन प्रति-

पाद्यते। पदान्तरन्तु तच्छेषतयान्वेति। ननु यस्य पदस्यार्थोऽपूर्वस्य कल्पकस्तत्पदार्थस्य फलसाधनतया फलं प्रत्युपादेयत्वविधेयत्वगुणत्वान्यभ्युपगन्तव्यानि। तथा तस्यैव शेषभूतपदान्तरार्थं प्रत्युद्देश्यत्वानुवाद्यत्वप्रधानत्वानामपि प्राप्तत्वाद्विरुद्धत्रिकद्वयापत्तिरिति चेत्। नैवम्। उद्भिदा यजेत पशुकामः। श्येनेनाभिचरन् यजेतेत्यादावुद्भिदादिशब्दानां नामत्वेनान्वये सति यागसाधनवाचित्वाभावेन यजतावुद्देश्यत्वादित्रिकापादकत्वाभावात्। तस्मादेकमेव पदमपूर्वप्रतिपादकम्। न च धर्मभेदचिन्तां प्रस्तुतां परित्यज्य किमित्यपूर्वं चिन्त्यत इति वाच्यम्। अपूर्वस्यैव धर्मत्वात्।

द्वितीयवर्णकमारचयति।

द्रव्यादिशब्दतोऽपूर्वधीर्भावार्थपदादुत।
द्रव्यादीनां फलार्थत्वात्तच्छब्देन ह्यपूर्वधीः॥ ३॥
क्रियाद्वारमृते द्रव्यं फलेन न हि युज्यते।
भावनावाचिनोऽपूर्वमाख्यातादवगम्यते॥ ४॥
धात्वर्थव्यतिरेकेण भावना नेति चेन्न तत्।
सर्वधात्वर्थसम्बन्धः करोत्यर्थो हि भावना॥ ५॥
धात्वर्थः करणं तस्यां समानपदवर्णितः।
द्रव्याद्युपकृतिर्दृष्टा धात्वर्थोत्पादनात्मिका॥ ६॥

इदमाम्नायते। सोमेन यजेत। हिरण्यमात्रेयाय ददाति। तस्मात् सुवर्णं हिरण्यं भार्य्यम्। श्येनेनाभिचरन् यजेत। चित्रया यजेत पशुकाम इत्यादि। तत्र सोमहिरण्यशब्दौ द्रव्यवाचिनौ। सुवर्णशब्दो गुणवाची।

श्येनचित्राशब्दौ कर्मवाचिनौ। तैरेतैर्द्रव्यादिशब्दैरपूर्वं प्रत्येति। कुतः। द्रव्यादीनां सिद्धरूपाणां साध्यं फलं प्रति साधनत्वसम्भवात्। यागदानादिरूपस्तु भावार्थः स्वयमपि फलवत्साध्यरूपत्वान्न साधनं भवितुमर्हति। ततो द्रव्यादीनां फलं प्रति करणत्वाद्द्रव्यादिशब्दा अपूर्वप्रत्यायका इति प्राप्ते ब्रूमः। क्रियां विना द्रव्याणि फलं साधयितुं न शक्नुवन्ति। पचिक्रियामन्तरेण काष्ठस्थाल्यादीनामोदनसाधकत्वादर्शनात्। अतो भावनावाचिना यजतिददातीत्याख्यातेनापूर्वं प्रतीयते। ननु धात्वर्थ एव भावना तदन्या वा। न तावद्धात्वर्थः। तस्य तां प्रति करणत्वोक्तेः। न द्वितीयः। धात्वर्थव्यतिरिक्तायाः क्रियाया दुर्लक्ष्यत्वादिति चेत्। मैवम्। सर्वधात्वर्थसम्बद्धरूपेण लक्षयितुं शक्यत्वात्। तदुक्तमाचार्य्यैः। धात्वर्थव्यतिरेकेण यद्यप्येषा न लक्ष्यते। तथापि सर्वसामान्यरूपेणैवावगम्यत इति। अन्यैरप्युक्तम्। सिद्धसाध्यस्वभावाभ्यां धात्वर्थौ द्विविधस्तयोः। अन्योत्पादानुकूलात्मा भावना साध्यरूपिणीति। पचतीत्युक्ते पाकं करोतीत्येतमर्थं सर्वे जनाः प्रतियन्ति। तत्र पाकः पक्तिः पचनमित्येतैः शब्दैर्व्यवक्रियमाणो लिङ्गकारकसंख्यायोग्यो धात्वर्थः सिद्धस्वभावः। करोतीत्यनेन व्यवक्रियमाणो लिङ्गाद्यपेतः साध्यस्वभावः। तत्र सिद्धस्वभावद्योतनाय यथा घञ् प्रत्ययादयो विहिताः। तथा साध्यस्वभावद्योतनायाख्यातप्रत्ययविधिः। स चाख्यातप्रत्ययार्थ ओदनोत्पत्त्यनुकूलं। ततो भवितरोदनस्य प्रयोजकव्यापार-

त्वाश्रिजन्तेन भावनाशब्देनोच्यत इत्यन्ये भावनापत्ता अयुक्ताः। प्रयत्नो भावनेति चेत्। न। रथो गच्छतीत्यत्र तदभावप्रसङ्गः। स्पन्द इति चेत्। न। मानसत्यागरूपे यजतावव्याप्तेः। उभयसाधारणमुदासीनत्वविच्छेदसामान्यं भावनेति चेत्। शब्दभावनायामव्याप्तेः। न हि शब्दस्य विभोरचेतनस्य स्पन्दः प्रयत्नो वास्ति। लिङ्लेड्लोट्तव्यप्रत्ययमात्रगता शब्दभावना। सर्वाख्यातगतार्थभावना। तदुक्तम्। अभिधाभावनामाहुरन्यामेव लिङादयः। अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यत इति। किञ्च। स्पन्दादिवादिनोऽपि न स्वरूपेण स्पन्दादीनां भावनात्वमाहुः। किन्त्वन्योत्पादानुकूलं स्वरूपम्। तस्मादस्मदुक्तैव भावना यथा पचतीत्यत्रौदनफलोत्पत्त्यनुकूला। तथा यजतीत्यत्र स्वर्गादिफलोत्पत्त्यनुकूला। तस्यां च फलभावनायां प्रत्ययवाच्यायामेकपदोपात्तत्वेन प्रत्यासन्नत्वात् प्रकृत्यर्थः करणम्। न तु द्रव्यादि। तस्य पदान्तरोपात्तत्वेन विप्रकृष्टत्वात्। साध्यरूपोऽपि प्रकृत्यर्थः स्वसाधननिष्पादितः सञ्छक्नोति फलं साधयितुम्। द्रव्यादीनां तु प्रकृत्यर्थोत्पादनेन दृष्ट एवोपकारः। द्रव्यादिनिष्पादितेन साधुत्वाच्चेन यागादिकरणेन स्वर्गादिफलोत्पत्तौ सत्यां येयमनुकूलव्यापारात्माकृतिशब्दाभिधेया फलोत्पादन सेयं यज्यादिधातूनामन्यतमेन केनापि नाभिधीयते। सर्वधात्वर्थानुयायित्वात्। अतो न भावनायाः प्रकृत्यर्थत्वमाशङ्कितुं शक्यम्। अस्तु तर्हि धात्वर्थसामान्यमेव भावनेति चेत्। न। प्रति धात्वर्थं विलक्षणरूप-

त्वात्। अन्यद्धि पाकस्यौदनं प्रत्यानुकूल्यम्। अन्यच्च चलनस्य संयोगविभागौ प्रति। अन्यथा फलविभागानुपपत्तेः। भिन्नासु भावनाव्यक्तिषु भावनात्वसामान्यमनुवर्त्ततां नाम। नैतावता प्रकृत्यर्थसामान्यं तद्भवति। तस्माद् विशेषरूपात् सामान्यरूपाच्च यज्यादिधातुवाच्यादन्यैवाख्यातप्रत्ययवाच्या भावना। तथा सति यजेतेत्याख्यातस्य भावयेदित्यर्थो भवति। तत्र किं भावयेत् केन भावयेत् कथं भावयेदित्याकाङ्क्षायां स्वर्गं भावयेद् यागेन भावयेदग्न्यन्वाधानप्रयाजावघातादिभिरुपकारं सम्पाद्य भावयेदित्येवं भाव्यकरणेतिकर्त्तव्यतासमर्पणेनाकाङ्क्षापूरणात् प्रकरणाम्नातः सकलः शब्दसन्दर्भो भावनावाचिन आख्यातस्यैव प्रपञ्चः। भाव्याद्यंशत्रयवती सेयमर्थभावनेत्युच्यते। सा सर्वापि शब्दभावना या भाव्या। विधायको लिङ्गादिः करणम्। अर्थवादसम्पादिता स्तुतिरितिकर्त्तव्यता। सेयं शब्दभावना लिङ्गादिभिरेव गम्यते। अर्थभावना सर्वैराख्यातप्रत्ययैर्गम्यत इत्युक्तम्। तस्याश्चार्थभावनायां स्वर्गस्य भाव्यत्वं कर्मियोगादवगम्यते। प्रकृत्यर्थस्य करणत्वं तृतीयाश्रुत्या। तथा च श्रूयते। दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत। चित्रया यजेत पशुकाम इति। तच्च करणत्वमपूर्वकल्पनामन्तरेण न सम्भवतीत्यभिधास्यते। तस्मादाख्यातप्रत्ययान्ताद् भावार्थपदादपूर्वं गम्यते। चिन्ताप्रयोजनन्तु। पूर्वपक्षे द्रव्याद्यपचारे प्रतिनिध्यभावः। सिद्धान्ते तु तत्सद्भाव इति। द्वितीयाधिकरणमारचयति।

अपूर्वं सदसद्भावसंशये सति नास्ति तत्।

मानाभावात् फलं यागात् सिध्येच्छास्त्रप्रमाणतः ॥७॥
क्षणिकस्य विनष्टस्य स्वर्गहेतुत्वकल्पनम्।
विरुद्धं मानान्तरेणातः श्रेयोऽपूर्वस्य कल्पनम्॥ ८ ॥
अवान्तरव्याप्तिर्वा शक्तिर्वा यागजोच्यते।
अपूर्वमिति तद्भेदः प्रक्रियातोऽवगम्यताम्॥ ९ ॥

पूर्वाधिकरणे वर्णकाभ्यां यदिदमुक्तमपूर्वस्यैकमेव पदं प्रत्यायकं तच्च यजेतेत्याख्यातान्तर्भावार्थपदमिति तदनुपपन्नम्। अपूर्वसद्भावे मानाभावात्। यजेतेत्याभ्यां प्रकृतिप्रत्ययाभ्यां करणभावनयोरभिधानात्। अपूर्वाभावे कालान्तरभाविस्वर्गसाधनत्वं विनश्वरस्य यागस्यानुपपन्नमिति चेत्। न। शास्त्रप्रामाण्येन तदुपपत्तेरिति प्राप्ते ब्रूमः। दर्शपूर्णमासाभ्यामिति तृतीयाश्रुत्या तावद्यागस्य स्वर्गसाधनत्वं प्रमितम्। तद्यथोपपद्येत तथावश्यं भवतापि कल्पनीयम्। तत्र किं यावत्फलं यागस्यावस्थानं कल्प्यते। किंवा विनष्टस्यापि स्वर्गोत्पादनम्। नाद्यः। यागे क्षणिकत्वस्य प्रत्यक्षसिद्धत्वात्। न द्वितीयः। मृतयोर्दम्पत्योः पुत्रोत्पत्त्यदर्शनात्। अतो मानान्तरविरुद्धाद्भवदीयकल्पनादस्मदीयमविरुद्धमपूर्वकल्पनं न्याय्यः। कल्पितेऽप्यपूर्वे तस्यैव स्वर्गसाधनत्वाद् यागस्य स्वर्गसाधनत्वश्रुतिर्विरुध्येतेति चेत्। न। यागावान्तरव्यापारोऽपूर्वमित्यङ्गीकारात्। न ह्युद्यमननिपतनयोरवान्तरव्यापारयोः सत्त्वे कुठारस्य साधनत्वमपैति। यदि व्यापारवतो यागस्य नाशे व्यापारो न तिष्ठेत् तर्हि यागजन्या काचिच्छक्तिरपूर्वमस्तु। शक्तिमद्भावेऽपि यागस्य साधनत्वमविरुद्धम्। श्रीरामस्य

ह्रितेऽप्यग्नौ दाहकत्वाङ्गीकाराद् यथाङ्गारजन्यमौष्ण्यं शान्तेष्वप्यङ्गारेषु जलेऽनुवर्त्तते। तथा यागजन्यमपूर्वं नष्टेऽपि यागे कर्त्तर्य्यनुवर्त्तताम्। तस्मादस्त्यपूर्वम्। तद्विशेषस्तु सम्प्रदायसिद्धयागप्रक्रिययावगन्तव्यः। तथा हि प्रक्रिया पूर्वाचार्य्यैरित्थं दर्शिता। प्रथमं तावत् फलवाक्येन कर्मणः फलसाधनता बोध्यते। यागेन स्वर्गं कुर्य्यादिति। कथं विनश्वरेण फलं कर्त्तव्यमित्यपेक्षायामपूर्वं कृत्वेत्युच्यते। कथमपूर्वं क्रियत इत्यपेक्षायां यागानुष्ठानप्रकारेणेति। तत्रापूर्वं दर्शपूर्णमासयोरनेकविधम्। फलापूर्वं समुदायापूर्वमुत्पत्त्यपूर्वमङ्गापूर्वञ्चेति। येन स्वर्ग आरभ्यते तत् फलापूर्वम्। अमावास्यायां त्रयाणां यागानामेकः समुदायः। पौर्णमास्यामपरः। तयोर्भिन्नकालवर्त्तिनोः संहत्य फलापूर्वारम्भायोगात्तदारम्भाय समुदायद्वयजन्यमपूर्वद्वयं कल्पनीयम्। तयोरेकैकस्यारम्भायैकैकसमुदायवर्त्तिनां त्रयाणां यागानां भिन्नक्षणवर्त्तित्वेन संघातापत्त्यभावाद्यागत्रयजन्यानि त्रीण्युत्पत्त्यपूर्वाणि कल्पनीयानि। तेषाञ्चाङ्गोपकारमन्तरेणानिष्पत्तेरङ्गानाञ्चानेकक्षणवर्त्तिनां संघातासम्भवादङ्गापूर्वाणि कल्पनीयानि। तत्र त्वयं विभागः। सन्निपत्योपकारकाण्यवघातादीनि द्रव्यदेवतासंस्कारद्वारेण यागस्वरूपस्यैवातिशयाधानेन तदुत्पत्त्यपूर्वनिष्पत्तौ व्याप्रियन्ते। तद्द्वारेण फलापूर्वं आरादुपकारकाणि तु प्रयाजादीन्युत्पत्त्यपूर्वेभ्यः फलापूर्वनिष्पत्तौ साक्षादेव व्याप्रियन्ते। एवं प्रकारभेदे सत्यपि सर्वाण्यङ्गान्यपूर्वनिष्पत्तावनुग्राहकाणीत्येकरूपेणेत्यं·

भावेन स्वीक्रियन्ते। अनयैव दिशा सर्वत्रापूर्वप्रक्रियावगन्तव्या।

अत्र गुरुमतमाह।

यागक्रिया सूक्ष्मरूपा परमाण्वात्मसंश्रिता।
यावत्फलं नियोगाख्यं नापूर्वमिति चेन्न तत्॥ १०॥
मानहीनं क्रियासौक्ष्म्यं नियोगस्तु लिङादिना।
अभिधेयः पृथग्यागादपूर्वं काम्यमस्त्यतः॥ ११॥

गुरुणा यन्नियोगाख्यमपूर्वमभिप्रेयते तन्नास्ति। कुतः। अन्तरेणैव तदपूर्वं फलनिष्पत्तेः। न च यागनाशात् कथं फलसिद्धिरिति वाच्यम्। न हि यागक्रिया सर्वात्मना नश्यति। किन्तु सूक्ष्मरूपत्वेनादृश्या सती स्वर्गदेहारम्भकेषु यागसम्बन्धिद्रव्यगतपरमाणुषु यागकर्त्तर्यात्मनि वावस्थाय फलमारभत इति पूर्वपक्षः। नैतद्युक्तम्। उक्तेऽर्थे प्रमाणाभावात्। न च नियोगेऽपि मानाभावः शङ्कनीयः। वैदिकलिङादीनां तदभिधायकत्वात्। ततो धात्वर्थातिरिक्तं कालान्तरभाविकाम्यफलसाधनमपूर्वमस्ति।

तृतीयाधिकरणमारचयति।

अवघातादिनापूर्वमुत्पाद्यं विद्यते न वा।
यजत्यादिवदस्त्येव वाक्यवैयर्थ्यमन्यथा॥ १२॥
दृष्टे तुषविमोके तु नापूर्वं द्रव्यतन्त्रतः।
स्याद्यजत्यादिवैषम्यं नियमापूर्वकृद्वचः॥ १३॥

दर्शपूर्णमासयोः श्रूयते। व्रीहीनवहन्ति। तण्डुलान् पिनष्टीति। तत्रावघातपेषणे अपूर्वजनके। विहितधात्वर्थत्वाद् यजत्यादिधात्वर्थवत्। विपक्षे विधिवाक्यवैय-

र्थ्यरूपो बाधकस्तर्कोऽवगन्तव्यः। तुषविमोकचूर्णत्वयो-र्दृष्टप्रयोजनयोर्लोकसिद्धत्वेन तादर्थ्येऽवघातपेषणयोर्विधि-र्व्यर्थः स्यात्। तस्मादस्त्यपूर्वमिति प्राप्ते ब्रूमः। दृष्टफले सम्भवत्यपूर्वं न कल्पनीयम्। यजत्यादिदृष्टान्तस्तु विषमः। तत्र हि क्रियाप्राधान्येन द्रव्यपारतन्त्र्याभावादपूर्वसाधनत्वं क्रियाया युक्तम्। इह तु व्रीहीनिति कर्मकारकविभक्त्या व्रीहीणामीप्सिततमत्वेन प्राधान्यावगमाद् द्रव्यपरतन्त्रोऽव घातो द्रव्य एवातिशयं कुर्य्यात्। न त्वपूर्वं जनयति न च विधिर्वैयर्थ्यम्। नखनिर्भेदादिना तुषविमोकसम्भवेऽप्य-वघातेनैवासौ कर्त्तव्य इति यो नियमस्तस्य नियमस्यापूर्व-हेतुत्वेन विधेयत्वात्। तस्मान्नास्त्यवघातादिजन्यमपूर्वम्।

अत्र गुरुमतमाह।

द्वितीयां सक्तुवद्भङ्क्त्वा नियोगेऽन्वीयतां क्रिया।
साक्षादिति न मन्तव्यं दृष्टस्यात्रोपपत्तितः॥ १४॥

सक्तून्जुहोतीत्यत्र द्रव्यप्राधान्यं परित्यज्य द्वितीयाया भङ्गं कृत्वा क्रियाप्राधान्याय सक्तुभिर्जुहोतीति तृतीयात्वेन विपरिणामो वक्ष्यते। तथा व्रीहिभिरवहन्तीति विपरि-णामेन प्रधानभूता क्रिया द्रव्यव्यवधानमन्तरेण साक्षादेव नियोगेऽन्वेत्विति चेत्। मैवम्। वैषम्यात्। तत्र होमेन सक्तुषु संस्कारो न सम्भवति। भस्मीभूतानामन्यत्र विनि-योगासम्भवात्। इत्यभिप्रेत्य संस्कारकर्मत्वं परित्यक्तम्। इह दृष्टस्तुषविमोकसंस्कार उपपद्यते। वितुषाणां तेषां पुरोडाशे विनियोगसम्भवात्।

चतुर्थाधिकरणमारचयति।

संमार्ष्टि स्रुच इत्यत्र किं प्रधानाख्यकर्मता।
गुणकर्मत्वमथवा दृष्टाभावेऽवघातवत्॥ १५॥
गुणत्वं न हि सम्भाव्यं प्राधान्यं तु प्रयाजवत्।
अदृष्टकल्पकेनापि गुणत्वं स्याद् द्वितीयया॥ १६॥

दर्शपूर्णमासयोर्जुह्वादीनां दर्भैः सम्मार्जनमाम्नायते। स्रुचः संमार्ष्टीति। तत्र संमार्जनं प्रधानकर्म। कुतः। गुणकर्मलक्षणरहितत्वात् प्रधानकर्मलक्षणयुक्तत्वाच्च। सूत्रकारो हि कर्मणां राशिद्वयं प्रतिज्ञाय तयोर्लक्षणं पृथक् सूत्रयामास। तानि द्वैधं गुणप्रधानभूतानि। यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत। तस्य द्रव्यप्रधानत्वात्। यैस्तु द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि। द्रव्यस्य गुणभूतत्वादिति। यैः कर्मभिर्द्रव्यमुत्पादयितुं संस्कर्तुं वेष्यते तेषु कर्मसु गुणत्वम्। कुतः। तस्य कर्मणो द्रव्यप्रधानत्वात्। द्रव्यं प्रधानमस्येति बहुव्रीहिः। यूपं तक्षत्याहवनीयमादधातीत्यादौ यूपाहवनीयादिद्रव्यमुत्पादयितुमिष्यते। व्रीहीनवहन्ति तण्डुलान् पिनष्टीत्यादौ व्रीह्यादिद्रव्यं संस्कर्तुमिष्टम्। प्रयाजादिषूक्तवैपरीत्यात् प्रधानकर्मत्वम्। एवं सत्यवघातेन यथा व्रीहीणां तुषविमोको दृष्टः संस्कारः। तथा संमार्जनेन जुह्वादिषु कश्चिदतिशयं न पश्यामः। अतोऽवघातवद्गुणकर्मत्वाभावात् प्रयाजादिवत् प्रधानकर्मत्वमिति प्राप्ते ब्रूमः। स्रुच इति द्वितीया कर्मकारके विहिता। कर्मत्वं चेप्सिततमत्वे सति भवति। कर्त्तुरीप्सिततमं कर्मेति कर्मसंज्ञाविधानात्। क्रतुसाधनत्वेन च स्रुचां युक्तमीप्सिततमत्वम्। अतः प्रधानभूताः स्रुचः।

तथा सति संमार्जनक्रियाया गुणकर्मत्वमवघातवद्भविष्यति। यदि स्रुचु दृष्टोऽतिशयो न स्यात्। तदपूर्वं कल्पनीयम्।

पञ्चमाधिकरणमारचयति।

प्रउगं शंसतीत्यादौ गुणनीत प्रधानता।
दृष्टा देवस्मृतिस्तेन गुणता स्तोत्रशस्त्रयोः॥ १७॥
स्तुत्यर्थत्वे स्तौतिशंस्योर्धात्वोः श्रौतार्थबाधनम्।
तेनादृष्टमुपेत्यापि प्राधान्यं श्रुतये मतम्॥ १८॥

ज्योतिष्टोमे श्रूयते। प्रउगं शंसति। निष्केवल्यं शंसति। आज्यैः स्तुवते। पृष्ठैः स्तुवत इति। प्रउगनिष्केवल्यशब्दौ शस्त्रविशेषनामनी। आज्यपृष्ठशब्दौ तु व्याख्यातौ। अप्रगीतमन्त्रसाध्या स्तुतिः शस्त्रम्। प्रगीतमन्त्रसाध्या स्तुतिः स्तोत्रम्। तयोः स्तुतशस्त्रयोर्गुणकर्मत्वं युक्तम्। कुतः। तुषविमोकवद्दृष्टार्थलाभात्। पठ्यमानेषु मन्त्रेष्वनुस्मरणेन देवता संस्क्रियत इति प्राप्ते ब्रूमः। स्तोतव्याया देवतायाः स्तावकैर्गुणैः सम्बन्धकीर्त्तनं स्तौतिशंसतिधात्वोर्वाच्योऽर्थः। यदि मन्त्रवाक्यानि गुणसम्बन्धाभिधानपराणि। तदा धात्वोर्मुख्यार्थलाभाच्छ्रुतिरनुगृहीता भविष्यति। यदा तु गुणद्वारेणानुस्मरणीयदेवतास्वरूपप्रकाशनपराणि मन्त्रवाक्यानि स्युः। तदा धात्वोर्मुख्यार्थो न स्यात्। लोके हि देवदत्तश्चतुर्वेदाभिज्ञ इत्युक्ते स्तुतिः प्रतीयते। तस्य वाक्यस्य गुणसम्बन्धपरत्वात्। यदा तु देवदत्तस्वरूपपरता यश्चतुर्वेदो तमानयेत्यादौ तत्र न स्तुतिप्रतीतिः। तत्र चतुर्वेदसम्बन्धद्वारेण देवदत्त-

स्वरूपोपलक्षणपरत्वेन गुणसम्बन्धपरत्वाभावात्। ततश्चाग्न्येन्द्रं प्रकाशयेत्। पृष्ठेन्द्रं प्रकाशयेदित्येवं विध्यर्थपर्य्यवसानाद्वाक्योमुख्यार्थो बाध्येत। ततो धातुश्रुतिमबाधितुं स्तोत्रशस्त्रयोः प्रधानकर्मत्वमभ्युपेतव्यम्। तत्र दृष्टं प्रयोजनं नास्तीति चेत्। ततोऽपूर्वमस्तु। षष्ठाधिकरणमारचयति।

देवांश्च याभिर्यजत इत्याख्यातं तु मन्त्रगम्।
विधायकं न वाक्येन समत्वात् तद्विधायकम्॥ १९॥
यच्छब्दादेः क्षीणशक्तिर्न विधिस्त्रिविधं ततः।
आख्यातमभिधानञ्च प्रधानगुणकर्मणो॥ २०॥

अयं मन्त्र आम्नायते। देवांश्च याभिर्यजते ददाति च ज्योगित्ताभिः सचते गोपतिः सहेति। अयमर्थः। गोपतिर्यजमानो याभिर्गोभिर्देवान् यजते याश्च गा ब्राह्मणेभ्यो ददाति चिरमेव ताभिः सह परलोकेऽवतिष्ठत इति। तत्र यथा ब्राह्मणगतमाख्यातपदं प्रधानगुणकर्मणोरन्यतरस्य विधायकम्। तथा मन्त्रगतमपीति चेत्। नैवम्। यच्छब्दादिना विधिशक्तेः क्षीणत्वात्। सति हि यच्छब्दे तस्य वाक्यस्यानुवादकत्वं प्रतीयते। न तु विधायकत्वम्। यच्छब्दादेरित्यादिशब्देनोत्तमपुरुषामन्त्रणादयः। बर्हिर्देवसदनं दामीत्युत्तमः पुरुषः। अग्नीदग्नीन् विहरेत्यामन्त्रणम्। एवं ब्राह्मणेऽपि यस्याभयं हविरार्त्तिमार्छेदित्युदाहरणीयम्। तस्मादाख्यातस्य प्रधानकर्मविधायकत्वं गुणकर्मविधायकत्वं चेत्येवं द्वावेव प्रकारौ न भवतः। किंत्वभिधायकत्वमित्यप्यस्ति तृतीयः प्रकारः। ततो न मन्त्रगताख्यातस्य विधायकत्वम्।

सप्तमाधिकरणमारचयति ।

अहे बुध्निय मन्त्रं म इति मन्त्रस्य लक्षणम् ।
नास्त्यस्ति वास्य नास्त्येतद्व्याप्त्यादेरवारणात् ॥ २१ ॥
याज्ञिकानां समाख्यानं लक्षणं दोषवर्जितम् ।
तेऽनुष्ठानस्मारकादौ मन्त्रशब्दं प्रयुञ्जते ॥ २२ ॥

आधान इदमाम्नायते । अहे बुध्निय मन्त्रं मे गोपायेति । तत्र मन्त्रस्य लक्षणं नास्ति । अव्याप्त्यतिव्याप्त्यो-र्वारयितुमशक्यत्वात् । विहितार्थाभिधायको मन्त्र इत्युक्ते वसन्ताय कपिञ्जलानालभत इत्यस्य मन्त्रस्य विधिरूपत्वा-दव्याप्तिः । मननहेतुर्मन्त्र इत्युक्ते ब्राह्मणेऽतिव्याप्तिः । एवमसिपदान्तो मन्त्र उत्तमपुरुषान्तो मन्त्र इत्यादिलक्ष-णानां परस्परमव्याप्तिरिति चेत् । मैवम् । याज्ञिकसमा-ख्यानस्य निर्दोषलक्षणत्वात् । तच्च समाख्यानमनुष्ठानस्मार-कादीनां मन्त्रत्वं गमयति । उरु प्रथस्वेत्यादयोऽनुष्ठान-स्मारकाः । अग्निमीळे पुरोहितमित्यादयः स्तुतिरूपाः । इषे त्वेत्यादयस्त्वान्ताः । अग्न आ याहि वीतय इत्यादय आमन्त्रणोपेताः । अग्नीदग्नीन् विहरेत्यादयः प्रैषरूपाः । अधःस्विदासीदुपरिस्विदासीदित्यादयो विचाररूपाः । अम्बे अम्बिकेऽम्बालिके न मा नयति कश्चनेत्यादयः परिदेवन-रूपाः । पृच्छामि त्वा परमन्तं पृथिव्या इत्यादयः प्रश्नरूपाः । वेदिमाहुः परमन्तं पृथिव्या इत्यादय उत्तररूपाः । एव-मन्यदप्युदाहार्य्यम् । ईदृशेष्वत्यन्तविजातीयेषु समाख्यान-मन्तरेण नान्यः कश्चिदनुगतो धर्मोऽस्ति यस्य लक्षणत्वमुच्येत । लक्षणस्योपयोगश्च पूर्वाचार्य्यैर्दर्शितः । क्रमयोऽपि पदार्थानां

नान्तं यान्ति पृथक्त्वशः। लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चित इति। तस्मादभियुक्तानां मन्त्रोऽयमिति समाख्यानं लक्षणम्।

अष्टमाधिकरणमारचयति।

नास्त्येतद्‌ब्राह्मणेत्यत्र लक्षणं विद्यतेऽथवा।
नास्तीयन्तो वेदभागा इति क्लृप्तेरभावतः॥ २३॥
मन्त्रश्च ब्राह्मणं चेति द्वौ भागौ तेन मन्त्रतः।
अन्यद्‌ब्राह्मणमित्येतद् भवेद् ब्राह्मणलक्षणम्॥ २४॥

चातुर्मास्येष्विदमाम्नायते। एतद्‌ब्राह्मणान्येव पञ्च हवींषीति। तत्र ब्राह्मणस्य लक्षणं नास्ति। कुतः। वेदभागानामियत्तानवधारणेन ब्राह्मणभागेष्वन्यभागेषु च लक्षणस्याव्याप्त्यतिव्याप्त्योः शोधयितुमशक्यत्वात्। पूर्वोक्तो मन्त्रभाग एकः। भागान्तराणि च कानिचित् पूर्वैरुदाहृत्य संगृहीतानि। हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधिः। परक्रिया पुराकल्पो व्यवधारणकल्पनेति। तेन ह्यन्नं क्रियत इति हेतुः। तद्दध्नो दधित्वमिति निर्वचनम्। अमेध्या वै माषा इति निन्दा। वायुर्वै क्षेपिष्ठेति प्रशंसा। तद् व्यचिकित्सज्जुहवानि मा हौषमिति संशयः। यजमानेन संमितौदुम्बरी भवतीति विधिः। माषानेव मह्यं पचतेति परकृतिः। पुरा ब्राह्मणा अभैषुरिति पुराकल्पः। यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणांश्चतुष्कपालान् निर्वपेदिति विशेषावधारणकल्पना। एवमन्यदप्युदाहार्यम्। न च हेत्वादीनामन्यतमद्‌ब्राह्मणमिति लक्षणम्। मन्त्रेष्वपि हेत्वादिसद्भावात्। तथा हि। इन्द्रवो वा-

गीतिरूपा मन्त्राः सामानि। वृत्तगीतिवर्जितत्वेन प्रश्लिष्ट-पठिता मन्त्रा यजूंषीत्युक्ते न क्वापि सङ्करः।

त्रयोदशाधिकरणमारचयति।

प्रोक्षणीरासादयेति निगदस्त्रिविधाद्बहिः।
यजुर्वोच्चैस्त्वधर्मस्य भेदादस्य चतुर्थता॥ २७॥
परप्रत्यायनार्थत्वादुच्चैस्त्वं यजुरेव सः।
तल्लक्षणेन युक्तत्वात् त्रैविध्यमिति सुस्थितम्॥ २८॥

प्रोक्षणीरासादयेध्मं बर्हिरुपसादय। अग्नीदग्नीन् विहर। बर्हिः स्तृणीहि। इन्द्र आगच्छ। हरिव आगच्छेत्यादयो निगदा आम्नाताः। परसम्बोधनार्था मन्त्रा निगदाः। एते च पूर्वोक्तेभ्य ऋग्यजुःसामभ्यो बहिर्भूताश्चतुर्थप्रकाराः। कुतः। पादगीत्योर्ऋक्साम-लक्षणयोरभावात्। प्रश्लिष्टपाठस्य यजुर्लक्षणस्य सद्भावेऽपि धर्मभेदेन यजुष्वन्तर्भावानुपपत्तेः। उपांशु यजुषोच्चैर्निगदे-नेति हि धर्मभेद इति प्राप्ते ब्रूमः। बहिर्ब्राह्मणा भोज्यन्तां परिव्राजकास्त्वन्तरित्यत्र सत्येव परिव्राजकानां ब्राह्मण्ये पूजानिमित्तो विशेषो यथा, तथा निगदानां यजुर्लक्षणो-पेतत्वेन यजुषामेव सतां परप्रत्यायननिमित्त उच्चैस्त्वधर्मः। ततो मन्त्राणां त्रैविध्यं सुस्थितम्।

चतुर्दशाधिकरणमारचयति।

देवस्य त्वेति वाक्यस्य भिन्नत्वमथवैकता।
ऐक्यप्रयोजकस्यात्र दुर्बोधत्वेन भिन्नता॥ २९॥
विभागे सति साकाङ्क्ष्यैकार्थत्वं प्रयोजकम्।
तस्माद् वाक्यैक्यमेतेन यजुरन्तोऽवधार्यते॥ ३०॥

दर्शपूर्णमासयोराम्नायते। देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामीति। तत्र वाक्यानि भिन्नानि भवितुमर्हन्ति। कुतः। एकत्वनियामकस्य दुर्बोधत्वात्। अर्थैक्यं वाक्यैक्ये प्रयोजकं स्यादिति चेत्। न। एकस्मिन् पदेऽतिव्याप्तेः। पदसमूहस्य वाक्यत्वे समूहानामत्र बहूनां सम्भवाद् वाक्यभेदः स्यादिति चेत्। मैवम्। यद्विभागे साकाङ्क्षमविभागे चैकार्थं तदेकं वाक्यमिति प्रयोजकस्य बोद्धुं शक्यत्वाद्विभागे साकाङ्क्षमित्युक्तेऽतिव्याप्तिः स्यात्। स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि। तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमान इति। अत्र तस्मिन्नित्यादिपदसमूहस्य विभागे सति प्रकृतवाचितच्छब्दार्थनिर्णयाय पूर्वपदसमूहसाकाङ्क्षत्वमस्ति। अतस्तद्व्यवच्छेत्तुमेकार्थमित्युच्यते। न ह्यत्रैकार्थत्वमस्ति। पूर्वसमूहस्य सदनकरणमर्थः। उत्तरसमूहस्य पुरोडाशप्रतिष्ठापनम्। स्योनं समीचीनम्। सुशेव सुष्ठु सेवितुं योग्यम्। मेध सारभूतपुरोडाशेत्यर्थः। अत्र द्वयोः पदसमूहयोर्वाक्यद्वयत्वमुभयवादिसिद्धम्। तदेकार्थमित्यनेन व्यावर्त्यते। एकार्थमित्युक्तेऽतिव्याप्तिः स्यात्। भगो वां विभजतु। पूषा वां विभजत्वित्यनयोर्विभिन्नमन्त्रत्वेन संमतयोः पदसमूहयोस्तात्पर्यविषयस्य द्रव्यविभागरूपस्यार्थस्यैकत्वात् तद्व्यवच्छेत्तुं विभागे साकाङ्क्षमित्युक्तम्। प्रकृते त्वग्नये जुष्टमित्यादिसमूहे पृथक्कृते पूर्वो देवस्य त्वेति समूहः साकाङ्क्षो भवति। एकीकृते तु कृत्स्नस्यैक एव

निर्वापोऽर्थः। एतेनैकवाक्यत्वनिर्णयेनानियतपरिमाणस्य यजुषोऽवसानं निश्चेतुं शक्यम्।

पञ्चदशाधिकरणमारचयति।

इषे त्वादिर्मन्त्र एको भिन्नो वैकः क्रियापदे।
असत्यर्थास्मारकत्वादेकादृष्टस्य कल्पनात्॥ ३१॥
छेदने मार्जने चैतौ विनियुक्तौ क्रियापदे।
अध्याहृते स्मारकत्वान्मन्त्रभेदोऽर्थभेदतः॥ ३२॥

इषे त्वोर्जे त्वेति श्रूयते। सोऽयं पदसमुदाय एको मन्त्रः। कुतः। अस्यादृष्टार्थत्वेनैकस्यैवादृष्टस्य कल्पने लाघवात्। न चात्र प्रथस्वेत्यादिमन्त्रवदनुष्ठेयार्थस्मारकत्वं सम्भवति। क्रियापदाभावेन तदर्थप्रतीत्यभावादिति प्राप्ते ब्रूमः। इषे त्वेति छिनत्ति। ऊर्जे त्वेत्यनुमार्ष्टीति पलाशशाखायाश्छेदनमार्जनयोरेतौ विनियुक्तौ। ततस्तदनुसारेण छिनद्मि। अनुमार्ज्मीत्येवं क्रियापदेऽध्याहृते सत्यनुष्ठेयार्थस्मारकत्वादर्थभेदेन वाक्यभेदाद्यजुर्मन्त्रभेदः। इष्यमाणायान्नाय भोः पलाशशाखे! त्वां छिनद्मि। ऊर्जे रसाय बलाय वा त्वामनुमार्ज्मीत्यर्थभेदः। एवमायुर्यज्ञेन कल्पताम्। प्राणो यज्ञेन कल्पतामित्यादौ क्लृप्तिसामान्यरूपस्यार्थस्यैकत्वेऽप्यायुरादिभिर्भिन्नत्वादर्थभेदवाक्यभेदयोः स्पष्टत्वात् क्लृप्तीर्वाचयतीति क्लृप्तिबहुत्वस्य चोदितत्वाच्च यजुर्भेदो द्रष्टव्यः।

षोडशाधिकरणमारचयति।

या ते अग्ने रजेत्यध्याहारो यद्वानुषञ्जनम्।
तनूरित्यन्यशेषत्वादध्याहारोऽत्र लौकिकः॥ ३३॥

वेदाकाङ्क्षा पूरणीया वेदेनेत्यनुषञ्जनम्।
अन्यशेषोऽपि बुद्धिस्थो लौकिकस्तु न तादृशः॥ ३४ ॥

ज्योतिष्टोम उपसद्धोमेष्वेवमाम्नायते। या ते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठा। उग्रं वचो अपावधीत् त्वेषं वचो अपावधीत् स्वाहा। या ते अग्ने रजाशया। या ते अग्ने हराशयेति। अयमर्थः। अयसा रजतेन हिरण्येन च निर्मिता अग्नेस्तिस्रस्तनवः। तास्वाद्या येयमुक्ता तनूः सातिशयेन वृद्धा। गह्वरे तीक्ष्णे द्रव्ये लोहेऽवस्थिता। तया तन्वा क्षुत्पिपासे उपपातकं वीरहत्यादिमहापातकं च हतवानसीति। तथा च ब्राह्मणम्। उग्रं वचो अपावधीत्त्वेषं वचो अपावधीत् स्वाहेति। अशनायापिपासे ह वा उग्रं वचः। एनश्च वैरहत्यं च त्वेषं वच इति। तत्र स्वाहान्तः प्रथमो मन्त्रः संपूर्णवाक्यत्वान्निराकाङ्क्षः। द्वितीयतृतीययोराकाङ्क्षां पूरयितुमुचितो लौकिको वाक्यशेषोऽध्याहर्त्तव्यः। न हि तनूर्वर्षिष्ठेत्यादिभागस्तयोरन्वेतुं योग्यः। तस्य प्रथममन्त्रशेषत्वादिति प्राप्ते ब्रूमः। वैदिकयोर्मन्त्रयोराकाङ्क्षा वैदिकेनैव वाक्यशेषेण पूरणीया। ततस्तनूर्वर्षिष्ठेत्यादिभाग उत्तरयोर्मन्त्रयोरनुषज्यते यद्यप्यसावन्यमन्त्रस्य शेषस्तथापि बुद्धिस्थः संकल्पनीयादध्याहारात् संनिकृष्यते। तस्मादनुषङ्गः कर्त्तव्यः।

सप्तदशाधिकरणमारचयति।

नानुषङ्गोऽनुषङ्गो वाच्छिद्रेणेत्यस्य शेषिणी।
चित्पतिस्त्वेत्यनाकाङ्क्षावतो नात्रानुषज्यते॥ ३५ ॥

करणत्वं क्रियापेक्षं क्रिया चैका पुनात्विति।

मन्त्रत्रयेऽतस्तद्द्वारा सर्वशेषोऽनुषज्यते ॥ २६ ॥

ज्योतिष्टोमे दीक्षाप्रकरणे पठ्यते। चित्पतिस्त्वा पुनातु। वाक्पतिस्त्वा पुनातु। देवस्त्वा सविता पुनात्व च्छिद्रेण पवित्रेण वसोः सूर्य्यस्य रश्मिभिरिति। तत्र तृतीयमन्त्रशेषोऽच्छिद्रेणेत्यादिभागः प्रथमद्वितीयमन्त्रयो-र्नानुषज्यते। कुतः। निराकाङ्क्षत्वात्। न हि चित्पतिस्त्वा पुनातु। वाक्पतिस्त्वा पुनात्वित्यनयोः शेषिणोः सम्पूर्ण-वाक्ययोः काचिच्छेषाकाङ्क्षास्तीति प्राप्ते ब्रूमः। मा भूच्छेषिणोराकाङ्क्षा। तथापि शेषस्याकाङ्क्षास्तीति पवित्रेण रश्मिभिरित्युक्तं करणत्वं हि क्रियामपेक्षते। क्रिया च पुनात्वित्येषा त्रिष्वपि मन्त्रेष्वेका। तया क्रियया संबद्धः शेषः क्रियाद्वारा तृतीयमन्त्रे निरपेक्षोऽपि यथान्वेति। तथा पूर्वयोरप्यन्वेतुमर्हति। तस्मादस्त्यनुषङ्गः।

अष्टादशाधिकरणमारचयति।

गच्छतामिति मन्त्रस्यानुषङ्गोऽस्ति न वोपरि।

स यज्ञपतिरित्यत्र योग्यत्वात् सोऽस्ति पूर्ववत् ॥ २७ ॥

तदेकवचन मध्यमन्त्रेऽङ्गानीत्यनेन हि।

नान्वेति तद्वाक्येन नोपर्य्यप्यनुषज्यते ॥ २८ ॥

अग्नीषोमीयपशौ श्रूयते। सं ते प्राणो वातेन गच्छ-ताम्। समङ्गानि यजत्रैः। सं यज्ञपतिराशिषेति। अय-मर्थः। भोः पशो। तव प्राणो वातेन बाह्येन वायुना संगच्छताम्। तव हृदयाद्यङ्गानि यागविशेषैः संयुज्यन्ताम्। यज्ञपतिराशिषा संयुज्यतामिति। तत्र यज्ञपतिरित्यस्मिं-स्तृतीयमन्त्रे समित्युपसर्गस्य क्रियापदाकाङ्क्षत्वात् प्रथम-

मन्त्रगतस्य गच्छतामिति पदस्यैकवचनान्तस्य यज्ञपति-शब्देनान्वेतुं योग्यत्वात् पूर्ववद् बुद्धिस्थत्वेन संनिहित-त्वादाकाङ्क्षासन्निधियोग्यतासद्भावेन क्रियापदमनुषज्यत इति प्राप्ते ब्रूमः। मध्यममन्त्रे बहुवचनान्तेनाङ्क्षामीत्य-नेनान्वेतुमयोग्यत्वाच्चद्व्यवायेन बुद्धिसंनिध्यभावान्नास्त्यनु-षङ्गः। ततो द्वितीयतृतीयमन्त्रयोर्यथोचित वाक्यशेषोऽ-ध्याहर्त्तव्यः।

इति माधवीये जैमिनीयन्यायमालाविस्तरे द्वितीयस्या-ध्यायस्य प्रथमः पादः।

---

द्वितीयपादस्य प्रथमाधिकरणमारचयति।

ददातियजतीत्यादौ भावनैक्यमुतान्यथा।
आख्यातैक्यात्तदेकत्वं धातुभेदोऽप्रयोजकः॥ १॥
धातुभेदेन भिन्नत्वमाख्याते श्रूयते ततः।
एतत्पत्थैकानुरक्तत्वाद्भिद्यन्ते भावना मिथः॥ २॥

इहैकप्रकरणगतान्यपर्य्यायधातुनिष्पन्नान्याख्यातानि यजतिददातिजुहोतीत्यादीन्युदाहरणम्। तानि चैवं श्रूयन्ते। सोमेन यजेत। हिरण्यमात्रेयाय ददाति। दाक्षि-णानि जुहोतीति। तेषु भावनावाचिन आख्यातस्यैकत्वा-द्भावनाया एकत्वं युक्तम्। न च धातुभेदाद्भावनाभेदः। तद्वाचित्वाभावेन धातोस्तस्यामप्रयोजकत्वादिति प्राप्ते ब्रूमः। अस्त्वाख्यातमेव भावनायाः प्रयोजकम्। तच्चाख्यातं प्रतिधातु भिन्नम्। न हि बहूनां धातूनामुपर्य्येक आख्यातप्रत्ययः श्रूयते। नापि व्याकरणे धातुसमूहादेक

माख्यातं विहितम्। तत आख्यातानां बहूनामेकैकधातुविशेषानुरक्तत्वेनोत्पन्नानां भावनावाचित्वेन यागदानहोमभावनाः परस्परं भिद्यन्ते।

अत्र गुरुमतमाह।

नियोगैकत्वतः शास्त्रमभिन्नमिति चेन्न तत्।

धातुभेदाच्छास्त्रभेदे नियोगो भिद्यते बलात्॥ ३॥

कर्मभेदचिन्ता नाध्यायार्थः। किन्तु शास्त्रभेदचिन्तेति गुरोर्मतम्। तत्र यजेत दद्याज्जुहुयादित्येतेषु लिङ्प्रत्ययवाच्यस्य नियोगस्यैकत्वाद्धातूनां नियोगवाचकत्वाभावेनाप्रयोजकत्वादेकनियोगार्थं कृत्स्नं शास्त्रमेकमिति पूर्वपक्षः। प्रतिधातु लिङ्प्रत्ययस्य भिन्नत्वाद्धात्वर्थानुबन्धभेदेन तद्विशिष्टे नियोगेऽभेदस्य वारयितुमशक्यतया नियोगानुसारिशास्त्रं भिन्नमिति राद्धान्तः।

द्वितीयाधिकरणमारचयति।

समिधो यजतीत्यादावेकत्वमुत भिन्नता।

धातुप्रत्यययोरैक्यादेकत्वे भिन्नता कुतः॥ ४॥

अभ्यासात् कर्मभेदोऽत्र नामत्वान्न विधिर्गुणे।

विधित्वं श्रुतितो भाति संनिधेरनुवादता॥ ५॥

दर्शपूर्णमासयोः श्रूयते। समिधो यजति। तनूनपातं यजति। इडो यजति। बर्हिर्यजति। स्वाहाकारं यजतीति। तत्र पञ्चकृत्वः श्रूयमाणे यजतिपदे पूर्वोक्तेषु यजतिददातीत्यादिपदेष्विव धातुभेदो नास्ति येन भावनाभेद आशङ्क्येत। तस्मादाख्यातैक्यप्रयुक्तं भावनैक्यमनिवार्यमिति चेत्। मैवम्। यजतिपदाभ्यासेन कर्मभेदाव-

गमात्। कर्मैकत्वेऽभ्यासो निरर्थकः स्यात्। अथोच्येत। समिधो यजतीत्यनेन प्रथमश्रुतेन वाक्येन विहितं समिन्नामकं यागमुपरितनैश्चतुर्भिर्यजतिपदैरनूद्य तनूनपादादयो देवतारूपा द्रव्यरूपा वा गुणाश्चत्वारो विकल्पिता विधीयन्ते। ततोऽनुवादार्थत्वान्नाभ्यासवैयर्थ्यमिति। तन्न। तनूनपादादिशब्दानां यागनामत्वेन गुणविधित्वाभावात्। न तावदत्र देवताविधिः। चतुर्थीतद्धितयोरश्रवणात्। नापि द्रव्यविधिः। तृतीयान्तत्वाभावात्। ततोऽग्निहोत्रं जुहोतीत्यादाविव द्वितीयान्तानां युक्तं नामत्वम्। यत् तु चतुर्णामुपरितनानां यजतिपदानामनुवादत्वं तदसत्। तेषां विधायकत्वात्। यथा समिधो यजतीत्यत्र यजतिपदे विधित्वं श्रुत्या प्रतीयते। तथान्येष्वपि चतुर्षु पदेषु विधित्वं श्रौतम्। अनुवादत्वं तु पुरोवादरूपस्य समिधो यजतीत्यस्य सन्निधिनावगम्यते। सन्निधिश्च श्रुतेर्दुर्बलः। विधित्वे च पूर्ववाक्यविहितस्य समिन्नामकस्य यागस्य पुनर्विधानयोगात्तनूनपादादिनामकानि यागान्तराणि विधीयन्ते। नन्वेवं सति संज्ञाभेदात् कर्मभेदः संपद्यते न त्वभ्यासात्। तथा सति वक्ष्यमाणेनाधिकरणेन संकीर्य्येत। नैवम्। वैषम्यात्। अथैष ज्योतिरित्यस्मिन् वक्ष्यमाणोदाहरणे यागावगमात् प्रागेव संज्ञात्वावगमात् संज्ञायाः कर्मभेदहेतुत्वम्। इह तु विधायकैर्यजतिपदैर्यागेष्ववगतेषु भेदे चाभ्यासादवगते भिन्नानां यागानां समित्संज्ञाया अन्याः संज्ञा अपेक्षिता इति तनूनपादादीनां संज्ञात्वं पश्चादवगम्यते। तस्मादभ्यास एवात्र भेदहेतुः।

तृतीयाधिकरणमारचयति ।

एवं विद्वान् पौर्णमासीममावास्यामितीरितम् ।
कर्मान्यदुत पूर्वोक्तसमुदायानुवादकम् ॥ ६ ॥
कर्मान्तरं स्यादभ्यासान्नैवं द्रव्यं हि देवता ।
वार्त्रघ्नीत्यादितो लभ्यानुवादस्तु न युज्यते ॥ ७ ॥
वार्त्रघ्नीत्याज्यभागाङ्ग्यवस्थोक्तेर्न देवता ।
पौर्णीत्यनूद्यते पौर्णमासीयुक्तं त्रिकं तथा ॥ ८ ॥
अमेत्यपि समूहस्य हित्वसिद्धिः प्रयोजनम् ।
सद्व्यस्थितिः पौर्णमास्यामित्युक्तिभ्यां त्रिके त्रिके ॥ ९ ॥
विद्वद्वाक्यविधौ विध्यावृत्तिराग्नेयकादिना ।
विहितस्य फलित्वेन प्राधान्यमितरे गुणाः ॥ १० ॥

इदमाम्नायते । य एवं विद्वान् पौर्णमासीं यजते । य एवं विद्वानमावास्यां यजत इति । अत्र यजतिना कर्मान्तरं विधीयते । न तु प्रकृता आग्नेयादयः षड् यागा अनूद्यन्ते । आग्नेयादयश्च कालसंयुक्तास्तस्मिन् प्रकरण एवमाम्नायन्ते । यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति तावन्तुतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्निति । ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छदिति । ऐन्द्रं दध्यमावास्यायाम् । ऐन्द्रं पयोऽमावास्यायामिति । एतेभ्यः प्रकृतेभ्यः षड्भ्य आग्नेयादिभ्यो विद्वद्वाक्यविहितस्य कर्मणोऽन्यत्वे सति [illegible]धिकरणन्यायेन विध्यभ्यास उपपद्यते । न च कर्मान्तरे द्रव्यदेवतयोरभावः । आैवाज्यसद्भावात् । अत एवोक्तम् । ध्रौवं साधारणं द्रव्यं देवता मान्त्रवर्णिकी ।

रूपवन्तौ ततो यागौ विधीयेते पृथक्त्वेति। सर्वस्मै वा एतद् यज्ञाय गृह्यते यद्ध्रुवायामाज्यमिति ध्रौवस्य साधारणत्वं श्रुतम्। देवताया मान्त्रवर्णिकीत्वमित्यनुसन्तव्यम्। तस्माद्वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वती अमावास्यायामिति। वार्त्रघ्नौ वृधन्वन्तौ चर्चौ क्रमेण कालद्वयोपेते कर्मणि विधीयेते। तत्राग्निर्वृत्राणि जङ्घनदित्येको वार्त्रघ्नो मन्त्रः। त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहेत्यपरः। तयोरुक्तावग्नीषोमौ पौर्णमासदेवते। एवमनन्तराम्नातयोर्वृधन्वतुयुक्तर्गमन्त्रयोरुक्तावग्नीषोमावमावास्यादेवते। ताभ्यां द्रव्यदेवताभ्यां रूपवत्त्वाद्यागान्तरमत्र विधीयते। षड्यागानुवादत्वे तदनुवादेन विधेयान्तरस्य कस्यचिद् दर्शनाद्विदवाक्यमनर्थकं स्यात्। न केवलं तदानर्थक्यम्। किन्तु पौर्णमास्यां पौर्णमास्या यजेत। अमावास्यायाममावास्यया यजेतेत्येतदपि व्यर्थं स्यात्। न चैतत् कालविधायकम्। यदाग्नेय इत्याद्युत्पत्तिवाक्यैरेव तद्विधानात्। कर्मान्तरत्वे तु कालं विधास्यति। तस्मात् कर्मान्तरविधिरिति प्राप्ते ब्रूमः। आस्तां तावद् द्रव्यम्। देवता तु विधित्सितस्य कर्मान्तरस्य सर्वथा न लभ्यते। वार्त्रघ्नीवृधन्वत्योराज्यभागदेवताप्रतिपादकत्वात्। होत्रे मन्त्रकाण्डे सामिधेनीरावाहननिगदं प्रयाजमन्त्रांश्चाम्नाय प्रयाजानन्तरभाविनोराज्यभागयोः क्रमेण वार्त्रघ्नी वृधन्वत्यौ चाम्नाते। लिङ्गं चाग्निविषयं सोमविषयञ्च तत्रोपलभ्यते। ततो लिङ्गक्रमाभ्यामाज्यभागविषयत्वमवगम्यते। यत्तु वार्त्रघ्नी पौर्णमास्यामित्यादिवाक्यं तल्लिङ्गक्रमकॢप्तयोराज्यभागा-

ङ्गयोर्मन्त्रयुगलयोः कालद्वये व्यवस्थामाचष्टे। न तु नूतन-
कर्माङ्गतां तयोर्विदधाति। अतो रूपराहित्याद् विद्वद्-
वाक्यं कर्मान्तरविधायकं न भवति। किं तर्हि पूर्वप्रकृत-
स्वाग्नेयादिषु षट्सु त्रिकरूपौ द्वौ समुदायावनुवदति।
न च कालवाचिभ्यां पौर्णमास्यमावास्याशब्दाभ्यां यागानु-
वादानुपपत्तिः। तत्तत्कालविहितयोर्याग्योस्त्रिकयोरुप-
लक्षितत्वात्। न चानुवादो व्यर्थः। समुदायद्वित्वसिद्धे-
स्तत्प्रयोजनत्वात्। तत्सिद्धौ च दर्शपूर्णमासाभ्यां स्वर्ग-
कामो यजेतेत्यस्मिन् फलवाक्ये षड्यागविवक्षया
द्विवचननिर्देश उपपद्यते। यदप्युक्तमनुवादपक्षे पौर्णमास्या-
मित्यादिवाक्यवैयर्थ्यमिति तदयुक्तम्। कालविधानासम्भवेऽ-
प्येकैकस्य त्रिकस्य सहप्रयोगविधानात्। आग्नेयोपांशु-
याजाग्नीषोमीयाणां त्रयाणां पौर्णमासीकालविहितानां
सहप्रयोगः पौर्णमास्येत्यनेन तृतीयैकवचनान्तेन विधी-
यते। एवमितरत्रापि। ननु विद्वद्वाक्यस्य कर्मान्तर-
विधायकत्वाभावेऽपि नानुवादकत्वम्। तस्य यागविधा-
यकत्वाभ्युपगमात्। आग्नेयोऽष्टाकपाल इत्यादिवाक्यानि
तु विहितयागानुवादेन द्रव्यदेवतालक्षणविधायकानीति
चेत। न। तथा सत्येकेन वाक्येनानेकगुणविध्यसम्भवात्।
प्रतिगुणं पृथग्विधौ विध्यावृत्तिः प्रसज्येत। आग्नेयादि-
वाक्यानां विधायकत्वे तु विशिष्टविधित्वान्नास्ति विध्या-
वृत्तिदोषः। तस्मादाग्नेयादिवाक्यविहितानां विद्वद्वाक्य-
मनुवादकम्। किञ्चानुवादत्वमनभ्युपगम्य कर्मान्तर-
विधिं वदतः प्रयाजादीनामाग्नेयादीनां च गुणप्रधानभावो

न सिध्येत्। तथा हि समिधो यजति। आघारमाघारयती-त्यादयः कालयोगरहिताः केचिद्विधय आम्नाताः। यदा-ग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चेत्यादयः कालयुक्ता अपरे। तेषामुभयेषां प्रकृतत्वाद् दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति॰ वाक्येन सर्वेषां फलसम्बन्धो बोध-नीयः। दर्शपूर्णमासाभ्यामिति द्विवचनमत्र बहुवचनत्वेन परिणेतव्यम। विद्वद्वाक्यविहिते हि कर्मान्तरे प्रयाजादय आग्नेयादयश्चेत्येतेषां द्वित्वासम्भवात् सर्वेषां च फलसम्बन्धे राजसूयगतेष्टिपशुसोमवत्समप्राधान्यात् प्रयाजादीनां गुणभावो न स्यात्। तदभावे चानङ्गत्वात् सौर्यादिविकृति-ष्वाग्नेयादीनामिवातिदेशो न स्यात्। अनुवादपक्षे तु त्रिकयोः कालयोगेन दर्शपूर्णमासशब्दार्हत्वात् समुदाय-द्वित्वेन द्विवचनार्हत्वाच्चाग्नेयादीनामेव फलसम्बन्धेन प्राधान्यम्। प्रयाजादीनां तु गुणभाव इति न कोऽपि दोषः। तस्माद् विद्वद्वाक्यमनुवादकम्।

चतुर्थाधिकरणमारचयति।

उपांशुयाजमित्येषोऽनुवादोऽथवा विधिः।
विष्ण्वादिवाक्ये विस्पष्टविधेरस्यानुवादता॥ ११॥
जामित्वोक्तेरन्तराल उपांशुगुणके विधौ।
सत्यर्थवादो विष्ण्वादिस्तद्रूपं ध्रौवमन्त्रतः॥ १२॥

इदमाम्नायते। जामि वा एतद्यज्ञस्य क्रियते। यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजति। विष्णुरुपांशु यष्टव्योऽजामित्वाय। प्रजापतिरुपांशु यष्टव्योऽजामित्वाय। अग्नीषोमावुपांशु यष्टव्यावजामित्वायेति। तत्र विष्ण्वाद-

वाक्येषु विहितस्य यागत्रयसमुदायस्यानुवाद इति चेत्। नैवम्। आग्नेयाग्नीषोमीयपुरोडाशद्वयनैरन्तर्यकृतस्य जामित्वदोषस्य वाक्योपक्रम उपन्यासात् पुरोडाशयोरन्तराले किञ्चिद् विधित्सितम्। न ह्यन्तरालगुणविशिष्टं विधेयं विष्ण्वादिवाक्येषु प्रतीयते। पूर्ववाक्ये तु तत् प्रतीयत इति विधायकं तद्वाक्यम्। न चात्र यजतीति वर्त्तमानापदेशः शङ्कनीयः। पञ्चमलकारस्याश्रयणात्। अन्तरालकालवदुपांशुत्वगुणस्यापि विशेषणत्वात्तद्विशिष्टकर्मण उपांशुयाजनामकत्वम्। सत्येवं गुणद्वयविशिष्टकर्मण्याद्येन वाक्येन विहिते विष्ण्वादिवाक्यमर्थवादः स्यात्। न चात्र विहितयागानुवादेन देवताविधिः शङ्कनीयः। समाधातव्येन जामित्वदोषेणोपक्रमादजामित्वेन समाधानेनोपसंहाराच्च। जामि वा इत्यादेरजामित्वायेत्यन्तस्य सर्वस्य महावाक्यस्यैकत्वप्रतीतेः। न खल्वेकस्मिन् वाक्ये विधेयबाहुल्यं सम्भवति। न चात्र विधित्सितस्योपांशुयाजस्य द्रव्याभावः। ध्रौवस्य तद्द्रव्यत्वात्। नापि देवताया अभावः। नानाशाखासूपांशुयाजकर्मे पठितैर्वैष्णवप्राजापत्याग्नीषोमीयमन्त्रैर्विकल्पेन देवतात्रयस्य प्रतीयमानत्वात्। तस्माद् यजतीत्येतद्विधायकम्।

षष्ठमाधिकरणमारचयति।

अग्निहोत्राघारवाक्यमनुवादोऽथवा विधिः।
अरूपत्वात् तु दध्यूर्ध्ववाक्येनोक्तमनूद्यते ॥ १३ ॥
गुणसिद्धौ न दध्यादिगुणो दृष्टा विशिष्टता।
रूपं दध्यादिमन्त्राभ्यामतोऽसौ गुणिनो विधिः ॥ १४ ॥

इदमाम्नायते। अग्निहोत्रं जुहोति। दध्ना जुहोति। पयसा जुहोतीति च। इदमपरमाम्नायते आघारमाघारयति। ऊर्ध्वमाघारयति। ऋजुमाघारयति च। तत्राग्निहोत्रवाक्यं दध्यादिवाक्यविहितस्य कर्मसमुदायस्यानुवादः। आघारवाक्यं चोर्ध्वादिवाक्यविहितस्य। न त्वेतद्वाक्यद्वयं कर्मविधायकम्। कुतः। द्रव्यदेवतालक्षणस्य यागरूपस्याभावादिति चेत्। तत्र वक्तव्यम्। किं दध्यादिवाक्येन गुणमात्रं विधीयते किंवा गुणविशिष्टकर्म। नाद्यः। अग्निहोत्रादिवाक्यस्य त्वन्मते कर्मविधायकत्वाभावेन गुणिनः कस्यचिदसिद्धौ गुण्यनुवादपुरःसरस्य गुणमात्रविधानस्यासम्भवात्। द्वितीये विधिगौरवं स्यात्। तच्च सत्यां गतावयुक्तम्। अतोऽग्निहोत्रादिवाक्यं कर्मविधायकम्। तत्र द्रव्यं दध्यादिवाक्यैर्लभ्यते। देवता तु मान्त्रवर्णिकी। आघारेऽप्येवं द्रव्यदेवते उन्नेतव्ये।

षष्ठाधिकरणमारचयति।

यजत्यालभती एतावनुवादौ विधी उत।
गृह्णात्यवद्यतीत्याभ्यां विहितेऽर्थेऽनुवादिनौ॥ १५॥
नानुवादोऽपुरोवादे यज्यालभ्यारतो विधिः।
ग्रहणं सोमसंस्कारोऽवदानं पशुसंस्क्रिया॥ १६॥

सोमेन यजेतेति श्रूयते। तत्रैन्द्रवायवं गृह्णाति। मैत्रावरुणं गृह्णातीत्यादीन्यपि श्रुतानि। एवमग्नीषोमीयं पशुमालभेतेति श्रूयते। तत्र हृदयस्याग्रेऽवद्यति। अथ जिह्वाया अथ वक्षस इत्यादीन्यपि श्रुतानि। तत्रैन्द्रवायवादिवाक्यैर्यागा विधीयन्ते। इन्द्रवाय्वादिप्रातिपदिकै-

देवतानां तद्धितेन सोमरसद्रव्यस्य च प्रतीयमानत्वात्। एतेषां ग्रहणवाक्यविहितानां यागानां समुदायः सोमेन यजेतेत्यनेनानूद्यते। तथावदानवाक्येषु हृदयादिद्रव्यं श्रुतम्। अतो द्रव्यविशिष्टा यागास्तत्र विधीयन्ते। तदनुवादेन पश्वालम्भवाक्येऽग्नीषोमरूपा देवता विधीयते। तस्मादवदानवाक्यविहितानां यागानां समुदायः पशुमालभेतेत्यनेनानूद्यत इति प्राप्ते ब्रूमः। सति हि पुरोवादेऽनुवादो भवति। न चात्र पुरोवादोऽस्ति। सोमेन यजेतेत्यनेन प्रतीयस्यार्थस्य ग्रहणवाक्येष्वप्रतीतिः। न हि ग्रहणं यजनं भवति। नापि तद्धितप्रत्ययवाच्यो रसः सोमलता। न च तद्धितप्रत्ययः सर्वनामार्थे विहितः प्रकृतं ब्रूते न तु रसमिति ग्रहणीयम्। धारया गृह्णातीति रसस्यैव प्रकृतत्वात्। तथा पशुनालभेतेत्यनेन प्रतीतोऽर्थो नावदानवाक्येषु प्रतीयते। ततः पुरोवादाभावेऽनुवादासम्भवाद् यजत्यालभतिभ्यां कर्मणी विधीयेते। ग्रहणवाक्येषु देवताविशिष्टः सोमसंस्कारो विधीयते। अवदानवाक्येषु पशुसंस्कारः।

सप्तमाधिकरणमारचयति।

आहुतीस्तिस्र इत्यत्र कर्मैक्यमुत भिन्नता।
एकत्वं सकृदाख्यातात् संख्यावृत्त्या प्रयाजवत्॥ १७॥
आख्यातमात्रं नो मानं संख्याया बहुकर्मता।
आवृत्त्येकाद्यत्वं तु प्रयाजे गत्यभावतः॥ १८॥
पशून् समद्य प्राजापत्यानित्यत्र भाष्यकृत्।
विचारमाह पूर्वत्र क्रियाविलस्फुटत्वतः॥ १९॥

बहुत्वोपेतपशुभिर्दैवयोगादभिन्नता।
रूपस्य तेन कर्मैक्यं संख्या नात्र क्रियागता॥ २० ॥
देवताकृतस्यैव तद्धितार्थस्य पश्चिमः।
बहुत्वसङ्गमो रूपसंख्यया तत्क्रियाभिदा॥ २१ ॥

तिस्र आहुतीर्जुहोतीति श्रूयते। तत्र जुहोतीत्येतदाख्यातं समिधो यजतीत्यादिवन्नाभ्यस्तम्। किन्तु सकृदेवाम्नातम्। तत एकमिदं कर्म। त्रित्वसंख्या तु तस्यैव कर्मण आवृत्त्या नेतव्या। यथा प्रयाजेष्वेकादशत्वसंख्या पञ्चानामेव प्रयाजानामावृत्त्या नीता। तद्वदिति प्राप्ते ब्रूमः। किमिदमाख्यातं पदान्तरनिरपेक्षमेव कर्मैक्ये प्रमाणमुत पदान्तरान्वितम्। नाद्यः। वाक्यांशस्य पदमात्रस्य प्रमितिजनकत्वाभावात्। द्वितीये त्रित्वसंख्यया विशेषितेनाख्यातेन कर्मबहुत्वं गम्यते। प्रयाजानां तु पूर्वमेव पञ्चसंख्यावरुद्धत्वादावृत्तिमन्तरेणैकादशत्वं दुःसम्पादम्। इह त्वेतद्विधितः पूर्वं कर्मण एकत्वसंख्यावरोधो नास्तीति वैषम्यम्।

तदेतद् वृत्तिकारोदाहरणं भाष्यकारो नानुमन्यते। कर्मवाचिन आहुतिशब्दस्य विशेषणेन त्रिशब्देन कर्मबहुत्वस्य स्फुटतया पूर्वपक्षानुत्थानात्। इदं त्वत्रोदाहरणम्। सप्तदश प्राजापत्यान् पशूनालभत इति। अत्र प्रजापतिर्देवता येषां पशूनां ते प्राजापत्या इति तद्धितव्युत्पत्तौ बहुत्वोपेताः पशव एकं द्रव्यम्। ततो द्रव्यैक्याद् देवतैक्याच्च यागस्य रूपमभिन्नमित्येकमिदं कर्म। या तु सप्तदशेति संख्या सा पशुद्रव्यगता। न तु पूर्वोदाहृतत्रित्वसंख्येव क्रियागता।

तस्मान्न कर्मभेदमापादयतीति प्राप्ते ब्रूमः। अत्र प्रजापति-र्देवता यस्य पशोः स प्राजापत्य इति तद्धितान्तं प्रातिपदिकं व्युत्पाद्य पश्चात् तद्धितान्तप्रातिपदिकार्थस्य प्रजापतिदेवता-विशिष्टस्य पशोः कर्मबहुत्वविवक्षायामुत्पन्ने इमे द्वितीया-विभक्तिबहुवचने। तत्र प्रथमभाविन्यां द्वितीयाविभक्तावेव तावत् तद्धितोत्पत्तिवेलायामन्वयो नास्ति। कुतः। पश्चाद्-भाविनो बहुवचनस्यान्वयः। एवं सति प्राजापत्येत्यनेन तद्धितान्तप्रातिपदिकेनैकं पशुद्रव्यमेकदेवतोपेतं यागस्य रूपं समर्थ्यते। तादृशानां रूपाणां बहुत्वाय बहुवचनम्। बहुत्वविशेषः सप्तदशेति निर्दिश्यते। तस्मादत्र संख्यया कर्मभेदः। एवं सत्यष्टमे वक्ष्यमाणं सप्तदशपशूनामैकादशिनपशुगणविकृतित्वमुपपद्यते।

अष्टमाधिकरणमारचयति।

अथैष ज्योतिरित्यत्र गुणो वा कर्म वा पृथक्।
गुणः सहस्रदानात्मा ज्योतिष्टोमे ह्यनूदिते॥ २२॥
अथेति प्रकृते छिन्न एतच्छब्दोऽग्रगां वदेत्।
संख्ययैवान्यकर्मत्वमिह नूतनसंज्ञया॥ २३॥

अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेतेति श्रूयते। अत्र प्रकृतं ज्योतिष्टोम-मेष ज्योतिरित्यनूद्य तस्मिन् सहस्रदानलक्षणो गुणो विधी-यत इति चेत्। न। प्रकृतस्य ज्योतिष्टोमस्याथेत्यनेन छिन्न-त्वात्। न चैवं सत्यथैष ज्योतिरित्युक्त एतच्छब्दोऽनुपपन्न इति वाच्यम्। सन्निहितवाचिनैतच्छब्देनातीतसन्निहित-स्येवागामिसन्निहितस्यापि परामर्शसम्भवात्। आगामि-

सन्निहितश्च ज्योतिःशब्दार्थः। स च ज्योतिःशब्दोऽतीतमपराङ्गश्चपूर्वसंज्ञारूपत्वान्नूतनं किञ्चित् कर्माभिधत्ते। ततो यथा पूर्वत्र संख्यया कर्मभेदः। तथात्रापि संज्ञया कर्म भिद्यते। विश्वज्योतिःसर्वज्योतिःशब्दयोरप्ययं न्यायो द्रष्टव्यः।

नवमाधिकरणमारचयति।

गुणः कर्मान्तरं वा स्याद् वाजिभ्यो वाजिनं त्विति।
गुणो देवाननूद्योक्तः समुच्चयविकल्पतः॥ २४॥
आमिक्षोत्पत्तिशिष्टत्वात् प्रबला तत्र वाजिनम्।
गुणोऽप्रविश्य कर्मान्यत् कल्पयेद् वाजिदेवकम्॥ २५॥

तप्ते पयसि दध्यानयति। सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमिति श्रूयते। घनीभूतः पयःपिण्ड आमिक्षा। जलं वाजिनम्। तत्रामिक्षाद्रव्यभाजो विश्वेदेवा उक्ताः। ते वाजिभ्य इत्यनेनानूद्यन्ते। वाजोऽन्नमामिक्षारूपमेषामस्तीति तन्निष्पत्तेः। ताननूद्य वाजिनद्रव्यरूपो गुणो विधीयते। तच्च द्रव्यमामिक्षाद्रव्येण सह समुच्चीयतां विकल्प्यतां वेति प्राप्ते ब्रूमः। उत्पत्तिशिष्टेनामिक्षाद्रव्येणावरुद्धे वैश्वदेवयागे वाजिनद्रव्यस्योत्पन्नशिष्टस्य प्रवेशाभावाद् वाजिनं वाजिशब्दार्थश्च देवतान्तरतामापादयति। ततो द्रव्यदेवतालक्षणस्य रूपस्य भिन्नत्वात् कर्मान्तरम्।

दशमाधिकरणमारचयति।

दधिहोमेऽन्यकर्मत्वं गुणो वान्यत् तु पूर्ववत्।
निर्गुणत्वादग्निहोत्रे युक्तो दध्यादिको गुणः॥ २६॥

दध्ना जुहोतीति श्रूयते। तत्राग्निहोत्रं जुहोतीत्येतस्मात् प्रकृतात् कर्मणोऽन्यद्दधिहोमरूपं कर्मेति पूर्वन्यायेनावगम्यते। यथा पूर्वत्र वाजिनद्रव्येण कर्म भिद्यते। तथा दधिद्रव्येणेति चेत्। न। वैषम्यात्। यथा वैश्वदेवो याग आमिक्षागुणावरुद्धः। तथाग्निहोत्रं न गुणान्तरावरुद्धम्। प्रत्युत निर्गुणत्वाद् गुणमाकाङ्क्षति। तस्मादयं गुणविधिः। एवं पयसा जुहोतीत्यादिषु द्रष्टव्यम्। पयोदध्यादीनां सर्वेषामुत्पन्नशिष्टतया समबलत्वादेकैकेन द्रव्येणाग्निहोत्रनिष्पत्तेश्च व्रीहियववद्विकल्पः।

एकादशाधिकरणमारचयति।

यद्दध्नेन्द्रियकामस्य जुहुयादिति तत् पृथक्।
गुणो वा भिद्यते कर्म धात्वर्थस्य फलित्वतः॥ २७॥
मत्वर्थगौरवादिभ्यो नान्यत् कर्म फलाय तु।
गुणो विधेयो धात्वर्थो विहितत्वादनूद्यते॥ २८॥

दध्नेन्द्रियकामस्य जुहुयादिति श्रूयते। तदिदं प्रकृतादग्निहोत्रादन्यत् कर्म। न त्वत्र गुणविधिः। कुतः। इन्द्रियकामस्येत्युक्तस्य फलस्य धात्वर्थमन्तरेण द्रव्यमात्रादनिष्पत्तेरिति चेत्। मैवम्। कर्मान्तरविधौ दधिमता होमेनेन्द्रियं भावयेदिति मत्वर्थलक्षणाप्रसङ्गात्। गुणविशिष्टक्रियाविधौ गौरवात्। प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गाच्च। गुणमात्रं तु फलाय विधीयते। यद्यपि दध्ना जुहोतीति दधि प्राप्तं तथापि फलसम्बन्धो न प्राप्तः। धात्वर्थाभावे फलासम्भव इति चेत्। न। अग्निहोत्रं जुहोतीति विहितस्य धात्वर्थस्यानूद्यमानत्वात्।

द्वादशाधिकरणमारचयति।

उक्ताग्निष्टुतमेतस्य वारवन्तीयसाम हि।
रेवतीष्वस्तु कर्त्वेति श्रुतं पशुफलाप्तये ॥ २९ ॥
रेवत्यादिगुणः कर्म पृथग्वा पूर्ववद्गुणः।
रेवतीवारवन्तीयसम्बन्धाख्यः पशुप्रदः ॥ ३० ॥
साम्नोऽत्र फलकर्मभ्यां सम्बन्धे वाक्यभिन्नता।
तेनोक्तगुणसंयुक्तमन्यत् कर्मोच्यते फले ॥ ३१ ॥

त्रिवृदग्निष्टुदग्निष्टोमस्तस्य वायव्यासु एकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेतेत्यस्य सन्निधौ श्रूयते। एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेतेति। अस्यायमर्थः। अग्निष्टोमस्य विकृतिरूपः कश्चिदेकाहोऽग्निष्टुन्नामकः। स च पृष्ठस्तोत्रे त्रिवृत्स्तोमयुक्ततया त्रिवृदित्युच्यते। अग्निष्टोमोक्थ्यादीनां सप्तानां सोमसंस्थानां मध्येऽग्निष्टोमसंस्थारूपत्वादग्निष्टोम इत्युच्यते। प्रकृतौ तृतीयसवन आर्भवपवमानस्योपरि यज्ञायज्ञीयं साम गीयते। तेन च साम्नाग्निष्टोमयागस्य समाप्यमानत्वादग्निष्टोमसामेत्युच्यते। तच्च प्रकृतौ यज्ञायज्ञा वो अग्नय इत्याद्यास्वाग्नेयीष्वृक्षु गीयते। अस्मिंस्त्वग्निष्टुति ब्रह्मवर्चसकामिन वायव्यास्वृक्षु तत् साम गातव्यम्। तच्च प्रकृताविवैकविंशस्तोमयुक्तम्। पशुकामस्य तु रेवतीर्नः सधमाद इत्यादिषु रेवतीष्वृक्षु वारवन्तीयं साम गायेदिति। तत्र रेवतीनामृचां वारवन्तीयनामकेन साम्ना यः सम्बन्धः सोऽयं पशुफलायाग्निष्टुति विधीयते। एतस्यैवेति प्रकृतपरामर्शिनैतच्छब्देनान्यस्यावर्त्तकेनैवकारेण चाग्नि-

ष्टुतः समर्प्यमाणत्वात्। यथा पूर्वाधिकरणे इन्द्रियफलाय प्रकृतेऽग्निहोत्रे दधिगुणो विहितः। तद्वदिति प्राप्ते ब्रूमः। विषमो दृष्टान्तः। दध्नो होमजनकत्वं न शास्त्रेण बोधनीयम्। तस्य लोकतोऽवगन्तुं शक्यत्वात्। फलसम्बन्ध एक एव शास्त्रबोध्य इति न तत्र वाक्यभेदः। इह तु रेवत्यृगाधारकवारवन्तीयसाम्नोऽग्निष्टुत्कर्मसाधनत्वं फलसाधनत्वं चेत्युभयस्य शास्त्रैकबोध्यत्वाद् दुर्वारो वाक्यभेदः। तेन पशुफलकं यथोक्तगुणविशिष्टं कर्मान्तरमत्र विधीयते। एतच्छब्द एवकारश्च विधीयमानकर्मान्तरविषयतया योजनीयौ।

त्रयोदशाधिकरणमारचयति।

वृष्ट्यन्नस्वर्गकामानां सौभरं स्तोत्रमीरितम्।
निधनान्यपि हीषूर्ज इति वृष्ट्यादिकामिनाम्॥ ३२॥
फलान्तरं किं वृष्ट्यादि हीषादीनामुताऽदिते।
सौभरे फलसंभिन्ने निधनं विनियम्यते॥ ३३॥
फलान्तरं चतुर्थ्युक्तं वृष्टिकामाय हीषिति।
सौभरस्य फलं वृष्टिं हीषित्युक्त्या विवर्धते॥ ३४॥
नोक्तवृष्ट्यन्नकामानामन्यत्वं प्रत्यभिज्ञया।
नियमेऽपि चतुर्थी सा तादर्थ्यादुपपद्यते॥ ३५॥

यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीत। सर्वे वै कामाः सौभर इति समाम्नाय पुनः समाम्नातम्। हीषिति वृष्टिकामाय निधनं कुर्यादूर्गित्यन्नाद्यकामाय ऊ इति स्वर्गकामायेति। सौभरं नाम सामविशेषः। निधनं नाम पञ्चभिः सप्तभिर्वा भागैरुपेतस्य

साम्नोऽन्तिमो भागः। तस्मिन् निधने ह्वीषादयो विशेषाः सौभरसामसाध्यस्तोत्रफलेभ्यो वृष्ट्यादिभ्योऽन्यानि वृष्ट्यादि-फलानि जनयितुं विधीयन्ते। कुतः। ह्वीषादिविधिवाक्ये वृष्टिकामायेत्यादिना चतुर्थीश्रवणात्। तादर्थ्यं ब्रुवती ह्वीषादीनां वृष्ट्यादिकामपुरुषशेषत्वं गमयति। तच्छेषत्वं च पुरुषाभिलषितफलसाधनत्वे सत्युपपद्यते। ततः सौभरस्य ह्वीषिति निधनविशेषस्य च फलभूते द्वे वृष्टी भवतः। तदुभयमेलनान्महती वृष्टिरिति प्राप्ते ब्रूमः। सौभरविधौ यो वृष्ट्यादिकामः स एव ह्वीषादिविधौ प्रत्यभिज्ञायते। ततः सौभरस्य फलभूता ये वृष्ट्यादयस्त एव ह्वीषादिवाक्ये-ष्वनूद्यन्त इति न फलान्तरम्। अथोच्येत। नूतनफलान्तरा-भावाद्धीषादीनां च नानाशाखाध्ययनादेव सौभरे प्राप्त-त्वादनर्थकोऽयं विधिरिति। तन्न। फलत्रयकामानां त्रयाणामनियमेनैव ह्वीषादिषु मध्ये यस्य कस्यचिन्निधनस्य प्राप्तौ विधेर्नियमार्थत्वात्। तादर्थ्यन्तु फलान्तराभावेऽपि सौभरवाक्योक्तवृष्ट्यादिफलसाधने सौभरे ह्वीषादीनां निय-म्यमानत्वादुपपद्यते। तस्मादयं निधनविशेषनियमः। न विधिः।

इति माधवीये जैमिनीयन्यायमालाविस्तरे
द्वितीयस्याध्यायस्य द्वितीयः पादः।

---

तृतीयपादस्य प्रथमाधिकरणमारचयति।

रथन्तरं साम सोमे भवेत्तद्वद् बृहज्जगत्।
ऐन्द्रवायवशुक्राग्रयणाग्रास्तु ग्रहाः स्तुताः ॥ १ ॥

रथन्तरादिसंयुक्तमन्यत् कर्माथवा गुणः ।
गायत्रादियुतात् पूर्वादन्यद् व्यावृत्तितो गुणैः ॥ २ ॥
सोमशब्दप्रकरणे ज्योतिष्टोमसमर्पके ।
ग्रहाग्रत्वं गुणस्तत्र व्यावृत्तिस्तु परस्परम् ॥ ३ ॥

ज्योतिष्टोमप्रकरणे श्रूयते। यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्। यदि बृहत्-सामा शुक्राग्रान्। यदि जगत्सामाग्रयणाग्रानिति। तत्र सोमशब्देन सोमलतासाधनको यागो विधीयते। तस्मिंश्च यागे माध्यन्दिने सवने पृष्ठस्तोत्रे रथन्तरबृहज्जगत्-नामकानि सामानि विकल्पेन विहितानि। अभि त्वा शूरेत्येतस्यां योनावुत्पन्नं रथन्तरम्। त्वामिद्धि हवामह इत्येतस्यामुत्पन्नं बृहत्। जगतीच्छन्दस्कायामृच्युत्पन्नं जगत्। ऐन्द्रवायवो मैत्रावरुण आश्विनः शुक्रो मन्थ्याग्रयण उकथ्यो ध्रुव इत्यादिनामका ग्रहाः प्रातःसवने गृह्यन्ते। दारुपात्रेषु सोमरसस्य ग्रहणाद् ग्रहा भवन्ति। सोमयागस्य रथन्तरसामोपेतत्वपक्षे एतेषु ग्रहेष्वैन्द्रवायवः प्रथमं ग्रहीतव्यः। बृहत्सामोपेतत्वपक्षे शुक्रः। जगत्सामोपेतत्वपक्षे आग्रयणः प्राथमिक इति विषयवाक्यस्यार्थः। तत्र प्रकृतौ ज्योतिष्टोमो गायत्रादिसामोपेतः। तद्व्यावृत्त्यर्थमिह रथन्तरादयो गुणाः कीर्त्यन्ते। तस्मादैन्द्र-वायवाग्रत्वादिगुणोपेतानि कर्मान्तराण्यत्र विधीयन्त इति प्राप्ते ब्रूमः। यदि रथन्तरसामा सोमः स्यादित्युक्तो यः सोमशब्दस्तेन प्रकरणेन चात्र ज्योतिष्टोमः समर्प्यते। समर्पिते तस्मिन् यथोक्तग्रहाग्रत्वं गुणो विधीयते। न च

रथन्तरादिगुणानुवादेन ज्योतिष्टोमस्य व्यावृत्तिः सम्भवति। तस्य प्रातःसवनादौ गायत्रादिसामोपेतत्वेऽपि पृष्ठस्तोत्रे रथन्तरादियोगस्यापि सद्भावात्। किं तर्हि व्यावर्त्त्यत इति चेत्। रथन्तरबृहज्जगतां परस्परं व्यावृत्तिरिति वदामः। रथन्तरादयः पृष्ठस्तोत्रे विकल्पिताः। तत्र रथन्तरानुवादेनेतरौ पक्षौ व्यावर्त्त्येते। एवमितरत्रापि। तस्मात् गुणविधिः। ननु यः प्रकृतो ज्योतिष्टोमः सोऽन्येषां सोमयागानां प्रकृतिः। न हि प्रकृतौ जगत्यामुत्पन्नं साम विहितमस्ति। अत एव दशमाध्याये पञ्चमपादस्य पञ्चदशाधिकरणे प्रथमवर्णके यदि जगत्सामेति वाक्योक्तमाग्रयणाग्रत्वं विकृतौ विषुवन्नामके मुख्येऽहनि व्यवस्थापितम्। बाढम्। तथापि नात्र कश्चिद्विरोधः। आग्रयणाग्रत्ववाक्यं न कर्मान्तरविधायकम्। किन्त्वन्येन विहिते सोमयागे यत्र जगत्साम सम्भवति तत्र गुणविधायकमित्येतावन्मात्रस्यात्र प्रतिपाद्यत्वात्।

द्वितीयाधिकरणमारचयति।

राजसूयं प्रकृत्येष्टिरवेष्ट्याख्या श्रुतात्र तु।
विप्रक्षत्रियविड्भेदाद्धविषां व्यत्ययः क्रमे ॥ ४ ॥
विप्रादेरनुवादः स्यात् प्रापणं वानुवादगीः।
व्यत्ययाय त्रयाणाञ्च राजत्वात् प्राप्तिरस्ति हि ॥ ५ ॥
न राज्ययोगाद्राजत्वं क्षत्रियत्वं तु तत्त्वतः।
अप्राप्तप्रापणं तस्मान्न रथन्तरतुल्यता ॥ ६ ॥

राजसूयप्रकरणे काचिदिष्टिरवेष्टिनामका श्रूयते। आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा। ऐन्द्र:

मेकादशकपालमृषभो दक्षिणा। वैश्वदेवं चरुं पिशङ्गी
प्रष्ठौही दक्षिणा। मैत्रावरुणीमामिक्षां वशा दक्षिणा।
बार्हस्पत्यं चरुं शितिपृष्ठो दक्षिणेति। तस्यामवेष्टौ
हविषां क्रमव्यत्ययः श्रूयते। यदि ब्राह्मणो यजेत बार्ह-
स्पत्यं मध्ये निधायाहुतिं हुत्वा तमभिघारयेत्। यदि
राजन्य ऐन्द्रम्। यदि वैश्यो वैश्वदेवमिति। तत्र यथा
पूर्वाधिकरण ऐन्द्रवायवाग्रत्वं व्यवस्थापयितुं यदिशब्द-
युक्तेन वाक्येन रथन्तरं निमित्तत्वेनानूदितम्। एव-
मत्रापि पञ्चमस्थाने श्रूयमाणं बार्हस्पत्यं चरुं मध्ये तृतीये
स्थाने स्थापयितुं यदि ब्राह्मण इत्येतन्निमित्तत्वेनानूद्यते।
द्वितीयस्थाने श्रुतस्यैन्द्रस्य तृतीयस्थानेऽवस्थापयितुं यदि
राजन्य इत्यनुवादः। वैश्वदेवस्य तु स्वत एव तृतीयस्थाने
श्रवणात्तत्र मध्ये निधानविधिर्नित्यानुवादः। ननु राज-
कर्तृके राजसूये ब्राह्मणवैश्ययोः प्राप्त्यभावान्नानुवादो
युक्त इति चेत्। न। तयोरपि राज्ययोगहेतुकतराजशब्दार्थ-
त्वादिति प्राप्ते ब्रूमः। राजशब्दः क्षत्रियजातौ रूढः।
न तु राज्ययोगस्तस्य प्रवृत्तिनिमित्तम्। प्रत्युत राज्य-
शब्दस्य राजयोगः प्रवृत्तिनिमित्तम्। राज्ञः कर्मेति विग्रह्य
राजप्रातिपदिकस्योपरि प्रत्ययविशेषविधानाद्ब्राह्मणवैश्ययोः
प्रजापालनेन राजशब्द उपचारितः। तस्मादवेष्टौ ब्राह्मण-
वैश्यौ पूर्वमप्राप्तावनेन वचनेन प्राप्यते। ननु राजसूयस्य
राजकर्तृकत्वात्तदन्तर्गताया अवेष्टेरपि तथात्वात्तस्यां
ब्राह्मणवैश्ययोः प्रापणमयुक्तमिति चेत्। नैवम्। अन्तरवेष्टौ
तद्दक्षवेऽपि राजसूयाद्बहिः प्रयुज्यमानायामवेष्टौ तत्-

सम्भवात्। तस्मादत्र ब्राह्मणादिकर्तृकं यथोक्तगुणविशिष्टं कर्मान्तरं विधीयत इति न रथन्तरादितुल्यत्वम्। यदि शब्दस्तु निपातत्वादनर्थकोऽर्थान्तरवाची वेत्युच्येत।

तृतीयाधिकरणमारचयति।

वसन्ते विप्र आदध्यात्तत्रैवोपनयीत तम्।
अनुवादः प्रापणं वानुवादः कालसिद्धये॥ ७॥
अन्तरेणाग्निविद्याभ्यां कर्मानुष्ठित्यसम्भवात्।
क्लृप्ते आधानोपनीती प्राप्ता विप्रादयस्ततः॥ ८॥
लौकिकाग्नेः पुस्तकाच्च तत्सिद्धेर्नास्ति कल्पनम्।
कालविप्रादिसंयुक्तमतोऽप्राप्तं विधीयते॥ ९॥

वसन्ते ब्राह्मणोऽग्नीनादधीत। ग्रीष्मे राजन्यः। शरदि वैश्य इति श्रूयते। वसन्ते ब्राह्मणमुपनयीत। ग्रीष्मे राजन्यम्। शरदि वैश्यमिति च। तत्र वसन्तादिकालविशेष विधातुं ब्राह्मणादयोऽनूद्यन्ते। न च तेषां प्राप्त्यभावः। क्रत्वनुष्ठानान्यथानुपपत्त्या क्लृप्तत्वात्। न ह्याहुत्याधारभूतमग्निमनुष्ठानप्रकारज्ञापिकां विद्यां च विना कर्मानुष्ठान सम्भवति। अग्निश्च नाधानमन्तरेणास्तीति ब्राह्मणादिकर्तृकमाधानं कल्पयति। विद्या चोपनयनपूर्वकाध्ययनमन्तरेणासम्भवन्ती ब्राह्मणाद्युपनयनं कल्पयतीति तत्र प्राप्तिरिति चेत्। मैवम्। लौकिकाग्नौ होतुं पुस्तकपाठेनाभिज्ञातुं च शक्यत्वेनाधानोपनयनयोरकल्पने ब्राह्मणादीनामप्राप्तेः। तस्माद्वसन्तादिकालविशिष्टे ब्राह्मणादिकर्तृके आधानोपनयने अत्र विधीयेते।

चतुर्थाधिकरणमारचयति।

दाक्षायणयज्ञेन स्वर्गकामो यजेत तत्।
कर्मान्तरं गुणो वोक्तदर्शादौ फलसिद्धये ॥ १० ॥
गुणस्यास्याप्रसिद्धत्वात् कर्मभेदोऽत्र संज्ञया।
गुणो व्युत्पत्तिशेषाभ्यामावृत्त्याख्यो न नाम तत् ॥११॥

दर्शपूर्णमासप्रकरणे श्रूयते। दाक्षायणयज्ञेन स्वर्गकामो यजेतेति। तत्र दाक्षायणशब्दवाच्यस्य कस्यचिद् गुणस्य लोके प्रसिद्ध्यभावादुद्भिदादिवद् यजिसामानाधिकरण्येन कर्मनामत्वादथैष ज्योतिरित्यादिवदपूर्वसंज्ञायां कर्मान्तरविधिरिति चेत्। न। दाक्षायणशब्दस्यावृत्तिवाचकत्वात्। तच्च शब्दनिर्वचनाद् वाक्यशेषाद्वावगम्यते। तथा हि। अयनमित्यावृत्तिरुच्यते। दक्षस्येमे दाक्षाः। तेषामयनमिति तन्निर्वचनम्। दक्ष उत्साही पुनःपुनरावृत्तावनलस इत्यर्थः। तदीयानां प्रयोगाणामावृत्तिर्दाक्षायणशब्दार्थः। तथा चावृत्त्या युक्तः प्रकृतो दर्शपूर्णमासात्मको यज्ञो दाक्षायणयज्ञः। आवृत्तिप्रकारस्तु द्वे पौर्णमास्यौ यजेत द्वे अमावास्ये इत्यादिवाक्यशेषादवगम्यते। ततो दध्यादिवत् प्रसिद्धार्थत्वाद् दर्शपूर्णमासयोः प्रकृतयोरयं स्वर्गफलसिद्ध्यर्थमावृत्त्याख्यगुणविधिः। न तूद्भिदादिवत् कर्मनामधेयम्। एवं साकंप्रस्थायीयेन यजेत पशुकाम इत्यत्रापि द्रष्टव्यम्। अमावास्यायागे द्वौ द्वौ दोहौ सम्पाद्य चतसृणां दधिपयसोः कुम्भीनां सहप्रस्थापनं साकंप्रस्थायः। तद्युक्तो दर्शयागः साकंप्रस्थायीयः। तथा सति प्रकृते दर्शयागे पशुफलाय साकंप्रस्थायाख्यो गुणो विधीयते।

पञ्चमाधिकरणमारचयति।

वायव्यः श्वेत आलभ्यो भूत्यै सौर्य्यं चरुं तथा।
निर्वपेद् ब्रह्मतेजोऽर्थमीषामुष्टिनिरुप्तयोः ॥ १२ ॥
गुणौ श्वेतं चरुं किंवा यावत्कथितकर्मणी।
फलार्थं अथवा यागौ विशिष्टौ विहिताविह ॥ १३ ॥
श्वैत्यं वायुस्पृगीषायामाग्नेये च रविप्रभे।
चरुर्गुणश्चरुः स्थाली निर्वापस्तु तदाश्रितः ॥ १४ ॥
फलज्ञानेन तत् किन्तु यावच्चोदितकर्म तत्।
द्रव्यादिरूपसंपत्तेरबाध्या यागतार्थिकी ॥ १५ ॥

अनारभ्येदमाम्नायते। वायव्यं श्वेतमालभेत भूतिकाम इति। सौर्य्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम इति च। तथा दर्शपूर्णमासयोरिदमाम्नातम्। ईषामालभेतेति। चतुरो मुष्टीन् निर्वपतीति च। ईषा शकटगता लाङ्गलदण्डवद्दीर्घः काष्ठविशेषः। तस्या आलम्भः स्पर्शः। तमेतं पूर्णमासगतमीषालम्भमनूद्य तस्यामालभ्यायामीषायां श्वेतत्वं गुणो विधीयते। तस्य च श्वेतकाष्ठस्य वायुना स्पृश्यमानत्वाद्वायव्यता सम्भवति। तथा चतुर्मुष्टिनिर्वपणमनूद्य चरुगुणत्वेन विधीयते। चरुः स्थाली। सा च निर्वापस्याश्रयः। निरुप्तस्य हविष आग्नेयतया सूर्य्यवत प्रभासम्बन्धात् सौर्य्यत्वम्। भूतिर्ब्रह्मवर्चसे फले च सर्वकामिकयोर्दर्शपूर्णमासयोः पूर्वसिद्ध एवानूद्येते। तस्माद् गुणविधी इत्येकः पूर्वपक्षः। न हि फलपदयोर्नित्यवत्श्रुतयोः सम्भवत्प्रयोजनयोश्च पक्षिकानुवादत्वमानर्थक्यं वा युक्तम्। तस्माद्गुणफलविशिष्टे कर्मान्तरे विधीयेते। तत्रापि यागस्याश्रवणादालम्भनिर्वापयोरेव श्रवणाद्यावदुक्तकर्मविधि-

रिति द्वितीयः पूर्वपक्षः। श्वेतपशुचरुद्रव्ययोर्वायुसूर्यदेवतयोश्च स्पष्टं प्रतीयमानतया रूपवतोर्यागश्चेराथिंकयोर्वारयितुमशक्यत्वाद् द्रव्यदेवताविशिष्टयोर्यागयोर्विधिरभ्युपगन्तव्यः। भूतिकामो वायव्येन श्वेतेन पशुना यजेत। ब्रह्मवर्चसकामः सौर्य्येण चरुणा यजेतेत्येवंविधोऽर्थसिद्धो विधिः। द्रव्यदेवतासम्बन्धकल्पितस्य यागस्य लिङ्प्रत्ययेन कर्त्तव्यताविधावालम्भनिर्वापयोर्धात्वर्थयोः का गतिरिति चेत्। अनुवाद इति ब्रूमः। तत्प्राप्तिस्त्वार्थिकी। निर्वापालम्भावन्तरेण तत्तद्यागासिद्धेः। तस्माद् यागविधिरिति राद्धान्तः।

षष्ठाधिकरणमारचयति।

वत्सालम्भो यजिः स्पर्शो वा वायव्यादिवद् यजिः।
स्पर्शः स्याद् देवराहित्यात् संस्कारः प्रायपाठतः ॥१६॥

अग्निहोत्रदोहाधिकारे श्रूयते। वत्समालभेतेति। तत्र विमतो वत्सालम्भो यजिः स्यात्। प्राणिद्रव्यकालम्भत्वात्। वायव्यालम्भवदिति चेत्। न। देवतारहितत्वेन तद्वैषम्यात्। किञ्च। अयं वत्सालम्भोऽग्निहोत्राङ्गसंस्कारः। तत्प्राये पठितत्वात्। इतरसंस्कारवत्। तस्मादयं स्पर्शमात्रविधिः।

सप्तमाधिकरणमारचयति।

चरुर्भवति नैवार उपधत्ते चरुं त्विति।

यागः स्यादुपधानं वा यागः शेषोक्तदैवतः ॥ १७ ॥
यागत्वानिश्चये शेषो नापेक्ष्योऽतो यजिः कुतः।
किं तूपधानमात्रत्वं यावदुक्तं चरौ स्थितम् ॥ १८ ॥

अग्नौ श्रूयते। नैवारश्चरुर्भवतीति। चरुमुपदधातीति च। तत्र नीवारचरुद्रव्यको यागो विधीयते। न चात्र देवताया अभावः। बृहस्पतेर्वा एतदन्नं यन्नीवारा इति वाक्यशेषेण देवतासिद्धेः। उपधानं तु यागोपयुक्तस्य प्रतिपत्तिः। स्विष्टकृताद्विवदिति प्राप्ते ब्रूमः। यागविधौ निश्चिते सति पश्चाद् देवतायामपेक्षितायां वाक्यशेषबलाद् देवताक्लृप्तिः। इह तु देवताकल्पनेन यागविधित्वनिश्चय इत्यन्योन्याश्रयः। तस्मादिहोपधानमात्रं विधीयते।

अष्टमाधिकरणमारचयति।

पर्य्यग्निकृतः पात्नीवत उत्सृज्यत इत्यसौ।
यागो गुणो वा यागः स्यादन्वयाव्यवधानतः॥ १९॥
प्रत्यभिज्ञातमालभ्यमनूद्योत्सर्गशब्दतः।
गुणं पर्य्यग्निकृत्याख्यं वक्त्युत्तरनिवृत्तये॥ २०॥
न दुष्टा परिसंख्यात्र चोदकात् प्राग्विधौ सति।
पर्य्यग्निकरणान्ताङ्गरीतिः क्रमापकारतः॥ २१॥

त्वाष्ट्रं पात्नीवतमालभेतेति प्रकृत्येदमाम्नातम्। पर्य्यग्निकृतं पात्नीवतमुत्सृजन्तीति। तत्र पर्य्यग्निकृतशब्देन संस्कृतपशुद्रव्यस्य पात्नीवतशब्देन पत्नीवन्नामकदेवतासंबन्धस्य च प्रतीयमानत्वादयं यागविधिः। एवं सति पर्य्यग्निकृतपात्नीवतशब्दयोरव्यवहितान्वयो लभ्यते। सिद्धान्ती तु पर्य्यग्निकृतमुत्सृजन्तीत्यन्वयं वाञ्छति। तदा व्यवहितान्वयो दुर्वारः। तस्माद्वायव्यपशुवद्यागविधिरिति प्राप्ते ब्रूमः। अनारभ्याधीतत्वान्नास्ति वायव्ये प्रकृतप्रत्यभिज्ञा। इह त्वालभ्यत्वेन प्रकृतः पशुः पात्नीवतशब्देन

प्रत्यभिज्ञायते। तमनूद्य पर्य्यग्निकृतशब्दान्वितेनोत्सृजती-त्याख्यातेन पर्य्यग्निकरणाख्यो गुणो विधीयते। न च प्रकृतिगतस्य पर्य्यग्निकरणस्य विकृतौ चोदकेन प्राप्तत्वा-दनर्थकोऽयं विधिरिति वाच्यम्। उपरितनाङ्गाननुवृत्तेर्विधि-प्रयोजनत्वात्। नन्वेवं सति परिसंख्या स्यात्। सा च दोषत्रयदुष्टा। स्वार्थत्यागोऽन्यार्थस्वीकारः प्राप्तबाधश्चेति त्रयो दोषाः। पर्य्यग्निकरणवाक्ये स्वार्थो विधिस्त्यज्येत। अन्यार्थो निषेधः स्वीक्रियेत। चोदकप्राप्तान्युपरितनाङ्गानि बाध्येरन्। मैवम्। पर्य्यग्निकरणोत्तरभावीन्यङ्गानि नानु-ष्ठेयानीत्येतस्याः परिसंख्याया अनङ्गीकारात्। कथं तर्हि तन्निवृत्तिः। आर्थिकीति ब्रूमः। चोदकप्रवृत्तेः प्रागेवायं विधिः प्रवर्त्तते। प्रत्यक्षोपदेशस्य शीघ्रबुद्धिजनकतया कल्प्यातिदेशात् प्रबलत्वात्। तथा सत्युपदिष्टैरेवाङ्गैर्निरा-काङ्क्षायां विकृतौ चोदकस्याप्रवृत्त्यैवोपरितनान्यङ्गानि न प्राप्यन्ते। न चानेन न्यायेन पर्य्यग्निकरणात् प्राचीनाना-मप्यप्राप्तिरिति वाच्यम्। विधीयमानस्य पर्य्यग्निकरणस्य नूतनत्वे सत्युपकारकल्पनापत्त्या प्रकृतौ यत् कृतोपकारं पर्य्यग्निकरणं तदवस्थापन्नस्यैवात्र विधेयत्वात्। प्रकृतौ च प्राचीनाङ्गानन्तरभाविन एवोपकारः क्रम इत्यत्रापि तादृशस्यैव विधानात् पर्य्यग्निकरणान्ताङ्गप्राप्तिः सिध्यति। एवं च सत्युत्सृजतीत्याख्यातेन यथोक्तपर्य्यग्निकरण-विधानार्थसिद्धः उपरितनाङ्गोत्सर्गो धातुनानूद्यते। तदेव-मत्र गुणविधिः।

नवमाधिकरणमारचयति।

यद्दाभ्यं गृहीत्वेति गृह्णात्यंशुमिति द्वयम्।
यद्यागो वा गुणो यागः स्याद्दाभ्यांशुनामतः॥ २२॥
ग्रहयोरेव नाम स्यादानन्तर्याद् विधिस्तयोः।
गुणोऽतस्तस्य वाक्येन ज्योतिष्टोमाभिगामिता॥२३॥

अनारभ्य श्रूयते। एष वै हविषा हविर्यजति योऽदाभ्यं गृहीत्वा सोमाय यजत इति। परा वा एतस्यायुःप्राण एति योऽंशुं गृह्णातीति च। तत्रादाभ्यशब्दस्य ज्योतिरादिवदपूर्वनामत्वात् तन्नामको यागो यजत इत्याख्यातेन विधीयते। अंशुमित्यत्र यजतेरश्रवणेऽपि नामविशेषबलादेवापूर्वयागविधिः। न चात्र द्रव्यदेवतयोरभावः। ग्रहणलिङ्गेन ज्योतिष्टोमविकृतित्वावगतौ तदीयविध्यन्तातिदेशेन तत्सिद्धेरिति प्राप्ते ब्रूमः। भवत्वदाभ्यांशुशब्दयोर्नामत्वम्। ते च नामनी ग्रहयोरेव स्याताम्। न तु यागयोः। गृहीत्वेति शब्दस्यानन्तरमेव पाठात्। यजतिस्तु व्यवहितः। तादृशोऽपि यजिरंशुवाक्ये नास्ति। तस्माद् ग्रहयोरेवात्र विधिः। ग्रहणं च ज्योतिष्टोमगतस्य सोमरसस्य संस्काररूपो गुणः। ऐन्द्रवायवादिग्रहणसमानत्वात्। यद्यप्यत्र न प्रकृतौ ज्योतिष्टोमस्तथापि तत्सम्बन्धिग्रहणद्वारा वाक्याज्ज्योतिष्टोमगामित्वम्। अत एव सोमायादाभ्यं गृहीत्वेति निर्दिश्यते। अथवा तैत्तिरीयाणां षष्ठकाण्डे षष्ठप्रपाठके प्राकरणिकं विनियोजकवाक्यं द्रष्टव्यम्। तस्माज्ज्योतिष्टोमे गुणविधिः।

दशमाधिकरणमारचयति।

चमिं चिनुत इत्यत्र यागो वा संस्कृतिर्यजिः।

लिङ्गेन यागनामत्वाद् यजिना चानुवादतः ॥ २४ ॥
रूढ्या द्रव्यस्य नामैतदङ्गेराधानवच्चितिः ।
संस्कृतिः संस्कृते वह्नावग्निष्टोमो विधीयते ॥ २५ ॥

य एवं विद्वानग्निं चिनुत इत्येवं श्रूयते। अथातोऽग्नि-मग्निष्टोमेनानुयजति तमुक्थ्येन तं षोड़शिना तमतिरात्रेणेत्यादि। अत्राग्निशब्दो यागवाची। स्तोत्रशस्त्रादेः क्रतुलिङ्गस्य श्रूयमाणत्वात्। तच्च लिङ्गमेव श्रूयते। अग्नेः स्तोत्रमग्नेः शस्त्रमिति। षडुपसदोऽग्नेश्चित्यस्य भवन्तीति च। यदि लिङ्गं प्रापकापेचम्। तर्हि यजिना तदनुवादः प्रापकोऽस्तु। अग्निमग्निष्टोमेनानुयजतीत्येतस्मिन् वाक्येऽग्निं यजतीति यजिसामानाधिकरण्यादुपांशु यजतीतिवद् यागनामत्वम्। अथोच्येत। अनुशब्दस्याग्निशब्देन्वयाद् यज्यन्वयोऽग्निष्टोमस्येति। तथाप्यग्नेः पुरायजने सत्यग्निष्टोमस्यानुयजनं सम्भवति। देवदत्तमनुगच्छति यज्ञदत्त इत्यत्र देवदत्ते पुरागमनदर्शनात्। तस्मादग्निं चिनुत इत्यत्राग्निनामको याग आख्यातेन विधीयते। चिनोतिस्त्विष्टकाभिरग्निं चिनुत इति वाक्यप्राप्तस्य चयनस्य सोमयागविकृतित्वप्राप्तस्य ग्रहसमुदायस्यैवानुवाद इति प्राप्ते ब्रूमः। अग्निशब्दो रूढ्या वह्निद्रव्यमाचष्टे। रूढिश्च क्लृप्ततया लिङ्गादिकल्प्याद् यागवाचित्वाद् बलीयसीति न यागनामत्वम्। न चात्र यागरूपमस्ति द्रव्यदेवतयोरसिद्धेः। अतोऽग्निमादधीतेत्यत्राधानवदग्निं चिनुत इत्युक्तं चयनमग्निद्रव्यसंस्कारः। न च संस्कृतस्य नियोगाभावः। अग्निमग्निष्टोमेन यजत

इत्यादिवाक्यैरग्निष्टोमादौ विनियोगात् । तस्मात् सत्कारविधिः ।

एकादशाधिकरणमारचयति ।

मासं जुहोत्यग्निहोत्रं गुणोऽन्यत्कर्म वा गुणः ।
अनूद्य प्राप्तकर्मात्र मासोऽप्राप्तो विधीयते ॥ २६ ॥
उपसद्विरिति नित्ये तासामसम्भवात् ।
अनेकस्याविधेयान्यत् कर्म प्रकरणान्तरात् ॥ २७ ॥

कुण्डपायिनामयने श्रूयते । मासमग्निहोत्रं जुहोति । मासं दर्शपूर्णमासाभ्यां यजेतेति । अत्र प्राप्तं नित्याग्निहोत्रमनूद्य मासलक्षणो गुणोऽप्राप्तत्वाद्विधीयत इति चेत् । मैवम् । किं मास एव विधीयत उतोपसद्विरिति त्वपरा उपसदोऽपि । नाद्यः । उपसदामपि नित्याग्निहोत्रप्राप्तिरहितानां त्वन्मते विधातव्यत्वात् । न द्वितीयः । प्राप्ते कर्मण्यनेकगुणविधौ वाक्यभेदापत्तेः । ननु मा भूत् तर्हि गुणविधिः । कर्मान्तरत्वे किं प्रमाणमिति चेत् । प्रकरणान्तरमिति ब्रूमः । न ह्येतन्नित्याग्निहोत्रस्य प्रकरणम् । असंनिहितत्वात् । अयनं त्वेतत् प्रकरणम् । अयनमारभ्याधीतत्वात् । का तर्हि नित्याग्निहोत्रे गुणविधिशङ्केति चेत् । प्रकरणस्यासमर्पकत्वेऽप्यग्निहोत्रशब्देनैतत्समर्पणादेषा शङ्का भवति । सा च वाक्यभेदापत्त्या निराकृता । तथा सति स्वतः सिद्धं प्रकरणभेदं निराकृत्य प्रकरणैक्यापादनेन गुणं विधापयितुं प्रवृत्तस्याग्निहोत्रशब्दस्य प्रवृत्तौ निरुद्धायां तदवस्थः प्रकरणभेदो नित्याग्निहोत्रादिदं कर्म भिनत्ति । अग्निहोत्रशब्दो धर्मातिदेशार्थं इति सप्तमे

वक्ष्यते। ननूपसन्मासाभ्यां विशिष्टमिदं कर्म विधीयते। ततो वाजिनन्यायेन गुणभेदात् कर्मभेदः। न प्रकरणभेदादिति चेत्। न। वैषम्यात्। उपादेयतया विधेयो गुणो वाजिनम्। मासस्त्वनुपादेय इत्येकं वैषम्यम्। द्रव्यत्वेन रूपान्तर्गतं वाजिनम्। मासो न तथेत्यपरं वैषम्यम्। परमार्थतस्त्वत्र प्रथमतरप्रतीतेन प्रकरणभेदेन सिद्धं कर्मभेदं गुणभेद उपोद्बलयति। ततः प्रकरणान्तरमेवात्र भेदहेतुः।

द्वादशाधिकरणमारचयति।

अष्टाकपालमाग्नेयं रुक्कामः प्राकृतं फलम्।
कर्मान्यद्वा फल भानात् पूर्वन्यायाप्रवेशनात्॥ २८॥
मा भूदिह प्रकरणं कर्मान्तरमसंनिधेः।
अनारभ्याधीतमेतद्रूपं त्वन्यन्नमीचते॥ २९॥

अनारभ्य श्रूयते। आग्नेयमष्टाकपालं निर्वपेद्रुक्काम इति। रुक्कामस्तेजस्कामः। अत्रेष्टीनां प्रकृतिभूतदर्शपूर्णमासगतमाग्नेययागमनूद्य तत्र तेजस्कामरूपं फलं विधीयते। कुतः। वाक्येनाग्नेयफलमस्वन्धस्य भासमानत्वात्। न च पूर्वोक्तमासाग्निहोत्रन्यायेन कर्मान्तरत्वम्। वैषम्यात्। तत्रायनमारभ्याधीतत्वादस्ति प्रकरणान्तरत्वम्। इह त्वनारभ्याधीतत्वेन प्रकरणमेव तावन्नास्ति। कुतोऽत्र प्रकरणान्तरत्वम्। किंच मासोऽनुपादेयः। अग्निहोत्रानुसारेण सम्पादयितुमशक्यत्वात्। फलं तूपादेयम्। दार्शपौर्णमासिकाग्नेयानुसारेण तेजसः कामयितुं शक्यत्वात्। तस्मात् फलविधिरिति प्राप्ते ब्रूमः। प्रकरणान्तरत्वाभावेऽप्यनारभ्याधीतत्वादसंनिधिरस्त्येव। स एवात्र कर्म भिनत्ति। म

चात्र वाजिनन्यायेन कर्मभेदः । अष्टाकपालद्रव्याग्निदेवता-त्मनो रूपस्योभयत्रैकविधत्वात् । यदि प्रकरणान्तरत्व-मप्यसंनिधिकृतमित्यसंनिधिरेव मासाग्निहोत्रे कर्मभेदहेतुः । तर्हि तस्यैवायं प्रपञ्चोऽस्तु । फलं च मासवदनुपादेयम् । अन्यथा साधनवद्फलत्वप्रसङ्गात् । कामना च विषय-सौन्दर्यज्ञानात् स्वत एवोत्पद्यते । न तु विधिश्रवणात् सम्पद्यते । यद्यधिकरणयोर्न्यायभेदः । यदि वा न्यायैक्यम् । सर्वथा तेजस्कामेष्टिः कर्मान्तरम् । काम्येष्टिकाण्डपठिते-ष्वैन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकाम इत्यादिष्वयमेव न्यायो द्रष्टव्यः ।

त्रयोदशाधिकरणमारचयति ।

यजेत समे पौर्णमास्यां यावज्जीवं तथैतया ।
अन्नाद्यकाम इत्यादौ कर्मभेदोऽथवा गुणः ॥ ३० ॥
विध्युपादानयोरैक्याद् देशादेरनुपत्तितः ।
आवश्यके कर्मविधौ तद्भेदः पुनरुक्तितः ॥ ३१ ॥
देशादियोगस्याप्राप्तेर्विधिर्न ह्यकृता तयोः ।
पुंशब्दयोर्व्याप्तितिलात् पुनरुक्त्या त्वनूद्यते ॥ ३२ ॥

दर्शपूर्णमासप्रकरणे देशकालनिमित्तान्याम्नायन्ते । समे यजेत । पौर्णमास्यां यजेत । यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेति । अवेष्टिप्रकरणे फलमाम्नातम् । एतयान्नाद्यकामं याजयेदिति । आदिशब्देन संस्कारो गृहीतः । स च दर्शपूर्णमासप्रकरणे समाम्नातः । शेषं स्विष्टकृते समवद्यतीति । तत्र देशकालनिमित्तफलसंस्कारा अननुष्ठेयत्वादनु-पादेयाः । अत एव न विधेयाः । उपादानविधिशब्दयोः

पर्य्यायत्वात्। ततः कर्मविधिरित्यवश्यमभ्युपेयम्। तत्र प्रकरणिनो दर्शादेः पूर्वविहितस्यैवैभिर्वाक्यैः पुनर्विधाने समिधो यजतीत्यादिवदभ्यासादेव कर्मभेद इति प्राप्ते ब्रूमः। देशादीनामविधेयत्वेऽपि विहितकर्मणा सह तेषां सम्बन्धो विधीयताम्। स च कर्मवत् पूर्वं न विहित इत्यप्राप्तत्वाद्विधिमर्हति। यदुक्तमुपादानविधिशब्दौ पर्य्यायाविति तदसत्। अप्रवृत्तप्रवर्त्तनं विधानम्। तच्च पुरुषविषयः शब्दव्यापारः। अननुष्ठितस्यानुष्ठानमुपादानम्। तच्च कर्मविषयः पुरुषव्यापार इति महान् भेदः। योऽपि दर्शादीनां पुनर्विधिः सोऽपि देशादिसम्बन्धं विधातुं कर्मानुवाद इति न कर्मभेदमावहति। समिधो यजतीत्यादौ विधेयगुणान्तराभावेनानुवादासम्भवात् पुनर्विधानं भेदहेतुरिति वैधर्म्यम्।

चतुर्दशाधिकरणमारचयति।

दर्शपूर्णमासप्रोक्त आग्नेयः केवलोऽप्यसौ।
दर्शे यदिति वाक्याभ्यां कर्मान्यदानुवादगीः॥ ३३॥
अभ्यासादन्यकर्मत्वं दर्शेष्टौ हिः प्रयुज्यताम्।
एकत्वप्रत्यभिज्ञानादनूक्तैन्द्राग्नसंस्तुतिः॥ ३४॥

यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवतीति कालद्वये विहितम्। तदाग्नेयोऽष्टाकपालोऽमावास्यायां भवतीत्येकस्मिन् काले पुनर्विहितम्। तत्राविशेषपुनःश्रुतिलक्षणेनाभ्यासेन प्रयाजानामिव भेदः। तथा सत्याग्नेययागस्य दर्शकाले द्विः प्रयोग इति चेत्। न। प्रत्यभिज्ञानादाग्नेयस्यैकत्वे सत्येककालवाक्यस्यानुवादक-

त्वात्। न चानुवादो व्यर्थः। विधेयैन्द्राग्नस्तुत्यर्थत्वात्। यद्यप्याग्नेयोऽष्टाकपालोऽमावास्यायां भवति तथापि न केवलेनाग्निना साधुर्भवति। इन्द्रसहितोऽग्निः समीचीनतरः। तस्मादैन्द्राग्नः कर्त्तव्य इति विधेयस्तुतिः। प्रयाजवैषम्यं तूक्तमेवानुसन्धेयम्।

इति माधवीये जैमिनीयन्यायमालाविस्तरे द्वितीयाध्यायस्य तृतीयः पादः।

———०———

चतुर्थपादस्य प्रथमाधिकरणमारचयति।

यावज्जीवं जुहोतीति धर्मः कर्मणि पुंसि वा।
कालत्वात् कर्मधर्मोऽतः काम्य एकः प्रयुज्यताम्॥ १॥
न काला जीवनं तेन निमित्तप्रविभागतः।
काम्यप्रयोगो भिन्नः स्याद् यावज्जीवप्रयोगतः॥ २॥

बह्वृचब्राह्मणे श्रूयते। यावज्जीवमग्निहोत्रं जुहोतीति तत्र यावज्जीवशब्दो मरणावधिकालपरः। तत्कालसम्बन्धश्च प्रकृते काम्याग्निहोत्रे पूर्वमप्राप्तत्वाज्जुहोतीत्यनूदिते कर्मणि विधीयते। तथा सत्यस्य वाक्यस्य नित्यप्रयोगविधायकत्वाभावेन वाक्यान्तरविहितः काम्यप्रयोग एक एवाग्निहोत्रस्य पर्य्यवस्यति। स च काम्यप्रयोगोऽभ्यसितव्यः। सकृदनुष्ठानस्याग्निहोत्रं जुहुयात् स्वर्गकाम इत्यनेनैव सिद्धत्वात्। यावज्जीवमित्यस्य कालविधेर्वैयर्थ्यप्रसङ्गात्। तस्मादयं काम्यकर्मणोऽभ्याससिद्धये कालरूपधर्मविधिरिति प्राप्ते ब्रूमः। यावज्जीवशब्दो न कालस्य वाचकः। किन्तु

लक्षकः। वाक्यार्थस्तु कृत्स्नजीवनम्। न च जीवनं कर्मधर्मत्वेन विधातुं शक्यम्। तस्य पुरुषधर्मत्वात्। तच्च पुरुषधर्मं निमित्तीकृत्याग्निहोत्रप्रयोगो विधीयते। न चात्र कर्मभेदः। तद्धेतूनां शब्दान्तरादीनामभावात्। न चाभ्यासस्तद्धेतुः। निमित्तविशेषसद्भावेनाविशेषपुनःश्रुतेरभावात्। अतः प्रयोगभेदः पर्यवस्यति। जीवनस्यात्र निमित्तत्वात्। सति निमित्ते नैमित्तिकस्य त्यागायोगान्नित्यत्वमर्थसिद्धम्। न च जीवननैरन्तर्य्येण प्रयोगनैरन्तर्य्यापत्तिः। सायंप्रातःकालयोर्विहितत्वात्। तस्माज्जीवनस्य पुरुषधर्मत्वान्नित्यकाम्यप्रयोगौ भिन्नौ।

द्वितीयाधिकरणमारचयति।

शाखाभेदात् कर्मभेदो न वा कर्मात्र भिद्यते।
दृष्टं काठकनामादि बहुभेदस्य कारणम् ॥ ३ ॥
शब्दान्तरादिना ह्येते युज्यन्ते भेदहेतवः।
रूपादिप्रत्यभिज्ञानादभिन्नं कर्म गम्यते ॥ ४ ॥

काठककाण्वमाध्यन्दिनतैत्तिरीयादिशाखासु दर्शपूर्णमासाख्यं कर्माम्नातम्। तत्र शाखाभेदात् कर्म भिद्यते। कुतः। भेदकारणानां नामभेदादीनां बहुलमुपलम्भात्। काठककाण्वादिको नामभेदः। कारीरीवाक्यान्यधीयानाः केचिच्छाखिनो भूमौ भोजनमाचरन्ति। शाखान्तराध्यायिनो नाचरन्तीति धर्मभेदः। एकस्यां शाखायामधीता इषे त्वेत्यादयो मन्त्राः पलाशशाखाच्छेदादयः क्रियाश्च शाखान्तरेऽप्यधीयन्त इति पुनरुक्तिः। एवमशक्त्यादयो भेदहेतव उदाहार्य्याः। न ह्यल्पायुषा मनुष्येण सर्वशाखा-

ध्ययनपूर्वकं कर्मानुष्ठानं कर्तुं शक्यम् । तस्माच्छाखाभेदेन कर्मभेद इति प्राप्ते ब्रूमः । रूपाद्यभेदादेकं कर्माग्नेयाष्टाकपालादियागरूपं यदेवैकस्यां शाखायां तदेवान्यत्राप्युपलभ्यते । दर्शपूर्णमासाभ्यां यजेतेति यागरूपः पुरुषव्यापारश्चैकविधः । दर्शपूर्णमासाविति कर्मनामाप्येकम् । स्वर्गकाम इति फलसम्बन्धोऽप्येकः । तस्मादभिन्नं कर्म । पूर्वपक्षहेतवस्त्वन्यथा सङ्गच्छन्ते । काठकादिकं ज्योतिरादिवन्न कर्मनाम । काठकेन यजेतेत्यश्रवणात् । काठकमधीत इति प्रयोगाद् ग्रन्थनामेत्यवगन्तव्यम् । भूभोजनादिरध्ययनधर्मः । पुनरुक्तिरध्येतृभेदान्न दुष्यति । अल्पायुषापि शाखान्तरस्थोपसंहारन्यायेन कर्मानुष्ठातुं शक्यते । तस्मादनन्यथासिद्धरूपप्रत्यभिज्ञानाच्छाखाभेदेऽपि कर्म न भिद्यते ।

इति माधवीये जैमिनीयन्यायमालाविस्तरे
द्वितीयाध्यायस्य चतुर्थः पादः ।

समाप्तश्च द्वितीयोऽध्यायः ।



# तृतीयोऽध्यायः।

द्वितीये कर्मणां भेदे सिद्धे भिन्नक्रियाश्रयम्।
बुभुत्सितः शेषशेषिभावोऽतोऽत्राभिधीयते॥

अनेन द्वितीयतृतीययोरध्याययोः पौर्वापर्य्यं निरूपितम्।

तृतीयाध्यायस्य प्रथमपादे प्रथमाधिकरणमारचयति।

अशाब्दी शेषता शाब्दी वा न शाब्दप्रतीतितः।
क्रियाकारकसंसर्गमात्रे व्युत्पत्तिसम्भवात्॥ १॥

गुणप्रधानभावेन संसर्गेऽन्तर्भवत्यसौ।
व्युत्पत्तिसम्भवात्तत्र शाब्दता स्यात् क्रियादिवत्॥२॥

यदिदमस्मिंस्तृतीयाध्याये प्रतिपादितं शेषत्वं न तच्छाब्दम्। कुतः। केनापि शब्देन शेषत्वस्याप्रतीयमानत्वात्। व्युत्पन्नो हि शब्दः प्रत्यायकः। व्युत्पत्तिश्च न शेषशेषिभावे क्वचिद् दृष्टा। लोके सर्वत्र क्रियाकारकान्वयस्यैव व्युत्पत्तिप्रयोजकत्वदर्शनात्। अतः शेषताया अशाब्दत्वान्नायमध्याय आरम्भणीय इति चेत्। मैवम्। अन्वये शेषशेषिभावस्यान्तर्भावात्। न हि गुणप्रधानभावमन्तरेणान्वयः सम्भवति। द्वयोर्गुणयोः परस्पराकाङ्क्षारहितत्वेनान्वययोग्यत्वाभावात्। एवं द्वयोः प्रधानयोरपि। अतो व्युत्पत्तिसम्भवात् क्रियाकारकतदन्वयो यथा शाब्दः। तथा तदन्वयान्तर्गतः शेषशेषिभावोऽपि शाब्दः। तस्मादयमध्याय आरम्भणीयः।

द्वितीयाधिकरणमारचयति ।

स्वरूपहेतू न स्तोऽत्र स्तो वा नैवानिरूपणात् ।
पारार्थ्यं शेषताहेतू रूपं तेनोपलक्षितम् ॥ ३ ॥

न तावदत्र शेषत्वस्य स्वरूपं निरूपयितुं शक्यते। तथा हि। शेषत्वं नाम किमविनाभूतत्वं प्रयोज्यत्वं वा विध्यन्तविहितत्वं वा। नाद्यः। षड्यागानामविनाभूतानां परस्परशेषत्वप्रसङ्गात्। न द्वितीयः। पुरोडाशकपालेन तुषानुपवपतीत्यत्र तुषोपवापं प्रति शेषस्यापि कपालस्य तत्प्रयोज्यत्वाभावात्। न तृतीयः। विध्यादिविहितस्य पलाशशाखाच्छेदस्य सत्यपि शेषत्वे विध्यन्तविहितत्वाभावात्। तस्मान्नास्ति शेषतायाः स्वरूपम्। नापि हेतुरस्ति। विमतः शेषः। एवंत्वादिति कस्यचिद्धेतोरनिरूपणादिति प्राप्ते ब्रूमः। विमतः प्रयाजादिः शेषः। परार्थत्वात्। भृत्यादिवदिति हेतुः सुनिरूपितः। अविनाभूतत्वादीनां लक्षणानां दुष्टत्वेऽपि परार्थः शेष इति लक्षणस्यादुष्टत्वात्। तेन लक्षित आकारः स्वरूपम्। न च पारार्थ्यस्यैव हेतुत्वे लक्षणत्वे च साङ्कर्यम्। आकारभेदेन तद्भेदात्। दृष्टान्ते गृहीतव्याप्तिं सहायीकृत्य बोधक आकारो हेतुः। इतरव्यावृत्त्या बोधक आकारो लक्षणम्। तस्माच्छेषताया हेतुस्वरूपे विद्येते।

तृतीयाधिकरणमारचयति ।

किं द्रव्यगुणसंस्कारमात्रं शेषोऽथवा फलम् ।
पुमान् कर्म च पक्षौ द्वावाद्यौ मतभेदतः ॥ ४ ॥

शेषत्वमुपकारित्वं द्रव्यादावाह बादरिः ।
पारार्थ्यं शेषता तच्च सर्वेष्वस्तीति जैमिनिः ॥ ५ ॥

स्फ्यकपालादिकं द्रव्यम् । अरुणिमादिको गुणः । अवघातप्रोक्षणादिकः संस्कारः । एतेषु त्रिष्वेव शेषत्वं स्वर्गः फलम । तत्कामी पुरुष । दर्शपूर्णमासौ कर्म । न हि फलादीनां त्रयाणां शेषत्वमस्ति । उपकारित्वस्य शेषत्वलक्षणस्य फलादिष्वभावादिति बादरेर्मतम । पारार्थ्यं तल्लक्षणमभिप्रेत्य फलादयोऽपि शेषा इति जैमिनेर्मतम् । तथा च त्रीणि सूत्राणि पठान्ति । कर्माण्यपि जैमिनिः फलार्थत्वात् । फलञ्च पुरुषार्थत्वात् । पुरुषश्च कर्मार्थत्वादिति । तत्रोपकारित्वमतिव्याप्तम् । प्रधानभूतेऽपि स्वामिनि गर्भदासोपकारित्वदर्शनात् । तस्माज्जैमिनिमतमेव मुख्यसिद्धान्तः ।

चतुर्थाधिकरणमारचयति ।

व्रुता व्रीह्याज्यसान्नाय्यधर्माः साङ्कर्यगामिनः ।
व्यवस्थिता वा साङ्कर्यं फलापूर्वेण सङ्गतेः ॥ ६ ॥
अवान्तरापूर्वसत्त्वात् साक्षात् तेनैव सङ्गतौ ।
श्रुत्या व्यवस्थापितास्ते सा हि प्रकरणोत्तमा ॥ ७ ॥

व्रीहिधर्मा अवघातप्रोक्षणादयः । आज्यधर्मा उत्पवनावेक्षणादयः । सान्नाय्यधर्मा दोहनातञ्चनादयः । ते सर्वे फलहेतुतया दर्शपूर्णमासापूर्वेण सङ्गच्छन्ते । अवान्तरापूर्वस्य कस्यचिदभावात् । एकेनैवापूर्वेण फलसिद्धावपूर्वान्तरस्य कल्पकाभावात् । फलापूर्वप्रयुक्तया चानुष्ठीयमाना धर्मा यस्मिन् कस्मिन्नपि द्रव्येऽनुष्ठिताः फलापूर्वं

जनयन्त्येवेति साङ्कर्य्ये प्राप्ते ब्रूमः। आग्नेयादयः षड् यागा भिन्नक्षणवर्त्तिनो विनश्वराः संभूय फलापूर्वं जनयितुं न शक्नुवन्ति। ततस्तज्जननसमर्थान्याग्नेयादिजन्यानि षड्वान्तरापूर्वाणि कल्प्यानि। तेषु पुरोडाशद्रव्यकयागजन्यापूर्वं व्रीहिधर्माणां प्रयोजकम्। प्रत्यासन्नत्वात्। फलापूर्वन्तु तेन व्यवहितम्। एवमाज्यधर्माणां सान्नाय्यधर्माणां च तत्तद्द्रव्यकयागजन्यावान्तरापूर्वेणैव साक्षात् सङ्गतिः। तथा सति तत्तदपूर्वप्रयुक्ताः संस्कारास्तत्तदपूर्वसाधनप्रकृतिद्रव्येष्वेव व्यवतिष्ठन्ते। ननु दर्शपूर्णमासप्रकरणमत्र संस्काराणां विनियोजकम्। तच्च सर्वप्रकृतिद्रव्यसाधारणमिति तदवस्थमेव साङ्कर्य्यम्। अथोच्येत। तुषविमोकस्य व्रीहिष्वेव सम्भवात्तेष्वेवावधातः। न त्वाज्यसान्नाय्ययोः। एवं विलापनमाज्य एव। दोहनादिकं सान्नाय्य एवेति। बाढम्। दृष्टार्थानां धर्माणां व्यवस्थितत्वेऽप्यदृष्टार्थाः प्रोक्षणादयः सङ्कीर्य्येरन्नेवेति चेत्। नैवम्। व्रीहीन् प्रोक्षति। आज्यमवेक्षत इत्यादिद्वितीयाश्रुत्या व्यवस्थापितत्वात्। श्रुतिश्च प्रकरणाद् बलीयसी। तस्माद् व्यवस्थिता धर्माः।

पञ्चमाधिकरणमारचयति।

द्रव्यस्य स्फ्यकपालादेः साङ्कर्य्यं वा व्यवस्थितिः।
यज्ञायुधत्वं सर्वेषां समन्तेनात्र सङ्करः॥ ८॥
वाक्यस्योद्धननादेः स्याद् वैयर्थ्यं सङ्करे सति।
अनुवादो ह्यायुधोक्तिर्व्यवस्था तेन पूर्ववत्॥ ९॥

दर्शपूर्णमासयोः श्रूयते। स्फ्यश्च कपालानि चाग्नि-

होत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या चोलूखलं च मुसलं च दृषच्चोपला चैतानि वै दश, यज्ञायुधानीति। स्फ्यशब्देन खड्गाकारकाष्ठमुच्यते। अग्निहोत्रहवणी निर्वापसाधनं काष्ठपात्रम्। शम्या मुसलाकारकाष्ठम्। तत्र व्रीह्यादिद्रव्ये ष्ववघातादिसंस्काराणां साङ्कर्ये निराकृतेऽपि स्फ्यकपालादिद्रव्याणामुद्धननपुरोडाशश्रपणाद्यङ्गक्रियासु साङ्कर्यं निराकर्तुमशक्यम्। येन केनापि द्रव्येण यस्यां कस्याञ्चित् क्रियायां कृतायामपि श्रूयमाणस्य यज्ञायुधत्वस्याविरोधात्। न ह्यव्यवस्थामात्रेण यज्ञसाधनत्वमपैतीति प्राप्ते ब्रूमः। स्फ्येनोद्धन्ति। कपालेषु श्रपयति। अग्निहोत्रहवण्या हवींषि निर्वपति। शूर्पेण विविनक्ति। कृष्णाजिनमधस्तादुलूखलस्यावस्तृणाति। शम्यया दृषदमुपदधाति। उलूखलमुसलाभ्यामवहन्ति। दृषदुपलाभ्यां पिनष्टीत्येतेषां विशेषसंयोगबोधकानां वाक्यानां वैयर्थ्यं साङ्कर्यपक्षे प्रसज्येत। व्यवस्थापक्षेऽपि सम्बन्धसामान्यबोधकं यज्ञायुधवाक्यमनर्थकमिति चेत्। न। उद्धननादिवाक्यसिद्धार्थानुवादत्वात्। न च वैपरीत्ये नोद्धननादिवाक्यानामेवानुवादत्वमिति वाच्यम्। बहुवैयर्थ्यस्य जघन्यत्वात्। न चात्यन्तं यज्ञायुधानुवादस्य वैयर्थ्यम्। यज्ञायुधानि सम्भरन्तीत्यासादनविधानायोपयुक्तत्वात्। तस्मादवघातादिसंस्कार इव स्फ्यकपालादिद्रव्याणि व्यवस्थितानि।

सप्तमाधिकरणमारचयति।

क्रोणात्यरुणयेत्येतत् सङ्कीर्णं वा क्रयैकभाक्।
क्रयेणानन्वयात् कीर्णं सर्वद्रव्येषु रक्तिमा ॥ १० ॥ व

द्रव्यद्वारा क्रये योगात् तद्भागे चान्वयः पुनः ।
साक्षात्क्रये गुणस्यार्थाद् द्रव्ये संनिहिते त्वसौ ॥११॥

ज्योतिष्टोमे श्रूयते । अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणातीति । तत्रारुणाशब्दोऽरुणिमानं गुणमाचष्टे । गुणिविषयतया प्रयुज्यमानस्यापि नागृहीतविशेषणा विशिष्टबुद्धिरिति न्यायेन गुणबोधकत्वात् । अन्वयव्यतिरेकाभ्यां गुणमात्रे तद्व्युत्पत्तेश्च । तस्य चारुणिमगुणस्य तृतीयाश्रुत्या सोमक्रयसाधनत्वं प्रतीयते । तच्चानुपपन्नम् । अमूर्त्तस्य गुणस्य वासोहिरण्यादिवत् क्रयसाधनत्वासम्भवात् । ततस्तृतीयाश्रुतेर्विनियोजकत्वाभावेन प्रकरणस्यैव विनियोजकत्वं वक्तव्यम् । प्रकरणञ्च ग्रहचमसाद्यखिलद्रव्ये ष्वरुणिमानं निवेशयति । न चानेन न्यायेन पिङ्गाक्ष्येकहायनीशब्दार्थयोरपि सर्वद्रव्यगामित्वं शङ्कनीयम् । तयोः शब्दयोर्द्रव्यवाचित्वात् । पिङ्गलवर्णे अक्षिणी यस्या गोः सा पिङ्गाक्षी । एवमेकहायनी । यद्यप्येकगोवाचिनौ शब्दौ तथापि विशेषणभूतधर्मभेदाच्छब्दद्वयम् । तच्च युगपत् प्रवृत्तं सद्धर्मद्वयविशिष्टं गोद्रव्यं क्रयसाधनत्वेन विदधाति । न चेतरद्रव्यमितरद्रव्ये निवेशयितुं शक्यम् । अरुणिमगुणस्तु द्रव्येषु विशेषणत्वेनान्वेतुं योग्यत्वात् तेषु निवेश्यते । तत्रैषा वचनयोजना । अरुणयेत्येतत् पृथग्वाक्यम् । तत्र तृतीयाश्रुत्या प्राकरणिकानि साधनद्रव्याणि सर्वाण्यनूद्य प्रातिपदिकेन गुणो विधीयते । यानि ज्योतिष्टोमे साधनद्रव्याणि तानि सर्वाण्यरुणानि कुर्यादिति । तस्माद्गुणः सङ्कीर्ण इति प्राप्ते ब्रूमः ।

यद्यप्यमूर्त्तो गुणस्तथापि ह्रायनवर्द्धाववच गोद्रव्यं व्यवच्छिनत्ति। तच द्रव्यं साधनमिति तद्द्वारा गुणस्य क्रयेणान्वयो भवति। एवं सति वाक्यभेदो न भविष्यति। ननु वाक्यभेदाभावेऽपि लक्षणा दुर्वारा। गुणवाचिनः शब्दस्य गुणिद्रव्यपरत्वाङ्गीकारात्। मैवम्। गुणस्यैवात्र तृतीयाश्रुत्या साधनत्वमुच्यते। तच द्रव्यद्वारमन्तरेण न सम्भवतीत्यर्थापत्त्या द्रव्यावच्छेदकत्वं कल्प्यते। तर्हि ग्रहणमशादिद्रव्यमप्यवच्छिद्यतामिति चेत्। न। तस्य द्रव्यस्य क्रयसाधनत्वाभावेन तदवच्छेदकगुणस्य सुतरामरुण-क्रयसाधनत्वासिद्धेः। तर्हि वाससा क्रीणात्यजया क्रीणातीति वस्त्रादीनां क्रयसाधनत्वात्तदवच्छेदोऽस्त्विति चेत्। न। तेषां क्रयान्तरसाधनत्वात्। न हि तत्राग्निहोत्रे पयोदध्यादिविकल्पवत् क्रयानुवादेन वस्त्रादिद्रव्यविकल्पो विधीयते। अनुवाद्यस्य क्रयमात्रस्याग्निहोत्रवदन्यत्राविधानात्। ततो वस्त्रादिद्रव्यविशिष्टाः क्रयान्तरविषयाः। न हि स्ववाक्यगतमेकहायनीद्रव्यमुपेक्ष्य वस्त्राद्यवच्छेदो युक्तः। तस्मात् क्रयेण साक्षादन्वितयोर्द्रव्यगुणयोः पश्चादर्थापत्त्या परस्परावच्छेदकत्वेनान्वयः। तथा सत्यारुण्य-विशिष्टैकहायन्या क्रीणातीत्यर्थः पर्यवस्यति। तस्मादारुण्यगुणः क्रयहेतुमेकहायनीमेव भजते।

सप्तमाधिकरणमारचयति।

संमार्ष्टि ग्रहमित्येको ग्रहः प्राप्य उताखिलाः।
एकः श्रुतस्य संख्याया उपादेयवदादरात्॥ १२॥

प्राधान्यात्तद्गताहत्तेरेकत्वमनपेक्षितम्।

तद्द्विधौ वाक्यभेदोऽतो द्रव्योक्त्या सर्वशोधनम् ॥ १३ ॥

सोमे श्रूयते। दशापवित्रेण ग्रहं संमार्ष्टीति। दशापवित्रं वासःखण्डः। तत्र यथा पशुना यजेतेत्यत्रोपादेयपशुगतमेकत्वं विवक्षितम्। तद्वदुद्देश्यग्रहगतमप्येकत्वं विवक्षितव्यम्। किञ्च। ग्रहशब्दस्य जातिवाचित्वेन जातेः संस्कार्यत्वे सति तदाश्रयभूते यस्मिन् कस्मिन्नपि द्रव्येऽनुष्ठितेन संस्कारेण जातिः संस्कृता भवति। तस्मादेक एव ग्रहः शोधनीय इति प्राप्ते ब्रूमः। ग्रहमिति द्वितीयया ग्रहस्योद्देश्यतया प्रयोजनवत्तया च प्राधान्यं गम्यते। ग्रहं प्रति गुणः सम्मार्गः। प्रति प्रधानञ्च गुण आवर्त्तनीय इति न्यायेन यावन्तो ग्रहाः सन्ति ते सम्मार्जनीयाः। एवं निश्चये सति सम्मार्जयितव्यग्रहेयत्ताया अबुभुत्सितत्वादुद्देश्यगतमेकत्वं श्रूयमाणमप्यविवक्षितम्। अथोच्येत। नेदमुद्देश्यगतम्। किन्तु स्वयं विधेयमिति। तन्न। वाक्यभेदापत्तेः। ग्रहं सम्मृज्यात्तं चैकमित्येवं विधेयार्थभेदाद्वाक्यभेदः। पशुना यजेतेत्यत्र तु यागं प्रति गुणभूतः पशुः। न हि प्रति गुणं प्रधानस्यावृत्तिरिति कश्चिन्न्यायोऽस्ति। तत इयत्ताया बुभुत्सितत्वाच्छ्रूयमाणमेकत्वं विवक्षितमिति वैषम्यम्। न च जातिः संस्कार्या। तस्या अमूर्त्तत्वात्। ततो जातिद्वारा द्रव्यलक्षको ग्रहशब्दः। तच्च चाहुल्यिकम्। तस्मात् सर्वे ग्रहाः सम्मार्जनीयाः।

अष्टमाधिकरणमारचयति।

चमसादि च संमृज्यान्नो वा तस्यास्ति मार्जनम्।
एकत्ववद्ग्रहत्वस्याप्यनादरणसंभवात् ॥ १४ ॥

नैवम्। क्रियारूपत्वादेव दर्शपूर्णमासक्रिययापि संबन्धास-म्भवात्। अत्रोच्यते। अभिक्रमणं कर्तृकारकेण साक्षात् संबध्यते। तद्द्वारा क्रत्वङ्गदर्शपूर्णमासकर्मणा संबध्यत इति। तदेतत् समाधानं प्रयाजसम्बन्धेऽपि समानम्। अतः सन्निधिबलात् प्रयाजकर्ता संबध्यते।

एतदेवाधिकरणं वार्त्तिककारमतेनारचयति।

यद्वा बलित्वं सान्निध्यादस्ति प्रकरणे ततः।

दर्शादिप्रक्रियाधीते क्रमणे स्यात्तदङ्गता ॥ २२ ॥

अवान्तरप्रकरणं समिधो यजतीत्यतः।

तन्मध्यपाठात्तस्याङ्गं तद्द्वारा दर्शशेषता ॥ २३ ॥

अस्मिन्नपि मते तावेव विषयसंशयौ। पूर्वोत्तरपक्षहेतु-मात्रमन्यत्। प्रयाजसंनिधितोऽपि दर्शपूर्णमासप्रकरणस्य प्रबलत्वात्। प्राकरणिकेषु क्रत्वङ्गेष्वभिक्रमणं निविशत इति पूर्वपक्षः। समिधो यजतीत्यारभ्याम्नातमवान्तर-प्रयाजप्रकरणम्। तन्मध्येऽभिक्रमणमाम्नातम्। तस्य चाभिक्रमणविधेरुभयतः प्रयाजविषयैर्वाक्यैः संदष्टत्वादभि-क्रमणं प्रयाजमात्रे निविशत इति राद्धान्तः। अस्मिन्नपि पक्षे महाप्रकरणं न विरुध्यते। प्रयाजद्वारा दर्शपूर्ण-मासयोर्निवेशात्।

एकादशाधिकरणमारचयति।

उपव्ययत इत्यस्य सामिधेन्यङ्गताथवा।

दर्शाङ्गता प्रक्रियैषा वान्तरातोऽस्त्विहाग्रिमः ॥ २४ ॥

लिङ्गादग्नेरङ्गभूतैर्निवित्संज्ञकमन्त्रकैः।

विच्छेदे सति दर्शाङ्गं महाप्रकरणोक्तितः ॥ २५ ॥

दर्शपूर्णमासप्रकरणे विश्वरूपो वै त्वाष्ट्र इति प्रपाठके सप्तमाष्टमयोरनुवाकयोः सामिधेनीब्राह्मणमाम्नातम्। नवके निवित्संज्ञकानामग्ने महानसि ब्राह्मणभारतेत्यादीनां मन्त्राणां ब्राह्मणम्। दशमे काम्याः सामिधेनीपक्षाः। एकादशे तूपवीतमेवं विहितम्। निवीतं मनुष्याणां प्राचीनावीतं पितृणामुपवीतं देवानामुपव्ययते देवलक्ष्ममेव तत् कुरुतेति। तत्र पूर्वन्यायेन सामिधेनीप्रकरणस्यावान्तरस्याङ्गीकारात् सामिधेन्यङ्गमुपवीतमिति चेत्। न। निविद्ब्राह्मणेन सामिधेनीप्रकरणस्य विच्छेदितत्वात्। न च निविदामपि सामिधेन्यङ्गतया तत्प्रकरणपाठादविच्छेदकत्वमिति वाच्यम्। लिङ्गेन निविदामग्न्यङ्गत्वावगमात्। आहुत्यधिकरणभूतमग्निं संबोध्य महानसीत्यादिभिर्निविद्वाक्यैरग्नेरुत्साहजननाय तद्गुणा आवेद्यन्ते। अत एव निर्वचनमेवं श्रूयते। निविद्भिर्न्यवेदयत्। तन्निविदां निवित्त्वमिति। ननु सम्यगिध्यतेऽग्निर्याभिरृग्भिस्ताः सामिधेन्य इति व्युत्पत्त्या ता अप्यत्र ज्वलनद्वारेणाग्न्यर्था एवेति चेत्। सन्तु नाम। नैतावता परस्परमङ्गाङ्गिभावः। ननु विच्छिद्यतां सामिधेनीप्रकरणम्। निवित्प्रकरणेनोपवीतस्य निविदङ्गत्वं स्यादिति चेत्। न। पूर्वोत्तरानुवाकयोर्निविदामश्रवणेन प्रकरणाभात् संनिधिना तदङ्गत्वमिति चेत्। न काम्यसामिधेनीभिर्व्यवधानात्। न च काम्यसामिधेन्यङ्गता शङ्कनीया। सन्निधितः प्रकरणस्य प्रबलत्वात्। तस्मादत्र प्रयाजन्यायाभावाद्दर्शपूर्णमासाङ्गमुपवीतम्।

द्वादशाधिकरणमारचयति।

वैकङ्कतादिकं पात्रं पवमानहविःष्वथ ।
यज्ञेऽखिले प्रकरणादाधानेऽन्वितमस्तु तत् ॥ २६ ॥
अनर्थकं तदङ्गेषु हविःष्वेवाविशिष्यते ।
नाधानहविषां साम्याद्वाक्याद्यज्ञेऽखिले भवेत् ॥ २७ ॥

आधानप्रकरणे दारुपात्रं होमार्थं यज्ञार्थं च श्रूयते । तस्माद् वारणो वै यज्ञावचरः स्यान्न त्वेतेन जुहुयाद् वैकङ्कतो यज्ञावचरः स्याज्जुहुयादेवैतेनेति । यज्ञावचरो यज्ञप्रचारहेतुः । तत्र वारणवैकङ्कतादिपात्रं प्रकरणबलादाधाने प्रथममन्वेति । एतेन पात्रेणाधाने प्रयोजनाभावादाधानाङ्गेषु पवमानहविःष्वेव तत् पात्रं निविशते । अस्ति हि पवमानहविषामाधानाङ्गत्वम् । तत् प्रकरणे पाठात् । कृत्तिकास्वग्निमादधीतेत्यस्मिन् प्रकरणे प्रजापतिर्वाचः सत्यमपश्यदित्यस्मिन्ननुवाके त्रीणि हवींषि निर्वपतीत्यादिना तानि विहितानि । ततो यथा सप्तदशारत्नित्वं वाजपेये साक्षादसंभवात् तदङ्गपश्वारङ्गे निविशते । तद्वदिदमपीति प्राप्ते ब्रूमः । अग्निमुद्दिश्याधानं यथा विहितम् । तथा पवमानहवींष्यपि । यदाहवनीये जुहति तेन सोऽस्याभीष्टः प्रीत इत्याहवनीयोद्देशेन पवमानहविर्होमविधानात् । तस्मादग्निसंस्कारत्वेन समानानामाधानहविषां नास्ति परस्परमङ्गाङ्गिभावः । तथा सति प्रकरणस्य पात्रं प्रति विनियोजकत्वाभावाद् वैकङ्कतो यज्ञावचर इति वाक्येन दर्शपूर्णमासादिसर्वयज्ञेषु तद् विनियुज्यते ।

त्रयोदशाधिकरणमारचयति ।

वार्त्रघ्नी पूर्णमासे स्तां वृधन्वत्यौ तु दर्शगे ।

इति प्रधानशेषत्वमुक्तं किंवा व्यवस्थितिः ॥ २८ ॥
क्रमेण प्रापिता मन्त्राश्चत्वारो ऽप्याज्यभागयोः।
क्रमाद् वाक्यं बलीयोऽत एषां दर्शादिशेषता ॥ २९ ॥
न मुख्ये सोम एकोऽस्ति नाधारत्वादिकालयोः।
दर्शादेरव्यवस्थित्वा प्राप्तौ वाक्याद् व्यवस्थितिः ॥ ३० ॥

दर्शपूर्णमासप्रकरणे श्रूयते। वार्त्रघ्नी पौर्णमास्या-
नूच्येते वृधन्वती अमावास्यायामिति। तत्रेदं वार्त्रघ्नी-
गलं वृधन्वतीयुगलं च होतृकाण्ड आज्यभागयोः क्रमेऽग्नि
ंत्राणि जुषाणदित्यनुवाकेनाम्नातम्। उदाहृतेन तु
ाह्मणवाक्येन दर्शपूर्णमासयागयोस्तद् विधिरवगम्यते।
त्र वाक्यस्य प्रबलत्वादेषां मन्त्राणां दर्शपूर्णमासयागाङ्ग-
ाम्। न त्वाज्यभागाङ्गत्वमिति प्राप्ते ब्रूमः। अग्नि-
त्राणि जुषाणदित्याग्नेयी प्रथमा वार्त्रघ्नी। त्वं सोमासि
तृपतिरिति सौम्या द्वितीया वार्त्रघ्नी। अग्निः प्रत्नेन
मनेत्याग्नेयी प्रथमा वृधन्वती। सोमगीर्भिष्ट्वा वयमिति
ाम्या द्वितीया वृधन्वती। तत्र मुख्ययोर्दर्शपूर्णमासयो-
ागयोराग्नेयपुरोडाशसद्भावादाग्नेयीद्वयस्य विकल्पेन
ोऽनुवाक्यात्वं कथञ्चिद् भवतु। सौम्ययोस्तु तन्न सम्भ-
ति। सोमदेवताया अभावात्। न ह्यग्नीषोमीयेऽपि
वलः सोमो विद्यते। किञ्च। पौर्णमास्याममावास्याया
ति सप्तमीभ्यामाधारत्वं गम्यते। तच्च यागवाचित्वे
ागस्य मुख्यत्वान्न सम्भवति। कालस्य तूपसर्जनत्वात्तद्वा
ात्वं युक्तम्। किञ्च। प्रयाजमन्त्रानुवाकस्यानन्तरमेवाय-
नुवाकः पठितः स चाज्यभागयोरङ्गयोः क्रमः। न तु

मुख्ययोर्दर्शपूर्णमासयोः। तस्मात् मन्त्रचतुष्टयस्य मुख्ययागाङ्गत्वम्। किन्त्वाज्यभागाङ्गत्वम्। ननु तत् क्रमेणैव लब्धम्। तत्राप्याग्नेये प्रथमाज्यभागे मन्त्रोऽप्याग्नेयः। सौम्ये द्वितीये सौम्य इत्येषा व्यवस्था लिङ्गेनैव लभ्यते। बाढम् तथापि वार्त्रघ्नीयुगलं पौर्णमासी काले वृधन्वतीयुगलममावास्यायामित्येषा व्यवस्था पूर्वमप्राप्ता ब्राह्मणवाक्येनाभिधीयत इति न वैयर्थ्यम्।

चतुर्दशाधिकरणमारचयति।

हस्तौ द्वाववने निक्ते स्तृणात्युलपराजिकाम्।
दर्भास्तरण एवाङ्गं हस्तशुद्धिरुताखिले। ३१॥
तन्मात्राङ्गत्वमत्र स्यादानन्तर्यात्मकात् क्रमात्।
लिङ्गप्रकरणाभ्यां तु सर्वानुष्ठानशेषता। ३२॥

दर्शपूर्णमासप्रकरणे श्रूयते। हस्ताववने निक्ते। उलपराजिं स्तृणातीति। वेद्यामास्तरीतुं सम्पादितस्तृणस्तबक उलपराजिः। तत्र हस्तशुद्धिदर्भास्तरणवाक्ययोर्नैरन्तर्येण पठितत्वात् क्रमप्रमाणेन हस्तशुद्धिरास्तरणमात्रस्याङ्गमिति चेत्। नैवम्। अवनेजनं हस्तसंस्कारः। संस्कृतौ हस्तौ सर्वानुष्ठाने योग्यावित्येतादृशं सामर्थ्यं लिङ्गम्। प्रकरणञ्च दर्शपूर्णमासयोः स्फुटम्। अतः प्रबलाभ्यां लिङ्गप्रकरणाभ्यां क्रमबाधात् सर्वशेषो हस्तशुद्धिः।

अथ न्यायो वाग्यमेऽपि द्रष्टव्यः। स च वाग्यमो ज्योतिष्टोमप्रकरणे श्रुतः मुष्टीकरोति। वाचं यच्छतीति। तदनन्तरमेवेदं श्रूयते। दीक्षितमावेदयतीति। आवेदनप्रकारश्चैवं श्रुतः। अदीक्षिष्टायं ब्राह्मण इति विरूपांशाद

देवेभ्यः एवैनं प्राह त्रिरुच्चैरुभयेभ्य एवैनं देवमनुष्येभ्यः प्राहेति। अत्र मुष्टीकरणवाङ्नियमाभ्यां हस्तजिह्वागतचापले निवारिते सति मनस एकाग्रस्य सर्वकर्मसु योग्यत्वं लिङ्गम्। तेन क्रमो बाध्यते।

पञ्चदशाधिकरणमारचयति।

चतुर्धा कार्य आग्नेयः पुरोडाश इतीरितम्।
चतुर्धाकरणं सर्वशेषो वाग्नेय मात्रगम्॥ २३॥
उपलक्षणताग्नेये युक्तातः सर्वशेषता।
अग्नीषोमीय ऐन्द्राग्ने यतोऽस्त्याग्नेयता ततः॥ २४॥
नाग्नेयत्वं तयोर्मुख्यं केवलाग्न्यनुपाश्रयात्।
तेनैकस्मिन् पुरोडाशे चतुर्धाकरणस्थितिः॥ २५॥

दर्शपूर्णमासयोः श्रूयते। आग्नेयं चतुर्धा करोतीति। तत्राग्नेयवदैन्द्राग्नाग्नीषोमीययोरपि पुरोडाशयोरग्निसंबन्धादाग्नेयशब्देन पुरोडाशत्रयमुपलक्ष्यते। ततस्त्रयाणां शेष इति चेत्। मैवम्। न ह्याग्नेय इत्ययं तद्धितः संबन्धमात्रे विहितः। किन्तु देवतासंबन्धे। अग्निश्च केवलो द्विदेवत्ययोः पुरोडाशयोर्न देवता। ततो देवतैकदेशेन कृत्स्नदेवतोपलक्षणादाग्नेयत्वं तयोर्न मुख्यमिति मुख्य एवाग्नेये चतुर्धाकरणं व्यवतिष्ठते।

इति माधवीये जैमिनीयन्यायमालाविस्तरे तृतीयाध्यायस्य प्रथमः पादः।

---

द्वितीयपादस्य प्रथमाधिकरणमारचयति।

देवोपसदनं बर्हिर्दर्भमिषोर्मुख्यगौणयोः।

तल्लिङ्गमर्थयोर्मन्त्रं नियुङ्क्ते मुख्य एव वा ॥ १ ॥
शब्दार्थत्वाद् द्वयोस्तत्र युज्यते विनियोजनम् ।
प्रथमावगतत्वेन मुख्ये तद् विनियम्यते ॥ २ ॥

बर्हिर्देवसदनं दामीति लवनप्रकाशको मन्त्र आम्नातः। तत्र लवनप्रकाशनसामर्थ्यलक्षणेन लिङ्गेनायं मन्त्रो लवनक्रियायां विनियुज्यते। लवितव्यं बर्हिर्द्विविधम्। मुख्यं गौणं च। मुख्यं कुशकाशादि दशविधदर्भरूपम्। गौणं तु तत्सदृशं तृणान्तरम्। तस्मिन् बर्हिःशब्दस्य माणवकेऽग्निशब्दवद्गुणयोगेन प्रवृत्तत्वात्। तथा सति मुख्यगौणयोरुभयोरपि शब्दार्थत्वेन दर्भस्य तृणान्तरस्य च लवने मन्त्रविनियोग इति प्राप्ते ब्रूमः। मुख्यस्य शीघ्रप्रतीतत्वेन मुख्ये मन्त्रं विनियुज्य चरितार्थं लिङ्गं विलम्बप्रतीतिकगौणापेक्षां न करोति। तस्मान्मुख्यस्यैव लवने मन्त्रो नियम्यते।

द्वितीयाधिकरणमारचयति।

ऐन्द्रा निवेशनेत्यग्निं गार्हपत्यं भजेदिति।
प्रकाश्ये मुख्य इन्द्रे वा गौणे मुख्योऽस्तु पूर्ववत् ॥ ३ ॥
एकस्य गौणताध्रौव्ये मन्त्रस्यैवानुवादतः।
गौणतातोऽग्न्युपस्थाने मन्त्रः श्रुत्या नियुज्यते ॥ ४ ॥

अग्निचयने निवेशनः सङ्गमन इत्यादिका काचिदैन्द्री समाम्नाता तस्यास्तरार्द्धे इन्द्रो न तस्थाविति पठ्यमानत्वात् तन्मन्त्रविषयं ब्राह्मणं चैवमाम्नायते। निवेशनः सङ्गमनो वसूनामित्यैन्द्र्या गार्हपत्यमुपतिष्ठत इति। एतेन ब्राह्मणेन गार्हपत्योपस्थाने विनियुज्यमानो मन्त्रोऽयं

प्रकाशयन् मुख्यमिन्द्रं प्रकाशयति मुख्येन्द्रः स्वर्गाधिपतिः सहस्राक्षः । तत्रेन्द्रशब्दस्य रूढ़त्वात् । गौणस्त्विन्द्रो गार्हपत्यः । तस्यैश्वर्यगुणयोगेन यज्ञसाधनत्वेन वा मुख्येन्द्रसदृशत्वात् । तत्र पूर्वन्यायेन शीघ्रप्रतीत्या मुख्येन्द्रे प्रकाशिते सति मन्त्रब्राह्मणयोर्विसंवादं निवारयितुं गार्हपत्यशब्देन शसमीपदेशो वा लक्षणीय इति प्राप्ते ... शब्दयोरन्यतरस्य गौणत्वेऽवश्यम्भाविनि सति ब्राह्मणवाक्यस्य विधायकत्वादप्राप्तार्थत्वेन विधौ लक्षणाया अन्याय्यत्वात् प्राप्तार्थत्वेनानुवादको मन्त्र एवेन्द्रशब्देन वह्निं लक्षयिष्यति । ततो गार्हपत्यप्रकाशने समर्थमेव मन्त्रमैन्द्र्येति तृतीया श्रुतिर्गार्हपत्योपस्थाने विनियुङ्क्ते ।

तृतीयाधिकरणमारचयति ।

हविष्कृदेहीत्यामन्त्र्य त्रिरवघ्नन् समाह्वयेत् ।
विनियोगोऽवघाते स्यादाह्वाने वावघातके ॥ ५ ॥
ऐन्द्रीवन्मान्त्रमाह्वानं गौणं हन्ति ब्रूयादन्यथा ।
पाठेन प्रापितं त्रित्वं क्रियते रूपचारगोः ॥ ६ ॥
त्रिरभ्यासो विधातव्यो नित्यं प्राप्तेरभावतः ।
हन्तिना लक्ष्यते कालः प्राप्तोऽसौ ह्वयतिस्तथा ॥ ७ ॥
विनियोगे वाक्यभेदो लिङ्गादाह्वानशेषता ।
नैन्द्रीन्यायः श्रुत्यभावाद्वह्निर्न्यायेन मुख्यगः ॥ ८ ॥

दर्शपूर्णमासयोः श्रूयते । हविष्कृदेहीति । त्रिरवघ्नन्नाह्वयतीति । देवानामर्थे या हविः सम्पादयति सा हविष्कृत् । तामेनां संबोध्याध्वर्युरेहीति ब्रूते । तथा चायं मन्त्रो

ब्राह्मणेन व्याख्यायते। हविष्कृदेहीत्याह य एव देवानां हविष्कृतस्तानाह्वयतीति। तमिमं मन्त्रमुच्चार्य्योच्चार्य्य त्रिवारमवघातं कुर्वन्नाह्वयतीत्यर्थः। अनेन वाक्येन मन्त्रोऽवघाते विनियुज्यते। नन्वाह्वाने समर्थो न त्ववघात इति चेत्। न। तस्यावघातलक्षकत्वात्। यथा पूर्वोदाहृतायामैन्द्र्यामृचीन्द्रशब्दो गौणः। तद्वदेहीति पदं मन्त्रगतत्वेनावघाते गौणं भविष्यति। अन्यथा मन्त्रब्राह्मणयोराह्वानपरत्वाच्छ्रूयमाणमवघ्नन्निति पदमनर्थकं स्यात्। प्राप्तमवघातमुद्दिश्य तत्र मन्त्रस्य त्रित्वस्य च विधौ वाक्यभेद इति चेत्। न। त्रित्वस्य प्राप्तत्वे नानुवादकत्वात्। कस्याञ्चिच्छाखायामयं मन्त्रकाण्डे त्रिवारमभ्यस्याम्नातः। आह्वयतिपदं त्वेहीतिवदवघातपरतयोपचरणीयमिति प्राप्तं ब्रूमः। त्रिरभ्यासस्य नित्यवत् प्राप्तिः पाठमात्रेण न सिध्यति। कस्याञ्चिच्छाखायां द्विः पाठात्। कस्याञ्चित् सकृत्पाठात्। अतोऽसौ नित्यवद् विधीयते। न चावघ्नन्नित्यस्य वैयर्थ्यम् तस्य काललक्षकत्वात्। कालस्यापि विधौ वाक्यभेद इति चेत्। न। कालस्य प्राप्तत्वात्। न ह्यवघाते सहायाह्वानमन्यस्मिन् काले भवति। ततोऽर्थप्राप्तः कालः। आह्वानमपि मन्त्रसामर्थ्यादेव प्राप्तत्वान्न विधेयम्। न ह्येहीति मन्त्रपाठ आह्वानमन्तरेणोपपद्यते। मन्त्रव्याख्यानं चोदाहृतम्। तत्रायं वाक्यार्थः सम्पन्नः। अवघातकाले यदाह्वानं तस्य त्रिरभ्यासः कर्त्तव्य इति। अत एव शाखान्तरे विस्पष्टमाह्वानानुवादेनाभ्यासो विधीयते। त्रिराह्वयति त्रिः सत्या हि देवा इति। एवं सति मन्त्रस्यापि विनियोगे वाक्यभेदः स्यात्।

लिङ्गेन त्वाह्वाने विनियुज्यते। नावघाते न चैन्द्रीन्यायोऽत्र प्रसरति। तृतीयाश्रुत्यसंभवात्। बर्हिर्देवसदनं दामीत्यत्रोक्तेन तु न्यायेन मुख्य एवाह्वाने लिङ्गेन मन्त्रविनियोगः। न त्ववघातरूपे गौणाह्वाने। तस्मादाह्वानशेषो मन्त्रः।

चतुर्थाधिकरणमारचयति।

उत्तिष्ठन् प्रवदेदग्नीदग्नीनित्यादिकं तथा।
कृणुत व्रतमित्येवं पठन् वाचं विमुञ्चति॥ ९॥
मन्त्रौ विधेयौ कालौ वा मन्त्रावुत्थानमोकयोः।
विनियोज्यौ न कालस्य लक्षणा युज्यते विधौ॥ १०॥
मन्त्रार्थानन्वयात्तत्र तद्विधिर्नैव शक्यते।
अगत्या लक्षणाप्यस्तु तेन कालो विधीयते॥ ११॥

ज्योतिष्टोमे समामनन्ति। उत्तिष्ठन्नन्वाहाग्नीदग्नीन् विहरेति। तथा व्रतं कृणुतेति वाचं विसृजतीति। तत्राग्नीध्रं सम्बोध्याग्निविहरणादिप्रैषरूपो मन्त्रोऽनेन वाक्येनोत्थानशेषतया विनियुज्यते। तथा मुष्टिं कृत्वा नियमितवाचो दीक्षितस्य वाग्विमोके व्रतं कृणुतेति मन्त्रो विनियुज्यते। न चात्र पूर्वोक्तावघातशब्दवदुत्थानविमोकशब्दौ काललक्षकौ। तत्कालयोरवघातकालवदप्राप्तत्वाभावेन विधेयत्वे सति लक्षणाया अन्याय्यत्वादिति प्राप्ते ब्रूमः। अग्निविहरणप्रैषे पयःपानरूपव्रतसंपादनप्रैषे चाभिधातावेतौ मन्त्रौ। न तूत्थाने वाग्विमोके च। अतोऽसमर्थयो विनियोगासम्भवादगत्या लक्षणामप्यङ्गीकृत्य कालो विधीयते।

पञ्चमाधिकरणमारचयति ।

प्रस्तरं सूक्तवाकेन प्रहरेदिति कालधीः ।
अङ्गाङ्गिता वा स्यात् कालोऽजुषतेत्याद्यनन्वयात् ॥१२॥
प्रहृतेरिष्टदेवार्थसंस्कारत्वात् तदन्वयः ।
संपाद्यो देवताद्वारा तृतीयाश्रुतितोऽङ्गता ॥ १५ ॥

दर्शपूर्णमासयोराम्नायते। सूक्तवाकेन प्रस्तरं प्रहरतीति । इदं द्यावापृथिवी भद्रमभूदित्यादिको मन्त्रः सूक्तवाकः। तस्मिन् मन्त्रेऽग्निं संबोध्य त्वं सूक्तवागसीत्याम्नानात् । प्रस्तरो दर्भमुष्टिः । तस्य प्रहरणमग्नौ प्रक्षेपः । तत्र सूक्तवाकेनेत्येतत् पदं कालं लक्षयति। होता मन्त्रेऽस्मिन् पठ्यमाने तत्पाठकालेऽध्वर्युः प्रस्तरं प्रहरेत् । न त्वत्र प्रहरणे मन्त्रोऽयं विनियोक्तुं शक्यः। पूर्वोक्तप्रैषमन्त्रवद्‌-त्रान्वयाभावात् । अग्निरिदं हविरजुषतावीवृधत महो-ज्यायोऽकृतेत्यादिकं मन्त्रे पठ्यते पुरोडाशसेवया वृद्धोऽग्निः स्वस्मिन् यजमाने वा तेजोबाहुल्यं कृतवानिति तस्यार्थः। न चासौ प्रस्तरप्रहरणेऽन्वेतुं शक्य इति प्राप्ते ब्रूमः। सूक्तवाकेनेति तृतीयाश्रुत्या प्रहरणे मन्त्रो विनियुज्यते। न चात्यन्तमन्वयाभावः । मन्त्रो ह्ययं पूर्वमिष्टानग्न्यादि-देवान् स्मारयति। प्रस्तरप्रहरणं चेष्टदेवतासंस्कारः। अतो देवताद्वारा मन्त्रप्रहरणयोरन्वयान्मन्त्रो विनियुज्यते। ननु प्रहरणं नाम प्रक्षेपमात्रम्। न तु देवतोद्देशेन प्रक्षेपः । यजिधातोरश्रवणात् । तथा सति देवतानामत्रा-भावात् तद्द्वारापि नान्वय इति चेत् । नैवम् । देवतानां सद्भावात्। अग्न्यादिदेवताप्रकाशकस्य सूक्तवाकस्य तृतीया-

श्रुत्या प्रहरणाङ्गत्वं बोध्यते। यदि प्रहरणेऽग्न्यादयो देवता भवेयुः। तदा तत्प्रकाशनेन दृष्टार्थो मन्त्रस्य लभ्येत। ततो देवताकल्पने तदुद्देशपूर्वकस्य प्रक्षेपस्य यागत्वं सिध्यति। तस्माद् देवताद्वारास्त्येवान्वयः।

षष्ठाधिकरणमारचयति।

प्रकृतेरखिलः सूक्तवाकोऽङ्गं स्याद् विभज्य वा।
समाख्या कृत्स्नगा तेन विभक्तस्याङ्गता न हि ॥ १४ ॥
दर्शपूर्णिमयोर्देवाननुसृत्य विभज्य ताम्।
आख्यां लिङ्गेन बाधित्वा भागे नाम निरुच्यते ॥ १५ ॥

पूर्वोदाहृते मन्त्रे सूक्तवाकसमाख्या कृत्स्नमन्त्रविषया। याज्ञिकैः कृत्स्ने तच्छब्दप्रयोगात्। ततः सर्वोऽपि प्रहरणाङ्गमिति चेत्। न। लिङ्गेन समाख्याया बाधितत्वात्। तस्मिन्मन्त्रे पूर्णमासदेवताम्नानं कस्मिंश्चिद्भागे दृश्यते। अग्नीषोमाविदं हविरजुषेतामिति। भागान्तरे तु दर्शदेवताम्नानम्। इन्द्राग्नी इदं हविरजुषेतामिति। इन्द्र इदं हविरजुषतेति महेन्द्र इदं हविरजुषतेति च। इन्द्राग्नीन्द्रमहेन्द्राः पुरुषभेदेन दर्शे व्यवस्थिताः। तथा सति मन्त्रलिङ्गेन तत्तद्भागवाक्यस्तत्तत्काले व्यवतिष्ठते। सूक्तवाकशब्दश्च भागे यौगिकः। सूक्तं वक्तीति तद्व्युत्पत्तेः। यागकाले तत्तन्मन्त्रेण सम्यगुक्तम्। देवं वक्तीत्यर्थः। अत एव ब्राह्मणेन व्याख्यातम्। अग्निरिदं हविरजुषतेत्याह या अयाड्देवतास्तां अरीरधामेति वा वै तदाहेति। अरीरधाम। आराधितां सुष्टानकुर्मेत्यर्थः। तस्मादियं विभज्य विनियुज्यते।

सप्तमाधिकरणमारचयति ।

ऐन्द्राग्नादीष्टयः काम्या याज्या अभ्युदिताः क्रमात् ।
काण्डयोस्ता यथालिङ्गं संचार्या नियमोऽथवा ॥ १६ ॥
लिङ्गं क्रमसमाख्याभ्यां प्रबलं तद्वशादमूः ।
अकाम्यास्वपि संचार्या याज्याः सर्वत्र का क्षतिः ॥ १७ ॥
समाख्यानात् काण्डयोगः क्रमादिष्टिषु योजनम् ।
अपेक्षते देवमात्रं शक्तिः काम्यैकगास्ततः ॥ १८ ॥

काम्येष्टयस्तत्काण्डे क्रमेणाम्नाताः । ऐन्द्राग्नमेकादशकपालं निर्वपेद्यस्य सजाता वीयुरित्यादिना । सजाता ज्ञातयः । वीयुर्विगता विप्रतिपन्ना इत्यर्थः । इन्द्राग्नी रोचनेत्यादिके मन्त्रकाण्डे याज्यानुवाक्याः क्रमेणाम्नाताः । तत्रेदं काम्ययाज्यानुवाक्याकाण्डमिति याज्ञिकानां समाख्ययावगम्यते । तयोरिष्टिकाण्डमन्त्रकाण्डयोः प्रथमायामिष्टौ प्रथमपठिते याज्यानुवाक्ये इत्यादिव्यवस्था क्रमेण क्रियते । मन्त्रगतं त्वैन्द्राग्नलिङ्गं काम्यायां नित्यायां चैन्द्राग्नेष्टौ ते याज्यानुवाक्ये विनियुङ्क्ते । लिङ्गं च प्रबलमिति सर्वत्र तयोर्विनियोग इति प्राप्ते ब्रूमः । नात्र लिङ्गेन क्रमसमाख्ये बाधितुं शक्येते । उपजीव्यत्वात् । इन्द्रादिदेवतास्वरूपमात्रप्रकाशनं लिङ्गम् । न च तावन्मात्रेण मन्त्रकर्मणोरङ्गाङ्गिभावः । ततः समाख्याबलान्मन्त्रकाण्डकर्मकाण्डयोः सम्बन्धावगतौ सामान्येन मन्त्रकर्मणोः संबन्धोऽवगम्यते । विशेषतस्त्वस्मिन् प्रथमे कर्मण्ययं मन्त्रः प्रथम इति क्रमादवगम्यते । नन्वैन्द्राग्नेष्टावैन्द्राग्नमन्त्रो न वैश्वानरमन्त्र इत्येतादृशो विशेषो लिङ्गेनैवावगम्यत इति

चेत् । न । लिङ्गसाधारण्ये क्रमापेक्षत्वात् । ऐन्द्राग्नमे-
कादशकपालं निर्वपेद्भ्रातृव्यवानिति द्वितीयेष्टिरपि ।
तत्रेन्द्राग्नी पठितौ । मन्त्रकाण्डेऽपीन्द्राग्नी । नवति-
मित्यादिकमपरमैन्द्राग्नं याज्यानुवाक्या युगल माम्नातम् ।
नहि तत्र क्रम मन्तरेण निर्णेतुं शक्यम् । न च क्रमेणैव
तत्सिद्धे लिङ्गमप्रयोजकमिति वाच्यम् । क्वचिल्लिङ्गस्यैव
व्यवस्थापकत्वात् । ऐन्द्राबार्हस्पत्येष्टिरेकैवाम्नाता । यं का-
मयेत राजन्य मनपोद्धो जायेत वृत्रान्घ्नंश्चरेदिति तस्मा
एत मैन्द्राबार्हस्पत्यं चरुं निर्वपेदिति । य राजपुत्रं जाय-
मानं प्रति राज्ञः पुरोहितस्य च काम एव भवत्ययं मातृ-
गर्भे देवकृतविघ्नेन केनाप्यप्रतिबद्धो जातश्च शत्रून् मारयन्
सञ्चरेदिति । तद्राजपुत्रार्थेयमिष्टिः । मन्त्रकाण्डे तदि-
ष्टिक्रमे याज्यापुरोऽनुवाक्ये इन्द्राबृहस्पतिदेवताके द्विविधे
आम्नाते । इदं वामास्य हविरित्यादिकमेकं युगलम् ।
अस्मा इन्द्राबृहस्पती इत्यादिक मपरम् । तयोः प्रथम युग-
लस्य क्रमेण विनियोगेऽपि द्वितीययुग्मं लिङ्गेनैव
विनियोक्तव्यम् । तस्मात् क्रम समाख्या सहकृतेन लिङ्गेन
काम्येष्टिष्वेता याज्या नियम्यन्ते ।

अष्टमाधिकरणमारचयति ।

आग्नेय्याग्नीध्रमित्यग्निदेवताका ऋचोऽखिलाः ।
उपस्थाने प्रयोक्तव्याः प्रकृता एव ता उत ॥ १८ ॥
साधारण्येन शब्दोक्तेः सर्वाभिस्तदुपस्थितिः ।
विशेषे विधिसंक्रान्त्या प्रकृताभि रितीष्यताम् ॥ २० ॥
ज्योतिष्टोमे श्रूयते । आग्नेय्याग्नीध्रमुपतिष्ठत इति ।

तत्राग्नीध्र नामकस्य मण्डपस्य यदुपस्थानं तद्यया कया-चिदृचा दाशतयीगतयाग्नि संबन्धिन्या कर्त्तव्यम्। अग्नि-र्देवता यस्या ऋचः साग्नेयीति साधारणोक्तावृग्विशेषस्या-प्रतीतेरिति चेत्। मैवम्। क्रतु प्रकरण पठितानामाग्ने-यीनामृचां क्रतुप्रयुक्तव्यापारसाधनत्वं प्रकरणादेवावगतम्। कोऽसौ व्यापार इति विशेषबुभुत्सायामाग्नीध्रोपस्थान-रूपोऽयमिति बोधयन्नयं विधिर्विशेष मात्रे सङ्क्रामतीति लाघवम्। अप्रकृतानां क्रतुप्रयुक्तव्यापारसाधनत्वं तद्-व्यापारविशेषश्चेत्युभयमनेन बोध्यत इति गौरवम्। तस्मात्-प्रकृताभिराग्नेयीभिस्तदुपस्थानम्। एवमैन्द्र्या सदो वैष्णव्या हविर्धान मित्यत्र सदोहविर्धाननामकयो र्मण्डपयोरुपस्थाने प्रकृताना मैन्द्रीणां वैष्णवीनां च प्रयोग इति द्रष्टव्यम्।

नवमाधिकरणमारचयति।

भक्षेहीत्यनुवाकोऽयं सर्वभक्षणगाम्युत।
ग्रहणाद्यै यथायोगं विभज्य व्यवतिष्ठते॥ २१॥
अविधग्रहणादीनां भक्षणे निखिलोऽस्तु सः।
अर्थाच्छिष्टेषु तेष्वेव यथा लिङ्गं विभज्यते॥ २२॥

ज्योतिष्टोमे हुतस्य सोमस्य शेषभक्षणं विहितम्। अतएवाम्नातम्। अभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि सोमं भक्षयन्तीति। तस्मिन् भक्षणे ग्रहणावेक्षण निगरणसम्यग्जरणरूपा श्चत्वारो व्यापाराः सन्ति। मन्त्रश्च भक्षेहीत्याद्यनुवाके समाम्नातः। तत्र भक्षणं यथा साक्षा-च्चोदितम्। न तथा ग्रहणावेक्षण निगरण सम्यग्जरणानि चोदितानि। न चाविहितेषु मन्त्रो विनियोग मर्हति।

समाख्या तु भक्षानुवाक इत्येवंरूपा भक्षणमात्रविषया। तस्मात् कृत्स्नस्याप्यनुवाकस्य भक्षण एव विनियोग इति प्राप्ते ब्रूमः। अविहितान्यपि ग्रहणादीन्यर्थाच्चिप्तानि। तद्व्यतिरेकेण भक्षणासम्भवात्। अतस्तेष्वनुवाको यथा लिङ्गं विभज्य विनियोक्तव्यः। तत्र भक्षेहीत्यारभ्या श्विनोस्त्वा बाहुभ्यां सघ्यासमित्यन्तो ग्रहणं प्रकाशयति। एहीत्याह्वानस्य बाहुभ्यां स्वीकरवाणीत्येतस्य च दर्शनात्। नृचक्ष्स त्वा देव सोम सुचक्षा अवख्येषमित्ययं भागोऽवेक्षणं प्रकाशयति। शोभन चक्षुरहं मनुष्येषु प्रख्यातं त्वामवेक्षिषीयेत्यभिधानात्। हिन्व मे गात्रेत्यादिर्मा मेऽवाङ्नाभिमतिगा इत्यन्तः सम्यग्जरणं प्रकाशयति। गात्रप्रीणनेनाधोभागे नाभ्यतिक्रमणनिषेधेन च तदवगमात्। जरणं नार्थाच्चिप्तम्। तेन विनापि भक्षसिद्धेरिति चेत्। न। जरणपर्यन्तस्यैव सार्थकभक्षणत्वात्। न च जरणे पुरुषव्यापाराभावः। सम्यगुपवेशनादेर्जरणार्थत्वात्। मन्द्राभिभूतिरित्यादिर्भक्षयामीत्यन्तो भक्षणं प्रकाशयति। तस्माल्लिङ्गेन समाख्यां बाधित्वा विनियोगः कर्त्तव्यः।

दशमाधिकरणमारचयति।

मन्द्रेति वसुमद्गेति द्वयं तर्पणभक्षयोः।
विभक्तव्यमुत शेषं तृप्तिसंयुक्तभक्षणे ॥ २३ ॥
लिङ्गादिभागो मैवं नो तृप्तिर्भक्षणतोऽन्यतः।
लिङ्गस्यासम्भवे वाक्यशेषात् सर्वोऽस्तु भक्षणे ॥ २४ ॥

मन्द्राभिभूतिरित्यादिर्जुषाणा सोमस्य तृप्यत्वित्यन्तो भागो दृष्टाया अरुचिमभिभवन्त्याः सोमं सेवमानाया

जिह्वाया स्तृप्तिं प्रकाशयति। वसुमद्गणस्येत्यादिर्भक्षया-मीत्यन्तो भागो भक्षण प्रकाशकः। तत्र पूर्ववल्लिङ्गेन विभज्य विनियोग इति चेत्। मैवम्। न खलु तृप्तिर्भक्षणादन्येन व्यापारेण जायते। किं तर्हि भक्षणानु निष्पादिनी हि सा। तथा सति कस्मिन्व्यापारे तृप्तिप्रकाशको भागो विनि-युज्येत। ततो लिङ्गेन विनियोगासम्भवाद् भक्षणमन्त्र-वाक्यस्य शेषस्तृप्तिप्रकाशकभागो भविष्यति। उपयुक्तश्च तत्रायं भागः। तृप्तिसहितभक्षणप्रकाशनेन पुरुषोत्साह-जननात्। तस्मान्मन्द्रादिः सर्वो भक्षणे विनियुज्यते।

एकादशाधिकरणमारचयति।

इन्द्रपीतस्येति भक्षमन्त्रांशः किमिहैन्द्रके।
केवलेऽन्यत्र वोहाच्च सर्वत्रोत यथा श्रुतम्॥ २५॥
ऐन्द्रएव समर्थत्वात् तूष्णीमेवान्यभक्षणम्।
ऊहो वान्येषु कर्मैक्येऽप्यस्त्यूहो भक्षभेदतः॥ २६॥
इन्द्रेण यस्मिन् सवने सोमः पीत इतीरणात्।
सवनस्थेषु सर्वेषु मन्त्रोऽनूहेन पठ्यताम॥ २७॥

भक्षमन्त्रे कश्चिदंश इन्द्रपीतस्येत्येवं विधः श्रूयते। तत्रेन्द्रेण पीतस्य सोमस्य शेषं भक्षयामीत्यर्थो भवति। तथा सत्यस्य मन्त्रस्येन्द्रप्रदानशेषभक्षणएव समर्थत्वात्तत्रै-वाय मन्त्रो विनियुज्यते। न तु मैत्रा वरुणादिशेषभक्षणे। तस्मादमन्त्रकमेव तद्भक्षणमित्येकः पूर्वपक्षः। इन्द्रपीत-स्येति पदस्यासमर्थत्वेऽपि मित्रावरुणपीतस्येत्येवमूहे सति सामर्थ्यं भविष्यति। नन्वाग्नेय यागस्य प्रकृतित्वा-त्तद्गत स्याग्नये जुष्टमिति मन्त्रस्य विकृतौ सौर्य्ये चरौ

सूर्याय जुष्टमित्येवमूहः क्रियते। इह तु कर्मैक्यान्नोह इति चेत्। न। कर्मभेद इव भक्षभेदेऽप्यूहितुं शक्यत्वादिति द्वितीयः पूर्वपक्षः। इन्द्रपीतस्येत्यत्र बहुव्रीहिर्द्रष्टव्यः। तत् पुरुषत्वे समासस्येति सूत्रेणान्तोदात्तत्वप्रसङ्गात। आद्युदात्तं चैतत्पद माम्नातम्। इन्द्रप्रातिपदिकं तु स्वत आद्युदात्तम्। तथा सति बहुव्रीहौ प्रकृत्या पूर्वपदमिति सूत्रेण पूर्वपद प्रकृति स्वरविधानात् समस्तं पदमप्या- द्युदात्तमेव संपद्यते। इन्द्रेण पीतः सोमो यस्मिन् सवन इति • विग्रहात्। सवन परत्वे सत्येन्द्रभक्षण एवेति नियन्तु मसमर्थत्वात् सर्वभक्षणेष्वनूहेनैवायं मन्त्रप्रयोक्तव्य इति राद्धान्तः।

द्वादशाधिकरणमारचयति।

ऊहपक्षे यदूह्यं तच्चिन्त्यते न्यायपञ्चके।

ऐन्द्रे हुतेऽथ तच्छेषे होत्रकैश्चमस स्थिते ॥ २८ ॥

सोमोऽभ्यक्षीय देवेभ्यो हुत्वा संभक्ष्यते तदा।

इन्द्रो न लक्ष्यो लक्ष्यो वा न शेषेऽन्यार्थता यतः ॥ २९ ॥

वक्रीत एव सवनो न पूर्वो देवतान्तरैः।

अत इन्द्रस्य सिद्ध्यर्थं लक्ष्योऽसावितरैः सह ॥ ३० ॥

पूर्वाधिकरणे योऽयमूहरूपो द्वितीयः पूर्वपक्ष स्तत्- प्रसङ्गात् कृत्वाचिन्तारूपेण न्यायपञ्चकेनोहविषयश्चिन्त्यते। मैत्रावरुण ब्राह्मणाच्छंसिपोत्रादय ऋत्विजो होत्रकाः। तेषां च सन्ति चमसाः। पात्र विशेषस्थिताः सोमरसाश्च- मसाः। तैर्वषट्कारानुवषट्कारयोर्होतव्यम्। चमसाना- मैन्द्रत्वा द्धोतुर्वषट्कारे प्रथममिन्द्रो हुतः। अनन्तरं

चमसस्थे हुतशेषे पुनः सोमान्तर मभ्युन्नीय दैवतान्तरेभ्यो होत्रका अनुवषट्कारे जुह्वति। तत्र, मैत्रावरुणो मित्रं वयं हवामहे इति मन्त्रेण मित्रावरुणौ यजति। ब्राह्मणाच्छंसीन्द्र त्वा वृषभं वयं इति मन्त्रेणेन्द्रं, यजति। पोता मरुतो यस्य हि क्षये इति मन्त्रेण मरुतो यजति। एवं हुत्वा पश्चात् सोमो भक्ष्यते। तस्मिन् भक्षणे मित्रावरुणपीतस्येति मन्त्र ऊहनीयः। तदानीमिन्द्र मित्रावरुणपीतस्येत्येवं मित्रावरुणाभ्यां सह नेन्द्र उपलक्षणीयः। कुतः इन्द्रशेषे पुनरभ्युन्नीतस्य तेन शेषेण सह मित्रावरुणाद्यर्थत्वे सति तस्य शेषस्येन्द्र संबन्ध राहित्यात्। पुनरुन्नीतस्यैवान्यार्थत्वं। न पूर्वस्येति चेत्। न। उन्नयनकाले मित्रावरुणाद्यर्थोऽयमिति संकल्पाभावात्। प्रदानकाले तु पूर्वशेषेण सहैव मित्रावरुणादिभ्यः प्रदीयते। तस्मादिन्द्रसंबन्ध राहित्यान्नेन्द्रो लक्षणीय इति प्राप्ते ब्रूमः। माभूत् संकल्पः। तथाप्युन्नयम करिष्यमाणं मैत्रावरुणादि यागार्थमेव। न तु तस्य पूर्वानुष्ठितेन्द्र यागार्थत्व संभवति। तस्मादुन्नीतो मित्रावरुणादि संबद्धशेष इन्द्रसंबद्ध एवेत्युभय भक्षणे मित्रावरुणादिभिः सहेन्द्रोऽप्युप लक्षणीयः।

त्रयोदशाधिकरणमारचयति।

हरिदेव शेष आदित्य स्थाल्या आग्रयणाभिधाम्।
स्थालीं प्राप्त स्ततः पात्नी वतस्य ग्रहणे सति ॥ २१ ॥
तद्भक्षणे हरिदेवाः किं सार्धं पात्नीवतेन ते।
उपलक्ष्या न वा पूर्वन्यायेनास्तूपलक्षणम् ॥ २२ ॥
अन्य आग्रयणात् पात्नीवतो नैतस्य विद्यते।

आकाङ्क्षा पूर्वदेवेषु पत्नीवानेव लक्ष्यते ॥ २३ ॥

ऐन्द्रवायवादयो द्विदेवत्याः । तेषां शेष आदित्यस्थाली-मागच्छति । पुनरपि तस्याः स्थाल्या आग्रयण स्थाली-मागच्छति । तस्या आग्रयणस्थाल्याः पात्नीवतो गृह्यते । तस्य पात्नीवतस्य भक्षण इन्द्रवाय्वादय उपलक्षणीयाः । पूर्वाधिकरणे यथा मित्रावरुणादिभिः सहेन्द्र उपलक्षितः । तद्वदिति प्राप्ते ब्रूमः । यदुपांशु पात्रेण पात्नीवत माग्र-यणाद्गृह्णातीत्याग्रयण पात्रस्या पादानत्व श्रवणात्ततो निः-सृतस्य सोमरसस्य तत्संबन्धेऽपेते सति पश्चात्पत्नी वद्देव-तायै ग्रहणं भवति । तथा सत्यत्यन्त भिन्नस्य पात्नीवतस्य पूर्वदेवेष्वाकाङ्क्षा नास्ति । पुनरभ्युन्नीतस्तु सोम ऐन्द्रशेषेण संसृष्टः । तस्य संसृष्टस्य भक्षणे मैत्रावरुणादीना मिवेन्द्र-स्यापि संबन्धो नापैतीति वैषम्यम् । तस्मात् पात्नीवत-भक्षण इन्द्रवाय्वादयो नोपलक्षणीयाः ।

चतुर्दशाधिकरणमारचयति ।

सह पत्नीवता त्वष्टा तद्ग्रहे लक्ष्यते न वा ।

सह त्वष्ट्रा पिबेत्युक्तेर्देवत्वात् सोऽपि लक्ष्यते ॥ २४ ॥

सहत्वमात्रं त्वष्टुः स्यान्न पातृत्व मग्रन्दनात् ।

चोदनाया अभावाच्च न देवोऽतो न लक्ष्यते ॥ २५ ॥

तस्मिन्नेव पात्नीवतग्रहे शेषभक्षणमन्त्रे पत्नीवता सह त्वष्टाप्युपलक्षणीयः । कुतः । त्वष्टुरपि तद्देवत्वात् । तच्च होम मन्त्रादवगतम् । अग्ना ३ इ पत्नीवन्सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहेत्यस्मिन् मन्त्रे पत्नीवन्तमग्निं प्रकृतान्तेन पदेन संबोध्य त्वष्ट्रा देवेन सहेत्यभिधानात् पातृत्वेन पत्नी-

वत इव त्वष्टुस्तद्देवत्वम्। ततः पत्नीवत्त्वष्टृपीतस्येत्युपलक्षण-मिति प्राप्ते ब्रूमः। पानकाले सहावस्थानमात्रं त्वष्टुः सजूरित्यनेन पदेन प्रतीयते। न तु पातृत्वम्। असंबोधितस्य त्वष्टुः पिबेत्यनेन शब्देन सामानाधिकरण्याभावात्। न च पातृसहभावमात्रेण पातृत्वम्। सहैव दशभिः पुत्रैर्भारं वहति गर्दभीत्यत्र पुत्राणां वोढृत्वादर्शनात्। आस्तां मन्त्रः। विधिबलात्त्वष्टुर्देवत्वमिति चेत्। न। पात्नीवत माग्रयणाद्गृह्णातीत्यत्र त्वष्टुरप्रतीतेः। तस्माद-देवत्वात्त्वष्टा नोपलक्षणीयः।

पञ्चदशाधिकरणमारचयति।

पत्नीवन्तस्त्रयस्त्रिंशद्देवास्तान् मादयेत्यमी।
लक्ष्या न वा याज्ययोक्ते र्देवत्वादुपलक्षणम्॥ २६॥
एकोऽग्निर्यजमानेन मादितोऽन्ये तु वह्निना।
अतोऽग्नेरेव देवत्वान्नान्येषामुपलक्षणम्॥ २७॥

तस्यैव पात्नीवतग्रहस्य याज्यायामग्निं सम्बोध्य पत्नीवन्नाम धारिण स्त्रयस्त्रिंशद्देवान् मादयेत्यभिधीयते। पत्नीवत स्त्रिंशतं त्रींश्च देवाननुष्वधमावह मादयस्वेति। अनुष्वधं मनुप्रदानम्। अत्र हूयमानेन सोमरसेन मादनीयत्वात् त्रयस्त्रिंशतां देवत्वम्। अतस्तेऽपि भक्षणे लक्षणीया इति चेत्। न। यजमानेन मादनीयस्याग्नेरेव तद्देवत्वात्। त्रयस्त्रिंशद्देवास्तु वह्निना माद्यन्त इति न तेषामत्र देवत्वम्। तस्मान्नोपलक्षणम्।

षोडशाधिकरणमारचयति।

सोमस्याग्न इति प्रोक्तानुवषट्कारदेवता।

लक्ष्या न वा देवतात्वात्सक्षा विंग्रहिलक्षणा ॥ ३८ ॥
प्रकृतौ विद्यमानोऽग्निरनुद्देश्यादलक्षितः।
उद्देश्येन्द्रो लक्षितोऽतो विकृतावपि तत्तया ॥ ३९ ॥

सोमस्याग्ने वीहीत्यनुयजतीति श्रूयते। तत्रानुवषट्कारस्य मान्त्रवर्णिकोऽग्निर्देवता। न च तत्रस्थि मतामिव वह्नेरदेवतात्वम्। मन्त्रे वह्निं संबोध्य सोमपातृत्वाभिधानात्। तस्मादग्निर्लक्षणीय इति चेत्। न। प्रकृतावलक्षितत्वात्। ऐन्द्रचमसः प्रकृतिः। इतरे विकृतिरूपाः। तथा ह्यैन्द्रस्य सोमो गृह्यते हूयते च। तेनैन्द्रेष्वेव सोमः। अनैन्द्रेषु सोम एव नास्तीति सर्वे सोमधर्मा ऐन्द्रेष्वेव। अनैन्द्रा अधर्मकाः। धर्मसाकाङ्क्षा चोदकेन सधर्मका इति विकृतित्वम्। गृह्यमाणस्य हूयमानस्य च सोमस्यैन्द्रत्वमिन्द्राय त्वा वसुमत इत्यादिग्रहणमन्त्रादवगम्यते। तस्य प्रकृतिभूतस्यैन्द्रचमसस्य भक्षणेऽग्निरनुवषट्कारदेवो नोपलक्षितः। कुतः। ग्रहणे तदुद्देशाभावात्। इन्द्रस्तूद्देश्यत्वादुपलक्षितः। एवं विकृतावप्युद्देश्यदेवानामेवोपलक्षणं न्याय्यम्। तस्मादग्निर्नोपलक्ष्यः।

समाख्याधिकरणमारचयति।

अमन्त्रपक्षमाश्रित्य कृत्वा चिन्तान्तरत्रयम्।
ऊहोऽस्ति नो वा सोऽस्त्यत्र विकृतौ तस्य सम्भवात् ॥ ४० ॥
सोमेनेति विधेः सर्वप्रदानेषु समत्वतः।
सविकारेऽप्यनूहोऽतोऽनैन्द्रे निर्मन्त्रभक्षणम् ॥ ४१ ॥

उक्ताभ्यः पञ्चभ्यः कृत्वाचिन्ताभ्यः पूर्वस्मिन्नेवाधिकरणे योऽयमनैन्द्रेष्वमन्त्रं भक्षणमित्येवं रूपः प्रथमः पूर्वपक्ष

स्तमेव मनसि निधाय पुनः कृत्वाचिन्तानां त्रयमभिधीयते। अनैन्द्रे पूर्ववरीत्या विकृतित्वेनोहसम्भवादस्त्यूह इति चेत्। न। अनैन्द्राणां विकृतित्वासम्भवात्। सोमेन यजेतेत्युत्पत्तिश्रुतः सोमः कर्मणोऽङ्गम्। न तु प्रदानविशेषस्य कस्यचिदङ्गम्। स एव सोमः सर्वप्रदानेष्वभ्यस्यत इति सर्वाणि समप्रधानानि। अत ऐन्द्राणामनैन्द्राणां च प्रकृतिविकृतिभावासम्भवान्नास्त्यत्रोहः। इन्द्राय त्वा वसुमत इत्यादिमन्त्रो लिङ्गादैन्द्रविषयोऽस्तु। नैतावता प्रकृतिविकृतिभावः सिध्यति। तस्मादुक्तमन्त्रस्य लिङ्गादैन्द्रमात्रविषयत्वादनैन्द्रेष्वमन्त्रकं भक्षणम्।

अष्टादशाधिकरणमारचयति।

समन्त्रकममन्त्रं वा स्यादैन्द्राग्न्यादि भक्षणम्।
ऐन्द्राग्नेऽप्यैन्द्रपीतत्वसम्भवात्तत् समन्त्रकम्॥ ४२॥
न पानमशरीरस्य युक्तं दानं तु मिश्रगम्।
मन्त्रोऽयं तु न मिश्रार्हस्तस्मादेतदमन्त्रकम्॥ ४३॥

यदेतदैन्द्राग्नं गृह्णातीति विहिते शेषभक्षणम्। तत्रेन्द्राग्निभ्यां पीतः सोम इन्द्रेणापि पीतो भवतीति लिङ्गेनैव विनियोगात् समन्त्रकं भक्षणमिति चेत्। मैवम्। नवमाध्याये वक्ष्यमाणदेवताधिकरणन्यायेनाशरीरस्येन्द्रस्य पानासम्भवात्। अथ पीतशब्देन दानं विवक्ष्येत। तदानीमिन्द्राय दत्तः सोम इति मन्त्रार्थो भवति। न चात्र यजमान इन्द्रमुद्दिश्य ददौ। किं त्विन्द्राग्नी उद्दिश्य। तस्माद्दानं मिश्रविषयम्। मन्त्रस्तु न मिश्रविषय इत्यमन्त्रकं भक्षणम्।

एकोनविंशाधिकरणमारचयति।

ऐन्द्रदानेऽपि गायत्रमात्रयुक्तेऽथवेतरैः।
छन्दोभिरपि युक्ते स्यादाद्यो मन्त्रे तथोक्तितः॥ ४४॥
द्वयोः समो बहुव्रीहि रेक छन्दास्तु न क्वचित्।
नाना छन्दस्यैन्द्र एव क्लृप्ताचिन्त्येयमीरिता॥ ४५॥
सवनार्थेन्द्र पीतोक्तिरित्युद्घाटन मीरितम्।
तेन सर्वप्रदानेषु मन्त्रपाठो यथास्थितः॥ ४६॥

तस्मिन्नेव भक्षमन्त्रे गायत्र छन्दस इन्द्रपीतस्येति श्रूयते। गायत्रमेव छन्दो यस्येति मन्त्रपदे समासाभिधानादेकछन्दो युक्त ऐन्द्रे सोमे भक्षमन्त्र इति चेत्। मैवम्। बहुछन्दोयुक्तेऽपि बहुव्रीहिः समानत्वात्। एकवारं परित्यज्य गायत्रं छन्दो यस्येति विग्रह सम्भवात्। एकछन्दस्कस्तु सोमो न क्वाप्यस्ति। तस्मान्नाना छन्दस्के सोम ऐन्द्रप्रदान एव मन्त्रः नान्यत्र। तदेवं क्लृप्ताचिन्तात्रयं समाप्तम्। द्विविध-क्लृप्ताचिन्तोद्घाटना तु प्रागेव सिद्धान्तिना दर्शिता।

इति माधवीये जैमिनीयन्यायमालाविस्तरे तृतीया-ध्यायस्य द्वितीयः पादः।

———०———

तृतीयपादस्य प्रथमाधिकरणमारचयति।

कर्त्तव्य मुच्चैः सामर्ग्भ्यामुपांशु यजुषित्यमी।
मन्त्राणां वाथ वेदानां धर्मा मन्त्रगता यतः॥ १॥
विध्युद्देशे मन्त्रवाचिशब्दाः प्रोक्ता ऋगादयः।
ऋग्वेदोऽग्ने; समुत्पन्न इत्युपक्रम वेदगौः॥ २॥

असंजातविरोधात्स्वदृष्ट्या तूपसंहृतेः।
नयने सति वाक्येन धर्माणां वेदगामिता॥ ३॥

ज्योतिष्टोमे श्रूयते। उच्चैर्ऋचा क्रियते। उपांशु यजुषा। उच्चैः साम्नेति। तत्र विधिवाक्यं मन्त्रवाचिना-मृगादिशब्दानां प्रयोगान्मन्त्रधर्मा उच्चैस्त्वादयः। तथा सति यजुर्वेदोत्पन्ना अध्वर्युणा प्रयुज्यमाना अप्यृच उच्चैरेव पठितव्या इति चेत्। मैवम्। असंजातविरोधित्वेन प्रबलमुपक्रममनुसृत्य तद्वशेनोपसंहारस्य नेतव्यत्वात्। उपक्रमे हि वेदशब्दः श्रुतः। त्रयो वेदा असृज्यन्ताग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात् सामवेद इति। अत उपक्रमगतवेदानुसारेण विध्युद्देशगतानामृगादिशब्दानां वेदपरत्वे सत्यृचोऽपि यजुर्वेदोत्पन्ना उपांशु पठनीयाः। नन्वपक्रमोऽर्थवादत्वाद् दुर्बलः। उपसंहारो विध्युद्देशत्वात् प्रबल इति चेत्। बाढम्। लब्धात्मनो हि विध्युद्देशस्य प्राबल्यम्। इह तु प्रथमतो वृत्तात्तादृक उपक्रमः। तदानीमलब्धात्मकत्वान्न तस्य बाधकत्वम्। पश्चात्तु वाक्यैकत्वाय तदविरोधिनैवात्मानं लभते। तदेवमुपक्रमोपसंहारैकवाक्यताबलेन निर्णया द्वाक्यविनियोगोऽयम्।

द्वितीयाधिकरणमारचयति।

यजुर्वेदस्य माधानं तदङ्गं साम तत्र किम्।
उच्चैरुपांशु वा गानमुच्चैः श्रौत्रप्रवृत्तितः॥ ४॥
उत्पत्तेर्विनियोगोऽत्र प्रबलोऽनुसृतिर्यतः।
मुख्यस्याङ्गेन कर्त्तव्या तस्माद्गानमुपांशुता॥ ५॥
आधानस्यात्र मुख्यत्वं गानस्य गुणताथवा।

विनियोगस्य मुख्यत्व मुत्पत्तेर्गुणतात्विह ॥ ६ ॥

आधाने वामदेव्यादि सामान्यङ्गत्वेन विहितानि। तत्र यद्यप्येतानि यजुर्वेदगतस्याधानस्याङ्गानि तथापि सामवेदे तेषामुत्पन्नत्वादुत्पत्तेश्च शीघ्रबुद्धिहेतुत्वात् सामवेदधर्मेण गेयानीति चेत्। न। विनियोगस्य प्रबलत्वात्। सच यजुर्वेदे श्रुतः। य एवं विद्वान्वामदेव्यं गायतीति। गुणेन हि मुख्यस्यानुसरणं न्याय्यम्। को गुणः किं मुख्यमिति चेत्। अत्राङ्गित्वा दाधानं मुख्यम्। सामगान मङ्गत्वेन गुणः। तथा सति धर्मः शिर इत्यादय आधानाङ्गभूता मन्त्रा यथोपांशु पठ्यन्ते। तथा सामान्य प्याधानानुसारेणोपांशु गेयानि। अथवा विनियोगोऽनुष्ठापक विधित्वान्मुख्यः। उत्पत्ति विधिरतथा विधत्वाद्गुणः। तस्मादत्र विनियोग वेदानुसारेणोपांशु गेयानि।

तृतीयाधिकरणमारचयति।

ज्योतिष्टोमो यजुः साम वेदयोरस्ति तत्र किम्।
उच्चैस्त्वमुत नोचैस्त्वं हेत्वभाना दनिर्णयः॥ ७॥
यजुष्यधिगतं द्रव्यदेवते तत्र तद्विधिः।
तद्वयात् स्वरनिर्णीत रुपांशु स्यादनुष्ठितिः॥ ८॥

ज्योतिष्टोमेन स्वर्गकामो यजेते त्येतद्वाक्यं वेदद्वये समाम्नातम्। तत्र को विधिः कश्च गुणविधानायानुवाद इति जिज्ञासाया नियामक हेता रप्रतिभानादेतस्य वेदस्य धर्मोऽनुष्ठेय इत्यनिर्णय इति चेत्। न। सोमद्रव्यस्येन्द्रवाय्वादि देवतायाश्च यजुर्वेदेऽधिगतत्वादङ्गबाहुल्य श्रवणाच्च तत्रैव विधिरित्युपांशु प्रयोगः।

चतुर्थाधिकरणमारचयति ।

न क्रत्वङ्गं प्रयाजादि क्रत्वङ्गं वा न चाङ्गता ।
प्रक्रियाया अमानत्वा न्नैराकाङ्क्ष्येण वाक्ययोः ॥ ९ ॥
प्रयाजादेः फलापेक्षा कथंभावेऽपि च क्रतोः ।
तेन प्रकरणाम्नानं तस्मादङ्गाङ्गितैव तयोः ॥ १० ॥

सार्द्धपादद्वये यानि विनियोजकत्वेनोक्तानि श्रुतिलिङ्गवाक्यानि तेभ्योऽतिरिक्तं प्रकरणनामकं किञ्चित् प्रमाणं न विद्मः पश्यामः। नहि पदतत्सामर्थ्यान्वये रसंसृष्टः कश्चिद् वेदभागः केनचिदाम्नायते । एकवाक्यता मापन्नो वाक्यसमूहः प्रकरण मिति चेत् । न । वाक्ययोः सतोः पश्चादेकवाक्यताया अभावात् । नहि दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत । समिधो यजतीत्यनयो र्वाक्ययोः परस्पराकाङ्क्षास्ति येन वाक्यैकवाक्यता कल्प्येत । तस्मान्न प्रयाजादीनां दर्शपूर्णमासाङ्गत्वमिति प्राप्ते ब्रूमः। प्रयाजादयः फलहेतवः पुरुषप्रवृत्तिरूपत्वात् । सेवादिवत् । दर्शपूर्णमासावुपकारकेण काङ्क्षौ । करणत्वात् । प्रदीपावक्षत चक्षुवत् । तथा सति किं प्रयाजादेः फलं किंवा दर्शपूर्णमासयोरुपकारण मित्याकाङ्क्षायां संपन्नं वाक्यैकवाक्यतारूपं प्रकरणम् । तेन प्रयाजादीना मङ्गत्वं प्रमीयते ।

पञ्चमाधिकरणमारचयति ।

दब्धिनामेति मन्त्रोऽङ्गमुपांशु यजतेर्नवा ।
साधारणत्वाल्लिङ्गादे र्मानाभावादनङ्गता ॥ ११ ॥
मन्त्राणां कर्मणां चात्र क्रमेणाम्नान मीक्ष्यते ।
प्रक्रियावत् क्रमो मानं यथासङ्ख्यं ततोऽङ्गता ॥ १२ ॥

क्रमः समानदेशत्वं पाठादर्थाच्च पाठतः।
यथासंख्यं सन्निधिश्च यथासंख्यमुदाहृतम् ॥ १३ ॥
शुन्धध्व मिति सान्नाय्य पात्राङ्गं सन्निधेर्मतम्।
पशुधर्मोऽर्थसादेश्या दग्नीषोमीयगो भवेत् ॥ १४ ॥

दर्शपूर्णमासयोः याजमाने मन्त्रकाण्डे कश्चिन्मन्त्र आम्नायते। दब्धिरस्य दब्धो भूयासममुं दभेयमिति। अस्य मन्त्रस्योपांशु याजाङ्गतायां श्रुतिवाक्ये न विद्येते। ब्राह्मणे विनियोग मनाम्नायार्थ विवरणस्यैवाम्नानात्। एतया वै दब्धया देवा असुरानदभ्नुवन्। तयैव भ्रातृव्यं दभ्नोतीति ब्राह्मणम्। दब्धिर्घातुकमायुधम्। आग्नेयाग्नीषोमीययोरप्यनिष्ट निवारकत्वाल्लिङ्गं साधारणम्। प्रकरणञ्च त्रयाणामेक मेव। ततो मानाभावादयं मन्त्रो नोपांशु याजाङ्ग मिति प्राप्ते ब्रूमः। आध्वर्यवे काण्ड आग्नेयोपांशुयाजाग्नी षोमीय कर्माणि क्रमेणाम्नातानि। याजमाने च काण्डे तद्विषया मन्त्राः क्रमेणाम्नाताः। अग्नेरहं देवयज्ययान्नादो भूयासं दब्धिरस्य दब्धो भूयास ममुं दभेयमग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासमिति। तत्र यथा वाक्यद्वयानुसन्धानसम्पन्नं प्रकरणं पृथक् प्रमाणम्। तथा प्रकरणद्वयानुसन्धान सम्पन्नः क्रमः कुतो न मानं स्यात्। न चास्य प्रकरणेऽन्तर्भावः। द्वयोर्वाक्ययोरिव प्रकरणयो रेकवाक्यत्वाभावात्। तस्मात् क्रमप्रमाणेन मध्यवर्त्तिनः उपांशु याजस्य मध्यवर्त्ती मन्त्रोऽङ्गम्। समानदेशत्वं क्रम इति क्रमस्य रूपम्। तच्च द्विविधम्। पाठकृतमर्थकृतं च। तत्र पाठकृतमपि द्विविधम्। यथासंख्यं सन्निधि-

श्चेति। तयोराद्यस्य दृष्टिमन्त्र उदाहरणम्। शुन्धध्वं दैव्याय कर्मणे इत्ययं मन्त्रः शोधनीयेषु वस्तुषु साधारणो भासते। तत्र सान्नाय्यपात्राणि कुम्भीशाखा पवित्रादीन्यनन्तरेषु मातरिश्वन इत्यादिमन्त्रेष्ववभासन्त इति सन्निधिना तत्पात्रप्रोक्षणे शुन्धध्वमिति मन्त्रो विनियुज्यते। अनुष्ठानसादेश्यात् पशुधर्माणामग्नीषोमीयाङ्गत्वम्। तदेवं क्रमस्य त्रैविध्यं द्रष्टव्यम्।

षष्ठाधिकरणमारचयति।

वेदत्रयोक्ता धर्माणा ऋत्विग्भिः सङ्गति स्त्रिभिः।
अनियत्या नियत्या वा नियतिर्नानिरूपणात्॥ १५॥
हौत्रत्वादि समाख्यानं नियतेर्गमकं स्वतः।
निर्बाधं चान्यवत्तच्च तेनात्र विनियोजकम्॥ १६॥

याज्यापुरोऽनुवाक्यापाठादयो धर्मा ऋग्वेदे प्रोक्ताः। दोहन निर्वापादयो यजुर्वेदे। आज्यस्तोत्र पृष्ठादयः सामवेदे। तत्रास्यैवैते धर्मा इति नियामकस्य दुर्निरूपत्वाद्येन केनाप्यृत्विजा यः कोऽपि धर्म इच्छया संगच्छत इति चेत्। मैवं हौत्रमाध्वर्य्यव मौद्गात्र मिति समाख्यानेन नियति र्बोध्यते। न च समाख्यानस्य बाधकं किञ्चित् पश्यामः। तस्मादबाधकत्व बाधितत्वयो रप्रामाण्य कारणयोरभावा च्छ्रुति लिङ्गादि पञ्चकवत् प्रमाणेन समाख्यानेन धर्मा व्यवस्थाप्यन्ते।

सप्तमाधिकरणमारचयति।

ऐन्द्राग्नपश्योयतां वाह्नि रितीन्द्राग्न्यो विकल्पनम्।
समुच्चयो वात अन्त एवाग्निः केवलोऽथवा॥ १७॥

विकल्पः श्रुतिलिङ्गाभ्यां गुणात्वस्या समुच्चयः।
श्रुतिः शब्दानुसारेति शब्दएकोऽत्र लिङ्गतः॥ १८।
शक्ति वत्सा श्रुतिः शीघ्रा लिङ्गं श्रुत्यनुमापकम्।
नैराकाङ्‌क्ष्यात्मके बोधे श्रुत्याम्नौ केवले स्थितिः॥१८॥

, ऐन्द्र्या गार्हपत्य मुपतिष्ठत इति श्रूयते। कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुष इत्यसावृगैन्द्री। तत्रेन्द्रस्य प्रकाशनात्। भो इन्द्र कदाचिदपि घातको न भवसि। किं त्वाहुतिं दत्तवते यजमानाय प्रीयस इत्यर्थः। तत्रेन्द्रप्रकाशन सामर्थ्यरूपाल्लिङ्गान्मन्त्रस्येन्द्रविषयक्रियासाधनत्वं गम्यते। यद्यसौ मन्त्र इन्द्रप्रधानक्रियायाः साधको न भवेत्। तदानीमनेन मन्त्रेणेन्द्रप्रकाशनं व्यर्थं स्यात्। तस्मादेतन्मन्त्रकरणक क्रियां प्रतीन्द्रः प्रधान मित्येतादृशवुद्ध्युत् पादनं लिङ्गविनियोगः। कासौ क्रियेति विशेष जिज्ञासायामैन्द्र्योपतिष्ठत इत्यनेनाविरुद्धपदद्वयरूपेण वाक्येनोपस्थानक्रियायां पर्य्यवसान क्रियते। तथा सत्यैन्द्र मन्त्रेणेन्द्रमुपतिष्ठेते त्ययमर्थः पर्य्यवस्यति। तथा गार्हपत्य मित्यनया द्वितीयान्तपदरूपया श्रुत्या गार्हपत्यस्य प्राधान्यं गम्यते। तच्च गुणभूतां यत् किञ्चित् करणक्रिया मन्तरेण न सम्भवति। ततस्तादृशीं काञ्चित् क्रियां प्रति गार्हपत्यः प्रधानमित्येतादृशवुद्ध्युत्पादनं श्रुतिविनियोगः। ऐन्द्र्योपतिष्ठत इतिपदद्वयेन मन्त्रविशेषक्रियाविशेषयोः पर्य्यवसानं भवति। तथा सत्यैन्द्रेण मन्त्रेण गार्हपत्यमुपतिष्ठत इत्यर्थो भवति। तदेवं श्रुतिलिङ्गयोर्विरोधे सति प्रमाणत्वाविशेषाद्व्रीहि यववद्विकल्प इत्येकः पूर्व-

पक्षः। इन्द्रगार्हपत्ययोः प्रधानत्वाविशेषादुपस्थानस्य च गुणत्वात् प्रति प्रधानं गुणावृत्तिरिति न्यायेनोपस्थाना वृत्त्या श्रुतिलिङ्गयोः समुच्चय इति द्वितीयः पूर्वपक्षः। श्रुतिर्विनियुञ्जाना वस्तुसामर्थ्यमनुसृत्यैव विनियुङ्क्ते। अन्यथा वह्निना सिञ्चेद्वारिणा दहेदित्यपि विनियुञ्ज्यात। अत उपजीव्यत्वेन लिङ्गस्य प्रबलत्वादिन्द्र एव मन्त्रेणोपस्थेय इति तृतीयः पूर्वपक्षः। ऐन्द्रमन्त्रस्य गार्हपत्ये मुख्यवृत्त्या शक्त्यभावेऽपि गुणवृत्त्या शक्तिरस्तीति निवेशन इत्यस्मिन् उदाहरणे पूर्वमेव दर्शितम्। तथा सति सामर्थ्याभावकृत प्रतिबन्धाभावान्निर्विघ्ना श्रुतिः शीघ्रं विनियुङ्क्ते लिङ्गन्तु विलम्बेन। मन्त्रपदान्यादौ स्वाभिधेय मर्थं प्रतिपादयन्ति। तत ऊर्ध्वं मन्त्रस्य सामर्थ्यं निरूप्यते। पश्चात् सामर्थ्य वशात् साधनत्ववाचिनी प्राधान्यवाचिनी श्रुतिः कल्प्यते। सा च श्रुतिर्मन्त्रेणेन्द्रमुप तिष्ठेतेति विनियुङ्क्ते। तथा सति प्रत्यक्ष श्रुतौ स्वाभिधेय प्रतिपादन-विनियोगयोर्मध्यवर्त्तिनौ सामर्थ्यनिरूपण श्रुति कल्पन-व्यापारौ न स्त इति प्राबल्यात्तया लिङ्गं बाध्यते। न च प्रत्यक्ष श्रुति विनियोग वेलाया मलब्धात्मकत्वेनाप्राप्तं लिङ्गं कथं बाध्येतेति शङ्कनीयम्। भविष्यत् प्राप्तिप्रतिबन्धस्यैवात्र बाधत्वात्। श्रुत्या विनियुक्तस्यैव मन्त्रस्य पुनर्विनियोगा काङ्क्षाया अनुदयाद्विनियोजकं लिङ्गं कथं प्राप्स्यति। तस्माद्गार्हपत्योपस्थाने मन्त्रः प्रत्यक्षश्रुत्या विनियुज्यते।

अष्टमाधिकरणमारचयति।

स्योनं त इति पूर्वार्द्धं तस्मिन् सीदेति चोत्तरम्।

सदने सादने चायं सर्वोऽप्यर्थे व्यवस्थिते ॥ २० ॥
तच्छब्दादेक वाक्यत्वे भवेद्दाधः श्रुतिं प्रति ।
लिङ्गस्य सुविप्रकृष्टत्वा द्वाक्यबाधे व्यवस्थितिः ॥ २१ ॥
उदाहृतिरियं वाक्यबाधे न त्वैन्द्रात्यसौ ।
बाधादूर्द्ध्वं निरर्थत्वा दप्रामाण्य प्रसङ्गतः ॥ २२ ॥

दर्शपूर्णमासयोः श्रूयते । स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि । तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमान इति । भोः पुरोडाश तवं समीचीनं स्थान करोमि । तच्च स्थानं घृतस्य धारया सुष्ठु सेवितुं योग्यं कल्पयामि । भो व्रीहिसारभूत त्वं समाहित मनस्क स्तस्मिन् समीचीने स्थान उपविश्य तत्र स्थिरो भवेत्यर्थः । तत्र तस्मिन्नित्यनेन तच्छब्देन प्रकृतवाचिना पूर्वोत्तरार्द्धयो रेकवाक्यत्वे सति मन्त्रद्वयाभावात् सर्वोऽप्ययं मन्त्रः स्थानकरणस्याङ्गम् । तत्र विनियोजिका श्रुतिरेवं कल्पनीया । सर्वेणानेन मन्त्रेण स्थानं कर्त्तव्यमिति । तथा सर्वेण मन्त्रेण पुरोडाशः स्थापनीय इत्यपि कल्पनीया । सदनाङ्गत्ववत् प्रतिष्ठापनाङ्गत्वस्यापि तद्वाक्यबोधितत्वात् । तथा सति सदन स्थापनयोरस्य मन्त्रस्य विकल्पः समुच्चयो वा स्वेच्छया भविष्यतीति प्राप्ते ब्रूमः । यद्येतत्पूर्वोत्तरार्द्धयोः परस्परान्वयेन सम्पन्नमेकं वाक्यं तदेतदुत्तरार्द्धस्य सदनकरणे शक्तिमकल्पयित्वा कृत्स्नं मन्त्रं सदने विनियोक्तुं नार्हति । तथा पूर्वार्द्धस्य स्थापने शक्तिमकल्पयित्वा न तत्र प्रभवति । अतो लिङ्गकल्पन व्यवधानेन वाक्यं श्रुतिं प्रति विप्रकृष्यते । प्रत्यक्षन्तु लिङ्गद्वयं सन्निकृ-

ष्यते। तथा सति लिङ्गेन वाक्यबाधादर्धद्वय मुभयोर्व्यवस्थितम्। नन्वैन्द्र्या गार्हपत्यमित्यत्रापि पदद्वयान्वयरूपस्य वाक्यस्य विनियोजकत्वप्रतीतेर्लिङ्गवाक्यविरोधाय तदेवोदाह्रियतामिति चेत्। न। तत्र लिङ्गेन वाक्ये बाधिते सत्येकैक पदस्यार्थप्रत्यायकत्वाभावेन श्रुतिकृतविनियोगस्याप्यसिद्धेरप्रामाण्य मेवोदाहृतस्य प्रसज्येत। इह तु महावाक्ये बाधितेऽप्यवान्तर वाक्ययोरर्थप्रतीतौ लिङ्गविनियोगः सिध्यतीत्येतदेवोदाहरणम्।

नवमाधिकरणमारचयति।

अग्नीषोमाविदं हव्य मजुषेता मितीरितात्।
अपच्छिद्येदमित्यादि सर्वशेषो भवेन्न वा ॥ २३ ॥
प्रक्रियातो भवेन्नैवं प्रक्रियान्तरिता त्रिभिः।
वाक्यं ह्यन्तरितं तेन भवेत्प्रकरणाद्वलि ॥ २४ ॥

सूक्तवाके श्रूयते। अग्नीषोमाविदं हविरजुषेता मवीवृधेतां महो ज्यायोऽक्राताम्। इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्रातामित्यादि। तत्र देवतावाचक मग्नीषोमादिपद पौर्णमास्यादिकाले यथादेवतं विभज्य प्रयोक्तव्य मिति पूर्वपादे निर्णीतम्। यस्त्विदं हविरित्यादिक मवशिष्टं पदजातं तदग्नी षोममन्त्र गतमप्यमावास्याया मग्नीषोम पदपरित्यागेन पठनीयम्। एवमिन्द्राग्नी मन्त्रगतमपि पौर्णमास्यामिन्द्राग्नी पदपरित्यागेन पठनीयम्। तथा सत्येषां मन्त्रभागानां सर्वशेषत्वबोधको दर्शपूर्णमास प्रकरणपाठोऽनुगृह्यत इति प्राप्ते ब्रूमः। अग्नीषोम मन्त्रशेषस्येन्द्राग्नी पदान्वयाश्रवणात् प्रकरणेन

प्रथमं तदन्वयरूपं वाक्यं कल्पनीयम्। तेन वाक्येनेन्द्राग्नी-प्रकाशने सामर्थ्यरूपं लिङ्गं कल्प्यते। तच्च लिङ्गमनेन मन्त्रभागेनेन्द्राग्निविषया क्रियानुष्ठेयेति विनियोजिकां तृतीयाश्रुतिं कल्पयति। ततः प्रकरण विनियोगयोर्मध्ये त्रिभिर्व्यवधानं भवति। अग्नीषोमपदान्वयरूपं तु वाक्यं श्रूयमाणत्वाल्लिङ्ग श्रुतिभ्यामेव व्यवधीयते। तस्माद्वाक्येन प्रकरणस्य बाधितत्वात्तच्छेष स्तत्रैव व्यवतिष्ठते।

दशमाधिकरणमारचयति।

राजसूयेऽभिषेच्याख्ये यागे ये देवनादयः।

तच्छेषास्तेऽखिलार्था वा तच्छेषास्तस्य सन्निधेः ॥२५॥

राजसय कथम्भावानुवृत्तेः सर्वशेषता।

कल्प्याकाङ्क्षाभिषेच्यस्य प्रक्रिया प्रबला ततः ॥ २६ ॥

राजसूये पश्विष्टि सोम यागा बहवः प्रधानभूताः। तत्राभिषेचनीयाख्यः कश्चित् सोमयागः। तस्य सन्निधौ देवनादयः श्रूयन्ते। अक्षैर्दीव्यति राजन्यं जिनाति शौनः शेपमाख्यापयतीति। जिनाति जयति। बह्वृच-ब्राह्मणे समाम्नातं शुनः शेप विषयमुपाख्यानं शौनः-शेपम्। तत्र सन्निधि बलाद्देवनादयोऽभिषेचनीयाङ्गमिति चेत्। मैवम्। राजसूयस्य कथंभावाकाङ्क्षाया मनु-वृत्तायां विहिता देवनादयः प्रकरणेन राजसूयशेषाः। राजसूयश्च बहुयागात्मक इति तत्रत्यसर्वयाग शेष-त्वम्। न चाभिषेचनीयस्य काचिदाकाङ्क्षा देवना-दिष्वस्ति। ज्योतिष्टोम विकृतित्वेनातिदिष्टैः प्राकृता-ङ्गैरेव तदाकाङ्क्षानिवृत्तेः। सन्निहित विधिवला दाका-

ङ्गीत्याप्यत। इति चेत्। अतएवाकाङ्क्षारूपमवान्तर प्रकरणमाद्‌ौ परिकल्प्य तद्द्वारा वाक्यलिङ्गश्रुतिकल्पनया सन्निधिर्विप्रकृष्यते। राजसूयाकाङ्क्षारूपं तु महाप्रकरणं क्लृप्तत्वादेकया कक्षया सन्निकृष्यते। तस्मात् प्रकरणेन सन्निधिबाधात् सर्वशेषा देवनादयः।

एकादशाधिकरणमारचयति।

शुन्धध्वमिति मन्त्रोऽयं पौरोडाशिकशोधने।

साचाय्यपात्रशुद्धौ वा प्रथमोऽस्तु समाख्यया॥ २७॥

पौरोडाशिक मित्यत्र प्रकृत्या तद्धितेन वा।

सन्निध्यनुमितः कल्प्यः क्लृप्तत्वाच्चरमः क्रमात्॥ २८॥

शुन्धध्वं दैव्याय कर्मणे इत्ययं मन्त्रः पौरोडाशिकमिति याज्ञिकैः समाख्याते काण्डे पठितत्वात् समाख्यया पुरोडाश काण्डोक्तानामुलूखल जुह्वादीनामपि शोधनेऽङ्गमिति चेत्। मैवम्। पौरोडाशिक मिति समाख्यायां प्रकृतिः पुरोडाशमात्र मभिधत्ते। तद्धित प्रत्ययस्य काण्डम्। न चैतावता कृत्स्नपुरोडाशपात्राणां मन्त्रसन्निधि प्रत्यक्षो भवति। किन्त्वर्थापत्त्या कल्प्यते। यद्द युक्तः सन्निधि र्न स्यात्। तदा मन्त्रप्रतिपादक ग्रन्थस्य पौरोडाशिकसामाख्या न स्यात्। न ह्यसन्निहितानामिषेत्वादि मन्त्राणा माग्नेयकाण्डा समाख्या भवति। सन्निहितानां तु युञ्जानः प्रथमं मनः इत्यादि मन्त्राणां भवत्येषा। तस्मात् काण्ड समाख्यया सन्निधिं परिकल्प्य तत् सन्निध्यन्यथा नुपपत्त्या परस्पराकाङ्क्षारूपं कृत्स्नपात्रप्रकरणं कल्पयित्वा तद्द्वारा वाक्यलिङ्गश्रुतीः कल्पयित्वा तया श्रुत्या विनियोग इति

समाख्याविप्रकर्षः। सान्नाय्यपात्राणां शोधनमन्त्रसन्निधिस्तु प्रत्यक्षः। इष्मावर्हिः सम्पादनस्य मुष्टिनिर्वापस्य चान्तरालं सान्नाय्यपात्राणां देश उक्तः। मन्त्रश्चेष्मावर्हिर्निर्वापविषययो मन्त्रानुवाकयो मध्यमेऽनुवाके पठ्यते। तेन च प्रत्यक्षसन्निधिना प्रकरणादीनां चतुर्णामिव कल्पनात् सन्निधिः सन्निकृष्यते। तस्मात् क्रमेण समाख्यां बाधित्वा सान्नाय्यपात्रशोधनशेषो मन्त्र इत्ययं चरमो पक्षोऽभ्युपेयः।

द्वादशाधिकरणमारचयति।

बाधो न युक्तो युक्तो वा प्राप्तप्राप्तोर्न युज्यते।
अप्रवृत्तं प्रसक्तं यद्विया तस्यास्तु बाध्यता ॥ २९ ॥
प्रमाणतः प्रसक्तस्य बाधो दाशमिकोऽत्र तु।
विभ्रमेण प्रसक्तस्य तस्मादप्राप्त बाधनम् ॥ ३० ॥

प्राप्तस्य प्रवृत्तिरत्नीति न तन्निवारणं शक्यम्। अप्राप्तस्य बाधाविषयत्वेनावस्थानमेव नास्ति। तस्मान्न युक्तो बाध इति चेत्। मैवम्। बुद्ध्या विषयीकृतस्य वारयितु शक्यत्वात्। न चैतदत्यन्तं प्रवृत्तम्। अनुष्ठानरूपफलपर्यवसानाभावात्। नाप्यत्यन्तमप्रवृत्तम्। तद्बुद्धेरुत्पन्नत्वात्। अतो नोक्तदोषद्वयम्। दशमे चोदकप्रमाणेनावबुद्धोऽर्थो बाध्यत इति प्राप्तबाधः। इह तु पूर्वप्रमाणविरुद्धैरुत्तरोत्तरैः प्रमाणाभासैरवबुद्धस्येत्यप्राप्त बाधः।

त्रयोदशाधिकरणमारचयति।

तिस्र एवाहि साह्ने स्युरहीने द्वादशोत्पत्तः।
ज्योतिष्टोमे द्वादशत्वमथवाहर्गणे भवेत् ॥ ३१ ॥

अस्तु प्रकरणाद्यो नाहीनत्वं विरुध्यते।
प्रकृतित्वान्न केनापि हीनोऽतोऽत्र विकल्प्यताम् ॥३२॥
साङ्गाङ्गित्वाहीनसंज्ञां रूढ़ां चाहर्गणे भवेत्।
षष्ठी श्रुत्या द्वादशत्वं प्रक्रियातोऽपकृष्यताम् ॥ ३३ ॥

ज्योतिष्टोमप्रकरणे श्रूयते। तिस्र एव साङ्कस्योपसदो द्वादशाहीनस्येति। एकेनाह्ना निष्पाद्यत्वात् साङ्को ज्योतिष्टोमः। दीक्षादिवसादूर्द्धं सोमाभिषवदिवसात् पूर्वं कर्त्तव्या होमा उपसदः। तासां द्वादशत्वं प्रकरणबलात् ज्योतिष्टोमे निविशते। अहीनशब्दश्च तस्मिन्नेव कल्पते। ज्योतिष्टोमस्य निखिल सोमयाग प्रकृतित्वेन सर्वेषामङ्गानां तत्रोपदेशे सति तदुपदेश विकल विकृतीनामिव हीनत्वात्। अतो द्वादशत्वत्रित्वयो विकल्प इति प्राप्ते ब्रूमः। आवृत्तसोमयागरूपा द्विरात्रादिरहर्गणः। तस्मिन् अहीनशब्दो रूढ़ः। यौगिकत्वे तु न हीन इति विग्रह्य समासे कृते सत्ययज्ञादि शब्दवदाद्युदात्तः स्यात्। अध्यादात्तस्त्वाम्नायते। रूढ़िश्च विग्रह निरपेक्षत्वा च्छीघ्रबुद्धिहेतुः। अतो ज्योतिष्टोमवाचिनः साङ्क शब्दाङ्गिन्नेयमहीन संज्ञा ज्योतिष्टोमाङ्गिन्न महर्गणमभिधत्ते। तस्मिन्नहर्गणे षष्ठीश्रुत्या तदुक्तं द्वादशत्वं निवेश्यते। तत्सिद्धञ्च प्रकरणादिदमपनेतव्यम्।

चतुर्दशाधिकरणमारचयति।

युवं हीति हयोः कर्वोर्बहूनां चेत इत्यमूम्।
कुर्य्यात् प्रतिपदं ज्यतिष्टोमे साहर्गणेऽथवा ॥ ३४ ॥
एकस्य मन्त्रिराहित्ये द्वाभ्यां बहुभिरेव वा।

ज्योतिष्टोमस्य कार्य्यत्वात् प्रकृतेऽत्रैव सा भवेत् ॥ २५ ॥
यजमानस्य नानात्वं साक्षाद्द्विक्रतिषु श्रुतम्।
उत्कृष्य प्रतिपत्तेन कुलायादिषु नीयताम् ॥ २६ ॥

ज्योतिष्टोमे श्रूयते। युवं हिस्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्य्यादेते असृग्रमिन्दव इति बहुभ्यो यजमानेभ्य इति। स्तोत्रस्योपक्रमे पठनीयामृचं प्रतिपच्छब्दोऽभिधत्ते। सा चोदाहृता प्रतिपत् प्रकरण बलाज्ज्योतिष्टोमे निविशते। न च तत्र यजमान द्वित्वबहुत्वयोरसम्भवः। एकस्य यजमानस्य द्रव्यालाभादिना तदशक्तौ नित्यकर्म्मणः परित्यागासम्भवेन द्वाभ्यां बहुभिर्वा तस्यावश्यकर्त्तव्यत्वादिति प्राप्ते ब्रूमः। यजमानद्वित्वं कुलायनामके यज्ञे साक्षादाम्नातम्। एतेन राजपुरोहितौ सायुज्यकामौ यजेयातामिति। यजमान बहुत्वं मन्नेष्वाम्नातम्। चतुर्विंशति परमाः सत्त्वमासीरन्निति। ततो द्विशब्दबहुशब्दरूपाभ्यां श्रुतिभ्यां प्रकरण बाधित्वा कुलायादिषु यथोक्त प्रतिपदोरुत्कर्षः कर्त्तव्यः। न चाशक्तावपि यजमानद्वित्वबहुत्वे सम्भवतः। अशक्तेन स्वीकृतस्य पुरुषान्तरस्य प्रतिनिधित्वे यजमानत्वाभावात्। यजमानस्य प्रतिनिधिर्नास्तीति वक्ष्यते। यद्यन्यः पुरुषः स्वयमेव प्रवर्त्तते। तदानीं स्वकीयमेव प्रयोग कुर्य्यात्। नत्वशक्तस्य साहाय्यमाचरेत्। तस्मात्क्रियमाणस्य यजमानैकत्वस्य कालादिवदनुपादेयाङ्गत्वेन त्यक्तुमशक्यत्वान्न ज्योतिष्टोमे यजमानस्य द्वित्वबहुत्वे सम्भवतः।

पञ्चदशाधिकरणमारचयति।

संयाजयन्ति जाघन्या पत्नीरेतत् पशावुत ।
दर्शादौ तत्पशौ युक्तं जाघन्याः समवायतः ॥ ३७ ॥
जाघनी नाम भागोऽसौ दर्शादौ समवैति हि ।
नोत्क्रष्टव्यं न संस्कार्य्या साधनत्वात्तृतीयया ॥ ३८ ॥

दर्शपूर्णमासप्रकरणे श्रूयते । जाघन्या पत्नीः संयाजयन्तीति । जाघनी पशोः पुच्छम् । पत्नीशब्दोऽत्राहुतिचतुष्टयात्मकस्य कर्म्मणो नामधेयैकदेशः । अत एव श्रूयते । पञ्च प्रयाजा इज्यन्ते चत्वारः पत्नीसंयाजा इति । तत्र तृतीयाहुतौ देवपत्नीनां देवतात्वात् तद् द्वारा कर्मनाम्नः पत्नीसंयाज शब्दस्य प्रवृत्तिः । तत्र जाघनो मुद्दिश्य पत्नीसंयाजसंस्कारो विधीयते । जाघनी च पशौ समवेता । न तु दर्शपूर्णमासयोः । अतः प्रकरणादुत्कृष्य पशौ निवेशन मिति प्राप्ते ब्रूमः । जाघनी शब्देन पशोर्भागोऽभिधीयते । स च दर्शपूर्णमासयोः पश्व यागत्वाभावेऽपि क्रयादिना सम्पादयितुं शक्यते । न चात्र पशौ विद्यमानाया जाघन्याः पत्नी संयाजैः संस्कार्य्यत्वम् । तृतीयया साधनत्वावगमात् । तस्मान्न प्रकरणादुत्कर्षः ।

षोड़शाधिकरणमारचयति ।

संत्वद्येद्दीर्घसोमे तत् प्रकृतौ विकृतावुत ।
दीर्घस्य सोम इत्युक्तेः प्रकृतावस्तु तद्गनम् ॥ ३९ ॥
सामानाधिकरण्यस्य षष्ठीतो बलवत्त्वतः ।
दैर्घ्य युक्तोक्थ्य संस्थादावुत्कर्षोऽन्यत्र बाधनात् ॥ ४० ॥

ज्योतिष्टोमे श्रूयते । दीर्घसोमे संतृद्ये धृत्या इति । सोमयागविशेषो दीर्घसोमः । तस्मिन् सोमाभिषवाधारयो-

रधिषवणफलकयोः संतर्दनं कार्य्यम्। अन्योन्यवियोगेन शैथिल्यं मा भूदिति। दृढ़संश्लेषः संतर्दनम्। तदेतत् प्रकरणबलात् प्रकृतौ निविशते। न च तत्र दीर्घत्वानुपपत्तिः। दीर्घस्य सोम इत्येवं दीर्घशब्दस्य यजमानविशेषणत्वेनाप्युपपत्तेरिति प्राप्ते ब्रूमः। षष्ठी समासात् कर्मधारयो बलवानिति वक्ष्यते। तथा सति दीर्घत्वं सोमस्य धर्मः। न तु यजमानस्य। नन्वेवमपि प्रकृति भूतस्य सोमस्येष्टिपश्वपेक्षया दीर्घत्वमस्त्येवेति चेत्। न। सोमशब्देनैव तदवगतौ• दीर्घशब्दस्य वैयर्थ्यात्। न हीष्टिपश्वपेक्षया ह्रस्वः कश्चित् सोमोऽस्ति यस्य व्यावृत्तये दीर्घशब्दः प्रयुज्येत। तस्मात् प्रकृतिरूपं ह्रस्वं सोमं व्यावर्त्तयितुमयं दीर्घशब्दः। विकृतिषूकथ्यादिषु ग्रहाधिक्येन दीर्घत्वम्। द्विरात्रादिषु चावृत्या दीर्घत्वम् तस्माद् वाक्येन प्रकरणं बाधित्वा विकृतिषु तन्निवेशः। प्रकृतौ तु दीर्घशब्दस्य बाधः पूर्वमुक्तः। संतर्दनबाधश्च साक्षाच्छ्रूयते। हनू वा एते यज्ञस्य यदधिषवणे न संतृणत्त्यसंतृण्णे हि हनू इति तस्मान्न प्रकृतौ निवेशः।

सप्तदशाधिकरणमारचयति।

न प्रवृञ्ज्यात् दाद्य यज्ञे क्रतौ सोऽनुष्ठितावुत।
प्रतिषेधः क्रतौ युक्त उक्ता ह्यस्याद्ययज्ञता ॥ ४१ ॥
प्रवृणक्त्युपसद्भिः प्रागिति वाक्यात् क्रतौ विधेः।
आद्य प्रयोगे प्राथम्यां न्निषेधः क्वचिदेव सः ॥ ४२ ॥

ज्योतिष्टोमे प्रवर्ग्याख्यं कर्म प्रकृत्य श्रूयते। न प्रथमयज्ञे प्रवृञ्ज्यादिति। सोऽयं प्रतिषेधो ज्योतिष्टोम क्रतौ

द्रष्टव्यः। न तु तदीयप्रथम प्रयोगे। कुतः। एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोम इति तस्य प्रथमयज्ञत्वाभिधानादिति चेत्। मैवम। पुरस्तादुपसदां प्रवर्ग्यं प्रवृणक्तीति वाक्येन क्रतौ प्रवर्ग्यस्य विहितत्वात्। न च विधिनिषेध वाक्ययोः समानबलत्वा दनिर्णयः। निषेधवाक्ये प्रथमशब्देन निषेधस्य प्रयोगपरत्वनिर्णयात्। प्रथम द्वितीयादि शब्दाः क्रियाया आवृत्तौ मुख्याः तत्संबन्धाद्वस्तुषूपचर्य्यन्ते। प्रथममध्येतव्यत्वात् प्रथमं काण्डम्। तदनन्तरमध्येतव्यत्वाद् द्वितीयं काण्डम्। एवमादावुत्पन्नत्वात् प्रथमः पुत्रः। तदनन्तरमुत्पन्नत्वाद्द्वितीयः। तथा सति प्रयोगक्रियाया आवृत्तिविशेषे प्रथमशब्दो मुख्यः। तदावृत्तिविषयतया यज्ञे लाक्षणिकः। त्वत्पक्षेऽपि क्रतौ मुख्यो यज्ञशब्दः प्रयोगे लाक्षणिकः स्यादिति चेत्। बाढ़म्। तथाप्यसंजातविरोधिनि लाक्षणिकत्वकल्पनादरमुत्तरपदे तत्कल्पनम्। तस्मात् ज्योतिष्टोमस्य प्रथमप्रयोगे प्रवर्ग्यनिषेधः। ननु सप्त संस्थायुक्तस्य ज्योतिष्टोमस्य प्रथमसंस्थारूपोऽग्निष्टोमः। तत्रायं निषेधः पर्य्यवस्यति। विधिश्च तत्र श्रूयते। अग्निष्टोमे प्रवृणक्तीति। एवं तर्ह्यधिकारिभेदेन विधिनिषेधयो र्व्यवस्थास्तु। तथाहि श्रूयते। कामं तु योऽनूचानः स्यात्तत्र प्रवृञ्ज्यादिति तस्मादनूचान व्यतिरिक्त कर्त्तृकेऽग्नि ष्टोमस्य प्रथमप्रयोग एवायं निषेधः।

अष्टादशाधिकरणमारचयति।

प्रविष्टभागः पूषेति प्रकृतौ विकृतावुत।

इष्टि प्रकरणादेव प्रकृतौ विनियुज्यते ॥ ४३ ॥

संतर्दनादिवद्‌वाक्या द्विकृतौ पूषसम्भवात्।

सिद्धस्य पुनरुप्युक्तिरधिकस्य विवक्षया ॥ ४४ ॥

दर्शपूर्णमासप्रकरणे श्रूयते। तस्मात् पूषा प्रपिष्ट-भागोऽदन्तको हीति। तत्र दन्तरहितस्य पूष्णः पिष्टभागत्वं संतर्दनप्रतिपदादिवत् सिद्धम् तथाप्युत्तराधिकरणे तस्मि-न्नेव विषये विशेषं वक्तुमिह प्रस्तूयते।

एकोनविंशाधिकरणमारचयति।

चरौ पशौ पुरोडाशे चराववोत पेषणम्।

विशेषादर्शनादेतत् सर्वेष्वपि विधीयते ॥ ४५ ॥

प्राप्तत्वान्न पुरोडाशे हृदाद्याकारनाशनात्।

न पशौ पारिशेष्येण चरावेव हि पेषणम् ॥ ४६ ॥

पौष्णं चरु मनु निर्वपेदिति चरुर्विहितः। पौष्णं श्याममालभेतान्नकाम इति पशुविधिः। पशुमालभ्य पुरो-डाशं निर्वपतीत्येतच्चोदकेन पौष्णपशौ प्राप्तम्। तत्र यद्देवत्यः पशुस्तद्देवत्यः पुरोडाश इति न्यायेन पुरोडाशस्य पूषा देवता। तत्र पूर्वोक्तं पेषणं विषयीकृत्योच्यमानाः संशयपूर्वोत्तरपक्षा विस्पष्टाः।

विंशाधिकरणमारचयति।

द्विदेवकेऽपि किं पिंष्यादुत पूषैकदेवके।

द्विदेवकेऽपि तत्पूष्णः सत्वात् पेषणभागिनः ॥ ४७ ॥

देवतो विफलत्वेन पेषणं न प्रयोजयेत्।

यागस्य तत्त्वे भागोक्तौ न यागान्तरगामि तत् ॥ ४८ ॥

राजसूये श्रूयते सोमा पौष्णं चरुं निर्वपत्यैन्द्रापौष्णं

चरुमिति। तत्र द्विदेवत्येऽपि चरौ पिष्टभाजः पूष्णः सत्त्वात् पेषणं पूषार्थं कर्त्तव्यमिति चेत्। तन्न वक्तव्यम्। किं पेषणस्य देवता प्रयोजिका किंवा यागः। नाद्यः। यागमन्तरेण केवलदेवता फलजनकत्वाभावेन पेषणं प्रयोक्तुं न प्रभवति। पौष्णस्य यागस्य पेषणप्रयोजकत्वे तु तत्पेषणं द्विदेवत्ये यागान्तरे गन्तुं नार्हति। पूषा प्रपिष्टभाग इत्यत्र यागो न श्रुत इति चेत्। मैवम् भागशब्दान्यथानुपपत्त्या यागस्य कल्प्यत्वात्। न हि देवतात्वमन्तरेण पिष्टद्रव्यभाक्त्वं सिध्यति। सति च देवतात्वे द्रव्यदेवतयोर्लाभाद् यागः कल्प्यते। तस्मादेकदेवत्यस्य यागस्य पेषणप्रयोजकत्वान्न द्विदेवत्ययागे पेषणमस्ति।

इति माधवीये जैमिनीयन्यायमालाविस्तरे
तृतीयाध्यायस्य तृतीयः पादः।

---

चतुर्थपादस्य प्रथमाधिकरणमारचयति।

निवीतन्तु मनुष्याणां विधिर्वैषोऽर्थवादकः।
अपूर्वत्वात् प्रकरणान्न, क्रतावो विधीयते॥ १
प्राप्तं निवीतं मर्त्येषु प्रायेणैतस्य दर्शनात्।
उपवीत विधावेकवाक्यत्वादर्थवादता॥ २॥

दर्शपूर्णमासप्रकरणे श्रूयते। निवीतं मनुष्याणां प्राचीनावीतं पितृणामुपवीतं देवानामुपव्ययते देवलक्ष्ममेव तत्कुरुत इति। निवीतस्य पूर्वं मानान्तरेणा प्राप्तत्वात् विधेयत्वमभ्युपेतव्यम्। तच्च निवीतं मनुष्याणामिति षष्ठ्या पुरुषार्थत्वेन विधीयत इत्येकः पूर्वपक्षः। अस्मिन् पक्षे

मनुष्यसंबन्धो द्विविधः। सुवर्णधारणवत् सर्वपुरुषसंबन्ध इत्येकः प्रकारः। उपवीत प्राचीनावीतयोः क्रतुप्रवेश-रहितयोः स्वतन्त्रदैविकपैतृक कर्मणोरपि दर्शनात्तत्-साहचर्येण स्वतन्त्रे आचार्यातिथ्यादिमनुष्यविषये कर्मणि निवीत मित्यपरः प्रकारः। प्रकरणबलात् प्रयाजादिवद्-यागधर्म इति द्वितीयः पूर्वपक्षः। अस्मिन् पक्षे मनुष्य-ग्रहणं कर्तृसंबन्धानुवादः। षष्ठीश्रुतिप्रकरणयो रवि-रोधादुभयावलम्बनेन क्रतुसंबन्धिमनुष्यधर्म इति पक्षा-न्तरमुदेति। तच्च द्विविधम्। लोहितोष्णीषादिवदृत्विग्-धर्म इत्येकः प्रकारः। क्रतावेव यन्मनुष्यप्रधान कर्मान्वाहार्य-दानादि तद्धर्मत्वे सत्युपवीतसाहचर्यमप्यनुगृह्यत इत्यपरः प्रकारः। सर्वथा निवीतं नार्थवाद इति प्राप्ते ब्रूमः। अत्र प्रतीयमानं निवीतादिकं वासोविषयम्। न तु त्रिवृत्-सूत्र विषयम्। अजिनं वासो वा दक्षिणत उपवीयेत्यनेन मदृष्टत्वात्। वस्त्रस्य च निवीतं सौकर्याय प्राप्तम्। प्राचो-नावीतोपवीतयो रवश्य मेकस्मिन् पार्श्वे वस्त्रमधः पतेत्। अतः प्राप्तेऽर्थे मनुष्याणामिति षष्ठीश्रुतिर्न विधायिका। न च प्रकरणात् क्रत्वङ्गत्वेन विधिः। वाक्यभेदप्रसङ्गात्। उपवीतं तावद्विधीयते। अन्यथा देवलक्ष्ममेव तत्कुरुत इति प्रशंसाया वैयर्थ्यापत्तेः। तस्मिंश्चोपवीत विधावर्थ-वादत्वेन निवीतप्राचीनावीतयोरेकवाक्यत्वसम्भवे पृथग्-विधान मयुक्तम्। निवीतप्राचीनावीते मनुष्य पितृ विषयत्वा द्दैविके कर्मण्ययोग्ये। उपवीतं तु योग्यमिति व्यतिरेकमुखेन स्तावकं निवीतम्। तस्मादर्थवादः।

द्वितीयाधिकरणमारचयति ।

सर्वार्थमुत दर्शार्थं मुपव्ययत इत्यदः ।

सर्वार्थमग्निहोत्रे स्यादुपवीतीति लिङ्गतः ॥ ३ ॥

दर्शाद्यर्थं प्रकरणाल्लिङ्गं स्यात् सिद्धिरन्यथा ।

दोहं मृताग्निहोत्रस्य स्तोतुमेतदनूदितम् ॥ ४ ॥

यज्ञोपवीती हि देवेभ्यो दोहयतीत्येवमग्निहोत्रे यज्ञोपवीतस्य सिद्धवदनुवादेन लिङ्गेन सर्वकर्मार्थमुपवीतमिति चेत् । न । लिङ्गस्यान्यथोपपत्तेः । मृताग्निहोत्रं तस्मिन्दिनेऽन्येन हूयते । तत्र प्राचीनावीती दोहयेदिति विधानस्य स्तुतये यज्ञोपवीतीत्याद्यनूदितम् । अतो लिङ्गाभासेन बाधासम्भवात् प्रकरणाद्दर्शपूर्णमासाङ्ग मुपवीतम् ।

तृतीयाधिकरणमारचयति ।

उपव्यानेऽनुवादो वा विधिर्वाद्यो यतः स्मृतौ ।

प्राप्त मेव मपूर्वत्वात् क्रतौ लेटा विधीयते ॥ ५ ॥

नित्योदकी नित्ययज्ञोपवीतीति स्मृत्या प्राप्तस्योपव्ययत इत्ययमनुवाद इति चेत् । मैवम् । पुरुषार्थस्य प्राप्तावपि क्रत्वर्थस्य प्राप्त्यभावात् पञ्चमलकारेण दर्शपूर्णमासाङ्गतया विधीयते ।

चतुर्थाधिकरणमारचयति ।

उपवीती हि देवेभ्यः पुरोदृष्टो द्वयं विधिः ।

वादो वास्यान्यतोऽप्राप्तेरपूर्वार्थो विधीयते ॥ ६ ॥

द्वियच्छब्दद्वयाद्वादः स्मृत्युपव्यानतो द्वयम् ।

सम्प्राप्तं दक्षिणायत्र प्राचीनावीतयोः स्तुतिः ॥ ७ ॥

प्रेताग्निहोत्रे श्रूयते । प्राचीनावीती दोहयेद् यज्ञोप-

वीती हि देवेभ्यो दोहयतीति। ये पुरोदञ्चो दर्भास्तान् दक्षिणाग्रान् स्तृणीयादिति। तत्र मृतस्याग्निहोत्रे दोहने प्राचीनावीतं दर्भास्तरणे दक्षिणाग्रत्वं च यथा विधीयते। तथा मरणात् पूर्वं जीवतोऽग्निहोत्रे दोहनाङ्गमुपवीतं दर्भास्तरणाङ्गमुत्तराग्रत्वं च विधातव्यम्। देवेभ्यो यज्ञोपवीती दोहयेत्। मरणात् पुरा ये दर्भास्त उदञ्चः कार्या इति वचनव्यक्तिः। न ह्येतदुभयमन्यतः प्राप्तम्। तस्मादपूर्वार्थो विधीयतामिति चेत्। मैवम्। हि शब्देन यच्छब्देन चोभयानुवादत्वप्रतीतेः। अस्ति च तयोः प्राप्तिः। अग्रवन्त्युदगग्राणीति स्मृत्या सर्वस्मिन् दैविके कर्मणि प्राप्तमुत्तराग्रत्वमनूद्य विधेयं दक्षिणाग्रत्वं स्तूयते। तथा दर्शपूर्णमासयोरुपव्ययत इत्यनेन विधिना प्राप्तं दैविकमुपवीतमनूद्य विधेयं प्राचीनावीतं स्तूयते। तस्मादनुवादः।

पञ्चमाधिकरणमारचयति।

धारयत्युपरिष्टाद्धि देवेभ्य इति संस्तवः।

विधिर्वाद्या श्रुतेः पित्र्ये प्रोक्तायाः पूर्ववत् स्तुतिः॥८॥

ऊर्ध्वं विधारणं प्राप्तं समिधो नान्यमानतः।

अतो हि शब्द संत्यागादपूर्वार्थो विधीयते॥ ८॥

प्रेताग्निहोत्र एवं श्रूयते। अधस्तात् समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयतीति। तत्र पित्र्यं हविर्हीतुं हस्ते धारयन् यदा मन्त्रं पठति। तदानीं स्रुग्दण्डस्याधस्तात् समिधं धारयेदिति यद्विधीयते तदेतद्दैविकेनोपरि धारणेन स्तूयते। हि शब्देन पूर्वावि-

करण इवानुवादत्वप्रतीतेरिति चेत्। मैवम्। दैविके हविषि स्रुग्दण्डस्योपरि समिद्धारणस्या पूर्वार्थत्वेन विधातव्यत्वात्। अनुवादत्वगमको हि शब्दोऽसंभवादुपेक्षणीयः।

षष्ठाधिकरणमारचयति।

दिशं प्रतीचीं मनुजा व्यभजन्ते त्वसौ विधिः।
बाद्यो वाथ पुराकल्पः स्तुत्यर्थो विधिमर्हति॥ १०॥
प्राचीन वंश वाक्याङ्गे विधावस्यैक वाक्यतः।
दिग्विभागोऽर्थवादोऽयमुपवीत निवीतवत्॥ ११॥

ज्योतिष्टोमे श्रूयते। प्राचीनवंशं करोति देवमनुष्या दिशो व्यभजन्त प्राचीं देवा दक्षिणां पितरः प्रतीचीं मनुष्या उदीचीं रुद्रा यत् प्राचीनवंशं करोति देवलोकमेव तद्यजमान उपावर्त्तत इति। अत्र देवादीनां कर्मानधिकारान्न तत्र विधिशङ्का। मनुष्याः प्रतीचीं विभजेयु रित्येवं विधिः स्यात्। कुतः। पुराकल्परूपेणार्थवादेन स्तूयमानत्वात्। पूर्वपुरुषाचरितत्वाभिधानं पुराकल्पः। व्यभजन्तेत्यनेन भूतार्थवाचिना तदभिधीयते। तस्माद्विधिरिति पूर्वपक्षः। यस्य मण्डपविशेषस्योपरि वंशाः प्रागग्रा भवन्ति स प्राचीनवंशः। तद्विध्येकवाक्यतावगमादर्थवादः। सायंकालीनाग्न्यादौ प्रतीची प्राप्ता।

सप्तमाधिकरणमारचयति।

परुषि छिन्न मित्युक्त्या बर्हिषस्तु समूलताम्।
घृतं देवं मस्तु पितॄ मित्युक्त्या नवनीतकम्॥ १२॥
यो विदग्धः स इत्युक्त्या पुरोडाशस्य पक्वताम्।

स्तौति पूर्वोत्तरौ पक्षौ योजनीयौ निवीतवत्॥ १३॥

दर्शपूर्णमासयोः पिण्डपितृयज्ञे श्रूयते। यत्पर्वाषि दितं तद्देवानां यदन्तरा तन्मनुष्याणां यत्समूलं तत्पितॄणां समूलं बर्हिर्भवति व्यावृत्त्या इति। परुषि पर्वणि। दितं खण्डितम्। तथा ज्योतिष्टोमे श्रूयते दीक्षार्थभ्यङ्गे। घृत देवानां मस्तु पितॄणां निष्पक्वं मनुष्याणां तद्वा एतत् सर्वदेवत्यं यन्नवनीतं यन्नवनीतेनाभ्यङ्क्ते सर्वा एव देवताः प्रीणातीति। मस्तु दधिभवं मण्डम्। निष्पक्वं शिरसि प्रक्षिप्तं मौषद्विलीनं नवनीत तक्रं वा। दर्शपूर्णमासयोः पुरोडाश श्रपणे श्रूयते। यो विदग्धः स नैर्ऋतो योऽशृतः स रौद्रो यः शृतः स दैव स्तस्मादविदहता श्रपयितव्यः स दैवत्वायेति। विदग्धोऽत्यन्तं पक्वः। अशृतोऽपक्वः। तत्र बर्हिषि समूल छेदस्याभ्यङ्गे नवनीतस्य पुरोडाशे यथोचित पाकस्य च विधेयतया सर्वमर्थवादः स्तावकम। निवीतविचारस्यैवाय प्रपञ्चः। एव यत्पूर्ण तन्मनुष्याणा मित्यत्रापि द्रष्टव्यम्। तच्च चातुर्मास्येषु महापितृयज्ञे पितृभ्योऽग्निष्वात्तेभ्या मन्थमित्यत्र वतसरहिताया अभिवानीशब्दाभिधेयाया धेन्वा दुग्धे पिष्टं प्रक्षिप्य क्रियमाणं मन्थने श्रूयते। यत्पूर्णं तन्मनुष्याणामुपर्यर्धो देवानामर्ध पितृणामर्ध उपमन्थत्यर्धो हि पितृणामिति। तत्र पात्रस्याधोभागरूपेणार्धेन परिमिते दुग्धे मन्थनस्य कर्त्तव्यत्वात् सोऽर्थोविधीयते। स च पूर्णादिवाक्येन स्तूयते।

अष्टमाधिकरणमारचयति।

अनृत न वदेद्वैधः पुंधर्मो वानुवादगीः।

सक्रतौ पुंसि शुद्धे वा क्रतौ यद्वा विधिः क्रतौ ॥ १४ ॥
अनृतोक्तेः पुमर्थत्वात् तन्निषेध स्तथाविधः ।
स्मार्त्तानुवादः पुंक्रत्वोः श्रुतिप्रक्रिययोर्बलात् ॥१५॥
नाख्याते पुरुषासक्तेः क्रताविव प्रयाजवत् ।
सत्योक्ति नियमा दन्यः संयोगोऽतः क्रतौ विधिः ॥१६॥

दर्शपूर्णमासप्रकरणे श्रूयते । नानृतं वदेदिति । तत्र पुरुषधर्मत्वेनायं प्रतिषेधो विधीयते । कुतः । प्रतियोगिनोऽनृतवदनस्य पुरुषधर्मतया तन्निषेधस्यापि पुरुषधर्मत्वेनैव विधातव्यत्वात् । वदेदित्याख्यातं तावत् कर्तृवाचकम् । तेनाख्यातेन कर्त्तुः प्रतीयमानत्वात् । पुरुषस्याख्यात प्रत्ययवाच्यत्वे सति प्रकृत्यर्थस्य वदनस्य पुरुषधर्मत्वं युक्तम् । प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः । तयोस्तु प्रत्ययः प्राधान्येनेति शाब्दिकैरुद्घोषणाद्वदनस्य पुरुषधर्मत्वे तन्निषेधस्यापि पुरुषधर्मत्वं युक्तम् । अन्यथा भिन्नविषयत्वे बाधकत्व न स्यात् । तस्मात् पुरुषवाचकाख्यातश्रुत्या प्रकरणं बाधित्वा पुरुषार्थोऽयं प्रतिषेधो विधीयते । अस्त्येव स्मार्त्तः प्रतिषेध इति चेत् । तर्हि तस्यैतच्छ्रुतिवाक्यं मूलमस्तु । तस्मात् पुरुषार्थ इत्येकः पूर्वपक्षः । आख्यात श्रुतेः प्रकरणस्य चाविरोधाय क्रतुयुक्तपुरुष धर्मोऽस्तु । न ह्येतद्वाक्यं स्मृतिमूलम । भिन्नविषयत्वात् । स्मृति श्रोपनयन मारभ्यामरणं पुरुषस्यानृतं प्रतिषेधति । तन्मध्यपतितत्वात् । क्रतावपि स्मार्त्तो निषेधः प्राप्त एव । तत उभयार्थोऽप्ययं प्रतिषेधो न न विधीयते । किन्त्वनूद्यत इति द्वितीयः पूर्वपक्षः । आख्यातेन भावना विधीयते । कर्त्ता तु तदविनाभूतोऽर्थात् प्रती

यते। अतः श्रुत्यभावात् केवलेन प्रकरणेन प्रयाजादिवद्द्वारा-द्दुपकारकः क्रतावेव निषिध्यते। न च तत्रापि विधीयते। किन्तु सार्वत्रिकस्य निषेधस्य क्रतावपि प्राप्तत्वादनूद्यत इति तृतीयः पूर्वपक्षः। सत्यमेव वदेन्नानृतमिति योऽयं स्मार्त्तनियमरूपः पुरुषार्थः संयोगस्तस्मादयमन्यः क्रत्वर्थः संयोगः। अतोऽप्राप्तत्वाद्विधीयते। एतद्व्यतिक्रमे क्रतोरेव वैगुण्यम्। न तु पुरुषस्य प्रत्यवायः। अतोऽत्र क्रतुगामि प्रायश्चित्तम्। पुरुषार्थे नियमातिक्रमे तु पुरुषस्यैव प्रत्यवायः। न क्रतोर्वैगुण्यम्। तत्र स्मार्त्तं प्रायश्चित्त मिति विशेषः।

नवमाधिकरणमारचयति।

जञ्जभ्यमानधर्मोक्तिः पुंसो धर्मः क्रतोरुत।

वाक्यादाद्यः प्रक्रियया द्वितीयोऽस्त्वविरुद्धया॥ १७॥

दर्शपूर्णमास प्रकरणे श्रूयते। प्राणा वै दक्षोऽपानः क्रतुस्तस्माज्जञ्जभ्यमानो ब्रूयान्मयि दक्षक्रतू इति प्राणा-पानावेवात्मन् धत्त इति। गात्र विनामेन विदारितमुखः पुरुषो जञ्जभ्यमानः। तस्य वाक्यान्मन्त्रोक्तिः प्रतीयते। वाक्यञ्च प्रकरणाद्बलीयः। तस्मात् केवलं पुंधर्म इति चेत्। मैवम्। क्रतावपि जञ्जभ्यमानपुरुषसम्भवेन वाक्यप्रकरणयो र्विरोधाभावे सत्युभाभ्यां क्रतुयुक्त पुरुष-संस्कारत्वावगमात्।

दशमाधिकरणमारचयति।

विप्रायावगुरेन्नेति क्रत्वर्थो वा पुमर्थता।

फलवत्क्रतुसान्निध्यात् क्रत्वर्थः पूर्वमन्त्रवत्॥ १८॥

यातनापरिहारस्य निषेधफलतोचिता।

निषेधोऽयं पुमर्थत्वात् प्रक्रियातोऽपकृष्यताम् ॥ १९ ॥

दर्शपूर्णमासप्रकरणे श्रूयते। यो ब्राह्मणायावगुरेत्तं शतेन यातयात्तस्माद्ब्राह्मणाय नावगुरेतेति। तत्र यथा पूर्वाधिकरणे मन्त्रपाठस्य फलरहितस्य फलवति क्रतावङ्गत्वं प्रकरणेनावगम्यते। एवमत्रापि ब्राह्मणावगुरानिषेधस्य क्रत्वङ्गत्वमिति चेत्। न। वैषम्यात् पूर्वत्र ह्यात्मनि प्राणापानधारणं मन्त्रोच्चारणफलं न सम्भवति। तस्य प्रागेव सिद्धत्वात्। इह त्ववगोरणे शतसंवत्सरयातना-मुपन्यस्यावगोरणनिषेधाद्यातना परिहारस्य निषेधफलत्व-मुचितम्। तस्मान्निषेधस्य केवलपुरुषार्थतया प्रकरणादुत्-कर्षो युक्तः।

एकादशाधिकरणमारचयति।

न संवदेत मलवद्वाससेत्यपि पूर्ववत्।

पुमर्थः स्यात् क्रतौ क्वापि संवादस्याप्रसक्तितः ॥२०॥

दर्शपूर्णमासप्रकरणे श्रूयते। मलवद्वाससा न संवदे-दिति। अस्य निषेधस्य प्रकरणात् क्रत्वङ्गत्वमिति चेत। मैवम्। अप्रसक्तप्रतिषेधप्रसङ्गात्। यस्य व्रत्येऽहनि पत्न्यनालम्भुका भवति तामपरुध्य यजेतेति रजस्वलाया निःसारणेन क्रतौ तत्संवादस्याप्रसक्तिः। तस्मात् केवल-पुरुषार्थस्यास्य प्रकरणादुत्कर्षः।

द्वादशाधिकरणमारचयति।

हिरण्यं वर्णवद्धार्य्यं क्रत्वङ्गं भरणं भवेत्।

हिरण्य संस्कृतिर्वात्र वर्णोवोत पुमर्थता। २१ ॥

वैदिकत्वात् क्रतुस्थया तदङ्गं कर्मकारके।

प्राधान्यात् संस्कृतिर्वर्णो गुणोऽस्तु विधिलाघवात् ॥२२॥
अनारभ्य श्रुतत्वेन नियता न क्रतुस्मृतिः।
अतः पुमर्थता स्वर्गः कल्प्योऽन्यद्वास्तु रात्रिवत् ॥ २३ ॥

अनारभ्य श्रूयते। तस्मात् सुवर्णं हिरण्यं भार्य्यं सुवर्ण एव भवति दुर्वर्णोऽस्य भ्रातृव्यो भवतीति। तत्र यदेतच्छोभनवर्णोपेतहिरण्यधारणं तस्य वैदिकक्रियारूपत्वेन क्रतुस्मारकत्वात् क्रत्वङ्गसाधारणमित्येकः पक्षः। क्रत्वङ्गत्वेऽपि नारादुपकारकम्। किन्तु क्रतुगतं हिरण्यं धारणेन संस्क्रियते। भार्य्यमित्यत्र ण्यत् प्रत्ययस्य कर्मणि विहितत्वेन कर्मकारकस्य हिरण्यस्य प्राधान्यावगमादिति द्वितीयः पक्षः। वर्णविशिष्ट धारणविधाने गौरवाद् धारणसहितं हिरण्य मनूद्य शोभनवर्णमात्रं विधेय मिति तृतीयः पक्षः। त्रेधापि क्रत्वर्थो विधिः। न पुरुषार्थ इति प्राप्ते ब्रूमः। यद्दि क्रतुप्रकरणे श्रुतं तस्यास्ति नियमेन क्रतुस्मारकत्वम्। इदं त्वनारभ्याधीतम्। न चात्र हिरण्यं जुह्वादिवत् क्रतावव्यभिचरितं येन क्रतुस्मृति र्नियम्येत। ननु संस्कार्य्यत्वान्यथानुपपत्त्या क्रतु प्रवेशः स्यात्। न हि धारणेन संस्कृतस्य हिरण्यस्य लौकिकः कश्चिदुपयोगोऽस्तीति चेत्। न। क्रतावप्युपयोगाभावात्। क्रतूपयोगोऽपि कल्प्यत इति चेत्। न। क्रतूपयोगित्वेन संस्कार्य्यत्वम्। तेन च क्रतूपयोग इत्यन्योन्याश्रयत्वान्न च कर्मकारकत्वात् संस्कार्य्यत्वम्। परसमवेत॰ क्रियाफलशालित्वमात्रस्य कर्मलक्षणत्वात्। अतः क्रतौ नियन्तुमशक्यत्वात् पुरुषार्थमिदं धारणम्। न चात्र फलाभावः। विश्वजिन्न्यायेन स्वर्गस्य कल्प्यत्वात्।

अथवा रात्रिसत्त्रे यथा वाक्यशेषेणार्थवादेन श्रुता प्रतिष्ठा फलत्वेन कल्पिता। तथात्रापि सुवर्ण एव भवति। दुर्वर्णोऽस्य भ्रातृव्य इत्यर्थवादगतं फलमस्तु। तस्मात् पुरुषार्थो धारणविधिः।

त्रयोदशाधिकरणमारचयति।

येनेत्सेत्कर्मणा तत्र जयाहोमेऽखिलार्थता।
वैदिकेष्वेव वा सर्वशेषोऽसंकोचकत्वतः॥ २४॥
होम आहवनीये स्यात् कृष्यादिषु न सोऽस्ति हि।
तेनानारभ्य पाठेऽपि वैदिकेष्वेव ते जयाः॥ २५॥

अनारभ्य श्रूयते। येन कर्मणेत्सेत्तत्र जयाञ्जुहुयाद्राष्ट्रभृतो जुहोत्यभ्यातानाञ्जुहोतीति। ईत्सेद्वृद्धिमिच्छेत्। चित्तं च स्वाहेत्यादयो जयाः। ऋताषाडित्यादयो राष्ट्रभृतः। अग्निर्भूतानामित्यादयोऽभ्यातानाः। तत्र वैदिककर्मणेव लौकिककृष्यादिकर्मणा य्यर्द्धेरिष्यमाणत्वात् संकोचे कारणाभावाज्जयादिहोमः सर्वशेष इति चेत्। मैवम् यदाहवनीये जुह्वति तेन सोऽस्याभीष्टः प्रीत इति वाक्येन होममुद्दिश्याहवनीयविधानात् कृष्यादौ तदभावाद्वैदिकेष्वेव जयादिहोमः।

चतुर्दशाधिकरणमारचयति।

अश्वप्रतिग्रहेष्टिस्तु दातुरित्यभिधास्यते।
दानद्वये लौकिके वा वैदिके वा भवेदियम्॥ २६॥
अविशेषाद्द्वयोर्यद्वा न देयः कैसरीत्यतः।
निषेधाल्लौकिकात्तत्र प्रायश्चित्तिरियं भवेत्॥ २७॥
न जलोदरहेतुत्वं प्रमितं लौकिके क्वचित्।

वैदिके तु श्रुतं तस्मात्तत् प्रायश्चित्तयेऽत्र सा ॥ २८ ॥

इदमाम्नायते। यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेदिति। अत्र प्रतिग्रहशब्दो दानपर इत्यनन्तरमेव वक्ष्यते। तत्र विशेषाश्रवणात् लौकिकवैदिकदानयोरुभयोरप्येषाविष्टि रित्येकः पक्षः। न केसरिणो ददातीति स्मृत्या मित्रदायादादिभ्यः प्रीत्या क्रियमाणं लौकिकमश्वदानं निषिद्धम्। तदनुष्ठाने प्रायश्चित्तरूपेय मिष्टिरिति द्वितीयः पक्षः। वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णातीत्यश्वदाने जलोदरव्याधिरूपो दृष्टदोषो वरुण ग्रहवाक्ये नोच्यते। न च लौकिकस्याश्वदानस्य तद्धेतुत्वम् प्रमितम्। वैदिकस्य तु जन्मान्तरविषयं दोषश्रवणम्। अतो वैदिकदाने सेष्टिः प्रायश्चित्तम्। अस्ति हि वैदिक मश्वदानम्। वड़वा दक्षिणेत्यादि श्रवणात्।

पञ्चदशाधिकरणमारचयति।

यावतः प्रतिगृह्णीयाद्‌श्वां स्तावत्य इष्टयः।
प्रतिगृहीतु र्दातुर्वा स्यादाद्योऽस्तु यथाविधि ॥ २९ ॥
असंजात विरोध्यर्थ वादाद्दातुः प्रजापतेः।
इष्टिः श्रुता ततो दातु र्णिजर्थेऽपि विधिं नयेत् ३०॥

पूर्वोदाहृते वाक्ये प्रतिगृह्णीयादिति विधिपदश्रवणात् प्रतिग्रहीतुरिति चेत्। न। उपक्रमरूपेणार्थवादेन दातुस्तदिष्टिप्रतीतेः। उपक्रमश्चैव श्रूयते। प्रजापतिर्वरुणायाश्वमनयत्स स्वां देवतामार्च्छत्स पर्य्यदीर्य्यत स एतं वारुणं चतुष्कपाल मपश्यत्तं निरवपत्ततो वै वरुणपाशादमुच्यतेति। अनयद्दत्तवान्। स च दाता प्रजापतिः।

स्वकीयां वरुणदेवतां जलोदर रोग प्रदां प्राप्तवांस्तेन च रोगेण ग्रस्तः स प्रजापति र्विदीर्णो भूत्वा रोग परिहारार्थेष्टिं कृत्वा रोगादमुच्यतेत्यत्र दातुरिष्टिरित्यवगम्यते। असंजात विरोध्युपक्रमानुसारेण विधायक पदमपि प्रतिग्राहयेदित्येव मन्त्रभाविन णिजर्थतया व्याख्येयम्।

षोडशाधिकरणमारचयति।

सोमवामिचरुर्लोके वेदे वेन्द्रिय संचयः।

दृष्टदोषो लौकिकेऽतो वमने विहितश्चरुः॥ २१॥

अदोषो वमनायैव लोके पानं श्रुतौ पुनः।

जरणाय ततो वान्ति दोषशान्त्यै भवेच्चरुः॥ २२॥

इदमाम्नायते। सौमेन्द्रं चरुं निर्वपेच्छ्यामाकं सोमवामिन इति। तत्र लौकिके सोमवमने विहितोऽयं चरुः। कुतः। वि वा एष इन्द्रियेण वीर्य्येण व्यृध्यते यः सोमं वमतीति दृष्टदोषमुपन्यस्य तच्छान्तये चरुविधानादिति चेत् मैवम्। लोके धातुसाम्यार्थिना वमनायैव सोमस्य पाने सति वमनस्य दोषहेतुत्वाभावात्। वेदे तु हिन्व मे गात्रा हरिव इत्यनेन मन्त्रेण जरयितुं सोमः पीयते। तत्र वमन प्रायश्चित्तार्थोऽयं चरुः।

सप्तदशाधिकरणमारचयति।

ऋत्विजो वमनेऽप्येष कर्त्तुरेवोत यजनात्।

विशेषस्याग्रिमो मैवं कर्त्तुरेव निरूपितः॥ २३॥

ईदृशस्य सोमस्य वमने चरुरिति विशेषस्याभावादृत्विजां यजमानस्यच वमने सर्वत्रासौ चरुरिति चेत्। मैवम्। यो वमति स निर्वपतीति निर्वप्तृपूर्वं वमनं चरुनिमित्तम्।

निर्वमा च यजमानः। ऋत्विजो निर्वमत्वेऽधिकार्य्यन्तरत्व-प्रसङ्गात्। तस्माद्यजमानस्यैव वमने चरुविधिः।

अष्टादशाधिकरणमारचयति।

याग हविर्य्यजेत् कृत्स्नं कोऽप्यंशः शिष्यतेऽपिवा।
देवार्थत्वाद्यजेत्सर्वं शिष्यते द्विरवत्ततः॥ २४॥

आग्नेयोऽष्टाकपाल इत्यत्र कृत्स्नोऽपि पुरोडाशो ऽग्नये त्यक्तव्यः। तद्दितेन कृत्स्नस्याग्निदेवतासंबन्धाव-गतस्त्यागमन्तरेण तदनुपपत्तेरिति चेत्। मैवम्। द्विर्-विषोऽवद्यतीत्यवदानद्वयं श्रूयते। अवदेयं चाङ्गुष्ठपर्व-मात्रम्। तथाच कल्पसूत्रकारः। आग्नेयस्य पुरोडाशस्य मध्यादङ्गुष्ठपर्वमात्रमवदानं तिरश्चीन मवद्यतीति। ततो हविषः सकाशादङ्गुष्ठ पर्वद्वयमात्र खण्डयित्वा त्यक्तव्यम्। इतरच्छेषणीयम्। देवतासंबन्धस्त्वंशद्वारेणाप्युपपद्यते।

एकोनविंशाधिकरणमारचयति।

शेषात् स्विष्टकृदेकस्मात् सर्वेभ्यो वैकतः कृते।
शास्त्रार्थ सिद्धिः सर्वेभ्य. कार्य्यः संस्कारसाम्यतः॥२५॥

दर्शपूर्णमासयोः श्रूयते। शेषात् स्विष्टकृते समवद्यतीति। तत्राग्नेयादीनां त्रयाणां हविषां मध्ये यस्य कस्यचिदेकस्य हविषः शेषादवदातव्यम्। तावतैव शास्त्रार्थानुष्ठान सिद्धेरिति चेत्। मैवम्। उपभुक्तं हविः संस्कर्त्तु-मिदमवदीयते संस्कारश्च सर्वेष्वपि हविःषु समानः। तस्मात् सर्वेभ्यो हविःशेषेभ्यः स्विष्ट कृदनुष्ठेयः।

विंशाधिकरणमारचयति।

यदेकस्मात्तदा मुख्य नियतिर्नात विद्यते।

नाश्रुतेरस्ति मुख्यातिक्रमणे हेत्वभावतः ॥ ३६ ॥

एकस्मादेव हविःशेषात् स्विष्टकृदिति पूर्वाधिकरणे पूर्वपक्षः। तस्मिन् पक्षे नियामकस्याश्रुतत्वाद्यस्मात् कस्माच्चिद्धविःशेषादिति प्राप्ते ब्रूमः। प्रथमातिक्रमे कारणाभावात् प्रथमहविःशेषेणैव संस्कारसिद्धा वितरत्र प्राप्त्यभावादस्ति नियतिः।

एकविंशाधिकरणमारचयति।

इदं ब्रह्मण इत्युक्तिः, क्रयार्था भक्षणाय वा।
भक्षा श्रुतेः क्रयार्थातो यथेष्टं ते नियुज्यताम् ॥ ३७ ॥
देवतायै समस्तस्य क्लृप्तत्वात् स्वामिता न हि।
शेषस्य प्रतिपत्त्यर्थं भक्षणं तत्र युज्यते ॥ ३८ ॥

चतुर्धाकृत पुरोडाशस्य भागान् यजमान एवं निर्दिशेत्। इद ब्रह्मण इदं होतुरिद मध्वर्यो रिदमग्नीध इति। सोऽयं निर्देशो न भक्षणार्थः। भक्षणस्याश्रुतत्वात्। ततो भृतिदानेन तानृत्विजः परिक्रेतुमयं निर्देशः कृतः। क्रयश्च तदङ्गीकारानुसारेण स्वल्पेनाप्युपपद्यते। तस्मात्स्वकीया भागास्तैरिच्छयोपयोक्तव्या इति प्राप्ते ब्रूमः। अग्नये जुष्टं निर्वपामीति कृत्स्नस्य हविषो देवतार्थं सङ्कल्पितत्वेन तत्र यजमानस्य स्वामित्वाभावान्न युक्तः परिक्रयः। भक्षणं तु प्रतिपत्त्यर्थत्वाद्युक्तम्। सर्वशिष्टस्य यः कोऽप्युपयोगः प्रतिपत्तिः। पुरोडाशस्य भक्षणार्हत्वाद्भक्षणेन कर्मकराणामुत्साहजननाच्च भक्षणार्थोऽयं निर्देशो युज्यते।

इति माधवीये जैमिनीयन्यायमालाविस्तरे
तृतीयाध्यायस्य चतुर्थः पादः।

पञ्चमपादस्य प्रथमाधिकरणमारचयति।

उपांशुयाज द्रव्येण शेषकार्य्यं भवेन्नवा।
भवेद्धविर्भ्यः सर्वेभ्य इत्युक्त्या प्रापितत्वतः॥ १॥
उक्ताज्य द्रव्यशेषस्तु भाव्युपस्तरणादिकृत्।
अतो न प्रतिपत्त्यर्हः शेषकार्य्यं ततः कथम्॥ २॥

ध्रौवादाज्यादुपांशुयाजार्थं मवदाने कृते तच्छेषेण ध्रौवेण द्रव्येण स्विष्टकृदादिकं शेषकार्य्यं कर्त्तव्यम्। कुतः। तद्यत्सर्वेभ्योहविर्भ्यः समवद्यतीति वाक्येन प्रापितत्वादिति चेत्। नैवम। कृतार्थद्रव्यशेषो ह्युपयोगाभावे प्रतिपत्तु मर्हति। ध्रौवं त्वाज्यं न कृतार्थम्। तेन कर्त्तव्यानां भविष्यता मुपस्तरणादीनां सद्भावात्। तस्मान्न तेन शेषकार्य्यं भवति।

द्वितीयाधिकरणमारचयति।

आक्रामन् सह कुम्भीभिरस्ति शेषक्रिया न वा।
जुह्वावदानात् प्रकृता विव शेषक्रियोचिता॥ ३॥
कुम्भीषु शेषासंसिद्धेः साकं प्रस्थान कर्मणि।
न स्विष्टकृदिह कार्य्यमग्नोभः स्रुक् प्रदानतः॥ ४॥

साकं प्रस्थायीयेन यजेत पशुकाम इति विहिते कर्मणि श्रूयते। सह कुम्भीभिरभिक्रामन्नाहेति। तत्र चतसृभि र्दधिपयः कुम्भीभिः सहाहवनीय देशेऽभिक्रमणमात्रं श्रुतम्। न तु तत्र कुम्भीभिर्होमः श्रुतः। तथा सत्यस्य कर्मणः सांनाय्यविकृतित्वाज्जुह्वा कुम्भीभ्योऽवदाय होतव्यम्। हुतशेषेण च स्विष्टकृदादिकं सांनाय्य शेषेणेव कर्त्तव्यमिति प्राप्ते ब्रूमः। नात्र कुम्भीषु हुतशेषः सिध्यति।

सान्नाय्यवञ्जुह्वा तद्वदानाभावात्। अग्नीधे स्रुचौ प्रदाय सह कुम्भीभिरभिक्रामन्निव्यनया जुहूप वृत्तेः प्रत्तत्वादभिक्रमणस्य होमार्थत्वाच्च कुम्भीभिरेव दधिपयसोर्होमे सति कुम्भीमात्र मवशिष्यते। न तु हविः शेषः। तत्र कुतः शेष कार्य्यम्।

तृतीयाधिकरणमारचयति।

सौत्रामण्यां ग्रहे स्विष्टकृदाद्यस्ति न वास्ति तत्।
शेषणात्र सुराक्षीरयोरन्यत्रोपयोगतः॥ ५॥

सौत्रामणीनामके यागे श्रूयते। पयोग्रहाः सुराग्रहाश्च गृह्यन्त इति। तत्र प्रकृतिगतसोमग्रहेष्विव शेषकार्य्यं स्विष्टकृदादिकमस्ति। न चात्र पूर्ववच्छेषाभावः। उच्छिनष्टि न सर्वं जुहोतीत्यवशेषयितव्यत्व श्रवणादिति चेत्। नैवम्। अवशिष्टस्यान्यत्रोपयोग श्रवणात्। ब्राह्मणं परिक्रीणीयादुच्छेषणस्य पातारमिति श्रूयते। यदि ब्राह्मणं न विन्देत वल्मीकवपायां मवनयेदिति च। शतातृणायां ममवनयेदिति च। शतच्छिद्रा कुम्भी शतातृणा। तस्मान्नास्ति स्विष्टकृदादिकम।

चतुर्थाधिकरणमारचयति।

रथन्तरादिभिर्भिन्ना इन्द्रास्तेषां न भिद्यते।
पुरोडाश स्तत्र शेषकार्य्यं किं भिद्यते न वा॥ ६॥
भिद्यते कर्म्मणां भेदाच्चोदकैः पृथगुक्तितः।
शेषस्य सर्वतुल्यत्वा त्तत्कार्य्यं सकृदिष्यताम्॥ ७॥

य इन्द्रिय कामो वीर्य्यकामः स्यात्तमेतया सर्वपृष्ठया याजयेदिति विहितायां मिष्टौ षडिन्द्रा एवं श्रूयन्ते।

इन्द्राय राथन्तरायेन्द्राय बार्हतायेन्द्राय वैरूपायेन्द्राय वैराजायेन्द्राय शाक्करायेन्द्राय रैवतायेति । तत्र स्वरूपेणैकोऽपीन्द्रः पृष्ठस्तोत्रेषु षट्सु विहितानां षण्णां रथन्तरादिसाम्नां सम्बन्धेन विशेष्यमाणः षोढा भिद्यते । तासां सर्वासामिन्द्रदेवतानामेक एव पुरोडाशो विधीयते । द्वादशकपालः पुरोडाशो भवति वैश्वदेवत्वायेति । तस्मिंश्च पुरोडाशे प्रोक्तदेवताभ्यः पृथक् पृथक् प्रदानाय बहुभ्यः प्रदेशेभ्योऽवदान श्रूयते । समन्तं पर्य्यवद्यतीति । तत्र देवताभेदेन प्रदानभेदेन च कर्म्मणां भेदे सति चोदकैः पृथगतिदेशात् स्विष्टकृदिडादिशेषकार्य्यं षट्कृत्वः पृथक्कर्त्तव्यमिति चेत् । मैवम् । शेषस्यैकत्वेन तत्प्रतिपत्तेः पृथक्त्वासम्भवात् । तस्मात् सकृदेव कार्य्यम् ।

पञ्चमाधिकरणमारचयति ।

ऐन्द्रवायवशेषस्य सकृद्भक्ष उतासकृत् ।
पूर्वन्यायात् सकृत प्राप्तौ द्विर्भक्षो वचनाद् भवेत् ॥ ८॥

ज्योतिष्टोमे योऽयमैन्द्रवायव ग्रह इष्यते तत्र संस्कार्य्यस्य सोमस्यैकत्वात् सकृदेव शेषकार्य्यमिति चेत् । मैवम् । द्विरैन्द्रवायवस्य भक्षयति द्विर्ह्येतस्य वषट्करोतीति वचनाद्द्विर्भक्षणम् ।

षष्ठाधिकरणमारचयति ।

सौमिष्वभक्षो भक्षो वा न भक्षो ग्रहहोमतः ।
अन्योक्तिरस्ति शेषोऽस्य भक्षोऽपूर्वे वचो बलात् ॥ ९ ॥

सोमयागेषु शेषभक्षो नास्ति । यद्ग्रहाञ्जुहोतीति कृत्स्न ग्रहेणाहुति श्रवणात् कुम्भीष्विव शेषाभावादिति

चेत्। नैवम्। अन्नं जुहोतीति विशेषवचनाच्छेषः सिध्यति। तद्भक्षणं त्वपूर्वार्थं प्रतिपादकवचनेभ्योऽवगम्यते। आश्विनं भक्षयन्ति। हारियोजनस्य भक्षयन्ति। सदसि भक्षयन्तीत्यादीनि वचनान्यपूर्वार्थं प्रतिपादयन्ति। ततो भक्षविधानादस्ति सोमेषु भक्षः।

सप्तमाधिकरणमारचयति।

किं प्रैतु होतुश्चमस इत्यभक्षोऽथ भक्षणम्।
अभक्षोऽनुक्तितो होतुश्चमसेत्याख्ययास्तु तत्॥ १०॥

ज्योतिष्टोमे श्रूयते। प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातॄणां प्र यजमानस्य प्र यन्तु सदस्यानामिति। तत्र वचनाभावादभक्ष इति चेत्। नैवम्। समाख्यागते चमसशब्दे भक्षणस्य प्रतीयमानत्वात्। चम्यते भक्ष्यते सोमोऽस्मिन् पात्रविशेष इति हि तद्व्युत्पत्तिः। तस्मादस्ति तद्भक्षणम्।

अष्टमाधिकरणमारचयति।

प्रोद्गातॄणामिति ह्येक उद्गाता भक्षयेदुत।
सर्वेऽपि किंवा सुब्रह्मण्ये नान्ताः सामगायिनः॥ ११॥
सहितास्तेन ते वाद्य उद्गातृश्रुतितोऽखिलाः।
बहुत्वाद्दानयोगेन तृतीयो रूढिबाधिते॥ १२॥
योगे समाख्यया दण्डिन्यायादन्त्योऽत्र भाष्यगः।
सदसि स्थित्यभावेन तृतीयो वार्त्तिकोदितः॥ १३॥

पूर्वोदाहृतवाक्ये प्रोद्गातॄणामित्यत्रैकस्यैव भक्षः। षष्ठीबहुवचनाभिधेयायाः सामभक्तेरुद्गातर्युद्गातृप्रातिपदिकस्य रूढत्वादित्येकः पूर्वपक्षः। उद्गातॄणामित्यस्य

बहुत्वस्यैक छिन्नसम्भवादुद्गात्रो पलक्षिताः षोडशर्त्विजः सर्वेऽपि भक्षयेयुरिति द्वितीयः। उद्गीथ प्रस्ताव प्रतिहारान् सामभागानुद्गातृ प्रस्तोतृ प्रतिहर्त्तारः प्रयोगकाले गायन्ति। उद्गातृकर्मणा गायन्तीति योगेनोद्गातारस्त्रयो भक्षयेयुरिति तृतीयः पक्षः। रूढ़िर्योगमपहरतीति न्यायादेक एवोद्गाता। तेन बहुवचनोपपत्तये प्रत्यासन्ना उपलक्ष्यन्ते। प्रत्यासत्तिश्च प्रस्तोतृप्रतिहर्त्रोरिव सुब्रह्मण्यस्याप्यस्ति। सामवेदाध्यायित्वेन सुब्रह्मण्याह्वानरूपे तदीये कर्मण्यप्यौद्गात्र समाख्यायाः सत्त्वात्। तस्मात् सुब्रह्मण्येन सहिताश्चत्वारः सामगा भक्षयेयुरित्ययमन्त्यः पक्षो भाष्यकारस्याभिमतः। वार्त्तिककारस्तु सदसो भक्षणस्थानत्वात् सुब्रह्मण्यस्य सदस्य प्रवेशाभावेन विरहिता अवशिष्टाः सामगा भक्षयन्तीत्यमुमेव तृतीयं पक्षमङ्गीचकार।

नवमाधिकरणमारचयति।

किं स्याच्चमसिनामेव हारियोजन भक्षणम्।
सर्वेषां वाग्रिम स्तेषां पूर्ववाक्येन सन्निधिः॥ १४॥
लिप्सन्ते सर्व एवेति हारियोजन वाक्यतः।
ग्रावस्तुतोऽप्यस्ति भक्षस्तमभिलक्ष्य मकारणम्॥ १५॥

हरिरसि हारियोजन इत्यनेन मन्त्रेण गृह्यमाणो ग्रहो हारियोजनः। होतृब्रह्मादयश्चमसिनः। यस्तु चतुर्णां होतृणां मध्ये चतुर्थो ग्रावस्तुन्नामकोऽस्ति नासौ चमसी। तत्र चमसिनामेव हारियोजनभक्षणम्। कुतः। यथा चमस मन्यांश्चमसांश्चमसिनो भक्षयन्त्यथैतस्य हारियोजनस्य सर्वएव लिप्सन्त इत्यत्र पूर्ववाक्ये चमसिनां सन्निहितत्वे-

मोत्तरवाक्ये सर्वशब्देन तेषामेवाभिधातव्यत्वात्। अतो नास्ति ग्रावस्तुत एतत् भक्ष इति प्राप्ते ब्रूमः। अथ शब्देनैव कारेण च चमसिमात्र शङ्कामपोह्य वाक्येन विहितस्य सर्वभक्षणस्य सन्निहितमात्र सङ्कोचायोगादस्ति ग्रावस्तुतोऽपि भक्षः। तस्माच्चमसित्वं न भक्षणे कारणम्।

दशमाधिकरणमारचयति।

आद्यभक्षे वषट्कर्त्तुर्विधिः प्राथम्य एव किम्।
किंवा तद्युक्तभक्षे स्याद्वषट्कार निमित्तके॥ १६॥
अप्राप्ते रश्मिरो नैवं समासस्थित्यसम्भवात्।
विशिष्टस्य विधिस्तस्माद्वषट्कारोऽपि कारणम्॥ १७॥

वषट्कर्त्तुः प्रथमभक्ष इत्येवं श्रूयते। वषट्कर्त्ता होता। तस्य भक्षणं समाख्यया प्राप्तम्। प्राथम्यं त्व प्राप्तमिति तदेवात्र विधीयत इति चेत्। नैवम्। प्रथमभक्ष इत्यस्य समस्त पदत्वेन यो भक्षः स प्रथम इत्येवं विच्छिद्यान्वेतु मशक्यत्वात् प्राथम्यविशिष्टं भक्षणमत्र विधीयते। तस्मिन् भक्षणे वषटकारः कारणम्।

एकादशाधिकरणमारचयति।

आख्याऽचो वषट्कारा एव किंभक्षहेतवः।
किंवाभिषवहोमौ च तत्कार्योऽस्तूक्तयादिशा॥ १८॥
हविर्धानेऽभिषुत्याथ हुत्वा सदसि भक्षयेत्।
इति श्रुतत्वतस्तौ च भक्षहेतू यथेतरे॥ १९॥

प्रैतु होतुश्चमस इत्यत्र समाख्या भक्षहेतुः। हारियोजने वाक्यम्। वषट्कर्त्तुः प्रथमभक्ष इत्यत्र वषटकार इत्येवमुक्तत्वात् त्रय एव भक्षहेतव इति चेत्। नैवम्।

हविर्धाने ग्रावभि रभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान् भक्षयन्तीति श्रूयते । उत्तरवेद्याः प्रतीचीने मण्डपेऽभिषवः । उत्तरवेद्यां होमः । सदसि भक्षणम् । तत्राभिषव होमयोर्वचनान्तर प्राप्तयो रविधेयतया तौ निमित्तत्वेनानूद्य भक्षण विधीयते । तस्मात् समाख्या-दिवदेतयो रपि हेतुत्वमस्ति ।

द्वादशाधिकरणमारचयति ।

हेतुसंधे विकल्पः किं बाधो बाथ समुच्चयः ।

साम्याद्विकल्पो बाध्यन्तां सावकाशाः समाख्यया ॥२०॥

नैव वाचनिक बाध्यं भक्षणेऽत्र विभागशः ।

सिद्धे विकल्पो नायुक्तः स्वीकार्य्योऽतः समुच्चयः ॥ २१ ॥

प्रैतु होतुश्चमसः प्र ब्रह्मण इत्यत्र चमसिषु समाख्या भक्षणे हेतुः वषट्कर्त्तुः प्रथमभक्ष इत्यत्र वषट्कारो होतुर्भक्षहेतुः हविर्धाने ग्रावभिरभिषुत्याहवनीये हुत्वा सदसि भक्षयन्तीत्यत्राभिषव सहितो होमोऽध्वर्य्योर्भक्षहेतुः । तत्र चमसवषट्कारयोः सद्भा होतरि प्राप्तः । चमसाभिषव-होमसद्भावोऽध्वर्य्योः प्राप्तः । तत्र हेतुद्वयस्य समानबलत्वाद्वि-कल्पे सत्यन्यतर निमित्त कृतमेव भक्षणमित्याद्यः पक्षः । वषट्कारादिहेतोश्च सोमेतरग्रहेषु सावकाश त्वान्निरवकाशया चमससमाख्यया तद्बाधे सति चमसेषु पाक्षिक मपि वषट्-कारादि हेतुकं भक्षणं नास्तीति द्वितीयः पक्षः । वषट्कर्त्तु-रित्यादिं वाक्यस्य प्रबलत्वात् समाख्यया बाधो न युक्तः । निरवकाशतया सापि प्रबलेति चेत् । तर्हि प्रमाणद्वयेन पृथग्भक्षणे विहिते समुच्चयोऽभ्युपेयः । न च व्रीहियववद्वि-

कल्प: । तत्र पुरोडाशनिष्पादनस्य दृष्टप्रयोजनस्यैकत्वात् । इह तु नियमा दृष्टार्थं भक्षणम् तच्चादृष्टं यथावचनं द्विविधम् तस्मात् समुच्चय: ।

त्रयोदशाधिकरणमारचयति ।

एकपात्रे किमध्वर्युरद्यात् पूर्वमुतेतर: ।
तद्धस्ते पात्रसंस्थानात्तस्य प्रथम भक्षणम् ॥ २२ ॥
पाहि होतेव न: पूर्वं इति मन्त्रेण पूर्वता ।
वषट्कर्त्तुस्तदुक्तिश्च न्यायबाध्यं वचो न हि ॥ २३ ॥

एकस्मिन् पात्रे बहूनां क्वचिद्विहितं भक्षणम् । तत्राध्वर्यु: प्रथमं भक्षयेत् । पात्र सन्निधाना दिति चेत् । मैवम् । लिङ्गवाक्याभ्यां होतु: प्रथम भक्षावगमात् । होतेव न: प्रथम: पाहीत्यृत्विजोऽध्वर्युं संबोध्यैवं प्रार्थयन्ते । यथा होतास्मत्त: पूर्वं भक्षयित्वा शेष प्रदानेनास्मान् पालितवान् । तथा त्वमपि पाहीति तदेतत् होतु: प्रथम भक्षे लिङ्गम् । वाक्यं चैव माम्नातम् वषट्कर्त्तु: प्रथमभक्ष इति । तत्र विशिष्टविधानात् प्राथम्य मपि सिध्यति । न चैतद्वचनं पात्र सन्निधिरूपेण न्यायमात्रेण बाधितुं शक्यम् । तस्माद्धोता प्रथमं भक्षयेत् ।

चतुर्दशाधिकरणमारचयति ।

नानुज्ञापूर्वको भक्ष स्तत्पूर्वो वात्र लाघवात् ।
आद्यो नानुपहूतेन पेय इत्युक्तितोऽन्तिम: ॥ २४ ॥

अनुज्ञाभक्षयोर्द्वयोरनुष्ठितौ गौरवाद्भक्षमात्रं मिति चेत् । मैवम् । तस्मात् सोमो नानुपहूतेन पेय इति वचनेनानुज्ञाया आवश्यकत्वात् ।

पञ्चदशाधिकरणमारचयति।

किमनुज्ञा लौकिकोक्त्या वैदोक्त्या वा यथा तथा।
अविशेषा दुपह्वानं मन्त्रलिङ्गात्तु वैदिकी॥ २५॥

उपहूत उपह्वयस्वेत्ययं मन्त्रो लिङ्गेन मन्त्रमनुज्ञायां विनियुङ्क्ते। तस्माद्वैदिकोक्त्या तदनुज्ञानम्।

षोडशाधिकरणमारचयति।

उपह्वय स्वोपहूत इत्यशेषो द्वयोर्भवेत्।
अनुज्ञानुज्ञापनयोरथवासौ विभज्यते॥ २६॥
विभागकरणाभावादशेषस्त्वेन लिङ्गतः।
उपह्वयेत्यनुज्ञप्तावनुज्ञाने तथेतरः॥ २७॥

उपहूत उपह्वयस्वेत्यस्मिन् मन्त्रे मध्यमपुरुषैकवचनान्तो भागः पश्चात् पठितोऽपि प्रथमभाविन्यनुज्ञापने समर्थः। प्रथमैक वचनान्तस्तु प्रथमपठितोऽप्युत्तर समानत्वात् पश्चाद्भाविन्या मनुज्ञायां समर्थः। तस्माल्लिङ्गेन विभज्य विनियुज्यते।

सप्तदशाधिकरणमारचयति।

उपह्वान मशेषाणा मुत स्यादेक पात्रिणाम्।
अदृष्टहेतोराद्यः स्याद्दृष्टाधिक्यादितोऽन्तिमः॥ २८॥

अनुज्ञापनस्यादृष्टं प्रयोजनम्। तच्च विभिन्न पात्रेष्वपि समानमिति चेत। मैवम्। दृष्ट प्रयोजनस्य सद्भावात्। साधारणे वस्तुनि कथञ्चिद्भागाधिक्येऽपराधो भवति। अतो न्यूनाधिकत्व परिहारनिमित्तमनुज्ञा पनमेक पात्रिणामेव।

अष्टादशाधिकरणमारचयति।

होतुर्याज्यापनीतौ किं न वषट्कार भक्षयोः।

अपनीति हतापायो नापनीति विभेदत: ॥ २९ ॥
यजमानेन यष्टव्यं न विनैष्टि वषट्कृतिम् ।
वषट्कारो याज्ययात: सहापैत्यदनं तथा ॥ ३० ॥

ज्योतिष्टोम ऋतु याजनामकेषु यागेष्वाम्नायते । यजमानस्य याज्या सोऽभिप्रेष्यति होतरेतद्यजेति स्वयं वा निषद्य यजतीति । हौत्रे काण्डे समाम्नाता याज्या: समाख्यया होतु: प्राप्ता: । तत्र काचिद्याज्या होतुरपनीय यजमानस्य विधीयते । ततो यजमान: स्वेच्छया होतारं वा प्रेष्यति स्वयंवा याज्यां पठति । तत्र स्वपाठपक्षे याज्यैव होतुरपनीयते । न तु वषट्कारभक्षावपनीयेते तयोर्याज्यायामनन्तर्भावात् । अतो होता वषट्करोति भक्षयति चेति प्राप्ते ब्रूम: । स्वयंवा निषद्य यजतीति पक्षे स्वीकारायजमानेन याग: कर्त्तव्य: । स च यागो वषट्कारमन्तरेण न सम्भवति । याज्याया अधि वषट्करोतीति तद्विधानात् । यजमानो याज्यां पठतु । होता वषट्करोतीति चेत् । मैवम् । अनवान यजतीति याज्यावषट्कारयोर्मध्ये श्वासनिषेधेनैककर्त्तृतावगमात् । अतो याज्यया सह वषट्कारो होतुरपैति । तदपाये वषट्कारनिमित्तो भक्षश्च होतुरपेत्य यजमाने निविशते ।

एकोनविंशाधिकरणमारचयति ।

न्यग्रोधपिष्टं सोमस्य स्थाने क्षत्रियवैश्ययो: ।
भक्षमात्रे विकुर्य्यात्तत् सोमयागेऽपि वा तथा ॥ ३१ ॥
विभक्षयिषया वाक्यमुपक्रम्योपसंहृतम् ।
भक्षं यच्छेदिति ततो विकारो भक्षमात्रग: ॥ ३२ ॥

फलाख्यचमसेनासौ यजेतेति श्रुतत्वतः ।
इज्यायां च विकारोऽस्ति यागार्थो भक्षसंस्कृतिः ॥ ३४ ॥

ज्योतिष्टोमे श्रूयते । यदि राजन्यं वैश्यं वा याजयेत् स यदि सोमं बिभक्षयिषेन्न्यग्रोधस्तिभिनीराहृत्य ताः संपिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोममिति । स्तिभिन्यो मुकुलानि । तत्रोपक्रमोपसंहारयोर्भक्षविषयत्वाद् भक्षमात्रे सोमः पिष्टेन विक्रियत इति चेत् । मैवम् । यदान्यांश्च- मसानुद्दूत्यथैतस्य दर्भतरुणकेनोपहत्य जुहोतीति श्रुतम् । तत्र फलचमसरूपेण यथोक्तपिष्टेन यागमङ्गीकृत्य तरुणक- गुणो विधीयते । किं च । इष्टद्रव्यसंस्कारो हि भक्षः । स च यागमन्तरेणानपपन्नः । तस्माद् यागेऽपि विकारः ।

विप्राधिकरणमारचयति ।

राजसूये क्वचित् कर्तृचमसा दशभिर्जनैः
भक्ष्याः किं तत्र राजन्या भक्षका ब्राह्मणा उत ॥ ३४ ॥
आद्यो भानात् संख्ययैकजातिर्विप्राः श्रुतं दश ।
चमसानध्वर्य्युक्त्या राजपात्रं च विप्रगम् ॥ ३५ ॥

राजसूये दशपेयनामके यागे श्रूयते । दश दशैकैकं चमसमनुप्रसर्पन्तीति । तत्र यजमानस्य राजन्यस्य यश्च- मसः सोऽयं राजन्यैरेव दशभिर्भक्षणीयः । कुतः । दशेति संख्यया जात्येकत्वप्रतिभानात् । तथा हि दशपेयस्य ज्योतिष्टोमविकृतित्वात् प्राकृतं धर्मजातं चोदकेन प्राप्तम् । प्रकृतौ च यजमानचमसस्य भिन्नजातिभिर्भक्षणं नास्ती- त्यत्रापि तथैव प्राप्तम् । यत्र दशेति विशेषो विधीयेत ।

तर्हि प्राकृतं भक्षकसंख्यामात्रं निवर्त्तताम्। न त्वेक-जातित्वम्। तस्माद्राजन्यो यजमानोऽन्यैः राजन्यैर्नवभिः सह भक्षयेदिति प्राप्ते ब्रूमः। प्रकृतितः प्राप्तेषु दशसु चमसेषु भक्षणायानुप्रसर्पतां पुरुषाणां दश दशेति वीप्सया प्रति चमसं दशसंख्यां विधायार्थसिद्धां शतसंख्यामनूद्य सङ्ख्येयानां सर्वेषां ब्राह्मण्यं विधीयते। शतं ब्राह्मणाः पिब-न्तीति। तथा सति यजमानस्यापि राजन्यस्य यत्र भक्षो नास्ति तत्र कुतोऽन्ये राजन्या भक्षयेयुः। तस्माद् ब्राह्मणा एव भक्षकाः।

इति माधवीये जैमिनीयन्यायमालाविस्तरे
तृतीयस्याध्यायस्य पञ्चमः पादः।

---

षष्ठपादस्य प्रथमाधिकरणमारचयति।

प्रकृतौ विकृतौ वा स्याद् यस्य पर्णत्वसौ विधिः
प्रकृताविव वा तुल्याद् वचनादुभयोरसौ ॥ १ ॥
जुह्वामाश्रित्य पर्णत्वे विधिः प्रकृतिमात्रगः।
चोदकेनोभयप्राप्ते विकृतौ विधिनात्र किम् ॥ २ ॥

अनारभ्य श्रूयते। यस्य पर्णमयी जुहूर्भवति न स पाप श्लोकं शृणोतीति। तत्राव्यभिचरितक्रतुसम्बन्धवतीं जुहू-माश्रित्य तद्धेतुः पर्णत्वं वाक्येन विधीयते। या जुहूः सा पर्णमयीति। वाक्यं च प्रकृतिविकृत्योस्तुल्यं प्रवर्त्तते। उभयत्र पर्णतायाः जुह्वाः सत्त्वात्। तस्मात् प्रकृतिविकृत्यो-रुभयोरप्ययं विधिरिति प्राप्ते ब्रूमः। किमयं विधि-र्विकृतौ चोदकात् पूर्वं निविशते पश्चाद्वा। नाद्यः। आश्रय-

भृताया जुह्वाश्चोदकमन्तरेणासम्भवात्। द्वितीये तु पर्णत्वमपि जुह्वा सहैव चोदकेनातिदिश्यते। तत्र पुनर्विधिर्वैयर्थ्यादयं विधिः प्रकृतिमात्रगः। एवं यस्य खादिरः स्रुवो भवतीत्युदाहरणीयम्। द्वितीयाधिकरणमारचयति।

सामिधेनीः सप्तदश प्रकृतौ विकृतावुत।
पूर्ववत् प्रकृतौ पाञ्चदश्ये नैतद् विकल्प्यते॥ ३॥
विकृतौ साप्तदश्यं स्यात् प्रकृतौ प्रक्रियाबलात्।
पाञ्चदश्यावरुद्धत्वादाकाङ्क्षाया निवृत्तितः॥ ४॥

अनारभ्य श्रूयते। सप्तदश सामिधेनीरनुब्रूयादिति। प्र वो वाजा अभि द्यव इत्याद्या अग्निमिन्धनार्था ऋचः सामिधेन्यः। तासां साप्तदश्यं पूर्वन्यायेन प्रकृतिगतम्। यदि प्रकृतौ पञ्चदश सामिधेनीरन्वाहेति विधिः स्यात्। तर्हि पाञ्चदश्यसाप्तदश्ये विकल्पेयातामिति प्राप्ते ब्रूमः। विकृतावेव साप्तदश्यं निविशते। प्रकृतौ पाञ्चदश्येनावरुद्धानां सामिधेनीनां सङ्ख्याकाङ्क्षाया अभावात्। न च पाञ्चदश्यसाप्तदश्यवाक्ययोः समानबलत्वादवरोधाभाव इति शङ्कनीयम्। पाञ्चदश्ये प्रकरणानुग्रहस्याधिकत्वात्। तस्मान्मित्रविन्दाध्वरकल्पादिविकृतौ साप्तदश्यमवतिष्ठते। न चात्र पूर्वन्यायोऽस्ति। साप्तदश्यस्य चोदकप्राप्त्यभावेन पुनर्विधाने दोषाभावात्।

तृतीयाधिकरणमारचयति।

साप्तदश्यं तु वैश्यस्य विकृतौ प्रकृतावुत।
पूर्ववन्न सङ्कोचान्नित्ये नैमित्तिकोक्तितः॥ ५॥
गोदोहनेन प्रणयेत् कामेत्येतदुदाहरत्।

भाष्यकारस्तदप्यस्तु न्यायस्यात्र समत्वतः ॥ ६ ॥

समदयानुब्रूयाद्वैश्यस्येति विहितं वैश्यनिमित्तं सामदश्यं पूर्वन्यायेन विकृतिगतमिति चेत्। नैवम्। नैमित्तिकनानेन वचनेन प्रकृतिगतस्य नित्यपाच्छदश्यस्य वैश्यव्यतिरिक्तविषयतया संकोचनीयत्वात्। नित्यं सामान्यरूपतया सावकाशत्वेन च दुर्बलम्। नैमित्तिकं तु विशेषरूपत्वनिरवकाशत्वाभ्यां प्रबलम्। तस्माद् वैश्यनिमित्तकं सामदश्यं प्रकृताववतिष्ठते।

अत्र भाष्यकारोऽन्यदुदाजहार। चमसेनापः प्रणयेद्गोदोहनेन पशुकामस्येति। तत्र प्रकृतेश्चमसेनावरुद्धत्वाद्गोदोहनं विकृताविति पूर्वपक्षः। कामनानिमित्तकेन गोदोहनेन नित्यस्य चमसस्य निष्कामविषयतया संकोचनीयत्वात् प्रकृतावेव गोदोहनमिति राद्धान्तः।

चतुर्थाधिकरणमारचयति।

आधान पवमानादेरिष्टेरङ्गं न वा भवेत्।
अग्नीनामिष्टिशेषत्वात् तद्द्वारास्य तदङ्गता। ७ ॥
अनारभ्यविधानात् तु नाङ्गं कस्यचिदाहितिः।
अन्यार्थत्वात् तत्समेष्टिरग्नयस्त्वग्निहोत्रगाः ॥ ८ ॥

इदमाम्नायते। अग्नये पवमानायाष्टाकपालं निर्वपेदग्नये पावकायाग्नये शुचय इति। वसन्ते ब्राह्मणोऽग्नीनादधीतेति च। तत्राधान पवमानादीष्टीनामङ्गम्। कुतः। दर्शपूर्णमासविकृतिषु पवमानादीष्टिषु चोदकप्राप्तानामाहवनीयाद्यग्नीनामिष्ट्यङ्गत्वे सत्यग्निद्वारा तत्संस्काररूपस्याधानस्यापि तदङ्गताया अनिवार्य्यत्वादिति चेत्।

मेवम्। न ह्येतदाधानं कस्यचित् क्रतोः प्रकरणे पठितम्। किन्त्वनारभ्याधीतम्। अतो न कस्याप्येतदङ्गम्। किन्त्वाधानवदिष्टीनामप्यग्निसंस्कारार्थत्वात् परस्परं नास्त्यङ्गाङ्गिभावशङ्का। ननु पवमानेष्ट्यङ्गत्वाभावेऽग्निसंस्कारवैयर्थ्यादग्निद्वाराङ्गत्वं युक्तमिति चेत्। न। संस्कृतानामग्नीनामग्निहोत्राद्युत्तरक्रतुषु तत्तद्वाक्यैर्विनियोगावगमात् तस्मान्नाधानमङ्गम्।

पञ्चमाधिकरणमारचयति।

आधानं किं प्रकृत्यर्थं वह्निमात्रेण वा युतम्।
संस्कृताग्निप्रणाड्यैतत् पर्णवत् प्रकृतौ स्थितम्॥ ९॥
लौकिकाकारमात्रत्वे विफलत्वात् क्रतौ श्रुतिः।
पर्णस्याहवनीयादौ शास्त्रीयेऽस्तु स्वतन्त्रता॥ १०॥

अनारभ्याधीतं पर्णमयीत्वं यथा जुहूप्रणाड्या प्रकृतौ निविष्टम्। तथैवाग्निप्रणाड्या तत्संस्काररूपमाधानं प्रकृतौ निविशत इति चेत्। मैवम्। वैषम्यात्। द्विविधो हि जुह्वा आकारः। लौकिकः शास्त्रीयश्च। अरत्निमात्रदैर्घ्येन्मसुखत्वखिलत्वादिरूपो दृश्यमानो लौकिकः। अपूर्वीयत्वाकारस्तु शास्त्रीयः। तयोरपूर्वीयत्वं क्रतुप्रवेशमन्तरेण नास्ति। तत्र यदि लौकिकाकारमात्रे पर्यवस्यति। तदा पर्णमयीत्वं विफलं भवेत्। काष्ठान्तरेणापि तदाकारस्य सुसंपादत्वात्। अतोऽपूर्वीयत्वाय पर्णता क्रतौ प्रविष्टा। आहवनीयादीनां त्वेक एव शास्त्रीयाकारः। स च विधिबलादाधानेनैव जन्यते। नान्यथा। तस्मादाधानस्य क्रतुप्रवेशं विनैव शास्त्रीयाहवनीयाद्याकारसंपादः

नासमर्थत्वादग्निहोत्रेण तत् संयुज्यते। तथा सति पर्ण-वैषम्यात् प्रकृतावप्रविश्याग्नीनुत्पाद्य क्रतुवत् स्वातन्त्र्येणा-वतिष्ठते। ततो लौकिकोपायसंपादितसुवर्णव्रीह्यादिवदा-धानसंपादितानां स्वतन्त्राणामेवाहवनीयाद्यग्नीनां पश्चा-द्वाक्यैः क्रतुषु विनियोगोऽस्तु।

षष्ठाधिकरणमारचयति।

संस्कृते पवमानेष्ट्या वह्नौ सेष्टिर्न वेष्टयः।
वह्नौ तत्संस्कृते कार्य्याश्चोदकस्यानुरोधतः॥ ११॥
चोदकः पवमानेष्टौ न तां प्रापयितुं प्रभुः।
अनङ्गत्वेऽव्यसिद्धिभ्यामिष्टयस्तदसंस्कृते॥ १२॥

पवमानादीष्टिभिराहवनीयाद्यग्नयः संस्क्रियन्ते। संस्कृते-ष्वग्निहोत्रदर्शपूर्णमासादिक्रतवः प्रवर्त्तन्ते। तथा सति विमताः पवमानेष्टयस्ताभिरिष्टिभिः संस्कृते वह्नौ कर्त्तव्याः। इष्टित्वात्। इतरेष्टिवत्। चोदकोऽप्येवं सत्यनु-गृहीतो भवति। एताभिरिष्टिभि संस्कृते वह्नौ प्रकृत्यनु-ष्ठानादिति प्राप्ते ब्रूमः। यद्यपि पवमानेष्टिर्विकृति-स्तथापि चोदको न तस्यां पवमानेष्टौ पवमानेष्टिमतिदेष्टुं प्रभवति। प्रकृतौ प्रयाजादिवत् पवमानेष्टेरङ्गत्वाभावात्। किञ्च। एतस्याः पवमानेष्टेः संस्कृताग्निसिद्धार्थं पवमानेष्ट्यन्त-राङ्गीकारे तत्रापि तथेत्यनवस्थायामिष्टिरेव न सिध्येत्। तस्मात्ताभिरिष्टिभिरसंस्कृते वह्नौ पवमानेष्टयः कर्त्तव्याः।

सप्तमाधिकरणमारचयति।

अग्नीषोमीयसवनीयानुबन्ध्यपशुष्वमी।
उपाकरणमुख्यास्तु धर्माः साधारणा न वा॥ १३॥

ज्योतिष्टोमप्रकरणे पाठात् साधारणा अमी।
पशुधर्मा ग्रहात् सोमयागे ते स्युर्निरर्थकाः ॥ १४ ॥
अग्नीषोमीयधर्मत्वं तेषां स्थानात् प्रसिध्यति।
इयोरितरयोः पश्वोः प्राप्यन्ते चोदकेन ते ॥ १५ ॥

अग्नीषोमीयः सवनीयोऽनुबन्ध्येति ते त्रयः पशवो ज्योतिष्टोमप्रकरणे समाम्नाताः। पशुधर्माश्चोपाकरण पर्य्यग्निकरणादयस्तत्राम्नाताः। प्रजापतेर्जायमाना इमं पशुमित्याभ्यामृग्भ्यां पशोरुपस्पर्शनमुपाकरणम्। दर्भज्वालया त्रिःप्रदक्षिणीकरणं पर्य्यग्निकरणम्। त एते धर्मास्त्रिष्वपि पशुषु साधारण्येन विधीयन्ते। त्रयाणामपि ज्योतिष्टोमप्रकरणपाठसाम्यात्। ननु ज्योतिष्टोमस्य प्रकरणे पठितानेतान् धर्मान् स एव गृह्णीयात्। न तु पशव इति चेत्। न। तस्य सोमयागत्वात्। सोमो ह्यभिषवादीन् धर्मानाकाङ्क्षति। न तु यूपनियोजनविशसनादीन्। तस्मादङ्गिन्यनर्थकाः सन्तोऽङ्गेषु निविशमाना अविशेषतस्त्रिष्वपि पशुष्ववतिष्ठन्त इति प्राप्ते ब्रूमः। अस्त्यत्र विशेषः सन्निधिलक्षणः। सौत्यनामकादह्नः प्राचीन औपवसथ्यनामकेऽह्नि धिष्ण्यनिर्माणादूर्ध्वमेते धर्मा आम्नाताः। अग्नीषोमीयस्यापि तदेव स्थानम्। सवनीयस्तु सौत्येऽहनि श्रूयते। आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोतीति। अनुबन्ध्यस्त्ववभृथान्त आम्नातः। ततः संनिधिना ते धर्मा अग्नीषोमीये संबध्यन्ते। सवनीयानुबन्ध्ययोस्तु चोदकादतिदिश्यन्ते।

अष्टमाधिकरणमारचयति।

शाखाच्छेदादयो दोहे धर्माः सायं व्यवस्थिताः ।
प्रातश्च सन्ति वा सायंस्थानात्ते पूर्ववत् स्थिताः ॥१६॥
आनर्थक्यप्रतिहतिः पूर्ववन्नेह विद्यते ।
बलिनोऽतः प्रकरणात् प्रातर्दोहेऽपि सन्ति ते ॥ १७ ॥

दर्शपूर्णमासप्रकरणे पलाशशाखाच्छेदनम् । तया शाखया वत्सापाकरणमित्यादयो दोहधर्माः समाम्नाताः । दोहौ च द्वौ विद्येते । अमावास्यायां रात्रावेको दोहः । प्रतिपदि प्रातरपरो दोहः । तत्र पूर्वन्यायेन प्राथमिके सायंदोहे प्रथमश्रुतास्ते धर्मा व्यवतिष्ठन्त इति चेत् । मैवम् । वैषम्यात् । पूर्वं हि साम्नि विशसनादिधर्माणामनन्वयात् प्रकरणमानर्थक्यप्रतिहतम् । इह तु नास्त्यानर्थक्यप्रतिहतिः । ततः प्रकरणेन स्थानं बाधित्वा द्वयोर्दोहयोस्ते धर्मा अभ्युपेयाः ।

नवमाधिकरणमारचयति ।

ग्रहधर्माः सादनाद्याः प्रातःसवन एव ते ।
त्रिषु वा निश्चितस्थानाद्याद्यः पूर्ववदुत्तरः ॥ १८ ॥

ज्योतिष्टोमे प्रातःसवने सन्त्यैन्द्रवायवादयो ग्रहाः । माध्यन्दिने सवने मरुत्वतीयादयः । तृतीयसवन आदित्यादयः । तत्र सादनसंमार्गादयो धर्माः प्रातःसवनीयग्रहसन्निधावाम्नायन्ते । उपांशोऽन्ये ग्रहाः साद्यन्तेऽनुप्रोमे ध्रुव इति । दशापवित्रेण ग्रहं संमार्ष्टीति च । ध्रुवव्यतिरिक्तानां ग्रहाणामधस्तान्मृत्तिकोपवेशनं कृत्वा तत्र सादनम् । ध्रुवस्य तु न तथा । पूर्वाधिकरणे शाखाहरणादयः प्रधानयोर्दधिपयसोर्धर्माः समाम्नाताः । तत्र दधि

पूर्वेद्युः सायंदोहमन्तरेण न सिध्यतीति तत्सिद्ध्यर्थं केवलं सायं कुरुते। न तु सायंदोहस्यासाधारणत्वेन धर्मैः सहैकस्मिन् देशे पाठोऽस्तीति स्थानं न निश्चितम्। इह तु तन्निश्चितमिति प्रातःसवन एव ते धर्मा इति चेत्। मैवम्। सादनादीनां वाक्येन ग्रहधर्मत्वम्। प्रकरणेन ज्योतिष्टोमधर्मत्वं चावगम्यते। तस्मिन् निश्चितमपि स्थानं वाक्यप्रकरणाभ्यां बाधित्वा त्रिषु सवनेषु सादनादयोऽवतिष्ठन्ते।

•दशमाधिकरणमारचयति।

एकत्रैवोत सर्वत्र रशनावेष्टनादयः।
अग्नीषोमीय एवैते क्रमाल्लिङ्गादितोऽन्तिमः॥ १८॥

अग्नीषोमीयपशुसन्निधौ रशनया यूपस्य वेष्टनम्। रशनायास्त्रिवृत्त्वं दर्भमयत्वं चेत्यादयो धर्मा आम्नाताः। परिव्ययत्यूर्व्वे रशनेति। त्रिवृद्भवतीति। दर्भमयो भवतीति च। तत्र ये रशनया वेष्टनादयस्ते सर्वे सन्निधिरवान्तर प्रकरणाच्चाग्नीषोमीय एव स्युरिति चेत्। मैवम्। सवनीयपशावपि तत्सद्भावो लिङ्गादवगम्यते। त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोतीति त्रिवृत्त्वपरिव्याणयोः सिद्धवदनुवादो लिङ्गम्। किञ्च। तृतीयाश्रुत्या वाक्येन च परिव्याणस्य यूपधर्मता। न तु पशुधर्मता। यूपश्च त्रयाणां पशूनां तन्त्रमिति वक्ष्यते। तस्मात् सर्वेषु पशुष्वेते धर्माः स्युः।

एकादशाधिकरणमारचयति।

ग्रहधर्मा अनारभ्योक्ताश्चदाभ्यद्वयेन हि।

**विद्यन्ते वा प्रकरणादाद्यो वाक्यादिहान्तिमः ॥ २० ॥**

अनारभ्य द्वौ ग्रहौ श्रुतौ। अंशुं गृह्णातीति। अदाभ्यं गृह्णातीति च। तयोः सादनसंमार्गादयो ग्रहधर्मा न विद्यन्ते। कुतः। आरभ्याधीतेष्वैन्द्रवायवादिष्वेव प्रकरणेन व्यवस्थापितत्वादिति चेत्। मैवम। ग्रहाः साद्यन्त इत्यादिवाक्येन ग्रहधर्मत्वावगमे तयोरपि ग्रहयोरनिवार्य्यत्वात्। न चैन्द्रवायवादयः प्रकरणिनः। ज्योतिष्टोमो हि प्रकरणी। तस्मात् सन्ति तयोर्धर्माः।

द्वादशाधिकरणमारचयति।

अखण्डादीष्टकाधर्माश्चित्रिण्यादिषु नोचिताः।
सन्ति वा वाक्यमप्यत्रानारभ्योक्तं ततो न ते ॥ २१ ॥
प्रकृतापूर्वसम्बन्धात् तादृग्वादपि वाक्यतः।
अखण्डत्वादयोऽग्न्यर्थचित्रिण्यादिषु सन्ति ते ॥ २२ ॥

अनारभ्य श्रूयते। चित्रिणीरुपदधातीति। अग्निप्रकरणे चेष्टकानां धर्माः श्रुताः। अखण्डामकृष्णां कुर्य्यादिति। पूर्वत्रांश्वदाभ्ययोरुत्पत्तिवाक्यस्यानारभ्याधीतत्वेऽपि विनियोजकवाक्यं प्रकरणाधीनम। चित्रिण्यादिनामकानां त्विष्टकाविशेषाणां विनियोजकवाक्यमप्यनारभ्याधीतम्। तच्च चित्यन्तरे तास्त्विष्टकाविनियुङ्क्ते। अखण्डत्वादिधर्मास्तु पञ्चानां चितीनां मध्ये प्रथमचितावाम्नाताः। तस्मात् ते चित्रिण्यादिषु नोचिता इति प्राप्ते ब्रूमः। यद्यप्युत्पत्तिविनियोजकवाक्ययोरन्यतरस्यापि प्रकरणपाठो नास्ति तथापि य एवं विद्वानग्निं चिनुत इति प्रकृतं यदेतदग्न्यपूर्वं तत्सम्बन्धित्वेनैव चित्रिण्यादयो-

ऽप्यप्रकरणपठितेनापि वाक्येन विनियुज्यन्ते। अग्रवणाड्-त्वादयश्चाग्निसाधनभूतेष्टकाधर्माः। न तु प्रथमचिति-धर्माः। तस्मादग्निसाधनभूतासु चितिण्यादीष्टकास्वपि ते सन्ति।

त्रयोदशाधिकरणमारचयति।

विधयोऽभिषवाद्याः स्युः फलाख्ये चमसे न वा।
नैमित्तिकस्य नित्येन तुल्यत्वादस्ति तद्विधिः॥ २३॥
नित्ये कृतार्थाः संस्काराः पश्चाद्भाविनिमित्तजे।
न विधेयाः किन्तु तत्र प्राप्यन्तामतिदेशतः॥ २४॥

न्यग्रोधमुकुलरूपस्य फलस्य पिष्टं चमसे यत्र स फलचमसः। स च नैमित्तिकः। राजन्यवैश्यौ निमित्ती-कृत्य विहितत्वात्। सोमस्तु नित्यः। उपाधिक्रमसमनु-पजीव्यैव सोमेन यजेतेति विहितत्वात्। तस्य च नित्यस्य सोमस्य यथा यागसाधनत्वम्। तथा फलचमसस्यापि तदस्ति। तस्मात् सोममभिषुणोति सोमं क्रीणाती-त्यादयो यागद्रव्यसंस्कारविधयः सोम इव फलचमसेऽपि प्रवर्त्तन्त इति प्राप्ते ब्रूमः। नित्या अभिषवादिसंस्कारा नित्यं सोमं संस्कार्यं लब्ध्वा चरितार्थाः सन्तो नान्यं संस्कार्यमपेक्षन्ते। फलचमसस्तु सोमविकारत्वात् पश्चाद्भावी। ततो निरपेक्षाः संस्कारविधयो न तत्र प्रवर्त्तन्ते। न चैतावता संस्काराभावः। चोदकेन तत्सिद्धेः। तस्मात् सोममात्रसम्बन्धिनो विधयः।

चतुर्दशाधिकरणमारचयति।

नीवारादिप्रतिनिधिरतुल्यो वा विधिः समः।

पुरेवातुल्यता साम्यमाकाराद् व्रीहिता यतः ॥ २५ ॥

व्रीहिभिर्यजेतेति विहितानां व्रीहीणामसंभवे नीवाराः प्रतिनिधित्वेन स्वीकार्य्या इति वक्ष्यते। तत्र पूर्वन्यायेनावघातादिविधयो व्रीहिषु कृतार्थाः पश्चाद्भाविनि नीवारादौ न प्रवर्त्तन्त इति चेत्। मैवम्। व्रीहिशब्दो हि जातिविशेषेणाकारविशेषेण चोपेतं द्रव्यमाचष्टे। नीवारादिषु जातितो व्रीहिशब्दार्थत्वाभावेऽप्याकारे व्रीहिशब्दार्थत्वेन व्रीहीनवहन्तीति विधिः प्रवर्त्तते। यथा व्रीहिजाताविव समीचीनानां व्रीहीणामभावे जलवह्न्याद्युपघातेन शारविकलेष्वपि विधिः। तथा जातिविकलेष्वपि व्रीहिषु मुख्यैकदेशरूपत्वाद् विधिरस्तु।

पञ्चदशाधिकरणमारचयति।

पूतीकाभिषवोऽतुल्यस्तुल्यो वा सोमतुल्यता।

नास्ति नैमित्तिकत्वेन तुल्यः प्रतिनिधित्वतः ॥ २६ ॥

यदि सोमं न विन्देत पूतीकानभिषुणुयादिति श्रूयते। तत्र सोमाभावं निमित्तीकृत्य पूतीकलताखण्डानां विहितत्वात् फलचमसवन्नैमित्तिकत्वेन सोमाभिषवक्रयादिविधिः पूतीकेषु न तुल्य इति चेत्। मैवम्। नीवारवत् प्रतिनिधित्वात्। ननु प्रतिनिधित्वे पुरुषेण स्वयमेवोपादित्सितत्वाद् विधिर्नापेक्षितः। अत एव नीवारेषु विधिर्न श्रुत इति चेत्। न। विधेर्नियमार्थत्वस्य षष्ठे वक्ष्यमाणत्वात्। तस्मादभिषवक्रयादिविधिः सोमपूतीकयोस्तुल्यः।

षोड़शाधिकरणमारचयति।

उक्थ्यादिषु समो दीक्षणीयाद्यङ्गविधिर्न वा।

एकप्रकरणत्वे न फलवत्त्वाच्च तुल्यता ॥ २७ ॥

उक्थ्यादयः कामयोगाद् विकाराः प्रक्रिया ततः ।
अग्निष्टोमात्मके ज्योतिष्टोममात्रे च तद्विधिः ॥२८॥

ज्योतिष्टोमः एकमेकोऽपि समाप्तिभेदाद् भिद्यते । यज्ञायज्ञीयस्तोत्रेण समाप्तावग्निष्टोम इत्युच्यते । तस्मादपि स्तोत्रादूर्ध्वमुक्थ्यस्तोत्रेण समाप्तावुक्थ्य इत्युच्यते । एवं षोडश्यादयोऽपि । तादृशस्य सप्तसंस्थावतो ज्योतिष्टोमस्य प्रकरणे दीक्षणीयेष्टिप्रायणीयेष्ट्यादीनामङ्गानां विधिराम्नातः । स च विधिर्ज्योतिष्टोमस्य प्रथमसंस्थाविशेषेऽग्निष्टोमे यथा प्रवृत्तः । तथैवोक्थ्यादिष्वपि प्रवर्त्तते । कुतः । प्रकरणसम्बन्धस्य समानत्वात् । किञ्च । यथाग्निष्टोमः फलवत्त्वादङ्गविधिभिः संयुज्यते । एवमुक्थ्यादयोऽपि । तेषां च फलमेवाम्नायते । पशुकाम उक्थ्यं गृह्णीयात् । षोडशिना वीर्य्यकामः स्तुवीत । अतिरात्रेण प्रजाकामं याजयेदिति । तस्मात् सप्तस्वपि संस्थासु तुल्यमानोऽङ्गविधिरिति प्राप्ते ब्रूमः । यदेतदुक्थ्यादीनां फलमुदाहृतं तत् तु तेषां विकारत्वं गमयति । काम्यो गुणः श्रूयमाणो नित्यमर्थं विकृत्य निविशत इति न्यायाद्यथा गोदोहनगुणो नित्यं चमससाधनकमपां प्रणयनं विकृत्य निविशते । एवमुक्थ्यादयो नित्यामग्निष्टोमसंस्थां विकृत्य संस्थान्तरत्वं गमयन्ति । ततोऽग्निष्टोमस्य गुणविकारा उक्थ्यादय इति न सर्वसाधारणं प्रकरणम् । किन्त्वग्निष्टोमस्यैवासाधारणम् । ननु ज्योतिष्टोमेन यजेतेत्युक्तत्वाज्ज्योतिष्टोमस्येदं प्रकरणम् । न त्वग्निष्टोमसंस्थाया इति

चेत्। बाढम्। असौ ज्योतिष्टोमो न कदाचिदप्यग्निष्टोमं व्यभिचरति। उक्थ्यादीनामप्यन्तर्भावितग्निष्टोमकत्वात्। उक्थ्यादींस्तु व्यभिचरति। विनापि तैरग्निष्टोमदशायां ज्योतिष्टोमत्वसम्भवात्। अतोऽग्निष्टोमसंस्थस्य ज्योतिष्टोमस्येदं प्रकरणं सत्तेव दीक्षणीयाद्यङ्गविधिं निवेशयति। उक्थ्यादिषु चोदकादङ्गान्यतिदिश्यन्ते।

इति माधवीये जैमिनीयन्यायमालाविस्तरे

तृतीयस्याध्यायस्य षष्ठः पादः।

---

सप्तमपादस्य प्रथमाधिकरणमारचयति।

मुख्याङ्गतैव वेद्यादेः प्रयाजाद्यङ्गतापि वा।

तद्वाक्यं प्रक्रियायुक्तं मुख्याङ्गत्वस्य बोधकम्॥ १॥

मुख्याङ्गस्यापि वेद्यादेः प्रयाजादिषु चाङ्गता।

मुख्यार्थत्वात् प्रयाजादेः स्वापूर्वव्यवधानतः॥ २॥

दर्शपूर्णमासयोः श्रूयते। वेद्यां हवींष्यासादयति। बर्हिषि हवींष्यासादयतीति। तथा तद्धर्माः श्रूयन्ते। वेदिं खनति। बर्हिर्लुनातीत्यादयः। मुख्यानि हवींष्याग्नेयपुरोडाशादीनि। अमुख्यहवींषि तु प्रयाजाद्यर्थानि। तत्र स्वस्वधर्मसहितानि वेद्यादीनि प्रकरणबलान्मुख्यहविषामेवाङ्गानि। वेद्यां हवींष्यासादयतीति वाक्यात् सर्वहविरङ्गतेति चेत्। न। प्रकरणेन वाक्यस्य संकोचनीयत्वात्। यदि वाक्यं प्रकरणनिरपेक्षमेव स्वतन्त्रं स्यात्। तदासादनमात्रपर्यवसानेन यागाभावे वैयर्थ्यं स्यात्। सौमिकहविषामप्येतद्यासादनं प्रसज्येत। तस्मान्मुख्यहविरङ्गं वेद्यादिक-

मिति प्राप्ते ब्रूमः । अस्तु वैयर्थ्यातिप्रसङ्गपरिहाराय प्रकृतापूर्वसाधनभूतहविःषु वेद्यादेरङ्गत्वम् । प्रयाजादिहवींष्यपि स्वकीयावान्तरापूर्वद्वारा मुख्यापूर्वसाधनान्येवेति तदङ्गत्वमपि वेद्यादेर्युक्तम् । एवं च सति वाक्यस्यात्यन्तसंकोचो न भविष्यति ।

द्वितीयाधिकरणमारचयति ।

वपनाद्युपकारः किं द्वयोर्मुख्याङ्गयोरुत ।
मुख्य एव द्वयोरस्तु कर्तृत्वकर्तृगतत्वतः ॥ ३ ॥
युक्तः शास्त्रीयसंस्कारो मुख्यस्य फलभाजिनः ।
विनापि संस्कृतिं दृष्टं कर्तृत्वं तत्र नास्ति सः ॥ ४ ॥
युक्तः शास्त्रीयसंस्कारो मुख्यस्य फलभाजिनः ।
विनापि संस्कृतिं दृष्टं कर्तृत्वं तत्र नास्ति सः ॥ ४ ॥

ज्योतिष्टोमे केशश्मश्रुवपनपयोव्रतादयो यजमानसंस्कारा आम्नाताः । ग्रहैः सोमहोमो ज्योतिष्टोमे मुख्यः । अग्नीषोमीयपश्वादिकमङ्गम् । तत्र द्वयोर्मुख्याङ्गयोरेते वपनादय उपकुर्वन्ति । कुतः । कर्तृधर्मत्वात् । यजमानो हि कर्तृतया वपनादिभिः संस्क्रियते । कर्तृत्वं च यथा मुख्यं प्रति तस्य विद्यते । तथाङ्गं प्रत्यप्यस्ति । तस्मादुभयोरुपकार इति चेत् । मैवम् । द्वौ हि यजमानस्याकारौ । क्रियाकर्तृत्वं फलभोक्तृत्वं चेति । तयोरदृष्टः फलभोगः । क्रियानिष्पत्तिस्तु दृष्टा । तथा सति वपनादिकृतोपकारस्यादृष्टत्वाद्भोक्तृशेषा वपनादयः फलभोगसाधने मुख्य एव पर्यवस्यन्ति । वपनादिसंस्काररहितैरप्यृत्विग्भिः कृषीवलादिभिश्च क्रिया निष्पाद्यमाना दृश्यते । ततस्तत्र कर्तृत्वाकारे

वपनादिकृत उपकारो नास्ति। तस्माददृष्टफलभोजिनोऽस्य यजमानस्य योऽयमदृष्टरूपः शास्त्रीयः संस्कारः सोऽयं मुख्ये कर्मणि युक्तः। नाङ्गेषु। नात्र पूर्ववद्वाक्यमस्ति येन परम्परया फलसाधनेष्वङ्गेषु वपनाद्युपकारः शङ्क्येत। प्रकरणं तु मुख्यस्यैव। न त्वङ्गानाम्। तस्मान्न तेषूपकारः।

तृतीयाधिकरणमारचयति।

मुख्यार्था सौमिकी वेदिरुभयार्थेति मुख्यगा।

चिकीर्षितत्वान्मुख्यस्य वेद्यां तत्कृतिसम्भवात्॥ ५॥

मुख्यपौष्कल्यहेतुत्वात्तदन्तरं चिकीर्षितम्।

मुख्यवत्तेन तद्वेदिरङ्गेष्वप्युपकारिणी॥ ६॥

दार्शिकीं वेदिं मध्येऽन्तर्भाव्य प्राचीनवंशो मण्डपोऽवस्थितः। ततः पूर्वस्यां दिशि सदोहविर्धानादीनां पर्याप्तो भूभागविशेषस्तैः सदःप्रभृतिभिः सह सौमिकी वेदिरित्युच्यते। सेयं मुख्यसोमयागस्यैवोपकारं करोति। न त्वमुख्यानाममीषामीयाद्यङ्गानाम्। कुतः। मुख्यस्य चिकीर्षितत्वात्। न चाङ्गान्यपि चिकीर्षितानीति वाच्यम्। चिकीर्षास्वरूपस्य वेदेनैवाभिहितत्वात्। एवं श्रूयते। षट्त्रिंशत्प्रक्रमा प्राची चतुर्विंशतिरग्रेण त्रिंशज्जघनेनेयति शक्ष्यामह इति। अस्यायमर्थः। श्रूयमाणेनानेन दैर्घ्यप्रमाणेन तिर्यक्प्रमाणद्वयेन च प्रमिते भूभागे फलहेतुं सोमयागं कर्तुं शक्ष्यामह इति निश्चित्य तथैव कुर्यादिति सेयं चिकीर्षा मुख्यविषया। इयति शक्ष्यामह इति परिमाणस्य शक्तेश्चोपन्यासात्। अङ्गानां तु पशूनामिष्टीनां च सदोहविर्धानादिमण्डपनिरपेक्षाणां यथोक्तपरिमाणमन्तरेणा-

प्यनुष्ठातुमशक्यत्वात् स उपन्यासस्तत्र निरर्थकः। सोमस्य त्वनुष्ठानं यथोक्तवेद्यामेव सम्भवति। न त्वन्यत्र। तस्मात् सा वेदिर्मुख्यस्यैवोपकरोतीति प्राप्ते ब्रूमः। इयति शब्दामह इत्यत्र साङ्गप्रधानानुष्ठाने शक्तिरुक्ता। तादृशस्यैव फलं प्रति पुष्कलहेतुत्वात्। अतो मुख्याङ्गयोश्चिकीर्षायास्तुल्यत्वाद्वेदिरुभयार्था। न चात्र वपनादिसाम्यं शङ्कनीयम्। दृष्टोपयोगाभावस्य तत्रोक्तत्वात्। इह तु हविरासादनादिर्दृष्ट उपयोगः। स च मुख्याङ्गयोः सम इत्युभयार्थत्वम्।

चतुर्थाधिकरणमारचयति।

चतुर्होत्रा पौर्णमासीं मृशेदाज्यादिमर्शने।

मन्त्रो मुख्य उताङ्गेऽपि मुख्ये तद्वाचिशब्दतः॥ ७।

शब्दस्य कर्मवाचित्वात् तत्र मर्शनवर्जनात्।

विभक्तिव्यत्यये मन्त्रो मुख्याङ्गहविषोर्द्वयोः॥ ८॥

दर्शपूर्णमासयोः श्रूयते। चतुर्होत्रा पौर्णमासीमभिमृशेत पञ्चहोत्रामावास्यामिति। पृथिवी होतेत्यादिको मन्त्रश्चतुर्होता। तस्मिन् मन्त्रे यज्ञाङ्गानां चतुर्णां श्रुतत्वात। अथवा तस्य मन्त्रस्याभिमानित्वेनावभृतः कश्चित् पुरुषः प्रजापतिना चतुर्वारमामन्त्रितः प्रत्युत्तरमुवाचेति स पुरुषश्चतुर्हूत। तदीयनाम्ना मन्त्रोऽपि चतुर्हूत इत्युच्यते। पूज्यानां प्रत्यक्षनामग्रहणमयुक्तमित्यभिप्रायेण हूतशब्दस्याने होतृशब्दः पठ्यते। अयमर्थः सर्वोऽपि तैत्तिरीयब्राह्मणे श्रूयते। आत्मन्वात्मन्नित्यामन्त्रयत तस्मै चतुर्हूतः प्रत्यशृणोत् स चतुर्हूतोऽभवच्चतुर्हूतो ह वै नामैषः। तं

वा एतं चतुर्हँतं सन्तं चतुर्होतेत्याचचते परोचेण परोच-प्रिया एव हि देवा इति। अग्निर्होतेत्यादिको मन्त्रः पञ्च-होता। तत्राप्युक्तप्रकारो द्रष्टव्यः। अत्र योऽयमाज्यादि-हविष उपस्पर्शनार्थो मन्त्रः। असौ मुख्य एव हविषि निविशते। पौर्णमास्यमावास्याशब्दयोर्मुख्यहविर्विषयत्वा-दिति प्राप्ते ब्रूमः। पौर्णमास्यमावास्याशब्दौ कर्मवाचिनौ। न तु हविर्वाचिनौ। न च कर्मण उपस्पर्शनं सम्भवति। अथ कालविवक्षायां विभक्तिव्यत्ययेन सप्तम्यर्थो व्याख्यायेत। तदा कालसम्बन्धस्य मुख्याङ्गयोरुभयोस्तुल्यत्वादुभयविध-हविरुपस्पर्शने मन्त्रो विनियुज्यते।

पञ्चमाधिकरणमारचयति।

दण्डदीक्षा दक्षिणा तु शतं द्वादशभिर्युतम्।
द्वयार्थमुत मुख्यार्थं सोमस्येत्युक्तिसम्भवात्॥ ९॥
मुख्याङ्गद्वयगं नैवं पारम्पर्यं विडम्बना।
वचनस्य न युक्तातः प्रधानार्थमिदं स्थितम्॥ १०॥

ज्योतिष्टोमे दीक्षादक्षिणं श्रूयते। दण्डेन दीक्षयतीति। तस्य द्वादशशतं दक्षिणेति च। तत्र दीक्षा मुख्याङ्गयोरुभयो-रुपकरोति। तथा दक्षिणापि। न च वाच्यम्। दक्षिणा सोमस्य दीक्षा सोमस्येति वाक्ये षष्ठ्या मुख्यसम्बन्ध एवाव-गम्यते। न त्वङ्गसम्बन्ध इति। दीक्षादक्षिणे सोमेनैव साक्षात् सम्बध्येयाताम्। स सोमः पुनरङ्गैः संबद्ध इति परम्परया दीक्षादक्षिणयोरङ्गैरपि सम्बन्धोऽस्ति। तस्मा-दुभयार्थं दीक्षादिकमिति प्राप्ते ब्रूमः। अव्यवहितसम्बन्ध एव षष्ठ्या अभिधेयोऽर्थः। तदसम्भवे तु परम्परासम्बन्धः

कथञ्चिद् युज्यते। इह तु तत्सम्भवात् पारम्पर्यं न युक्तम्। तस्मात् प्रधानार्थं शौचादिकम्।

षष्ठाधिकरणमारचयति।

अन्तर्वेदि मिनोत्यर्धं यूपाङ्गमुत लक्षयेत्।
देशं यूपाङ्गभावेन वेदिभागोऽत्र बोध्यते ॥ ११ ॥
बहिर्वेद्यर्धमित्येतद् वाक्यं भिद्येत तद्विधौ।
मीयमानस्य यूपस्य तावान् देशोऽत्र लक्ष्यते ॥ १२ ॥

अग्नीषोमीये पशौ यूपं मिनोतीति प्रकृत्य श्रूयते। अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदीति। यूपं स्थापयितुं कियद्विस्तारवानवटोऽपेक्षित इति बुभुत्सायां तन्निर्णयाय यूपमूलस्य स्थौल्यमङ्गुल्यादिभिर्मातव्यम्। तस्य च मीयमानस्य यूपस्य वेद्यन्तरभागोऽङ्गत्वेन विधीयत इति चेत्। मैवम्। यथा संस्कृतो वेद्यन्तर्भागोऽर्धमन्तर्वेदीत्यनेन वाक्येन विधीयते। तद्वदसंस्कृतो वेदिबहिर्भागो बहिर्वेदीत्यनेन वाक्येन विधातव्यः। ततो वाक्यं भिद्येत। यदा तु वेदेरभ्यन्तरबाह्यभागाभ्यामुपलक्षितोऽसंस्कृतो लौकिको देशो मीयमानयूपोचितो विधीयते। तदा नास्ति वाक्यभेदः। तस्माल्लौकिकदेश एवात्र यूपाङ्गत्वेन विधीयते। न तु संस्कृतवेदिभागः।

सप्तमाधिकरणमारचयति।

हविर्धाने स्थितो ब्रूयात् सामिधेनीरिहाङ्गता।
हविर्धानस्य तास्वाहो तद्देशोऽनेन लक्ष्यते ॥ १३ ॥
वाक्यात् स्यादङ्गता मैवं प्रकृत्या पठिमीरितः।
देशः प्राप्तो लाघवेन लक्ष्यः शकटसन्निधिः ॥ १४ ॥

ज्योतिष्टोमे श्रूयते। उत यत् सुन्वन्ति सामिधेनीस्तदन्वाहुरिति। हविर्धानमण्डपगतयोर्दक्षिणोत्तरभागयोरवस्थितयोर्हविर्धाननामकयोः शकटयोर्मध्ये दक्षिणं शकटमत्र यत्तच्छब्दाभ्यामभिधीयते। तस्य समीपे सोमस्याभिषवः। उतेत्ययं शब्दोऽथशब्दार्थे वर्त्तते। अथ यस्मिन् हविर्धाने सोममभिषुण्वन्ति तस्मिन् सामिधेनीरनुब्रूयुरित्यर्थः। इह दक्षिणस्य हविर्धानस्य सामिधेनीष्वङ्गत्वं प्रतीयते। न चात्र पूर्ववद्वाक्यभेददोषः शङ्कितुं शक्यः। एकवाक्यतायाः स्पष्टं प्रतिभासादिति प्राप्ते ब्रूमः। सामिधेनीनामिष्ट्यङ्गतया दर्शपूर्णमासावत्र प्रकृतिः। प्रकृतौ चाहवनीयाग्नेः पश्चिमो देशः सामिधेनीनां स्थानम्। उत्तरवेद्याहवनीयाधिकरणत्वात्तदपेक्षया हविर्धानस्य पश्चिमदेशावस्थानात् स देशस्तेनोपलक्षितो प्राप्त इति न देशस्य सामिधेन्यङ्गत्वं विज्ञातव्यम्। किन्तु दक्षिणोत्तरहविर्धानसमीपदेशयोरनियमेन प्राप्तौ दक्षिणस्यैव हविर्धानस्य समीपदेश इति नियन्तुं हविर्धानेन सन्निधिर्लक्ष्यते। तथा सति नियममात्रविधानाल्लाघवं भवति। त्वत्पक्षे त्वभिषवोपलक्षितस्य दक्षिणस्य हविर्धानस्यात्यन्तमप्राप्तं सामिधेन्यङ्गत्वं विधीयत इति गौरवम्। तस्माद् देशलक्षणा।

अष्टमाधिकरणमारचयति।

यजमानेन कर्त्तव्यं निखिलं त्याग एव वा।
कर्त्रङ्गानिफलश्रुत्या युज्यते सर्वकर्तृता॥ १५॥
प्रयाजकेऽपि कर्तृत्वमस्ति नो चेत् क्रयो वृथा।
कार्य्यं तेन त्यागमात्रमृत्विजोऽन्यत्र कर्तृता॥ १६॥

स्वर्गकामो यजेतेति स्वर्गभोक्तृयागकर्त्तुश्च सामानाधिकरण्यादेकत्वं गम्यते। पाणिनिश्च स्वरितञित: कर्त्रभिप्राये क्रियाफल इति सूत्रेण क्रियाफलस्य कर्तृगामित्वे सत्यात्मनेपदं विदधाति। अतः साङ्गकर्मानुष्ठानमन्तरेण फलासम्भवान्निखिलं यजमानेन कर्त्तव्यमिति प्राप्ते ब्रूमः। निखिलानुष्ठानाभावेऽपि प्रयोजकतया यजमानस्य सर्वकर्तृत्वमस्ति षड्भिर्हलैः कर्षतीत्यत्र तद्दर्शनात्। यदि स्वेनैव सर्वमनुष्ठीयेत। तदानीमृत्विजां परिक्रयो वृथा स्यात्। तस्माद् यजमानेन त्यागमात्रं कार्य्यम्। अन्यत्र साङ्गप्रधाने क्रीतर्त्विजोऽनुष्ठानम्। तथा सति साचात् परम्परया च सर्वकर्तृत्वस्य यजमाने सम्भवात् तस्य फलं न विरुध्यते।

नवमाधिकरणमारचयति।

न क्रीतकर्तृसङ्ख्याया नियमोऽस्त्यस्ति वा न हि।
अविशेषादस्ति यावत्कार्य्यं तावन्त एव ते॥ १०॥

ये यजमानेन क्रीताः कर्त्तार ऋत्विजस्तेषां संख्याविशेषो यद्यपि न श्रुतस्तथापि कार्य्यानुसारेण सोऽवगन्तव्यः। ते च कार्य्यविशेषाः कर्त्तृसंयुक्ता एव श्रूयन्ते। पुरोऽध्वर्य्युर्विभजति। प्रतिप्रस्थाता मन्थिनं जुहोति। नेष्टा पत्नीमुदानयति। उन्नेता चमसानुन्नयति। प्रस्तोता प्रस्तौति। उद्गातोद्गायति। प्रतिहर्त्ता प्रतिहरति। सुब्रह्मण्यः सुब्रह्मण्यामाह्वयति। होता प्रातरनुवाकमनुब्रूते। मैत्रावरुणः प्रेष्यति। अच्छावाको यजति। ग्रावस्तुद्ग्रावस्तोत्रीयामन्वाहेति। एव ब्रह्मब्राह्मणाच्छंस्याग्नीध्रपोतॄणां

छन्दांसि कर्माण्युदाहार्य्याणि । तस्माद् यावन्ति कार्य्याणि तावन्त ऋत्विजो वरीतव्याः ।

दशमाधिकरणमारचयति ।

चमसाध्वर्य्यवो नान्य ऋत्विग्भ्योऽन्येऽथवाग्रिमः ।

यौगिक्या संज्ञया मैवं षष्ठ्या तेभ्यो विभेदनात् ॥१८॥

ज्योतिष्टोमे श्रूयते । चमसाध्वर्य्यून् वृणीत इति । ये पूर्वत्र कार्य्यानुसारेणाध्वर्य्युमुख्या ऋत्विज उक्तास्तेभ्यो न व्यतिरिक्ताश्चमसाध्वर्य्यवः । कुतः । यौगिकसंज्ञया तद्भेद-प्रतीतेः । यथा देवदत्त एव पचिक्रियायोगात् पाचको भवति । तथाध्वर्य्युप्रमुखा एव चमसयोगाच्चमसाध्वर्य्यव इति चेत् । मैवम् । मध्यतः कारिणां चमसाध्वर्य्यवो होत्र-काणां चमसाध्वर्य्यव इति षष्ठ्या भेदावभासात् । मध्यतः कारिणोऽध्वर्य्युहोत्रादयः । होत्रकाः प्रतिप्रस्थातृमैत्रावरु-णादयः । तस्मादृत्विग्भ्योऽन्ये ।

एकादशाधिकरणमारचयति ।

तान् वृणीतेति बहुता नास्ति वास्ति ग्रहैक्यवत् ।

नेति चेन्नात्र वैषम्यादुत्पत्तौ बहुताश्रुतेः ॥ १९ ॥

चमसाध्वर्य्यून् वृणीत इति यद् बहुत्वं श्रुतं तन्न विव-क्षितम् । ग्रहैकत्ववदुद्देश्यगतत्वादिति चेत् । मैवम् । ग्रहवैषम्यात् । ग्रहं संमार्ष्टीत्येतद् ग्रहाणां नोत्पत्ति-वाक्यम् । चमसाध्वर्य्यूणां त्वेतदेवोत्पत्तिवाक्यम् । तत-स्तेषामुपादेयत्वात् तद्गतं बहुत्वं विवक्षितम् ।

द्वादशाधिकरणमारचयति ।

नेयत्तास्त्यस्ति वा तेषां न नियामकवर्जनात् ।

चमसानां दृष्टत्वेन चमसाध्वर्य्यवो दृष्टाः ॥ २० ॥

स्पष्टोऽर्थः।

त्रयोदशाधिकरणमारचयति।

तेभ्योऽन्यः शमिता नान्यो वान्यः संज्ञापृथक्त्वतः।

वरणाभावतो नान्यैः संज्ञाभेदस्तु यौगिकः ॥ २१ ॥

शमितार उपेत न यज्ञमित्यस्मिन् मन्त्रे श्रुतायाः शमितृसंज्ञायाः पृथक्त्वादुक्तेभ्योऽन्यः शमितेति चेत्। नैवम्। पृथग्वरणाभावात्। संज्ञाभेदस्तु पशुसंज्ञपनयोगादुपपद्यते। यद्यपीयं मन्त्रोऽध्वर्य्युकाण्डे पठितस्तथाप्यध्वर्य्योः पराहुत्ति-श्रवणादध्वर्य्युपुरुषाः प्रतिप्रस्थात्रादयः शमितारः। अत एव श्रूयते। परावर्त्ततेऽध्वर्य्युः पशोः संज्ञप्यमानादिति।

चतुर्दशाधिकरणमारचयति।

अन्ये स्युरुपगातार ऋत्विग्भ्यो न वा यथा।

लोकेऽत्रापि तथा नैवं नाध्वर्य्युरिति लिङ्गतः ॥ २२ ॥

यथा लोके मुख्येभ्यो गायकनायकादिभ्योऽन्ये पार्श्वस्था उपगातारस्तथात्रापीति चेत्। नैवम्। तदयुक्तेभ्यः पुरुषेभ्य उपगातारोऽन्ये भवेयुः। तदानीमध्वर्य्योः प्रसक्त्यभावान्नाध्वर्य्युरुपगायेदिति प्रतिषेधोऽनर्थकः स्यात्। तस्मादुक्तेष्वेव यौगिकः संज्ञाभेदः।

पञ्चदशाधिकरणमारचयति।

सोमविक्रय्येक एषु न वा वरणवर्जनात्।

एकः कृत्स्नार्थता नास्ति विक्रयस्येति भिद्यते ॥ २३ ॥

क्रय एव ज्योतिष्टोमाङ्गत्वेन श्रुतः। न तु विक्रयः। न चाविहितमृत्विजः कुर्वन्ति। तस्मादन्यो विक्रेता।

षोडशाधिकरणमारचयति ।

किमृत्विङ्नाम सर्वेषु समानमुत केषुचित् ।

ऋतौ यजनमेतेषां तुल्यमित्यस्ति नाम तत् ॥ २४ ॥

सौम्याध्वरस्य सप्त स्युर्दश चेत्यादिसङ्ख्यया ।

न सर्वेषां समं नाम केषाञ्चिद् यौगरूढ़ितः ॥ २५ ॥

ऋत्विक्शब्दस्य प्रवृत्तिनिमित्तमृतौ यजनम् । तच्च ब्रह्मादिष्विव चमसाध्वर्य्युष्वप्यस्ति । तस्मात् सर्वेषामृत्विजामृत्विङ्नाम समानमिति चेत् । मैवम् । संख्याश्रुतिविरोधात् । सौम्यस्याध्वरस्य यज्ञक्रतोः सप्तदशर्त्विज इति हि श्रूयते । तस्माद् यौगमतिक्रम्य शास्त्रीयरूढ़िमप्याश्रित्य केषुचिदेवैतन्नामेत्यवगन्तव्यम् ।

सप्तदशाधिकरणमारचयति ।

संख्याता अपि ये केचिन्नियता वाविशेषतः ।

आद्यो न दक्षिणादाने दीक्षायां च विशेषणात् ॥२६॥

ये सप्तदश संख्यातास्ते ब्रह्मादिषु चमसाध्वर्य्युषु च ये केचिदिच्छया ग्रहीतव्याः । विशेषस्याश्रवणादिति चेत् । मैवम् । दक्षिणावाक्ये दीक्षावाक्ये च विशेषश्रवणात् । ऋत्विग्भ्यो दक्षिणां ददातीत्युक्त्वा तद्विशेषः श्रूयते । आग्नीध्रे ददाति ब्रह्मणे ददातीत्यादिना दीक्षावाक्यं च सप्तप्रकरणे ये यजमानास्त ऋत्विज इत्युक्तानन्तरमेवमाम्नायते । अध्वर्य्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति तत उद्गातारं ततो होतारं ततस्तं प्रतिप्रस्थाता दीक्षयित्वार्धिनो दीक्षयति ब्राह्मणाच्छंसिनं ब्रह्मणः प्रस्तोतारमुद्गातुर्मैत्रावरुणं होतुस्ततस्तं नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयत्यग्नीध्रं

ब्रह्मणः प्रतिहर्त्तारमुद्गातुरच्छावाकं होतुस्ततस्तमुन्नेता दीक्षयित्वा पादिनो दीक्षयति पोतारं ब्रह्मणः सुब्रह्मण्यमुद्गातुर्ग्रावस्तुतं होतुस्तमन्यो ब्राह्मणो दीक्षयतीति। अस्यायमर्थः। अध्वर्य्युर्यजुर्वेदप्रोक्तं करोति। तस्य पुरुषास्त्रयः। प्रतिप्रस्थाता नेष्टोन्नेता चेति। एते चत्वारो दीक्षयितारः। ब्रह्मा वेदत्रयोक्तस्य प्रत्यवेक्षणं करोति। तस्य पुरुषास्त्रयः। ब्राह्मणाच्छंस्याग्नीत्पोता चेति। उद्गातोद्गानं करोति। तस्य पुरुषास्त्रयः। प्रस्तोता प्रतिहर्त्ता सुब्रह्मण्येति। होता शंसनं करोति। तस्य पुरुषास्त्रयः। मैत्रावरुणोऽच्छावाको ग्रावस्तुच्चेति। चतुर्षु वर्गेषु ये प्रथमास्ते दक्षिणां सम्पूर्णां प्राप्नुवन्ति। ये द्वितीयास्तदर्धं ते प्राप्नुवन्तीत्यर्धिनः। ये तृतीयास्ते तृतीयांशं प्राप्नुवन्तीति तृतीयिनः। ये चतुर्थास्ते चतुर्थमंशं प्राप्नुवन्तीति पादिनः। तानेतानुक्तक्रमेण स सपुरुषः संस्करोतीति। अत्र दीक्षावाक्ये निर्दिष्टा अध्वर्य्युप्रभृतय एव ऋत्विजः षोडश। न तु चमसाध्वर्य्यव इति नियमो द्रष्टव्यः।

अष्टादशाधिकरणमारचयति।

सदस्ये यजमाने वा साप्तदश्यं तु तत्त्वतः।
सदस्ये कुरुते किञ्चिन्नासौ स्वामिनि तत्त्वतः॥ २७॥

अध्वर्युब्रह्मादिषोडशसु व्यवस्थितेषु सप्तदशसंख्यापूरकः कश्चिदृत्विगपेक्षितः। सोऽत्र सदस्यो भविष्यति। सदस्यवस्थितः सदस्यः। न च तस्य वरणाभावः। केषाञ्चिच्छाखायां तद्वरणस्याम्नातत्वात्। ततः साप्तदश्यं सदस्ये पर्य्यवसितमिति चेत्। मैवम्। असौ सदस्यः किञ्चिदपि

न करोति। सदस्य इदं कुर्य्यादिति विध्यभावात्। न च विना क्रियामृत्विग्यजननिमित्त ऋत्विकशब्दस्तस्मिन्नवकल्पते। यजमानस्तु त्यागं करोतीति तस्मिन्नुपपद्यते। तस्मात् साप्तदश्यं यजमाने युक्तम्।

एकोनविंशाधिकरणमारचयति।

न कार्य्यं नियतं तेषां नियतं वाग्रिमो यतः।

शक्ताः केन किमित्यत्र नियतिः स्यात् समाख्यया॥२८॥

तेषामध्वर्युप्रभृतीनां कार्य्यं न नियतम्। यतः सर्वे सर्वत्र शक्ताः। प्रकरणं च सर्वसाधारणत्वान्न नियतमिति चेत्। मैवम्। समाख्याया नियामकत्वात्। यस्मिन् कर्मण्याध्वर्य्यवमिति समाख्या तत् कर्माध्वर्य्योः। एवमितरत्रापि।

विंशाधिकरणमारचयति।

प्रकृत्यर्थोऽथ सर्वार्थो वह्निराद्योऽस्तु पर्णवत्।

पर्णन्यायोऽतिदिष्टे स्यादुपदिष्टे तु सर्वशः॥ २९॥

यथा यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोतीत्यसौ पर्णविधिः प्रकृत्यर्थः। एवमाधानस्याप्यनारभ्याधीतत्वादाहित आहवनीयाद्यग्निः प्रकृत्यर्थ इति चेत्। मैवम्। वैषम्यात्। पर्णतायां क्रतुप्रवेशे जुहूर्द्वारम्। सा च जुहूः प्रकृतावेव विहिता विकृतिषु सर्वत्रातिदिश्यते। आहवनीयाद्यग्नेस्तु क्रतुप्रवेशे द्वारं होमः। स च क्वचित् प्रकृतावेव विहितः सन् विकृतावति दिश्यते। तद्यथा प्रयाजनारिष्टादिहोमाः। तादृशे विषये यदाहवनीये जुहोतीति वाक्येनाग्निः प्रकृतावेव विधीयते। विकृतौ तु होमेन सहाति-

दिश्यते। तस्मात् तत्र पर्णन्यायः। यस्तु होमो विकृता-वुपदिश्यते। तद्यथा साङ्ग्रहण्यामिष्टावामनहोमः। तत्र द्वारभूतस्य होमस्य विकृतावुपदिश्यमानतया द्वारिणोऽपि प्रकृताविव विकृतावपि। वाक्येन विधेर्वारयितुमशक्य-त्वात्। तस्मात् सर्वार्थो वह्निः।

एकविंशाधिकरणमारचयति।

यन्मैत्रावरुणः प्रेष्यत्यनु चाहेति बाधनम्।
होत्रादिकसमाख्यायास्तत्सर्वत्रोत कुत्रचित्॥ २०॥
आद्योऽस्तु वचनान्मैव साहित्यात्स्यपलम्भनात्।
प्रैषानुवचने यत्र सहिते तत्र बाधनम्॥ २१॥

अग्नीषोमीयपशौ श्रूयते। मैत्रावरुणः प्रेष्यति चानु चाहेति। तदेतद्वाक्यं प्रैषानुवचनयोर्मैत्रावरुणकर्तृकतां विदधाति। तेन च वाक्येन समाख्या बाध्यते। अग्नये समिध्यमानायानुब्रूहि यूपायाज्यमानायानुब्रूहीत्यादि-प्रैषाणामध्वर्युकर्तृकत्वदर्शनादाध्वर्यवाः प्रैषा इत्यस्ति याज्ञिकानां समाख्या। तथा प्र वो वाजा अभि द्यवः। अग्निं त्वामध्वरे देवयन्त इत्याद्यनुवचनानां होतृकर्तृक-त्वदर्शनादनुवचनानि होत्राणीति याज्ञिकसमाख्या। प्रैषानुवचने च द्विविधे। व्यस्ते समस्ते च। पूर्वोदाहृते व्यस्ते। होतायक्षदग्निं समिध्येत्याद्यनुवचनमन्त्र-स्यान्ते होतर्यजेति प्रैष आम्नातः। एते प्रैषानुवचने समस्ते। तेषु व्यस्तसमस्तेषु प्रैषानुवचनेषु सर्वत्र प्रबलेन वाक्येन समाख्यां बाधित्वा होतृकर्तृकत्वमध्वर्युकर्तृकत्वं च परि-त्यज्य मैत्रावरुणकर्तृकत्वमेवाभ्युपेतमिति प्राप्ते ऽभिधीयते।

प्रेष्यति चानु चाहेति चकारद्वयेन प्रैषानुवचनयोः समुच्चः वाक्येऽस्मिन्नुपलभ्यते। ततः समुच्चितयोरेव समाख्या बाधनम्। व्यस्तयोस्तु यथासमाख्यं होत्रादिकर्तृकत्व मेवाभ्युपेयम्।

द्वाविंशाधिकरणमारचयति।

चमसैश्चमसाध्वर्युर्जुहोत्यध्वर्युरेव वा।

संज्ञाविशेषादाद्योऽस्तु नैवमध्वर्युसंज्ञया॥ २२॥

विशेषस्यानपेक्षत्वात्ते नान्यस्या अपेक्षणात्।

अध्वर्युर्जुहुयाच्छक्तो स्तदशक्तौ परोऽपि वा॥ २३॥

चमसाध्वर्युरित्येवंविधसंज्ञाविशेषाच्चमसाध्वर्यव एव चमसैर्जुहुयुरिति चेत्। नैवम्। अध्वर्युसंज्ञाया निरपेक्षत्वेन प्रबलत्वात्। केवलाध्वर्यौ चमसाध्वर्युषु चानुगतोऽध्वर्युशब्दः सामान्यरूपः। चमसशब्दस्तु चमसाध्वर्युष्वेव विशेषरूपः। तत्र विशेषमनपेक्ष्यैवाध्वर्युशब्द ऋत्विक्संज्ञारूपेण वर्त्तितुं प्रभवति। चमसशब्दस्तु सामान्यवाचिनमध्वर्युशब्दमपेक्ष्यैव पुरुषेषु संज्ञा भवति। तथा सत्याध्वर्यवो होम इत्यनया निरपेक्षया समाख्ययाध्वर्युरेव सत्यां शक्तौ चमसैर्जुहुयात्। ग्रहहोमव्यापृतत्वेन कदाचित् तदशक्तौ चमसाध्वर्यवो जुहुयुः।

त्रयोविंशाधिकरणमारचयति।

श्येन उद्गातृवेदोक्तो वाजपेयो यजुष्वनू।

उद्गात्राध्वर्युणा कार्यौ यथाप्रकृति वाग्रिमः॥ २४॥

आख्याविशेषादाख्यायाः पूर्वभावी हि चोदकः।

प्रकृताविव कर्त्तारस्तत्कर्मे व्यवस्थिताः॥ २५॥

श्येनयागः सामवेदे समाम्नात इति तत्रत्याः सर्वे पदार्था उद्गात्रानुष्ठेयाः। वहिष्पवमानाज्यपृष्ठादिस्तोत्रेष्वौद्गात्रत्वसमाख्यायाः श्येनेऽपि सत्त्वात्। तथा यजुर्वेदे समाम्नातो वाजपेयः सर्वोऽप्यध्वर्युणानुष्ठेयः। समाख्याविशेषादिति प्राप्ते ब्रूमः। श्येनवाजपेयौ ज्योतिष्टोमविकारौ। तत्र चोदकस्तत्तत्पदार्थांस्तैस्तैः पुरुषैरनुष्ठेयतया समर्पयति। अङ्गेष्वतिदिष्टेषु पश्चात् साङ्गप्रधानानुष्ठापकस्य प्रयोगवचनस्य प्रवृत्तिः। प्रयोगवचनाधीना तु समाख्यात्यन्तजघन्या। ततः प्रबलचोदकवशात् प्रकृताविव नानाविधाः कर्त्तारः स्वस्वधर्मेषु व्यवतिष्ठन्ते।

इति माधवीये जैमिनीयन्यायमालाविस्तरे
तृतीयस्याध्यायस्य सप्तमः पादः।

---

अष्टमपादस्य प्रथमाधिकरणमारचयति।

दक्षिणादिपरिक्रीतिकर्त्विजः स्वामिनोऽथवा।
परिक्रयः समाख्यानादृत्विजः स्याद् यथेतरत्॥ १॥
परिक्रयात पुराध्वर्युहोत्रादीनामभावतः।
परिक्रयणकर्तृत्वं यजमानस्य नार्त्विजः॥ २॥

दक्षिणादानेन कर्मकराः परिक्रेतव्याः। तत्र हविस्त्यागव्यतिरिक्तं सर्वमार्त्विज्यमिति निर्णीतम्। दक्षिणा च द्वादशशतरूपाध्वर्युवेदे उद्गातृवेदे च समाम्नाता। अन्वाहार्य्यदक्षिणाध्वर्युवेदे। ततः समाख्यया परिक्रेतृ-

त्वमृत्विज इति चेत्। नैवम्। ऋत्विजां परिक्रयणोत्तरकालीनानां तत्कर्तृत्वासंभवेन यजमानस्यैव तत्कर्तृत्वात्।

द्वितीयाधिकरणमारचयति।

इष्टकावरदानं किं स्वामिनः स्यादुतर्त्विजः।
स्वामिनः पूर्ववन्मैवमध्वर्योर्वचनादयम् ॥ ३ ॥

य एतामिष्टकामुपदध्यात् स त्रीन् वरान् दद्यादित्युपधातुरध्वर्योस्त्रिवरदानं वाचनिकम्। न ह्यस्ति वचनस्यातिभारः।

तृतीयाधिकरणमारचयति।

संस्कारा वपनाद्याः किमध्वर्योः स्वामिनोऽथवा।
अध्वर्योस्तत्र मन्त्रत्वात् तद्दीक्षेश तस्य ते ॥ ४ ॥
संस्कारैर्योग्यतां प्राप्य स्वकार्यं कर्तुमृत्विजः।
क्रीणात्यतः क्रिया तेषां संस्क्रिया यजमानगा ॥ ५ ॥

अप उन्दन्तु जीवस इत्याद्याः संस्कारमन्त्राः। तद्विधयश्च यजुर्वेदे समाम्नाताः। केशश्मश्रु वपते। नखानि निकृन्तत इति। मन्त्रश्चाध्वर्युर्वपनादौ। तस्मादध्वर्योस्ते वपनादयः संस्कारा इति चेत्। नैवम्। वपनादिसंस्कारा यजमानगतमालिन्यमपनीय यागयोग्यतामुत्पादयितुं क्रियन्ते। तथा च ब्राह्मणम्। केशश्मश्रु वपते मृता वा एषा त्वगमेध्या यत्केशश्मश्रु मृतामेव त्वचममेध्यामपहत्य यज्ञियो भूत्वा मेधमुपैतीति। न ह्यध्वर्युवपनेन यजमानगता मृता त्वगपैति। योग्यस्य हि कर्माधिकारे सति पश्चात् प्रयासरूपेषु व्यापारेषु स्वयमशक्तः सकर्मकराऋत्विजः परिक्रीणाति। लोकेऽपि रोगिणः स्वामिन औष-

धाय्यानयन एव भृत्यो जीवनदानेन परिक्रीयते। न तु तदौषधं भृत्यः सेवते। तस्मादितरक्रिया ऋत्विजाम्। संस्कारास्तु यजमानस्य। क्वचित् तु वचनादृत्विजामपि संस्कारोऽस्तु।

चतुर्थाधिकरणमारचयति।

नाश्नाति द्व्यहमित्येतत् तपः कस्य तयोर्द्वयोः।
दुःखत्वाद्गोक्तृसंस्कारादध्वर्योर्युज्यते तपः॥ ६॥
फलान्तरायपापस्य नाशकत्वेन संस्कृतिः।
लिङ्गात् तपः स्वामिगामि संस्कारान्तरवत्ततः॥ ७॥

ज्योतिष्टोमे द्व्यहं नाश्नाति त्र्यहं नाश्नातीत्यादिनोक्तं तपोऽध्वर्योर्युक्तम्। तस्य दुःखात्मकत्वेन परिक्रीतपुरुषः कर्तुमुचितत्वात्। दुःखत्वादेव फलभोक्तृसंस्कारत्वाभावाद् यजमानस्य न युक्तमिति चेत्। मैवम्। भाविनः सुखरूपस्य फलस्य प्रतिबन्धकदुःखजनकं यत् पापं तस्य नाशकत्वेन दुःखरूपस्यापि तपसः स्वामिसंस्कारत्वसम्भवात्। अस्मिन्नर्थे वाक्यशेषगतलिङ्गं कल्पसूत्रकारेणैवमुदाहृतम्। यदा वै दीक्षितः कृशो भवत्यथ मेध्यो भवति। यदास्मिन्नन्तर्न किञ्चन भवत्यथ मेध्यो भवति। यदास्य कृष्णं चक्षुषो-र्नश्यत्यथ मेध्यो भवति। यदास्य त्वचास्थि सन्धायतेऽथ मेध्यो भवति। पीवा दीक्षते कृशो यजते। यदास्याङ्गानि क्षीयन्ते जुहोत्येव तदिति विज्ञायत इति। न हि दुःख-रूपं तपो विना दुःखप्रदं पापं नश्यति। यथा लोके पाटनमन्तरेण विषव्रणानां नोपशान्तिः। तद्वत्। तस्माद्वपनादिसंस्कारवत् तपोऽपि यजमानस्यैव।

पञ्चमाधिकरणमारचयति ।

हिरण्यमालिताद्यास्तु संस्कारा वचनात्मताः ।
ऋत्विजां ते यथाख्यानं कर्त्तव्या निखिलैरुत ॥ ८ ॥
माद्य आख्यावशान्मैवं सर्वसन्निधिपाठतः ।
प्रति मुख्यं गुणावृत्तेः कर्त्तव्या निखिलैरपि ॥ ९ ॥

वाजपेये श्रूयते । हिरण्यमालिन ऋत्विजः प्रचरन्तीति । श्येने श्रूयते । लोहितोष्णीषा लोहितवसना ऋत्विजः प्रचरन्तीति । यद्यपि हिरण्यमालित्वादीनां संस्कारत्वाद्यजमानविषयत्वं पूर्वन्यायेन प्राप्तं तथापि वचनादयमृत्विक्संस्कारः । तत्र हिरण्यमालित्वं यजुर्वेदोक्तत्वादध्वर्यूणामेव । लोहितोष्णीषादिकं सामवेदोक्तत्वादुद्गातृणामेवेति समाख्यावशादभ्युपेयमिति चेत् । मैवम् । हिरण्यमालिन ऋत्विजः प्रचरन्तीति सर्वेषामृत्विजां सन्निधौ पठ्यमानो हिरण्यमालित्वसंस्कारः सन्निधिना समाख्यां बाधित्वा सर्वैर्ऋत्विग्भिः संबध्यते । किञ्च । संस्कार्यत्वादृत्विजां प्राधान्ये सति प्रति प्रधानं गुणावृत्त्या सर्वेषामप्यृत्विजां हिरण्यमालित्वादिसंस्कारोऽभ्युपेतव्यः ।

षष्ठाधिकरणमारचयति ।

वृष्टिकामो सदा नीचैर्मिनुयादिति कामना ।
अध्वर्योः स्वामिना वार्या वाक्यान्मातुस्तदुच्यते ॥ १० ॥
परस्मै पददोऽध्वर्युव्यापारस्य परार्थता ।
प्रतीताती वाक्यमात्रे तथापि स्वामिनोऽस्तु तत् ॥ ११ ॥

ज्योतिष्टोमे श्रूयते । यदि कामयेत वर्षुकः पर्जन्यः स्यादिति नीचैः सदो मिनुयादिति । यथा पुरस्तात् पश्चाच्चा-

वर्त्तिनौ हविर्धानप्राचीनवंशावृत्तौ। तथा सदो नोच्चम्। किन्तु नोचैः कार्य्यमित्यर्थः। अत्र वृष्टिकामनाध्वर्य्योरुक्ता। यः कामयेत स मिनुयादिति वाक्येन कामयितृमातॄरेक-त्वावगमात्। मातृत्वं चाध्वर्य्योरित्यविवादम्। तस्मात् स एव कामयितेति चेत्। मैवम्। मिनुयादिति परस्मैपदे-नाध्वर्य्युव्यापारफलस्य परगामिता प्रतीयते। वृष्टिलक्षण-फलस्य यजमानगामित्वात् परस्मैपदश्रुत्या वाक्यं बाधित्वा कामस्य यजमानकर्तृकत्वं द्रष्टव्यम्। यजमानकामितां वृष्टिं पर्जन्यः सम्पादयत्वित्येवं योऽध्वर्युः कामयेत स नीचै-र्मिनुयादिति वाक्यं व्याख्येयम्। एवंविदुद्गातात्मने वा यजमानाय वा यं कामं कामयते तमागायतीत्यृत्विजोऽपि काम इति चेत्। तर्हि तस्मिन् तीर्थोपासने वचना-दृत्विजोऽपि फलमस्तु।

सप्तमाधिकरणमारचयति।

आयुर्दा इति मन्त्रोक्तिः कस्याध्वर्यो: समाख्यया।

तद्बाधे लिङ्गतः स्वामिगामिता कामवन्मता॥ १२॥

इदमाम्नायते। आयुर्दा अग्ने अस्यायुर्मे देहीति। तस्यैतस्य मन्त्रस्य पाठोऽध्वर्योर्यजमानस्य वेत्ययं संशयः कस्येत्यनेन सूचितः। एतन्मन्त्रपाठोऽध्वर्य्योर्भवितुमर्हति। समाख्याबलादिति चेत्। न। अस्मिन् मन्त्र आयुर्मे देहीति फलस्य ह्यात्मसम्बन्धः प्रतीयते। स च यजमानस्य युक्तः। नाध्वर्योः। तस्मात् कामवन्मन्त्रोऽपि याजमानः।

अष्टमाधिकरणमारचयति।

वाजस्य मेत्यमुं ब्रूयादेको द्वौ वा क्रतार्थतः।

क्रियमाणं तत् परिव्याणं होता युवा सुवासा इत्यनेन मन्त्रेणानुवदति। तदेतदुभयं चोदकपरम्परया कुण्डपायिनामयने प्राप्तम्। तत्राध्वर्योर्होतुश्च समास आम्नातः। यो होता सोऽध्वर्युरिति होतारमनूद्याध्वर्युत्वविधानादध्वर्युकार्य्यं होत्रानुष्ठेयम्। ततः परिवीरसीत्यनेन करणमन्त्रेण होता यूपपरिव्याणं कुर्वीत। तदानीं स्वस्य चोदकतः प्राप्तं हौत्रमपि होता न त्यजेत्। न हि त्यागहेतुं कञ्चिन्निषेधं पश्यामः। तस्मात् क्रियमाणं तत् परिव्याणं युवा सुवासा इत्यनेन मन्त्रेण होतानुवदेदिति प्राप्ते ब्रूमः। द्वयोरध्वर्युहोत्रोरुचितं कर्मद्वयमेको होता युगपत् कर्त्तुं न शक्नोति। ततोऽन्यतरस्यावश्यम्भाविनि त्यागे चोदकतः प्राप्तं हौत्रमेव त्यजेत्। आध्वर्यवं तु यो होता सोऽध्वर्युरित्यनेन प्रत्यक्षवचनेन प्रापितत्वादनुष्ठेयम्।

द्वादशाधिकरणमारचयति।

प्रोक्षण्यासादनं कुर्य्यादध्वर्युरितरोऽथवा।

आध्वर्यवः सादयेति प्रेषितोऽन्योऽस्तु लिङ्गतः॥१८॥

दर्शपूर्णमासयोः प्रोक्षणीनां केनचित् पात्रेण वेद्यामासादनं श्रुतम्। तदेतद् यजुर्वेदोक्तत्वादाध्वर्यवमिति चेत्। मैवम्। प्रैषमन्त्रविरोधप्रसङ्गात्। प्रोक्षणीरासादय। इध्माबर्हिरुपसादय। अग्नीदग्नीन् विहर। बर्हिः स्तृणीहीत्यादिष्वाध्वर्यवेषु श्रूयमाणमाग्नीध्रसम्बोधनम्। मध्यमपुरुषश्चान्येन तदनुष्ठाने सत्युपपद्यते। तस्मान्नाध्वर्यवम्।

त्रयोदशाधिकरणमारचयति।

अग्नीत् प्रैषे तुताध्वर्युरग्नीदस्त्वविरोधतः।

शाख्याविरोधादध्वर्युः प्रैषमन्त्रार्थकृत् मतः ॥ २० ॥

यथा प्रोक्षणीराग्नीध्र आसादयतीति। तथा प्रैषमन्त्रमप्याग्नीध्र एव पठतु। विरोधाभावादिति चेत्। मैवम्। आध्वर्यवसमाख्याया: पूर्वोदाहृतमग्नीधमध्यमपुरुषयोश्च विरोधात्। न चाध्वर्यामाइनाग्नीनामध्वर्युकर्तृकत्वाभावेऽपि समाख्याविरोधस्तदवस्थ इति वाच्यम्। प्रैषद्वारा प्रयोजककर्तृत्वेऽपि तदविरोधात्। तस्मादध्वर्योरेव प्रैषमन्त्रः।

चतुर्दशाधिकरणमारचयति।

ममाग्न इति कस्यास्त्र फलं लिङ्गेन वाजगम्।

श्रुत्या स्वामिनि न क्रीते लिङ्गं तत्रोपचर्यताम् ॥२१ ॥

ममाग्ने वर्चो विहवेष्वस्त्वित्ययमाहवनीयस्याधाने करणभूतो मन्त्रोऽध्वर्युणा पठ्यते। विशिष्ट हवनं येषां यज्ञानां ते विहवाः। तेषु वर्चस्तेजसोपलक्षितं यत् फलं तन्ममास्त्वित्यनेन लिङ्गेन मन्त्रमुच्चारयितुरध्वर्योस्तत् फलमिति चेत्। मैवम्। दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यात्मनेपदश्रुत्या साङ्गप्रधानफलस्य यजमानगामित्वं प्रतीयते। न च परिक्रीतस्याध्वर्योर्दक्षिणातिरिक्तफलसम्बन्धो न्याय्यः। तस्माच्छ्रुतिन्यायाभ्यां विरुद्धं तल्लिङ्गं यजमानपरत्वेनोपचरणीयम्। मदीययजमानस्य तद्वर्चोऽस्त्वित्युपचारः। तस्माद्यजमानपाठ्येष्वायुर्दा अग्नेऽस्यायुर्मे देहीत्यादिषु क्रियमाणानुवादिषु प्रत्यग्मावीमन्त्रेषु श्रुतं फलं यथा याजमानम्। तथैवाध्वर्युणा पाठ्येषु करणमन्त्रेषु श्रुतमपि फलं याजमानमेव।

पञ्चदशाधिकरणमारचयति ।

मा मा सन्ताप्तमित्येतत् कस्मिन् स्वामिनि पूर्ववत् ।
अध्वर्यावस्तु तत्तेन स्वामिकर्मोपयोगतः ॥ २२ ॥

दर्शपूर्णमासयोराघारहोमार्थमाज्यपूर्णौ स्रुक्स्रुवौ गृहीत्वा नाभिसमीपे हस्तेन धारयति । तत्रायं करणमन्त्रोऽध्वर्युणा पठ्यते । अग्नाविष्णू मा वामवक्रमिषं विजिहाथां मा मा सन्ताप्तं लोकं मे लोककृतौ कृणुतमिति । भोः स्रुक्स्रुवरूपावग्नाविष्णू युवां नाभिदेशे धारयन्नहमध्वर्युर्मा वामवक्रमिषं युवयोरतिक्रामं न कृतवान् । युवां च मत्तो वियुक्तौ भवतम् । ततो मां देहधारिणं मा सन्ताप्तं मम देहे सन्तापं ज्वरादिरूपं मा कुरुतम् । स्थानकृतौ युवामाघारहोमाय स्थानं कुरुतमित्यर्थः । तत्र पूर्वोक्तवर्चोन्यायेन सन्तापाभावोऽपि यजमानस्यैव । न त्वध्वर्योरिति चेत् । नैवम् । अध्वर्यावसन्तप्ते सत्यविघ्नेन स्वामिनः कर्म समाप्यते । तस्मादध्वर्युगतोऽपि सन्तापाभावो यजमानस्यैव फलमिति नात्र मन्त्रस्योपचारः ।

षोडशाधिकरणमारचयति ।

भद्रं तवो सहेत्येतत् कस्मिन् स्वामिनि युज्यते ।
द्वित्वश्रुत्या द्वयोरेतदध्वर्युयजमानयोः ॥ २३ ॥

ज्योतिष्टोमे हविर्धानमण्डपे सोमाभिषवाधारयोः फलकयोरधस्ताच्चतसृष्वाग्नेयादिविदिक्षु चत्वार उपरवनामका गर्ता अरत्निमात्रखाता अधोभागे परस्परमिलिता ऊर्ध्वभागे परस्परं प्रादेशमात्रव्यवहिता वर्तन्ते । तेष्वेकस्मिन्नुपरवे यजमानो दक्षिणहस्तं प्रसारयति । तथैवा-

ध्वर्युर्वन्यास्मिन् स्वहस्ते प्रसार्यावस्थाप्य यजमानहस्ते गृह्णाति। तदा यजमानः किमत्रेत्यनेन मन्त्रेण फलं पृच्छति। अध्वर्युश्च भद्रमित्यनेन मन्त्रेणोत्तरं ब्रूते। ततो यजमानस्तन्नौ सहेत्यनेन मन्त्रेण तत् फलं स्वकीयत्वेन स्वीकरोति। तस्माद्यजमानस्यैव तदिति चेत्। नैवम्। नावित्यनेन द्विवचनेन सहेत्यनेन चोभयगामितयैव स्वीकारात्।

सप्तदशाधिकरणमारचयति।

धर्माणां प्रकृतिस्थानां विकृतावविशेषतः।
प्राप्तिर्विशेषतो वाद्यो विशेषस्यानिरूपणात्॥ २४॥
प्रकृतौ कार्य्यकृद्धर्मा विकृतौ स्युर्न चेतरे।
यूपावटास्तृतिः कार्य्यं न हि प्राकृतबर्हिषः॥ २५॥

दर्शपूर्णमासयोर्वेदिधर्मा बर्हिर्धर्माश्च हविरासादना-द्यर्थोऽङ्गप्रधानार्था इति पूर्वत्र निर्णीतम्। ते च धर्मा विकृतावतिदिश्यमाना नियामकाभावात् सर्वेऽप्यतिदिश्य-न्तामिति प्राप्ते ब्रूमः। कार्य्यमत्र नियामकम्। प्रकृतौ हि हविरासादनं वेदिकार्य्यम्। तच्च विकृतावपि प्राप्य-माणं स्वसिद्धये खननादीन् वेदिधर्मान् प्रापयति। यूपा-वटास्तरणरूपं तु कार्य्यं न प्रकृतावस्ति। दर्शपूर्णमासयो-र्यूपावटाभावात्। तच्चास्तरणकार्य्यं विकृतौ विधीयमान-मप्यप्राकृतकार्य्यतया प्राकृतान् लवनादीन् बर्हिःसंस्कारान्न प्रापयति। तस्मात् प्रकृतिगताः कार्य्यकृद्धर्मा एव विकृतौ प्राप्यन्ते। अष्टादशाधिकरणमारचयति।

यद्बर्हिस्तत्पवित्रार्थं न वायज्ञस्य सम्भवात्।

संस्कृतं स्तरणे चीर्णं पवित्रं त्वन्यतो भवेत् ॥ २६ ॥

दर्शपूर्णमासयोरामनन्ति । समावप्रच्छिन्नाग्रौ प्रादेशमात्रौ दर्भौ पवित्रे करोतीति । तत्र यदेतद्वेदिस्तरणार्थं लवणसंस्कृतं बर्हिस्तेन पवित्रसम्भवादास्तरणवत् पवित्रमपि बर्हिषः कार्यमिति चेत् । मैवम् । आस्तरण एव संस्कृतस्य सर्वस्य बर्हिष उपयोगित्वात् । न हि वेदिं स्तृणातीति विहितस्य स्तरणस्याकस्माद् बर्हिरेकदेशे संकोचो युक्तः । तस्माद् यथा यूपावटमसंस्कृतेन बर्हिषा स्तृणाति । तथा पवित्रनिष्पत्तिरपि शास्त्रीयलवणादिसंस्काररहितैः परिभोजनीयनामकैर्दर्भैः सम्पादनीयाः ।

एकोनविंशाधिकरणमारचयति ।

पुरोडाशस्य शकलमैन्द्रवायवपात्रके ।
अवदध्यात् पुरोडाशो नवोऽस्य सवनीयकः ॥ २७ ॥
सिद्धस्य सवनार्थत्वान्नवं सम्पाद्य तत्क्रिया ।
सवनीयेन तत्कार्यं संस्कार्यत्वाद् द्वितीयया ॥ २८ ॥

ज्योतिष्टोमे श्रूयते । पुरोडाशशकलमैन्द्रवायवस्य पात्रे निदधातीति । तत्र सवनीयपुरोडाशस्य शकलं यद्यपि निष्पन्नं तथापि तस्य यजनार्थत्वेन संस्कृतबर्हिर्वदुपक्षयान्नूतनं कञ्चित् पुरोडाशं सम्पाद्य तदीयशकलेनैन्द्रवायवपात्रप्रक्षेपक्रिया कर्त्तव्येति चेत् । मैवम् । सवनीयपुरोडाशशकलेन संनिधानं कर्त्तव्यम् । कुतः । संस्कार्यत्वात् । शकलं निदध्यादिति द्वितीयया संस्कार्यत्वं गम्यते । दृष्टशिष्टस्य हि प्रतिपत्तिरूपः संस्कारः । न चात्र कृत्स्नं यजनार्थम् । अवदानशेषतया पुरोडाशभागस्यावशेषितत्वात् ।

यथात्र पूर्वमिन्द्रपुरोडाशशकलम्। तथा धाना आश्विनपात्रे पयस्यां मैत्रावरुणपात्र इत्यत्रापि पूर्वशेषस्यैव प्रक्षेपः।

विंशाधिकरणमारचयति।

काम्या उपांशु यष्टव्याः किं तदङ्गप्रधानयोः।
प्रधान एव वा नात्र विशेषोक्तिरतो द्वयोः॥ २९॥
मुख्यानामेव काम्यत्वात् तेष्वेव परिचोदना।
अङ्गानामतथाभावादुपांशुत्वं प्रधानगम्॥ ३०॥

इदमाम्नायते। यच्चाथर्वण वै काम्या इष्टयस्ता उपांशु यष्टव्या इति। अथर्ववेदोक्तकर्मवद्यजुर्वेदे षु काम्या इष्टयो गाप्याः। तस्मात्तासामुपांशुत्वं युक्तमित्यर्थः। यथा वेदिधर्माणां बर्हिर्धर्माणां चाङ्गप्रधानयोः समानो विधिः। तथोपांशुत्वस्यापि। न ह्यत्र कश्चिद् विशेष आम्नात इति चेत्। मैवम्। काम्यत्वस्यैवात्र विशेषनियामकत्वात्। न त्वङ्गानां काम्यत्वमस्ति। करणोपकारकमम्यादकानां तेषां फलेन साक्षात् सम्बन्धाभावात्। ततः साक्षात्फलसाधने प्रधान एवोपांशुत्वम्। अङ्गेषु तु तत्तद्वेदानुसारेण ध्वनिविशेषः।

एकविंशाधिकरणमारचयति।

नवनीत श्येन आज्य मुख्येऽङ्गे वास्तु मुख्यगम्।
विधेयमाज्यमप्राप्तं इतिस्थं नवनीतकम्॥ ३१॥
मुख्यः सोमविकारोऽङ्गे चोदकप्राप्तमाज्यकम्।
अनूद्य इतिसंस्थानं नवनीतगुणो विधिः॥ ३२॥

श्येने श्रूयते। इतिनवनीतमाज्यं भवतीति। इतौ चिरसंगृहीतं नवनीतं यस्याज्यस्य प्रकृतिद्रव्यं तदेतद्धो-

द्रव्यमाज्यं शाखान्तरेषु पूर्वमप्राप्तत्वात् प्रधानकर्मणि विधेयमिति चेत्। नैवम्। प्रधानस्य सोमयागस्याविकारत्वेनाज्यापेक्षाया अभावात्। अङ्गेष्विष्टिविशेषेषु चोदकप्राप्तस्याज्यस्य प्रकृतिद्रव्यत्वेन यथोक्तनवनीतगुणो विधीयते।

द्वाविंशाधिकरणमारचयति।

सुत्याकालगताङ्गेषु गुणः सर्वेषु चोदितः।
आद्यो वैशेषिकाङ्गत्वाद् वाक्यात् सर्वाङ्गसङ्गतिः ॥२३॥

योऽयं श्येनस्याङ्गेषु द्रुतिनवनीतत्वगुणो विहितः सोऽयं सुत्याकालीनेष्वेव सवनीयपशुतत्पुरोडाशरूपेष्वङ्गेषु। न तु कालान्तरवर्त्तिदीक्षणीयाद्यङ्गेषु। विमतो गुणः सुत्याकालीनाङ्गमात्रगः। श्येनवैशेषिकत्वात्। पशुसाहित्यवत्। यथा सह पशूनालभत इति विहितं पशुसाहित्यं श्येन एव विशेषत्वेनोच्यमानं सुत्याकालीनेष्वेव सवनीयपशुष्ववस्थितम्। तथा नवनीतमिति प्राप्ते ब्रूमः। यदाज्यं तद्द्रुतिनवनीतमिति वाक्येन सर्वाङ्गगताज्यविषयत्वप्रतीतावनुमानं कालात्ययापदिष्टम्। तस्मात् सर्वेष्वङ्गेषु तन्नवनीतम्।

त्रयोविंशाधिकरणमारचयति।

शाक्यायने पुरोडाशास्तरसा इति मांसता।
सर्वत्र सवनीये वा सर्वत्र नवनीतवत् ॥ २४ ॥
तरसाः सवनीयाः स्युरिति तत्सन्निधिः स्मृतः।
पुरोडाशस्य मांसत्वं तेष्वेवातो नियम्यते ॥२५॥

षट्त्रिंशत्सु संवत्सरेष्वनुष्ठेयं शाक्यानामयनम्। तत्र श्रूयते। संस्थिते संस्थितेऽहनि गृहपतिर्मृगयां याति स

यान् पशून् हन्ति तेषां तरसाः सवनीयाः पुरोडाशा भव-न्तीति। तत्र यथा नवनीतं सर्वेष्वङ्गेषु निविष्टम्। तथा मांसत्वमपि सर्वेषु पुरोडाशेषु निविशत इति चेत्। नैवम्। तदा हि ये पुरोडाशास्ते तरसा इति वचनव्यक्तौ व्यवहितान्वयः स्यात्। तरसशब्दपुरोडाशशब्दयोर्मध्ये सवनीयशब्देन व्यवधानात्। इह तु तरसाः सवनीया इत्य-नयोः सन्निधिः श्रूयते। तथा सति ये सवनीयास्ते तरसा इत्यनेन सन्निध्यनुगृहीतेन वाक्येन मांसत्वं सवनीयपुरो-डाशेष्वेव नियम्यते।

इति माधवीये जैमिनीयन्यायमालाविस्तरे तृतीयस्या-ध्यायस्याष्टमः पादः। समाप्तश्च तृतीयोऽध्यायः।

---o---

# चतुर्थोऽध्यायः ।

शेषशेषित्वसिद्धौ किं प्रयोज्यं किं प्रयोजकम् ।
इत्यपेक्षोदयादुक्तिश्चतुर्थस्य प्रयुक्तये ।

अनेन तृतीयचतुर्थयोरध्याययोः पूर्वोत्तरभाव उपपादितः ।

चतुर्थाध्यायस्य प्रथमपादे प्रथमाधिकरणमारचयति ।

चिन्ता न कार्य्या कार्य्या वा क्रत्वर्थपुरुषार्थयोः ।
अफलत्वान्न कर्त्तव्या प्रयुक्तौ क्रियतामियम् ॥ १ ॥
क्वचिद्वैतद्विचारेण क्वचित् फलविधेर्वशात् ।
क्वचित् साक्षादिहाध्याये प्रयुक्तिर्बहुधोच्यते ॥ २ ॥

क्रत्वर्थोऽयं पुरुषार्थोऽयमिति विवेकस्य प्रयोजनं किमपि न पश्यामः । तस्मात् काकदन्तविचारवदयं विचार उपेक्षणीय इति चेत् । मैवम् । तेन विचारेण प्रयुक्तेर्ज्ञातुं शक्यत्वात् । साक्षाद्वा परम्परया वा प्रयुक्ति-निर्णयोपयुक्तं सर्वमिह चिन्तनीयम् ।

द्वितीयाधिकरणे प्रथमवर्णकमारचयति ।

क्रत्वर्थादेर्नास्ति वास्ति लक्ष्म नास्त्यनिरूपणात् ।
क्रतवे यस्तदर्थोऽसाविति तस्य निरूपणम् ॥ ३ ॥

क्रतावनुष्ठेयः क्रत्वर्थ इत्युक्ते गोदोहनादावतिव्याप्तिः । पुरुषेणार्थ्यमानः पुरुषार्थ इत्युक्ते प्रयाजादीनामप्युद्देश्यतया पुरुषेणार्थ्यमानत्वादतिव्याप्तिः । तस्मात् सर्वत्रदुष्टं लक्षणं दुर्निरूपमिति चेत् । मैवम् । क्रतुस्वरूपमोक्षत्यादेव यो

विधीयते स क्रत्वर्थः । प्रयाजादयस्तादृशाः । न हि प्रयाजादिभिः पुरुषस्य कश्चित् प्रीतिविशेष उत्पद्यते येनैते पुरुषार्था भवेयुः । दर्शपूर्णमासक्रतुस्तु तैः प्रयाजादिभिः फलजननसामर्थ्यलक्षणं पौष्कल्यं प्राप्नोति । तस्मात् ते क्रत्वर्थाः । पुरुषप्रीतये विधीयमानाः पुरुषार्थाः । दर्शपूर्णमासादयो गोदोहनादयश्च तादृशाः । न हि दर्शपूर्णमासाभ्यां कस्यचित् क्रतोः पौष्कल्यं भवति । तयोरेव क्रतुत्वात् । नापि गोदोहनं क्रत्वर्थम् । तदभावेऽपि चमसेनैव क्रतुपौष्कल्यसिद्धेः । तस्मात् सुनिरूपणं तदुभयलक्षणम् ।

द्वितीयवर्णकमारचयति ।

फलं विधेयं नो वाद्यो भावनांशत्वतोऽन्यवत् ।
न भाव्यांशो विधेयः स्याद्रागात् तत्र प्रवर्त्तनात् ॥ ४ ॥

दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति स्वर्गः फलत्वेन श्रूयते । तत्र विमतं फलं विधेयम् । भावनांशत्वात् । करणवदिति कर्त्तव्यतावच्चेति चेत् । मैवम् । अप्रवृत्तप्रवर्त्तनं हि विधानम् । फले तु पुरुषः सौन्दर्यं जानन् स्वयं रागादेव प्रवृत्त इति व्यर्थस्तत्र विधिः ।

तृतीयवर्णकमारचयति ।

गोदोहनं द्व्यर्थं स्यान्न वा भानाद् द्व्यर्थता ।
अन्यथापि क्रतोः सिद्धेः केवलं पुरुषाय तत् ॥ ५ ॥

दर्शपूर्णमासयोः श्रूयते । चमसेनापः प्रणयेद्गोदोहनेन पशुकामस्येति । तत्र गोदोहनस्य क्रत्वर्थत्वं पुरुषार्थत्वं चेत्याकारद्वयमस्ति । पशुफलजननं पुरुषप्रीतिभाति । अपां

प्रत्ययनेन क्रतुपौष्कल्यमपि भातीति चेत्। मैवम्। गोदो- हनमन्तरेण फलासिद्धेर्भवतु पुरुषार्थत्वम्। क्रतुस्तु तदभावे- ऽपि चमसेन सिध्यतीति न क्रत्वर्थता।

चतुर्थवर्णकमारचयति।

द्रव्यार्जनं स्यात् क्रत्वर्थं पुमर्थं वा क्रताविदम्।

नियतत्वात् पुमर्थत्वं दृष्टं क्रत्वर्थतार्थिकी॥ ६ ॥

ब्राह्मणस्य द्रव्यार्जने प्रतिग्रहयाजनाध्यापनानि निय- तानि। तत्र तत्र श्रुतानि राजन्यस्य जयादिकं वैश्यस्य कृष्यादिकं शूद्रस्य सेवादिकम्। तत्र यदेतद् द्रव्यसम्पादनं तदेतत् क्रत्वर्थम्। कुतः। अर्जनोपायानां नियतत्वात्। पुरुषप्रीतिस्तु येन केनापि द्रव्येण सिद्धत्वात्। अर्जनोपाय- नियमस्तत्र निरर्थकः। क्रतौ तु नियमापूर्वं परमापूर्वोप- योगीति सार्थको नियम इति प्राप्ते ब्रूमः। द्रव्यार्जने रागः प्रवर्तको दृष्ट इति न विधिरपेक्ष्यते। फलं च तृप्तिदृत्त्या- दिरूपं दृष्टमेव। अत एव स्मर्यते। षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका। याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रह इति। क्रत्वर्थे जीवनाभावात् क्रतुरेव न सिध्येत्। पुरुषार्थतायां त्वैहिकप्रीतिकारिभोजनादिवत् क्रतोरामु- ष्मिकप्रीतिकारितया पुरुषकार्येष्वन्तर्भावात् क्रत्वर्थताप्यार्थि- कीति सिध्यति। उपायनियमस्तूपायान्तरेषु प्रत्यवाय- विवचयोपपद्यते। तस्माद्द्रव्यार्जनं पुरुषार्थम्।

तृतीयाधिकरणमारचयति।

नैचेताय्न्समादित्यं क्रत्वर्थं तत्र वाग्रिमः।

फलस्याकल्पनीयत्वात् क्रतौ प्राप्तं निषिध्यते। ७ ।

अतोऽत्रापि पर्युदासत्वे संकल्पोऽनीक्षणेऽस्य सः ।
न क्रत्वङ्गमभानत्वात् पुमर्थः पापहानये ॥ ८ ॥

अनारभ्य श्रूयते। नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचनेति। तत्र नञ्पदमभिधावृत्त्या प्रतिषेधं ब्रूते। न तु पर्युदासम्। प्रतिषेधश्च प्राप्तिपूर्वकः। प्राप्तिश्च वैदिकस्य निषेधस्य वैदिकी प्रत्यासन्ना। तथा सति क्रतौ यदादित्येक्षणं विहितं तत्रायं निषेध उदयास्तमयोद्देशेन प्रवर्त्तते। एवं च सति फलं न कल्पनीयम्। पर्युदासमाश्रित्य पुरुषार्थत्वाङ्गीकारेऽधिकारसिद्धये फलं कल्पनीयं स्यात्। तस्मात् क्रत्वर्थो निषेध इति प्राप्ते ब्रूमः तस्य व्रतमित्युपक्रम्य नेक्षेतोद्यन्तमित्याम्नातत्वादनीक्षणरूपं किञ्चिदनुष्ठेयम्। तच्च पर्युदासत्वे सत्यवकल्पते। ईक्षणस्याभावः प्रतिषेधपक्षे नञर्थः। पर्युदासपक्षे त्वीक्षणादितरः संकल्पो नञ्पदेन लक्ष्यते। स च सङ्कल्पोऽनुष्ठेयव्रतत्वेन विधीयते। यद्यपीक्षणादितरे बहवो व्यापारा अनुष्ठानयोग्याः सन्ति तथापि कायिकवाचिकव्यापारविशेषस्याप्रतीयमानत्वान्मान- सव्यापारस्यावर्जनीयत्वाच्च सङ्कल्प एव परिशिष्यते। सङ्कल्पनीयश्चार्थः प्रत्यासत्त्या धात्वर्थनिषेधः। तथा सत्युद्यन्त- मस्तं यन्तं चादित्यं नेक्षिष्य इत्येवंरूपः सङ्कल्पोऽनुष्ठेय- त्वेन विधीयते। न च तस्य सङ्कल्पस्य क्रत्वङ्गत्वम्। तद्बोधक- श्रुतिलिङ्गादिप्रमाणाभावात्। न च पुरुषार्थत्वेऽपि प्रमाणा- भावः। एतावता ह्येनसायुक्तो भवतीत्यनेन वाक्येनेक्षितुः पुरुषस्य प्रत्यवायसम्बन्धमुपन्यस्य तत्प्रत्यवायनिवारणफल- कस्यानीक्षणसङ्कल्पस्य विधानेन पुरुषार्थत्वावगमात्। क्रतङ्ग-

त्वविवक्षायां तु क्रतुवैकल्यरूपो विपक्षबाध उपन्यस्येत। तस्मादश्लीलसम्भाषणादीनि प्रजापतिव्रतानि पुरुषार्थानि।

चतुर्थाधिकरणमारचयति।

दश यज्ञायुधानीति हविष्ट्वेन विधिर्न वा।

आद्योऽप्राप्तेः पुरोडाशे समुच्चयविधानने ॥ ९ ॥

सार्थमुत्पत्तिशिष्टेन विकल्पादिर्न युज्यते।

स्फ्यैरनोऽस्तीति यत् प्राप्तं तदत्रानूद्य संस्तवः ॥ १० ॥

दर्शपूर्णमासयोः स्फ्यश्च कपालानि चेत्याद्यनुक्रम्य तानि वै दश यज्ञायुधानीत्याम्नातम्। तानि चात्र हविष्ट्वेन विधीयन्ते। कुतः। मानान्तराप्राप्तत्वेनापूर्वार्थत्वात्। यदि तत्र पुरोडाशो हविर्भवेत्। तदा तेन सहैतेषां समुच्चयो विकल्पो वाऽस्त्विति प्राप्ते ब्रूमः। आग्नेयोऽष्टाकपाल इत्युत्पत्तिशिष्टेन पुरोडाशेन सह पश्चाच्छिष्टानामायुधानां विकल्पः समुच्चयो वा न सम्भवति। आयुधत्वं यज्ञसाधनत्वम्। तच्च स्फ्यैरनोऽस्ति कपालेषु श्रपयतीत्यादिशास्त्रसिद्धमेवानूद्य यज्ञायुधानि सम्भवन्तीत्येष सम्भरणविधिः स्तूयते। तस्मान्नास्ति हविष्ट्वम्।

पञ्चमाधिकरणमारचयति।

पशुरालभ्य इत्यत्र पश्वैक्ये यजनाङ्गता।

नास्त्यस्ति वाद्यः स्वपदे श्रुत्वा पश्वङ्गतागतेः ॥ ११ ॥

घाटौ स्वप्रत्ययोपात्त आसन्नतरकारके।

योगः क्रतौ पशौ चेति क्रमे यागाङ्गतोचिता ॥ १२ ॥

अग्नीषोमीयं पशुमालभेतेत्यत्र पशोरेकत्वं यजनाङ्गं न भवति। तस्य श्रुत्या पशुसम्बन्धावगमात्। पशुमित्ये-

तस्मिन्नेकस्मिन्नेव पदे पशुतदेकत्वयोः श्रवणात् पदान्तर-निरपेक्ष्य एव परस्परसम्बन्धोऽवगम्यते। यागस्त्वालभेतेत्यनेन पदान्तरेणोपात्तः। तत्र वाक्येन सम्बन्धावगतिः। वाक्याच्च श्रुतिर्बलीयसी। ततः एकत्वस्य यागाङ्गत्वाभावाद्‌ द्वाभ्यां बहुभिर्वा यागोऽनुष्ठातुं शक्य इति प्राप्ते ब्रूमः। पशुमिति पदं यद्यप्येकं तथापि प्रकृत्या पशुर्निर्दिष्टः। प्रत्ययेन कारकत्वमेकत्वं चेत्युभयं निर्दिष्टम्। तत एकत्वस्यासन्न-तरे कारके प्रथमं सम्बन्धो भवति। कारकत्वं नाम क्रियाहेतुत्वम्। तथा सति कारकद्वारा क्रियायामपि सम्बन्धः प्रत्ययेनैवावगतः। क्रियाविशेषश्च सन्निहितपदा-न्तरोपात्तो याग इति यजनाङ्गत्वमेकत्वस्य सिध्यति। तच्चैकत्वं स्वयममूर्त्ततया यागक्रियां निष्पादयितुमसमर्थं सत्तत्र समर्थं पशुद्रव्यं पश्चादवच्छिनत्ति। तत एकत्वस्य यागाङ्गत्वान्न द्वाभ्यां त्रिभिर्वा यागसिद्धिः एवमनड्वाहौ युनक्ति। वसन्ताय कपिञ्जलानालभत इत्यत्र द्वित्वबहुत्वयो-र्विवक्षितत्वं द्रष्टव्यम्।

षष्ठाधिकरणमारचयति।

न पुंलिङ्गे विवक्षा वा विवक्षानुपयोगतः।

आद्योऽनुष्ठित्यपेक्षत्वात् संख्यावत्तद्विवक्षताम्॥ १३॥

पशुमालभेतेत्यत्र पशुपदे पुंलिङ्गमविवक्षितम्। कुतः। शब्दार्थविचारेऽनुष्ठानविचारे च तदुपयोगादर्शनात्। अक्लिङ्गेऽपि दृक्षपदार्थे पुंलिङ्गो दृक्षशब्दः प्रयुज्यते। तथा पुंव्यक्तावपि स्त्रीलिङ्गो मक्षिकाशब्दः प्रयुक्तः। ततो न लिङ्गस्य शब्दार्थत्वेन विवक्षास्ति। अनुष्ठानमपि पुंव्यक्तिस्त्रीव्यक्त्योः

समानम्। एकत्वावच्छिन्नपशुत्वे वैषम्याभावात्। तस्मा-
दविवक्षितं लिङ्गमिति प्राप्ते ब्रूमः। यथा पशुत्वजातिर्यथा
वा तदेकत्वं शब्दार्थः। एवं वृद्धव्यवहारेऽन्वयव्यतिरेकाभ्या-
मनन्यथासिद्धाभ्यां लिङ्गस्यापि कुतः शब्दार्थता न स्यात्।
वृक्षमक्षिकाशब्दयोस्तु न वयमर्थतः साधुतां ब्रूमः। किन्त्व-
भियुक्तप्रयोगमात्रबलेन साधुत्वम्। न चानुष्ठानसाम्यम्।
पुंपशौ विशेषसद्भावात्। वाक्त आप्यायतामित्यादिभि-
र्मन्त्रैस्तत्तदवयवस्याप्यायनकाले मेढ्रं त आप्यायतामिति
मन्त्रेण तदवयवस्याप्यायनश्रवणात्। तस्मादेकत्ववत्
पुंलिङ्गमपि विवक्षितम्।

सप्तमाधिकरणमारचयति।

स्विष्टकृत् संस्कृतौ क्षीण उतापूर्वोपयोग्यपि।
प्रयोजनैक्यमेकस्मिन् युक्तं कर्मण्यतः क्षयः॥ १४॥
मन्त्रेण देवसंस्कारः प्रक्षेपाद् द्रव्यसंस्कृतिः।
त्यागादपूर्वमुत्पन्नं प्रधानापूर्वगं च तत्॥ १५॥

योऽयं स्विष्टकृद् यागः सोऽयमुपयुक्तहविःसंस्कार इत्य-
विवादम्। तत्र संस्कारस्य दृष्टप्रयोजनत्वेनावश्यम्भावे सति
तावतैवोपक्षीणः स्विष्टकृद् यागो नापूर्वस्योपकरोति। न
ह्येकस्मिन् कर्मणि प्रयोजनद्वयं युक्तमिति प्राप्ते ब्रूमः।
कर्मण एकत्वेऽप्यंशभेदात् प्रयोजनभेदो न विरुध्यते। मन्त्र-
पाठो द्रव्यप्रक्षेपो देवतोद्देशत्यागश्चेति त्रयोऽंशाः। तत्र
त्यागं परमापूर्वोपयुक्तमवान्तरापूर्वमुत्पद्यते। तस्मात्
स्विष्टकृदुभयार्थः। एवमन्यप्रयाजपशुपुरोडाशावप्युदा-
हार्यौ।

अष्टमाधिकरणमारचयति।

शेषत्वमुपरिग्रन्थे चिन्तनीयमुतेतरत्।

शेषो भानान्न तस्यात्र प्रयुक्त्याख्यफलेरणात्॥ १६॥

वक्ष्यमाणेष्वधिकरणेषु शेषत्वमेव चिन्ताविषयः। यथातीतेष्वधिकरणेषु क्रतुशेषोऽयं पुरुषशेषोऽयमिति चिन्तितम्। तद्वत्। अत उपरितनग्रन्थे तत्र तत्र पर्णतादीनां शेषत्वविचारस्य भासमानत्वादिति चेत्। मैवम्। शेषत्वस्य यत् प्रयुक्तिरूपं फलं तदेव प्राधान्येन विचार्य्यते। शेषत्वं तु तदुपयोगित्वेनेति न तद्विचारः प्रधानभूतः।

नवमाधिकरणमारचयति।

आमिक्षा वाजिनं च स्याद्दध्यानीतेः प्रयोजकम्।

उतामिक्षैव सामर्थ्यं द्वयोस्तुल्यं ततोऽग्रिमः॥ १७॥

आमिक्षा पय एवात्र तच्छब्दान्मन्त्रतो रसात्।

प्रयोजिकैका प्राधान्यादनुनिष्पादि वाजिनम्॥ १८॥

इदमाम्नायते। तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमिति। तत्र पयसि दधिप्रक्षेपादामिक्षाद्रव्यं यथा निष्पद्यते। तथा वाजिनद्रव्यमपीति दध्यानयनस्य जनकत्वसामर्थ्यमुभयद्रव्यविषयं तुल्यमेव। तस्मादुभयमपि प्रयोजकमिति प्राप्ते ब्रूमः। न द्रव्यान्तरमामिक्षा। किन्तु पय एवेति तच्छब्दादिभिरवगम्यते। यस्मिन् पयसि दधिप्रक्षेपः सामिक्षेति तच्छब्देन पयः परामृश्यते। आमिक्षायागस्य पुरोऽनुवाक्यायामेवमाम्नातम्। जुषन्तां युज्यं पय इति। पयोरसश्च मधुर आमिक्षायामनुवर्त्तते। न तु वाजिने। ततः प्राधान्येन पयसो

घनीभावावस्थां जनयितुं दध्यानीतमित्यामिक्षैव प्रयोजिका। अनुनिष्पाद्येव वाजिनम्। न तु प्रयोजकम्।

दशमाधिकरणमारचयति।

सोमक्रयण्यानयने पदकर्म प्रयोजकम्।

न वाद्योऽस्याञ्जनस्यापि क्रयवत् सन्निकर्षतः॥ १९॥

तृतीयया क्रयार्था गौस्तद्दूरानयनस्य च।

तादर्थ्यात्तत्प्रयुक्तं तत्र प्रयोजकता पदे॥ २०॥

ज्योतिष्टोमे सोमक्रय आम्नायते। एकहायन्या क्रीणातीति। सेयमेकहायनी गौर्यदा सोमं क्रेतुमानीयते। तदाध्वर्युस्तस्याः पृष्ठतोऽनुगच्छति। तदप्याम्नातम्। षट्पदान्यनुनिष्क्रामतीति। ततः सप्तमे पदे हिरण्यं निधाय हुत्वा तत्पदगतं रजो गृह्णीयात्। तदपि श्रूयते। सप्तमं पदमध्वर्युरञ्जलिना गृह्णाति तदेतद्रजः संगृह्य हविर्धानयोः शकटयोरक्षे तेन रजसा युक्तमञ्जनं प्रक्षिपेत्। तदपि श्रुतम्। यज्ञं वा एतत् सम्भरन्ति यत् सोमक्रयण्यै पदमिति प्रस्तुत्य यर्हि हविर्धाने प्राची प्रवर्त्तयेयुस्तर्हि तेनाक्षमुपाञ्ज्यादिति। तत्र यथा क्रयः सन्निकृष्टः। तथैव पदकर्माप्यक्षाञ्जनं सन्निकृष्टम्। श्रयोच्येत। दध्यानयनमामिक्षया यथा संयुक्तम्। न तथाक्षाञ्जनं सोमक्रयण्यानयनेन संयुक्तमिति। तन्न। क्रयेऽपि तदसंयोगस्य तुल्यत्वात्। यथासंयुक्तोऽपि क्रयो गवानयनेन निष्पद्येत। तथाक्षाञ्जनमपि तेन निष्पाद्यमिति समानत्वात् क्रयवत् पदकर्मापि सोमक्रयण्यानयनस्य प्रयोजकमिति प्राप्ते ब्रूमः। एकहायन्या क्रीणातीति तृतीयाश्रुत्या गोः क्रयार्थता गम्यते।

गोद्वारा तदानयनमपि क्रयार्थमेवेति क्रय एवानयने प्रयोजकः। न च पदकर्मार्थत्वं गोर्वा तदानयनस्य वा क्वचिच्छ्रुतम्। तस्मात् तदप्रयोजकम्।

एकादशाधिकरणमारचयति।

श्रपणं तुषवापश्च कपालस्य प्रयोजकौ।
उत श्रपणमेवाद्यो वापार्थत्वात् तृतीयया॥ २१॥
पुरोडाशकपालेति नाम्ना स्याच्छ्रपणार्थता।
प्रयुक्तस्य प्रयुक्तिर्नो तस्य वापि प्रसञ्जनम्॥ २२॥

कपालेषु श्रपयतीति श्रपणं पुरोडाशस्य श्रुतम्। तथा पुरोडाशकपालेन तुषानुपवपतीति कपाले तुषधारणं श्रुतम्। ते च तुषाः सकपाला रक्षसां भागोऽसीति मन्त्रेण नैर्ऋत्यां दिश्यवस्थापनीयाः। तत्र श्रपणं यथा कपालसम्पादनस्य प्रयोजकम्। तथा तुषवापोऽपि प्रयोजकः। एकहायन्येति तृतीयया यथा क्रयार्थत्वम्। तथा कपालेनेति तृतीयया कपालस्य तुषवापार्थत्वावगमादिति चेत्। मैवम्। नात्र कपालमात्रस्य तुषोपवापसाधनत्वं श्रुतम्। किं तर्हि यत् कपालं पुरोडाशश्रपणार्थोपात्तमासादितं च तस्य कपालस्य साधनत्वम्। एतच्च पुरोडाशकपालेनेति विशेषनाम्ना तद्विधानादवगम्यते। तथा सति प्रथमं श्रपणेन कपालं प्रयुज्यते। न च प्रयुक्तस्य पुनस्तुषवापेन प्रयुक्तिः सम्भवति। तस्माच्छ्रपणेनैव प्रयुक्तं कपालं तुषोपवापेऽपि प्रसङ्गात् सिध्यति। ईदृशमेवाङ्गत्वं तृतीयाश्रुत्या बोध्यते।

द्वादशाधिकरणमारचयति।

हृदादिः शकदादिश्च पश्वालम्भप्रयोजकः।
हृदादिरेव वाद्योऽस्तु प्रकृतत्वेन साम्यतः॥ २३॥
हविषो यागशेषत्वाद्दृदादेर्हविरात्मनः।
प्रयोजकत्वं तस्यैव नेतरस्यातथात्वतः॥ २४॥

अग्नीषोमीयपशौ श्रूयते। हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षस इति। तथान्यदपि श्रुतम्। शकृत् संप्रविध्यति। लोहितं निरस्यतीति। तत्र हृदयादीनां शकृदादीनां च प्रकरणपाठसाम्यात् पशुसाध्यत्वसाम्याच्च हृदयादिवच्छकृदादिकमपि पश्वालम्भस्य प्रयोजकमिति चेत्। मैवम्। पशुयागो हि हविःसाध्यः। हविष्ट्वं चात्र योग्यत्वाद्धृदयादीनामेव। न त्वयोग्ययोः शकृल्लोहितयोः। तस्माद्धृदयादिरेव प्रयोजकः। शकृत्संप्रवेधो लोहितनिरसनं चेत्येतदुभयं शेषप्रतिपत्तिमात्रम्।

त्रयोदशाधिकरणमारचयति।

प्रयोजकः स्विष्टकृत् किं पुरोडाशोत्तरार्धयोः।
यद्वा प्रकृतोपजीवी स्यादाद्यः स्वस्य सिद्धये॥ २५॥
उत्तरार्द्धेति शब्दस्य प्रकृताकाङ्क्षणे सति।
अन्याद्यर्थं पुरोडाशमुपजीव्यैव वर्त्तताम्॥ २६॥

दर्शपूर्णमासयोः श्रूयते। उत्तरार्धात् स्विष्टकृते समवद्यतीति। सोऽयं स्विष्टकृद् यागः कस्यचिन्नूतनस्य पुरोडाशस्य तदुत्तरार्धस्य च प्रयोजकः। तदुभयाभावे स्वसिद्ध्यभावादिति चेत्। मैवम्। उत्तरशब्दोऽर्धशब्दश्च सर्वनामत्वाद् भागवाचित्वाच्च प्रकृतं कञ्चिद्भागिनमाकाङ्क्षते। अन्यादिदेवतार्थः पुरोडाशः प्रकृतो भागवांश्च। तस्मात्त-

निवोपजीव्य स्विष्टकृद् यागः प्रवर्त्तते। न त्वन्यस्य प्रयोजकः।

चतुर्दशाधिकरणमारचयति।

अभिघार्य्यं प्रयाजानां शेषेण हविरत्र किम्।

शेषधारणतत्पात्रे कार्य्ये नो वाभिघारणम्॥ २७॥

नान्यथा तेन ते कार्य्ये न कार्य्ये प्रतिपत्तितः।

प्राजापत्यवपायाश्च न कोऽप्यर्थोऽभिघारणात्॥ २८॥

प्रकृतौ श्रुतम्। प्रयाजशेषेण हवींष्यभिघारयतीति। तदेतद् विकृतावतिदिष्टम्। विकृतयश्च वाजपेयगताः पशवः। ते च द्विविधाः। क्रतुपशवः प्राजापत्यपशवश्चेति। आग्नेयं पशुमालभत इत्यादिना विहिताः क्रतुपशवः। इतरे तु सप्तदश प्राजापत्यान् पशूनालभत इति विहिताः। एते चोभयविधाः पशवः प्रातःसवने सहैवोपक्रम्यन्ते। तत सर्वेषामेष सकृदेव प्रजाया अनुष्ठीयन्ते। तत्र क्रतुपशूनां प्रातःसवन एवालब्धव्यत्वात् तदीयहविषां प्रयाजशेषेणाभिघारणं निर्विघ्नमेव सिध्यति। प्राजापत्यपशूनां तु पर्य्यग्निकरणपर्य्यन्तमेव तदानीमनुष्ठानम्। आलम्भस्तु माध्यन्दिने सवने। तत्कालविशेषस्य ब्रह्मसाम्न्यालभत इति विधानात्। तेषां च प्राजापत्यानां हविषामभिघारणार्थं प्रातःकालीनः प्रयाजशेषो धारयितव्यः। न चात्र जुह्वां तद्धारणं सम्भवति। क्रतुपश्वनुष्ठाने जुह्वा व्यापृतत्वात्। अतः पात्रान्तरं सम्पाद्य तस्मिन्नयं शेषो धारयितव्यः। अन्यथा प्राजापत्यहविषां प्रयाजशेषेणाभिघारणासिद्धेः। तस्माच्छेषधारणतत्पात्रे सम्पादनीये इति प्राप्ते ब्रूमः। ते उभे न कर्त्तव्ये। कुतः। अभिघारणस्य शेषप्रतिपत्ति-

जकाः। तथैव चतुर्थपञ्चमप्रयाजनिष्पादकमानयनमपि प्रयोजकमेव।

षोडशाधिकरणमारचयति।

जुहूपभृद्ध्रुवास्वाज्यं सर्वार्थं वा व्यवस्थितिः।
सर्वार्थमविशेषात् स्यात् प्रयाजाद्यं तु जौहवम् ॥३२॥
प्रयाजानुयाजहेतुः स्यादौपभृतमाज्यकम्।
ध्रौवमन्यार्थमित्येषा व्यवस्था वचनैर्मता ॥ ३३ ॥

चतुर्जुह्वां गृह्णातीत्यादिषु ग्रहणवाक्येष्वेतदर्थमिति विशेषनियामकस्याश्रवणात् पात्रत्रयगतमाज्यं सर्वार्थमिति चेत्। मैवम्। यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तदित्यादिभिर्वाक्यैर्व्यवस्थावगमात्। सप्तदशाधिकरणमारचयति।

अष्टावुपभृतीत्यत्र किमष्टकग्रहे विधिः।
चतुर्द्वयग्रहे वाद्यः स्यादष्टश्रुतिमुख्यतः ॥ ३४ ॥
चतुर्गृहीतं होमाङ्गं फलवत्त्वान्न बाध्यते।
चतुर्द्वित्वं लक्ष्यतेऽतः सह्यानीत्यर्थमष्टता ॥ ३५ ॥

ग्रहणवाक्ये चतुर्जुह्वां गृह्णातीत्यत्र यथा चतुःसंख्याविशिष्टमेकं हविर्ग्रहणं विहितम्। तथैवाष्टावुपभृतीत्यत्राप्यष्टसंख्याविशिष्टमेकं हविर्ग्रहणं विधातव्यम्। न तु चतुर्गृहीतद्वयम्। तथा सत्यष्टश्रुतेर्मुख्यत्वावगमात्। अष्टसंख्यावयवभूतयोर्द्वयोश्चतुःसंख्ययोर्विधाने सत्यष्टशब्दस्यावयवलक्षणा प्रसज्येतेति प्राप्ते ब्रूमः। प्रसज्यतां नाम लक्षणा। मुख्यार्थस्वीकारे होमवाक्यविरोधापत्तेः। चतुर्गृहीतं जुहोतीत्यनारभ्यश्रुतं वाक्यं होममात्रोद्देशेन चतुर्गृहीतं विदधाति। यद्यप्येतत् सर्वहोमविषयतया

सामान्यरूपम्। औपभृतं तु प्रयाजानूयाजविषयत्वा-
द्विशेषरूपम्। तथापि होमस्य फलवत्त्वेन प्राधान्याद्
ग्रहणस्य होमार्थत्वेनोपसर्जनत्वात् प्रधानानुसारेण चतुर्गृ-
हीतमेव युक्तम्। न तूपसर्जनानुसारेणाष्टगृहीतम्। तस्मा-
दुपभृति चतुर्गृहीतद्वयं विधीयते। तत्रैकं चतुर्गृहीतं
हविश्चतुर्थपञ्चमप्रयाजार्थम्। अपरं त्वनूयाजार्थम्।
नन्वेवं तर्हि चतुर्गृहीतस्यैव हविष्ट्वाच्चतुरुपभृतीत्येव
विधातव्यम्। न त्वष्टावुपभृतीति विधिर्युक्त इति चेन्न।
नैवम्। तथा सत्यनूयाजार्थं चतुर्गृहीतं न सिध्येत्।
अथ तदपि वाक्यान्तरेण विधीयेत। तदानीमुपभृतः
प्रथमेन चतुर्गृहीतेनावरुद्धत्वाद् द्वितीयस्मै पात्रान्तरमन्वि-
ष्येत। यद्युपभृतीत्येव द्वितीयमपि चतुर्गृहीतं विधीयेत।
तदा चतुर्गृहीतद्वयस्य पृथगेवानुष्ठानादुपभृत्येकप्रयत्ने-
नानयनं न सिध्येत्। अत उभयस्य समोपभृतस्यानयनार्थ-
मष्टावुपभृतीत्युच्यते। तस्मात् सामीप्यार्थमष्टशब्दप्रयोगे-
ऽपि हविर्द्वसिद्धये द्वे चतुर्गृहीते अत्र विधीयेते।

इति माधवीये जैमिनीयन्यायमालाविस्तरे
चतुर्थस्याध्यायस्य प्रथमः पादः।

---

द्वितीयपादस्य प्रथमाधिकरणमारचयति।

स्वरुं कुरुत इत्यत्र स्वरुर्यूपात् पृथक्छिदाम्।
प्रयोजयेन्न वाद्योऽस्तु विशिष्टस्य विधानतः॥ १॥
आद्यस्य यूपखण्डस्य स्वरुत्वाख्यविशेषणे।
विहिते लाघवं तस्मादर्थनिष्पन्न एव सः॥ २॥

अग्नीषोमीयपशौ श्रूयते। यूपस्य स्वरुं करोतीति। तत्र यूपो यथा छेदनस्य प्रयोजकः। तथा स्वरुरपि छेदनं प्रयोजयति। कुतः। करोतीत्यनेन विशिष्टविधिप्रतीतेः। करोतिधातोर्हि भावना मुख्योऽर्थः। तत्र यूपशब्दोपलक्षितः खदिरादिवृक्षः। करणं छेदनादिरिति कर्त्तव्यता। छिन्नेन वृक्षेण स्वरुरुत्पादनीय इति विशिष्टविधिः। उत्पन्नस्य स्वरोर्विनियोग एवमाम्नातः। स्वरुणा पशुमनक्तीति। तस्मात् स्वरुश्छेदनस्य प्रयोजक इति प्राप्ते ब्रूमः। छिद्यमानयूपस्य यः प्रथमं पतितः शकलः स स्वरुरिति स्वरुत्वनाममात्रविधौ लाघवाद् यूपवत् स्वरुर्न छेदनस्य प्रयोजकः। किन्तु यूपप्रयुक्ते छेदने स्वयमनुनिष्पद्यते।

द्वितीयाधिकरणमारचयति।

प्राचीमाहरतीत्यत्र दिक्शाखा वास्तु दिक्श्रुतेः।
आहार्य्यत्वं दिशो नास्ति शाखा तेनोपलक्ष्यते॥ ३॥

दर्शपूर्णमासयोर्यत् पलाशशाखया वत्सानपाकरोतीति पलाशशाखां प्रकृत्य श्रूयते। यत् प्राचीमाहरेद्देवलोकमभिजयेदिति। तत्र प्राचीशब्दस्य दिग्वाचित्वाद्दिगाहरणं द्वितीयया विधीयत इति चेत्। मैवम्। अशक्यत्वात्। ततो वृक्षस्य प्राची शाखोपलक्ष्यते। तथा सति प्रकृतानुग्रहो भवति।

तृतीयाधिकरणमारचयति।

शाखा छित्त्वोपवेशं च मूले कुर्वीत शाखया।
नुदेद् वत्सान् कपालानि स्थापयेदुपवेशतः॥ ४॥

द्वयं प्रयोजकं छित्तेर्वत्सापाकृतिरेव वा।
आद्योऽग्रमूलयोरत्र विभज्य विनियोगतः॥ ५॥
उपवेशं करोतीति साकाङ्क्षोऽन्यार्थमूलतः।
पृथ्यतेऽतो मूलभागः प्रादेशपरिमाणकः
उपवेशोऽनुनिष्पादी स तस्माद् युज्यतेऽन्तिमः॥ ६॥

दर्शपूर्णमासयोः श्रूयते। मूलतः शाखां परिवास्योपवेशं करोतीति। येयं पलाशशाखा छित्त्वा वृक्षादाहृता तां पुनश्छित्त्वा मूलभागः प्रादेशपरिमित उपवेशः कार्यः। तयोरग्रमूलयोः शाखाभागयोः पृथग्विनियोग आम्नातः। शाखया वत्सानपाकरोतीति। उपवेशेन कपालान्युपदधातीति। तदिदं कार्यद्वयं वृक्षच्छेदेन समाहृतया शाखया निष्पद्यते। तस्मादुभयमपि छेदनाहरणादेः प्रयोजकमिति चेत्। मैवम। उपवेशं करोतीत्युक्ते केन द्रव्येणेत्याकाङ्क्षायां मूलत इति वक्तव्यम्। पुनरपि कस्य मूलमित्याकाङ्क्षायां वत्सापाकरणार्थं छिन्नायाः पलाशशाखाया मूलमित्याकाङ्क्षा पूरणीया। तस्माच्छेदने वत्सापाकरणमेव प्रयोजकम। उपवेशस्त्वनुनिष्पादी। नन्वाद्यच्छेदने तथास्तु। द्वितीयच्छेदनस्योपवेशः प्रयोजकः। परिवासनसम्पन्नेन मूलेनोपवेशकर्तव्यताविधानात्। अन्यथा परिवास्योपवेशं करोतीति समानकर्तृत्वपूर्वकालत्ववाचिनो ल्यपप्रत्ययस्यानुपपत्तेरिति चेत्। मैवम्। परिवासनस्योपवेशसम्बन्धो वाक्ये न प्रतीयते। शाखासम्बन्धस्तु शाखामिति द्वितीयाश्रुत्या। पूर्वच्छिन्नाया अपि शाखायाः पुनर्मूलापादानकच्छेदोऽपेक्षितः। अन्यथा समूलां शाखां हस्तेनोद्यम्य

सम्बन्धः प्रतीयत इति चेत्। मैवम्। विनियोगवाक्ये प्रश्चो-ताभिरिति तृतीयाश्रुत्या संयवनसाधनत्वावगमात् संयवनमेव प्रयोजकम्। निनयनवाक्ये तु प्रणीता इत्यनया द्वितीयया संस्कार्य्यत्वावगमान्निनयनं प्रतिपत्तिरूपः संस्कार इति न प्रणयनस्य प्रयोजकम्।

षष्ठाधिकरणमारचयति।

मैत्रावरुणके दण्डदानस्य प्रतिपत्तिता।

उतार्थकर्मताद्योऽस्तु धारणे कृतकृत्यतः॥ १२॥

युक्तोपयुक्तसंस्काराद्उपयोक्ष्यसंस्क्रिया।

स्थित्वा प्रैषानुवचने दण्डोपेक्षोऽर्थकर्म तत्॥ १३॥

ज्योतिष्टोमे श्रूयते। क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छतीति। तदेतद्दण्डदानं प्रतिपत्तिकर्म। कुतः। दण्डस्य यजमानधारणेन कृतकृत्यत्वात्। यजमानो ह्यध्वर्युणा दीक्षासिद्ध्यर्थं दत्तं दण्डमा सोमक्रयाद्धारयति। अत एवाम्नातम्। दण्डेन दीक्षयतीति। यद्दीक्षितो दण्डं प्रयच्छतीति च। तस्मादुपयुक्तस्य दण्डस्य दानं प्रतिपत्तिरिति चेत्। मैवम्। दण्डे भविष्यदुपयोगस्यापि सद्भावात्। यदा मैत्रावरुणः स्थित्वा प्रैषाननुवदति। तदानीमवलम्बनाय दण्डोपेक्षितः। अत एवाम्नातम्। दण्डी प्रैषानन्वाहेति तथा सति प्रतिपत्तिकर्मरूपादुपयुक्तसंस्कारादर्थकर्मरूप उपयपयोक्ष्यमाणसंस्कारः प्रशस्तः। उपयोजयितुमेव हि सर्वत्र संस्कारस्य प्रवृत्तिः। उपयुक्ते तु प्रतिपत्तिरूपसंस्कारस्य संस्कारमात्रपर्य्यवसायित्वेन कार्य्यपर्य्यवसानाभावादप्रशस्तत्वम्। तस्मान्मैत्रावरुण-

संस्काराय तद्दानमर्थकर्म। तथा सति निरूढपशावसत्यपि दीक्षिते दण्डसम्पादनस्यैतद्दान प्रयोजकम्।

सप्तमाधिकरणमारचयति।

चात्वाले कृष्णशृङ्गस्य प्रासो यः सोऽर्थकर्म वा।

प्रतिपत्तिः साङ्गकत्वादाद्योऽन्त्योऽस्तु प्रयोगतः॥ १४॥

ज्योतिष्टोमे श्रूयते। नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यतीति। यजमानेन दत्ता दक्षिणा ऋत्विग्भिर्यदा नीताः। तदा यजमानः स्वहस्ते धृतं कृष्णमृगस्य शृङ्गं चात्वालनामकगर्त्ते परित्यजेत्। सोऽयं परित्यागोऽर्थकर्म। कुतः। सप्रयोजनत्वात्। प्रतिपत्तितायामपूर्वाभावे निरर्थकः स्यात्। अतोऽपूर्वलाभायार्थकर्मत्वमिति चेत्। मैवम्। कृष्णविषाणया कण्डूयतीति तृतीयाश्रुत्या यजमानशिरःकण्डूतावुपयुक्तस्य विषाणस्य प्रतिपत्त्यपेक्षत्वात्। न च प्रतिपत्तावत्यन्तमपूर्वाभावः। चात्वाल एव प्रासनमित्येवंविधस्य नियमस्य वैधत्वेन प्रासनक्रियाप्रयुक्तापूर्वाभावेऽपि नियमापूर्वसद्भावात्। तस्मात् प्रासनं प्रतिपत्तिकर्म।

अष्टमाधिकरणमारचयति।

पात्रस्यावभृथे सोमलिप्तस्य नयनं तु किम्।

साधनं प्रतिपत्तिर्वा यन्ति तेनेत्यतः श्रुतेः॥ १५॥

प्राप्ता साधनता मैवं पुरोडाशहविष्ट्वतः।

पात्रस्य तत्सम्बन्धात् प्रक्षेपः प्रतिपत्तये॥ १६॥

ज्योतिष्टोमे श्रूयते। चतुर्गृहीतं वा एतदयज्ञस्य यदृजीषं यद्ग्रावाणो यदौडुम्बरी यदभिषवणफलके

तस्माद् यत् किञ्चित् सोमलिप्तं द्रव्यं तेनावभृतं यन्तीति। निष्पीडितस्य सोमस्य नीरसो भाग ऋजीषम्। तदेतदृजीष ग्रावद्रोणकलशादि सोमाभिषवादौ सोमेन लिप्यते। तस्य सोमलिप्तस्य सर्वस्य द्रव्यस्यावभृथसाधनत्वमभ्युपेयम्। कुतः। तेनावभृथं यन्तीत्यनया श्रुत्यावभृथसाधनत्वावगमात्। तस्मात् सोमलिप्तं द्रव्यमवभृथे हविष्ट्वेन नीयत इति चेत्। नैवम्। वारुणेनैककपालेनावभृथमवयन्तीत्यनेनोत्पत्तिवाक्यशिष्टपुरोडाशहविषावरुद्धेऽवभृथे सोमलिप्तपात्रस्य हविष्ट्वेन सम्बन्धाभावात्। तथा सत्यवभृथशब्देन तदीयं देशं लक्षयित्वा तस्मिन् देशे सोमलिप्तपात्रस्य नयनमत्र विधीयते। तच्च नयनं प्रतिपत्तये भवति। पात्रस्य पूर्वमुपयुक्तत्वात्। तस्मादेतत् प्रतिपत्तिकर्म।

नवमाधिकरणमारचयति।

समे यजेत देशादेरनुवादोऽथवा विधिः।
प्रयोगानुपपत्त्यैव प्राप्तत्वादनुवादता॥ १७॥
समे वा विषमे वेति पाक्षिकत्वनिवृत्तये।
अप्राप्तांशानुपातेन नियमोऽत्र विधीयते॥ १८॥

इदमाम्नायते। समे दर्शपूर्णमासाभ्यां यजेत। प्राचीनप्रवणे वैश्वदेवेन यजेत। पौर्णमास्यां पौर्णमास्या यजेत। अमावास्यायाममावास्यया यजेत। पशुबन्धस्य यज्ञक्रतोः षडृत्विजः। दर्शपूर्णमासयोर्यज्ञक्रत्वोश्चत्वार ऋत्विजः। चातुर्मास्यानां यज्ञक्रतूनां पञ्चर्त्विजः। अग्निहोत्रस्य यज्ञक्रतोरेक ऋत्विक्। सौम्यस्याध्वरस्य यज्ञक्रतोः सप्तदशर्त्विजः। सोमेन यजेतेति। क्रतुशब्दो मानस उपास-

नेऽपि वर्त्तते। स क्रतुं कुर्वीत मनोमयः प्राणशरीर इत्यत्र क्रतुशब्देन ध्यानविधानात्। तद्व्यावृत्तये यज्ञक्रतोरिति विशेष्यते। तत्र देशकालकर्तृद्रव्याणि न विधीयन्ते। किन्त्वनूद्यन्ते। कुतः। प्राप्तत्वात्। न हि देशादिभिर्विना प्रयोगः सम्भवति। अतोऽर्थापत्त्या तत्प्राप्तिरिति चेत्। मैवम्। अर्थापत्त्या पाक्षिकी समदेशादिप्राप्तिः। विषमदेशादीनामपि सम्भवात्। ततो यस्मिन् पक्षे प्राप्तिर्नास्ति तस्मिन् पक्षे समदेशादयो विधीयन्ते।

दशमाधिकरणमारचयति।

श्वैताल्भ्योऽनुवादो वा श्वैत्यस्य विधिरग्रिमः।
द्रव्यद्वारेण तत्प्राप्तेः पूर्ववत् तन्नियम्यते॥ १९॥

इदमाम्नायते। वायव्यं श्वेतमालभेत भूतिकाम इति। तत्र श्वैत्यगुणस्य द्रव्यनिरपेक्षस्य क्रियान्वयाभावाद् द्रव्यसहितस्य तदन्वये द्रव्यविधिनैवावर्जनीयतया तत्प्राप्तेरनुवादः श्वैत्यस्येति चेत्। मैवम्। पूर्वन्यायेन पाक्षिकत्वनिवृत्तये नियमविधित्वाङ्गीकारात्।

एकादशाधिकरणमारचयति।

अवघातेऽपि नियमो देशादाविव तेन सः।
प्रधानेन प्रयुक्तः स्यात् सम्बन्धः प्रक्रियोक्तितः॥ २०॥

यथा देशकालकर्तृद्रव्याणां पक्षेऽप्राप्तौ नियमो विहितः। एवमवघातोऽपि तण्डुलनिष्पत्त्यर्थं लोकतः प्राप्तोऽपि पाक्षिकनखविदलनादिव्यावृत्तये नियम्यते। सति चावघातस्य विधौ प्रधानेनाग्नेयादियागेनासौ प्रयुज्यते। न चात्र सम्बन्धाभावादप्रयुक्तिरिति वाच्यम्।

प्रधानयागप्रकरणपठितत्वेन सम्बन्धसिद्धेः। तस्मादवघाता-दयो विधीयन्ते प्रधानेन प्रयुज्यन्ते च।

द्वादशाधिकरणमारचयति।

अनिरूप्या निरूप्या वा यागहोमददातयः।
त्यागादाद्यो यजिस्त्यागः प्रक्षेपो॰ होम इष्यते ॥ २१ ॥
आकाङ्क्षा यागशब्दस्य त्यागेनैव निवर्तते।
यागस्योपरि होमस्य विधेः क्षेपावसानता ॥ २२ ॥
स्वीय द्रव्यं परित्यज्य परकीयं यथा भवेत्।
तथा सम्पादनं दानं त्यागेऽप्येषामियं भिदा ॥ २३ ॥

इदमाम्नायते। सोमेन यजेत। अग्निहोत्रं जुहोति। हिरण्यमात्रेयाय ददातीति। तत्र यागहोमदानशब्दाना-मर्था निरूपयितुं न शक्यन्ते। त्रिष्वपि द्रव्यत्यागस्य सद्भा-वात्। ततो विधेयानामर्थानां प्रधानभूतानामनिर्णयादि-तरत्र विध्यनुवादविवेकः पूर्वोक्तो व्यर्थ इति चेत्। मैवम्। देवतामुद्दिश्य द्रव्यत्यागो यागः। त्यक्तस्य वह्नौ प्रक्षेपो होमः। स्वकीयद्रव्यस्य स्वत्वनिवृत्तिपूर्वकं परस्वत्वापादनं दान-मिति सुनिरूपा एते पदार्थाः। दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति विहितस्य यागस्योपरि चतुरवत्तं जुहोतीति होमस्य विधानात्त्यागमात्रात्मको यागः। प्रक्षेपाधिको होम इत्यवगम्यते यत्र तु यजत्यादिपदं न श्रुतम्। किन्त्वाग्नेयोऽ-ष्टाकपाल इत्येतावच्छ्रुतम्। तत्राप्युद्देश्याया देवताया-स्त्यजनीयद्रव्यस्य च श्रुतत्वादुद्देशत्यागरूपो यागोऽर्थ-सिद्धः। तस्मात् प्रधानविधेयानां यागादीनां सुनिरूप-त्वाद् विधिविवेको न व्यर्थः।

त्रयोदशाधिकरणमारचयति।

यदातिथ्याबर्हिरेतदुपसत्स्वतिदेशनम्।
साधारण्यविधिर्वाद्यस्तदीयस्योपसङ्गतेः॥ २४॥
बर्हिःश्रुत्येकताभासान्नातिदेशस्य लक्षणा।
आतिथ्योपसदङ्गेषु बर्हिरेतत् प्रयुज्यते॥ २५॥

ज्योतिष्टोमे श्रूयते। यदातिथ्यायां बर्हिस्तदुपसदां तदग्नीषोमीयस्य चेति। क्रीतं सोमं शकटेऽवस्थाप्य प्राचीनवंशं प्रत्यानयनेऽभिमुखो यामिष्टिं निर्वपति सेयमातिथ्या। तत ऊर्ध्वं त्रिषु दिनेष्वनुष्ठीयमाना उपसदः। औपवसथ्ये दिनेऽनुष्ठीयमानोऽग्नीषोमीयः। तत्रातिथ्येष्टौ विहितं यद्बर्हिस्तद् यदि तस्या इष्टेराच्छिद्योपसत्सु विधीयते। तदानीमातिथ्यायां विधानमनर्थकं स्यात्। यदि तत्रोपयुक्तमितरत्र विधीयेत। तदा विनियुक्तविनियोगरूपो विरोधः स्यात्। तस्मादातिथ्याबर्हिषो ये धर्मा अश्ववालत्वादयस्ते धर्मा उपसत्सूपसंक्रियन्त इत्यतिदेशपरं वाक्यमिति प्राप्ते ब्रूमः। बर्हिःशब्दस्य धर्मातिदेशत्वे लक्षणा प्रसज्येत। श्रुत्या तु बर्हिष आतिथ्योपसदग्नीषोमीयेष्वेकत्वं प्रतिभाति। अतः साधारण्यमत्र विधेयम्। आतिथ्यार्थं यद्बर्हिरुपादीयते तन्न केवलमातिथ्यार्थम्। किन्तूपसदर्थमग्नीषोमीयार्थं चोपादेयमिति विधिवाक्यस्यार्थः। तस्मादातिथ्योपसदग्नीषोमीयास्त्रयोऽप्यस्य बर्हिषः प्रयोजकाः।

इति माधवीये जैमिनीयन्यायमालाविस्तरे
चतुर्थस्याध्यायस्य द्वितीयः पादः।

तृतीयपादस्य प्रथमाधिकरणमारचयति ।

जुह्वाः पर्णमयीत्वेन न पापश्रुतिरञ्जनात् ।
वैरिदृग्वृञ्जनं वर्म प्रयाजैः पुरुषाय किम् ॥ १ ॥
क्रतवे वाग्रिमो भानात् फलस्य न हि साध्यता ।
विभाति क्रतवे तस्मादर्थवादः फलं भवेत् ॥ २ ॥

इदमाम्नायते । यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति । यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते । यत् प्रयाजानुयाजा इज्यन्ते वर्म वा एतद्यज्ञस्य क्रियते वर्म यजमानाय भ्रातृव्याभिभूत्या इति । तत्र यज्जुह्वाः प्रकृतिभूतं पर्णद्रव्यं यच्चाञ्जनेन चक्षुषः संस्कारो यच्च प्रयाजानुयाजरूपं वर्म तत् त्रितयं पुरुषार्थत्वेन विधीयते । कुतः । पापश्लोकश्रवणराहित्यादेः पुरुषसम्बन्धिफलस्य प्रतिभानादिति चेत् । मैवम् । फलं हि साध्यं भवति । न चात्र साध्यता प्रतिभासते । न शृणोति । वृङ्क्ते । वर्म क्रियत इति वर्त्तमानत्वनिर्देशात् । अतः क्रत्वर्था एते विधयः । तत्र पर्णमयीत्वस्यानारभ्याधीतस्यापि वाक्येन क्रतुसम्बन्धः । संस्कारकर्मणोस्तु प्रकरणेन । क्रत्वर्थानां तु निष्पादनव्यतिरेकेण फलाकाङ्क्षाया अभावाद् वर्त्तमाननिर्देशस्य विपरिणामं कृत्वापि फलं कल्पयितुं न शक्यम् । तस्मात् फलवत्त्वभ्रमहेतुः पापश्लोकश्रवणराहित्यादिरर्थवादः ।

द्वितीयाधिकरणमारचयति ।

मृण्मये प्रणयेत् कामो नित्येऽप्येतदुतेतरत् ।
आकाङ्क्षासन्निधिर्नास्ति तस्मान्नित्येऽपि मृण्मयम् ॥ १ ॥

कामार्थत्वादयोग्यत्वं सामान्यविहितेन च।

आकाङ्क्षाया निवृत्तत्वान्नित्यार्थमितरद्भवेत्॥ ४॥

अपः प्रणयतीति प्रकृत्य श्रूयते। मृण्मयेन प्रतिष्ठाकामस्य प्रणयेदिति। तत्रापां प्रणयनस्य नित्यप्रयोगेऽपि मृण्मयमेव साधनम्। कुतः। नित्येऽपि पात्रस्याकाङ्क्षितत्वात्। न च लोकसिद्धं किञ्चित् पात्रमुपादीयत इति वाच्यम्। श्रौते कर्मण्यत्यन्तमश्रुतात् श्रुतस्य सन्निहितत्वादिति प्राप्ते ब्रूमः। कामार्थं मृण्मयमाम्नातम्। तच्च सति कामे योग्यम्। न हि पात्रिकं कामं निमित्तीकृत्य प्रवृत्तं नित्यस्य योग्यं भवति। पात्राकाङ्क्षा तु सामान्यतो विहितेन निवर्त्तते। अपः प्रणयतीति हि पात्रविशेषमनुपन्यस्य विहितम्। तच्चान्यथानुपपन्नं सत्पात्रं किञ्चित् सामान्येन कल्पयति। तस्मान्नित्यप्रयोगे तत् काम्यं मृण्मयं नान्वेति। किन्त्वितरत् पात्रं यत् किञ्चिदुपादेयम्। चमसेनापः प्रणयेदिति नित्ये पात्रं विधीयत इति चेत्। तर्हि कृत्वाचिन्तास्तु।

तृतीयाधिकरणमारचयति।

दध्ना त्विन्द्रियकामस्य नित्येऽन्यदुत तद्दधि।

अन्यत् स्यात् पूर्ववन्मैवं संयोगस्य पृथक्कृतः॥ ५॥

अग्निहोत्रे श्रूयते। दध्नेन्द्रियकामस्य जुहुयादिति। तत्र दध्नः काम्यत्वान्नित्येऽग्निहोत्रे पूर्वन्यायेन न तद्दधि प्रयोक्तव्यम्। किन्त्वन्यदेव किञ्चिद्द्रव्यमिति चेत्। मैवम्। दध्ना जुहोतीत्यस्मिन् वाक्यान्तरे कामसंयोगमनुपन्यस्य नित्यहोमसंयोगेन दधिविधानात्। तस्मादेक-

स्यापि दध्नो वाक्यद्वयेन नित्यत्वं काम्यत्वं चाविरुद्धम्। एवमग्नीषोमीयपशौ खादिरे बध्नाति। खादिरं वीर्यकामस्य यूपं कुर्वीतेत्याद्युदाहरणीयम्। चतुर्थाधिकरणमारचयति।

पयोव्रतं ब्राह्मणस्य पुंसे तत्क्रतवेऽथवा।
पुंयोगादग्रिमो नैवं नैष्फल्यात् क्रतुशेषता॥ ६॥

ज्योतिष्टोमे दीक्षितस्यान्नभोजनाभावे व्रतमाम्नायते। पयोव्रतं ब्राह्मणस्य यवागू राजन्यस्यामिक्षा वैश्यस्येति। तत्र ब्राह्मणादि पुरुषयोगादेतद् व्रतं पुरुषार्थमिति चेत्। नैवम्। इन्द्रियवीर्य्यादिवत् फलस्यात्रानुक्तत्वात्। क्रतुशेषत्वं तु प्रकरणादवगम्यते। ब्राह्मणादिपुरुषा द्रव्यविशेषव्यवस्थायै निमित्तत्वेनोपन्यस्यन्ते।

पञ्चमाधिकरणमारचयति।

नैवास्ति विश्वजिद्याग फलमस्त्युत नाश्रुतेः।
भाव्यापेक्षाद् विधेः कल्प्यं फलं पुंसः प्रवृत्तये॥ ७॥

इदमाम्नायते। विश्वजिता यजेतेति। तत्र फलस्याश्रुतत्वान्नास्ति विश्वजिद्यागे फलमिति। नैवम्। फलस्य कल्पनीयत्वात् विश्वजिन्नाम्ना यागेन कुर्य्यादित्युक्ता भावना भाव्यमपेक्षते। किं कुर्य्यादित्याकाङ्क्षाया अनिवृत्तेः। अतो भाव्याकाङ्क्षापूरणाय किञ्चित् फलमवश्यमध्याहर्त्तव्यम्। अध्याहृते च तत्कामिनः पुरुषस्यात्र प्रवृत्त्या यागानुष्ठानं सिध्यति। अन्यथा निरधिकारित्वादननुष्ठाने विधिनिरर्थकः स्यात्। तस्मात् फलं कल्पनीयम्।

षष्ठाधिकरणमारचयति।

सर्वं फलमुतैकं स्यात् सर्वमस्त्वविशेषतः।

एकेन तन्निराकाङ्क्षमतोऽनेकं न कल्प्यते ॥ ८ ॥

तस्मिन् विश्वजिति पशुपुत्रवीर्य्येन्द्रियादिकं सर्वं फलत्वेन कल्पनीयम्। कुतः। एतदेवास्य फलमित्यत्र विशेषहेतोरभावादिति चेत्। मैवम्। लाघवस्यैव विशेषहेतुत्वात्।

सप्तमाधिकरणमारचयति।

एकं यत् किञ्चिदथवा नियतं न नियामकम्।
तस्माद्द्यः सर्वपुंसामिष्टत्वात् स्वर्ग एव तत् ॥ ९ ॥

विश्वजिति कल्प्यमानं यदेकं फलं तदिदमेवेति नियामकं नास्ति। तस्मादिच्छया केनचित् कस्मिंश्चित् फले कल्प्यमानेऽर्थात् सर्वफलत्वे गौरवमेव स्यादिति चेत्। मैवम्। स्वर्गस्य पश्वादिफलवद् दुःखमिश्रितत्वाभावान्निरतिशयसुखाच्च सर्वपुरुषाणामिष्टत्वात् स्वर्ग एव विश्वजितः फलम्।

अष्टमाधिकरणमारचयति।

स्वर्गाय वा प्रतिष्ठायै रात्रिसत्त्रमिहाग्रिमः।
पूर्ववत् स्यात् प्रतिष्ठात्र श्रुता तेनाश्रुताद् वरम् ॥ १० ॥

सत्त्रकाण्डे श्रूयते। प्रतितिष्ठन्ति ह वा एते य एता रात्रीरुपयन्तीति। ब्रह्मवर्चस्विनोऽन्नादा भवन्तीति च। द्वादशाहादूर्ध्वभाविनस्त्रयोदशरात्रचतुर्दशरात्रादयः सर्वे सत्त्रविशेषाः। त्रयोदशसंख्याका रात्रयो यस्मिन् सत्त्रविशेषे सोऽयं त्रयोदशरात्र इति समुदायप्राधान्येनैकवचनान्ततया प्रायेण निर्देशो भवति। क्वचित्तु समुदायिनां रात्रिविशेषाणां प्रत्येकं प्राधान्यमभ्युपेत्यैक एव सत्त्रविशेषो बहुवचनान्तेन रात्रिशब्देनाम्नायते। तद् यथा। त एता विंशतिरात्रीरुपय-

त्विति। तादृशे रात्रिसत्रे विश्वजिन्न्यायेन स्वर्गः फलत्वेन कल्पनीय इति प्राप्ते ब्रूमः। अस्य रात्रिसत्रविधेः स्तावके ऽर्थवादे प्रतिष्ठा श्रुता। सा चास्मिन् वाक्ये ऽत्यन्तमश्रुतात् स्वर्गात् प्रत्यासन्ना। तस्मात् प्रतिष्ठाकामो रात्रिसत्रं कुर्य्यादित्येवं प्रतिष्ठैव फलत्वेन कल्पनीया।

नवमाधिकरणमारचयति।

श्रुताश्रुतं श्रुतं वैकं सौर्य्यसत्रप्रवृत्तये।
आद्यो नैवं श्रुतेनैव फलाकाङ्क्षानिवर्त्तनात्॥ ११॥

सौर्य्यं चरुं निर्वपेत् ब्रह्मवर्चसकाम इत्यत्र ब्रह्मवर्च्चसं श्रुतं फलम्। स्वर्गोऽश्रुतं फलम्। तदुभयमप्यभ्युपेयम्। तथा सति स्वर्गस्य सर्वैरपेक्ष्यमाणत्वात् सर्वेषां तत्र प्रवृत्तिर्लभ्येतेति चेत्। नैवम्। श्रुतेन ब्रह्मवर्चसफलेनैव निराकाङ्क्षे विधिवाक्ये विश्वजिन्न्यायेन स्वर्गफलकल्पनाया असम्भवात्। तस्माच्छ्रुतमेव फलम्।

दशमाधिकरणमारचयति।

दर्शादिः सर्वकामेभ्योऽनुवादो वा फले विधिः।
अङ्गोपाङ्गादितः कामो विध्यभावादनूद्यते॥ १२॥
उत्पत्तिचोदनासिद्धे आश्रित्य विधिभावने।
फलसंयोगबोधेन भवेदेव फले विधिः॥ १३॥

इदमाम्नायते। एकस्मै वा अन्या इष्टयः कामायाह्रियन्ते सर्वेभ्यो दर्शपूर्णमासाविति। एकस्मै वा अन्ये यज्ञक्रतवः कामायाह्रियन्ते सर्वेभ्यो ज्योतिष्टोम इति। तत्र सर्वेभ्य इत्यनेन वाक्येन दर्शपूर्णमासयोर्न फले विधिः। विधायकस्य लिङ्गादेर्भावनावाचिन आख्यातस्य चाभा-

वात्। अनुवादस्तु भविष्यति। सर्वकामानां प्राप्तत्वात्। न च दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति विधानात् स्वर्ग एव प्राप्तः। न तु कामान्तरमिति वाच्यम्। अङ्गोपाङ्ग-कामानामपि प्राप्तत्वात्। सामिधेन्यो दर्शपूर्णमासयो-रङ्गम्। तत्र कामाः श्रूयन्ते। एकविंशतिमनुब्रूयात् प्रति-ष्ठाकामस्य। चतुर्विंशतिमनुब्रूयाद् ब्रह्मवर्चसकामस्येति। तथा सान्नाय्ययागस्य दोहनमङ्गम्। तत्साधनं वत्सा-पाकरणमुपाङ्गम्। तत्र पलाशशाखाहरणे काम आम्नातः। यं कामयेत पशुमान् स्यादिति। बहुपर्णां तस्मै बहुशाखा-माहरेत् पशुमन्तमेवैनं करोतीति। त एते सर्वकामा अनूद्यन्त इति प्राप्ते ब्रूमः। मा भूतामस्मिन् वाक्ये विधि-भावने। तथाप्युत्पत्तिवाक्यसिद्धे ते समाश्रित्य तादर्थ्य-वाचिना चतुर्थ्या फलसंयोगो बोध्यते। तस्मादेष फले विधिः।

एकादशाधिकरणमारचयति।

ज्योतिष्टोमश्च सर्वार्थः सर्वं सकृदनुष्ठिते।
दद्यात् पृथक् प्रयोगाद्वा सकृत्तस्याविशेषतः॥ १४॥
एकैकस्यानपेक्षस्य फलस्यैव हि साधनम्।
चोदितं तेन कामास्ते पर्य्यायेण भवन्त्यमी॥ १५॥

यथा दर्शपूर्णमासौ सर्वकामार्थौ। तथा ज्योतिष्टोमश्च सर्वकामार्थ इति पूर्वाधिकरणेनैव सिद्धम्। तत्रोभयत्र कामा नैमित्तिकाः। ज्योतिष्टोमादिस्वरूपं निमित्तम्। तच्च सर्वेषु कामेष्वविशिष्टम्। न हि निमित्तसाधारण्ये सति नैमित्तिकानां पर्य्यायो भवति। वह्निसामीप्ये सति दाह-

प्रकाशयोः पर्य्यायादर्शनात्। तस्मात् ज्योतिष्टोमे सकृदनुष्ठिते सत्येकं फलं यथा निष्पद्यते। तथा फलान्तराणामपि वारयितुमशक्यत्वाद् युगपत् सर्वफलसिद्धिरिति प्राप्ते ब्रूमः। न ज्योतिष्टोमं निमित्तीकृत्य कामा विधीयन्ते। कामानामननुष्ठेयत्वात्। किं तर्हि पुरुषस्य स्वतः प्राप्तान् कामानुद्दिश्य तत्साधनत्वेनैव ज्योतिष्टोमो विधीयते। यद्यपि सर्वेभ्य इति स्वर्गपश्वादिफलानामेकेनैव शब्देनोद्दिश्यमानत्वात् साहित्यं प्रतिभाति तथापि न तदस्ति। उद्देश्यगतत्वेन साहित्यस्याविवक्षितत्वात्। न च शब्दतः साहित्यनियमाभावेऽप्येककर्मफलत्वादर्थतः साहित्यमिति वाच्यम। स्वर्गपश्वादीनां परस्परनिरपेक्षाणामेव फलत्वात्। तस्मादेकैकस्य साधनत्वेन कर्म चोद्यते। अत एव सर्वेभ्य इति निर्देशोपपत्तिः। अन्यथा साहित्यनियमान्मिलितमिदमेकमेव फलं सम्पन्नमिति सर्वशब्दो नोपपद्यते। तस्माद् यदा यत् फलम् तदा तत्सिद्धये ज्योतिष्टोमः प्रयोक्तव्यः। एकमपि वृष्ट्यादिफलं यदा काम्यते। तदा कारीरीष्टिः पुनः पुनः प्रयुज्यते। किमु वक्तव्यम। फलभेदे प्रयोगभेद इति। तस्मात् प्रति फलं पृथक् प्रयोगः।

द्वादशाधिकरणमारचयति।

चित्रया पशवोऽमुष्मिन्नेव स्युर्नियता न वा।
आद्यः स्वर्गेण तुल्यत्वाद् देहस्योत्पादकत्वतः॥ १६॥
चित्रोत्पत्तौ तु नियमो न श्रुतो नापि कल्पनम्।
पुंप्रहृत्यादिनापेते प्रतिबन्धे भवेत फलम्॥ १७॥

काम्यकर्माण्येवं श्रूयन्ते। चित्रया यजेत पशुकामः।

ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकाम इति। तत्र यथा स्वर्गफलस्यामुष्मिकत्वं नियतम्। एवं पश्वादिफलस्यापि। यदि स्वर्गहेतुर्ज्योतिष्टोमो देहान्तरस्योत्पादकः। तर्हि चित्रादिरपि तथेति चेत्। मैवम्। वैषम्यात्। अस्मिन् देहे स्वर्गस्य भोक्तुमशक्यत्वादश्रुताप्यन्यदेहोत्पत्तिरर्थापत्त्या कल्प्यते। चित्रया लब्धदेहोऽवश्यमुत्पाद्यत इति नियमो न श्रुतः। नापि किञ्चित् तस्य कल्पकमस्ति। अनेनापि देहेन पश्वादिफलस्य भोक्तुं शक्यत्वात्। अस्मिन् देहे प्रतिग्रहादिदृष्टोपायमन्तरेण पश्वाद्यलाभाद् वैषं चित्रादिफलमामुष्मिकमेवेति चेत्। न। प्रतिग्रहादेः प्रतिबन्धनिवृत्तावपयुक्तत्वात्। तस्मादसति प्रतिबन्धे फलमैहिकम्। सति त्वामुष्मिकम्।

त्रयोदशाधिकरणमारचयति।

इष्ट्वा तु वाजपेयेन बृहस्पतिसवं यजेत्।
कालं वा बोधयेद् वाक्यमुताङ्गत्वस्य बोधकम्॥ १८॥
क्त्वाश्रुत्या भाति कालोऽत्र मैवमङ्गत्वबोधनम्।
श्रुतेर्मुख्यं प्रक्रिया च तथा सत्यनुगृह्यते॥ १९॥

इदमाम्नायते। वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत। अग्निं चित्वा सौत्रामण्या यजेतेति। तत्रेष्ट्वेति क्त्वाप्रत्ययो वाजपेयस्य पूर्वकालीनतां ब्रूते। तस्माद्वाक्यमिदं बृहस्पतिसवस्य वाजपेयोत्तरकालीनतां बोधयतीति प्राप्ते ब्रूमः। बृहस्पतिसवस्य वाजपेयाङ्गत्वविधानमेव क्त्वाश्रुतेर्मुख्योऽर्थः। समानकर्तृकयोः पूर्वकाल इति सूत्रेण क्रियाद्वयस्यैककर्तृकतायां तद्विधानात्। यद्यपि सूत्रे पूर्वकाल इत्युक्तं

तथापि तत्र नियतम्। मुखं व्यादाय स्वपितीत्यत्र कालेऽपि प्रयोगात्। वाजपेयप्रकरणमप्यङ्गत्वेऽनुगृह्यते। अन्यथा त्वप्रकृते बृहस्पतिसवे कालविधानात् प्रकरणं बाध्येत। अङ्गत्वे कर्मान्तरत्वेन प्रसिद्धबृहस्पतिसवत्वाभावात् तच्छब्दोऽनुपपन्न इति चेत्। न। मासाग्निहोत्रन्यायेन तद्धर्मातिदेशार्थत्वात्। तस्मात् वाक्यमिदमङ्गत्वबोधकम्। अग्निं चित्वेत्यत्राप्येवं योजनीयम्।

चतुर्दशाधिकरणमारचयति।

संस्थाप्य पौर्णमासीं तामनु वैमृध ईरितः।
दर्शाद्यङ्गमुतैकस्य द्वयोः स्यात् प्रक्रियावशात्॥ २०॥
उत्पत्तिवाक्यतः पूर्णमासयोगप्रभासनात्।
तस्यैवाङ्गं न दर्शस्य प्रक्रिया वाक्यबाधिता॥ २१॥

दर्शपूर्णमासप्रकरणे श्रूयते। संस्थाप्य पौर्णमासीं वैमृधमनु निर्वपतीति। तत्रेयं वैमृधेष्टिः प्रकरणबलात् प्रयाजादिवद्दर्शपूर्णमासयोरुभयोरप्यङ्गमिति चेत्। न। वाक्यस्य प्रबलत्वात्। न च संस्थाप्येति पौर्णमास्याः समाप्त्यभिधानात्तदङ्गत्वमयुक्तमिति वाच्यम्। दर्शसाधारणाङ्गसमाप्त्यभिप्रायेण तदुपपत्तेः। तस्मादुत्पत्तिवाक्यादेककर्तृकत्वावगमाच्च पूर्णमासस्यैवाङ्गम्।

पञ्चदशाधिकरणमारचयति।

किमाग्निमारुतादूर्ध्वमनुयाजैश्चरेदिति।
अङ्गं कालोऽथवाङ्गं स्यादतिपाराथ्र्यमन्यथा॥ २२॥
प्रागाग्निमारुतस्यास्य ज्ञाता सोमार्थता तथा।
अनुयाजाश्च पश्वर्थाः संयोगः कालसिद्धये॥ २३॥

ज्योतिष्टोमे श्रूयते। आग्निमारुतादूर्ध्वमनुयाजैश्चरन्तीति। आग्निमारुतं नाम किञ्चिच्छस्त्रम्। अनुयाजा देवं बर्हिरित्यादिभिः पाशुकहौत्रकाण्डपठितैरेकादशभिर्मन्त्रैः साध्या होमाः। तत्राग्निमारुतशस्त्रस्यानुयाजा अङ्गमित्येवमङ्गाङ्गिभावबोधनायायं संयोगः। यद्यनुयाजानामयं कालोपदेशः स्यात्। तदानीमाग्निमारुतोपन्यासस्य स्वार्थो न कश्चिदित्यत्यन्तपारार्थ्यं स्यात्। तस्माद् बृहस्पतिसववदैन्द्रधववच्चानुयाजा अङ्गमिति प्राप्ते ब्रूमः। इतरस्तोत्रशस्त्रवदाग्निमारुतशस्त्रस्य सोमाङ्गत्वं पूर्वमेवावगतम्। अग्नीषोमीय विकृतौ सवनीयपशावतिदेशतः प्राधानामेकादशानुयाजानामपि प्रयाजवत् पश्वङ्गत्वमवगतम्। ततः परस्परमङ्गाङ्गिभावासम्भवात् कालोपदेशार्थोऽयं संयोगः।

षोडशाधिकरणमारचयति।

कि दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन याजकः।
अङ्गाङ्गिभावः कालो वा ह्यपारार्थ्याय चाङ्गता ॥ २४ ॥
दर्शादिलक्षणे काले सोमयागो विधीयते।
स्वतन्त्रफलवत्त्वेन न युक्ताङ्गाङ्गिता तयोः ॥ २५ ॥

इदमाम्नायते। दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति। तत्रोभयोराग्निमारुतानुयाजवदन्याधीनत्वाभावाद्दर्शपूर्णमासाङ्कैः पारार्थ्यपरिहाराय सोमस्य दर्शपूर्णमासाङ्गत्वबोधकोऽयं संयोग इति चेत्। नैवम्। स्वतन्त्रफलवतः सोमस्याङ्गत्वाभावात्। फलवत् सन्निधावफलं तदङ्गं भवतीति न्यायात्। न चात्र बृहस्पतिसवन्यायेन

सोमधर्मकमफलं कर्मान्तरं विधीयत इति शक्यं वक्तुम्। सोमशब्दस्य बृहस्पतिसवशब्दवन्नामत्वाभावेन धर्मातिदेशकत्वाभावात्। खाप्रत्ययस्त्वसत्यप्यङ्गाङ्गिभावे कर्त्रैक्यमात्रेणोपपद्यते। तस्माद्दर्शपूर्णमासशब्दस्य पारार्थ्यमभ्युपेत्यापि तदुपलक्षित उत्तरकाले सोमविधिरयम्। एतदेवाभिप्रेत्य रथत्वरूपमस्याम्नायते। एष वै देवरथो यद्दर्शपूर्णमासौ यो दर्शपूर्णमासाविष्ट्वा सोमेन यजते रथस्पष्ट एवावसाने वरे देवानामवस्यतीति। अवसाने निश्चिते। वरे मार्गे। यथा रथेन क्षुण्णे मार्गे गन्तुः कण्टकपाषाणादिबाधराहित्येन सुखं भवति। तथा प्रथमं दर्शपूर्णमासाविष्टवत उत्तरकाले तद्विकृतिषु सोमाङ्गभूतदीक्षणीयाप्रायणीयादिषु धर्मानुष्ठानं सुकरं भवतीत्यर्थः। तस्मात् कालार्थः संयोगः।

सप्तदशाधिकरणमारचयति।

वैश्वानरेष्ट्या पूतत्वं पितुः पुत्रस्य वाग्रिमः।
कर्त्तुरेव फलं युक्तं कर्तृत्वं पितुरेव हि॥ २६॥
जाते यस्मिन्निष्टिमेतां निर्वपेत् तस्य पूतता।
तस्योपसितं पितुस्तेन पिता तत्र प्रवर्त्तते॥ २७॥

काम्येष्टिकाण्डे वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जात इति प्रकृत्य श्रूयते। यस्मिन् जात एतामिष्टिं निर्वपति स पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवतीति। तत्र पितुः प्रबुद्धस्य कर्तृत्वम्। न तु मुग्धस्य पुत्रस्य। ततोऽनुष्ठानफलयोर्वैयधिकरण्यपरिहाराय पितुरेव पूतत्वादिफलमिति चेत्। मैवम्। यस्मिन् जाते निर्वपति

स पूत इति वाक्येन फलस्य पुत्रसम्बन्धावगमात् । न चात्र निष्फलस्य पितुरप्रवृत्तिरिति वाच्यम् । पुत्रनिष्ठ-पूतत्वादेरीप्सितत्वेन स्वफलबुद्ध्या प्रवृत्तिसम्भवात् । तस्मात् पुत्रस्य पूतत्वादि ।

अष्टादशाधिकरणमारचयति ।

जन्मानन्तरमेवेष्टिर्जातकर्मणि वा कृते ।
निमित्तानन्तरं कार्य्या नैमित्तिकमतोऽग्रिमः ॥ २८ ॥
जातकर्मणि निर्वृत्ते स्तनप्राशनदर्शनात् ।
प्रागेवेष्टौ कुमारस्य विपत्तेरूर्ध्वमस्तु सा ॥ २९ ॥

पुत्रजन्मनो वैश्वानरेष्टिनिमित्तत्वान्नैमित्तिकस्य कालविलम्बायोगाज्जन्मानन्तरमेवेष्टिरिति चेत् । मैवम् । स्तनप्राशनं तावज्जातकर्मानन्तरं विहितम् । यदि जातकर्मणः प्रागेव वैश्वानरेष्टिर्निरूप्येत । तदा स्तनप्राशनस्यात्यन्तविलम्बात् पुत्रो विपद्येत । तथा सति पूतत्वादिकमिष्टिफलं कस्य स्यात् । तस्मान्न जन्मानन्तरं किन्तु जातकर्मण ऊर्ध्वं सेष्टिः ।

एकोनविंशाधिकरणमारचयति ।

जातकर्मानन्तरं स्यादाशौचापगतेऽथवा ।
निमित्तसन्निधेराद्यः कर्त्तृशुद्ध्यर्थमुत्तरः ॥ ३० ॥

यद्यपि जातकर्मानन्तरमेव तदनुष्ठाने निमित्तभूतं जन्म सन्निहितं भवति तथाप्यशुचिना पित्रानुष्ठीयमानमङ्गविकलं भवेत् । जातकर्मणि तु विपत्तिपरिहाराय तात्कालिकी शुद्धिः शास्त्रेणैव दर्शिता । ततो मुख्य-

देवता । एवमभिषेचनीयदशपेयादयः सोमयागाः श्रुताः । तथा वल्मीकवपायां होम इत्यादयो दर्विहोमाः श्रुताः । यथैत इष्टिपशुसोमदर्विहोमाश्चतुर्विधा यागरूपाः । एवमयागरूपा अपि द्यूतादयः श्रुताः । प्रष्ठौहीर्दीव्यति । अक्षैर्दीव्यति । राजन्यं जिनाति । शौनःशेपमाख्यापयत इत्यादयः । तत्र यागा यथा मुख्याः । तथा देवनादीनामपि मुख्यत्वं युक्तम् । प्रकरणपाठस्योभयत्र समानत्वादिति प्राप्ते ब्रूमः । राजा स्वाराज्यकामो राजसूयेन यजेतेत्याख्यातवाच्यायां भावनायां धातुबोध्यो यागः करणम् । राजसूयशब्दस्याप्रसिद्धार्थत्वाद्यागसामानाधिकरण्येन तन्नामधेयं भवति । तथा राजसूयेन यागेन स्वाराज्यं भावयेदिति वाक्यार्थपर्य्यवसानाद्नुमत्यादीनां यागानामिव फलवत्त्वादङ्गित्वम् । तत्सन्निधौ श्रूयमाणमफलं देवनादिकं यागाङ्गम् ।

द्वितीयाधिकरणमारचयति ।

एकस्यैवाभिषेच्यस्य तदङ्गं निखिलस्य वा ।

राजसूयस्यापकर्षादाद्यः प्रक्रिययोत्तरः ॥ २ ॥

यदेतद्देवनादिकमङ्गमित्युक्तं तदेतदभिषेचनीयसोमयागस्यैकस्यैवाङ्गम् । कुतः । अपकर्षात् । यद्यप्यभिषेचनीयविधेरूर्ध्वं तत्सन्निधौ देवनादय आम्नातास्तथाप्यभिषेचनीयमध्ये तेऽपकृष्यन्ते । माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यत इति वाक्येन राज्ञो यजमानस्याभिषेको माध्यन्दिनसवने स्तोत्रकालेऽपकृष्यते । तस्मिन्नपकृष्टे सति ततः पूर्वमाम्नातानां देवनादीनामर्थसिद्धोऽपकर्षः । ततो

माहेन्द्रस्तोत्रादिवदभिषेचनीयप्रयोगान्तःपातित्वाद् देवनादिकमभिषेचनीयस्यैवाङ्गमिति प्राप्ते ब्रूमः। किं तदङ्गत्वे सन्निधिः प्रमाणं किंवा प्रयोगपरिकल्पितमवान्तरप्रकरणम्। उभयथापि प्रत्यक्षस्य महाप्रकरणस्य प्रबलत्वाद्देवनादिकं राजसूयस्याङ्गम्। राजसूयशब्दश्चानुमत्यादीन् सर्वान् यागानभिधत्ते। तस्मात् सर्वेषामेतदङ्गम्। अनुष्ठानं तु राजसूयमध्ये क्वचिदपेक्षितमिति वचनबलादभिषेचनीयगतमाहेन्द्रस्तोत्रकाले तदनुष्ठीयते।

तृतीयाधिकरणमारचयति।

किं पुरस्तादुपसदां सौम्येन प्रचरेदिति।

अङ्गाङ्गिभावः कालो वा वाक्यादाद्यः प्रतीयते ॥ ४ ॥

पुरस्तादिति कालोऽत्र भाति कालविधिस्ततः।

नाङ्गं कस्यापि सौम्यादि प्रधानमितरेष्टिवत् ॥ ५ ॥

राजसूये संसृच्छब्दवाच्यान्याग्नेयाष्टकपालादीनि दश हवींष्याम्नातानि। तेष्वष्टमनवमदशमानि सौम्यत्वाष्ट्रवैष्णवानि। तद्विषयमिदं वाक्यमाम्नायते। पुरस्तादुपसदां सौम्येन प्रचरन्त्यन्तरा त्वाष्ट्रेणोपरिष्टाद् वैष्णवेनेति। योऽयं राजसूये सोमयागस्तस्मिन्नतिदिष्टानामुपसदामादिमध्यावसानेषु सौम्यादीनां त्रयाणामनुष्ठानमनेन वाक्येन चोद्यते। ततो वाक्यात् सौम्यादीन्युपसदामङ्गानीति प्राप्ते ब्रूमः। उपसदामिति षष्ठ्या कालवाचिना पुरस्तादिति शब्देनान्वयात् सौम्यादीनां कालविधयमस्रन्यपरमिदं वाक्यम्। न त्वङ्गाङ्गिभावपरम्। तता न कस्याप्यङ्गं सौम्यादिकम्। किन्त्वनुमत्यादिवत् प्रधानम्।

चतुर्थाधिकरणमारचयति।

मुख्यतामनहोमस्य साङ्ग्रहण्यङ्गताथवा।

मुख्यत्वमविरुद्धत्वात् फलाय स्यात् तदङ्गता॥ ६॥

काम्येष्टिकाण्डे श्रूयते। वैश्वदेवीं साङ्ग्रहणीं निर्वपेद् ग्रामकाम इति। तत्रामनहोमाः श्रुताः। आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोतीति। त एत आमनहोमाः साङ्ग्रहण्येष्ट्या सह समप्रधानभूताः। न हि तेषां मुख्यत्वे कश्चिद् विरोधोऽस्ति। दृष्टं ह्याग्नेयादिष्वनुमत्यादिषु च बहूनां मुख्यत्वमिति चेत्। मैवम्। दर्शपूर्णमासाभ्यां स्वर्गकाम इति वाक्येन स्वाराज्यकामो राजसूयेनेति वाक्येन च यथा बहूनां फलसम्बन्धावगमः। तथामनहोमानाम्। फलसम्बन्धाभावे सति प्राधान्यायोगात्। साङ्ग्रहणीं निर्वपेद् ग्रामकाम इति वाक्यं तु साङ्ग्रहण्या एव फलसम्बन्धं बोधयति। न त्वामनहोमानाम्। तस्मात् फलवत्याः साङ्ग्रहण्याः सन्निधावाम्नाता अफला आमनहोमास्तदङ्गम्।

पञ्चमाधिकरणमारचयति।

नित्यनैमित्तिकत्वे वा नित्यतैव दधिग्रहे।

देवान्तरायाजन्येष्टाच्च स्यादस्योभयरूपता॥ ७॥

निमित्तत्वख्यातिनोऽत्र यदिग्रब्दादयो न हि।

अतोऽस्य न निमित्तत्वं केवला नित्यतोचिता॥ ८॥

ज्योतिष्टोमे श्रूयते। यां वै काञ्चिदध्वर्युर्यजमानस्य देवतामन्तरितस्तस्या आवृश्चते यत्प्राजापत्यं दधिग्रहं गृह्णाति शमयत्येवैनामिति। सोऽयं दधिग्रहो नित्यो

नैमित्तिकश्चेत्युभयात्मकः। कुतः। आकारद्वयसाधक-सद्भावात्। देवतान्तरायेण तद्देवताक्षोभमुपन्यस्य ग्रहेण शमनाभिधानाद्देवतान्तरायो निमित्तम्। ग्रहो नैमित्तिक इति प्रतिभाति। तथा ज्येष्ठत्वमाम्नातम्। ज्येष्ठो वा एष ग्रहाणामिति। ज्येष्ठत्वं नाम प्रशस्तत्वम्। तच्च नित्यत्वे सत्युपपद्यते। नैमित्तिकस्य प्राचिकत्वादप्रशस्तत्वम्। तस्माद्धेतुद्वयबलादुभयात्मकत्वमिति चेत्। मैवम्। देवतान्तरायस्य निमित्तत्वाभावात्। निमित्तत्वे यदिशब्द उपलभ्येत। सप्तमी वा श्रूयेत। यच्छब्दो वान्तरायकर्त्रोरध्वर्युयजमानयोः सामानाधिकरण्येन प्रयुज्येत। यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्। भिन्ने जुहोति। यो वै संवत्सरमुख्यमभृत्वाग्निं चिनुत इत्यादिषु संप्रतिपन्ननिमित्तेषु तद्दर्शनात्। तस्मात् केवलनित्यत्वमेव दधिग्रहस्योचितम्। देवताक्षोभतत्समाधानोपन्यासो विधेयदधिग्रहस्तुतयेऽर्थवादः।

षष्ठाधिकरणमारचयति।

नित्यो नैमित्तिको वा स्याद् यागो वैश्वानरश्चितौ।
नित्यः पुरेव यच्छब्दादविरोधाच्च पश्चिमः॥ ८॥

अग्निचयने श्रूयते। यो वै संवत्सरमुख्यमभृत्वाग्निं चिनुते यथा सामिगर्भो विपद्यते तादृगेव तदार्त्तिमार्च्छेद्वैश्वानरं द्वादशकपालं पुरस्तान्निर्वपेदिति। उखा पिठरः। तामुखां युञ्जानः प्रथमं मन इत्यादिप्रपाठकाम्नातैर्मन्त्रैः सम्पाद्य तस्यामुखायामग्निं निधाय षडुद्यामे द्वादशोद्यामे वा शिक्ये तामुखामवस्थाप्य तच्छिक्यं स्वकण्ठे बद्ध्वा

तमुख्यमग्निं संवत्सरं भृत्वा पश्चादिष्टकाभिरग्निश्चेतव्यः। अभरणे त्वपूर्णगर्भपातवद्विनाशः स्यात्। ततो वैश्वानरेष्टिं चयनात् प्रागेव कुर्य्यादित्यर्थः। अतोऽयमन्तरायवाक्य-वद्भरणवाक्यस्यार्थवादत्वान्नित्या वैश्वानरेष्टिरिति चेत्। नैवम्। यः पुमानभृत्वाग्निं चिनुते स निर्वपेदिति कर्त्तृ-समानाधिकृतयच्छब्दबलादभरणेष्ट्योर्निमित्तनैमित्तिकभावा-वभासात्। किञ्च। दधिग्रहस्य नित्यस्य पाक्षिकत्वरूपं नैमित्तिकत्वं विरुद्धम्। इह तु नित्यत्वे प्रमाणाभावादेक-मेव नैमित्तिकत्वमित्यविरोधः।

सप्तमाधिकरणमारचयति।

नित्या षष्ठी चितिर्नो वा पञ्चापेक्षत्वतोऽग्रिमः।
अप्रतिष्ठाप्रतिष्ठानिमित्तीकृतितोऽन्तिमः ॥ १० ॥

अग्नौ श्रूयते। संवत्सरो वा एनं प्रतिष्ठायै नुदते। योऽग्निं चित्वा न प्रतितिष्ठति पञ्च पूर्वाश्चितयो भवन्त्यथ षष्ठीं चितिं चिनुत इति। लाङ्गलेन कृष्टे व्याममात्रे भूप्रदेशे नानाविधाभिरिष्टकाभिः पक्ष्याकारेण स्थानं निष्पा-द्यते। सेयं चितिः। तादृश्यः पञ्च चितयः पूर्वाः क्रियन्ते। ततः षष्ठी चितिः। तत्र षण्णां पूरणी षष्ठीति व्युत्पत्तौ पूर्वाः पञ्च चितीरपेक्षते। अन्यथा षट्संख्यापूरकत्वासम्भ-वात्। तस्मादेकप्रयोगनियमादितरचितिवन्नित्येति चेत्। नैवम्। अग्निं चित्वेति पूर्वाभिरेव पञ्चभिश्चितिभिर्नित्य-स्याग्निचयनस्य समाप्तौ सत्यां पश्चाद्योऽत्र न प्रतितिष्ठत्यसौ षष्ठीं चिनुत इति कर्त्तृसमानाधिकृतेन यच्छब्देनाप्रतिष्ठां निमित्तीकृत्य विधानात् षष्ठी नैमित्तिकी। ततः पञ्च-

चितिको नित्योऽग्निः। नैमित्तिकस्त्वेकचितिक इति न प्रयोगैक्यम्। पूरणप्रत्ययस्त्वभिधानापेक्षयोपपद्यते। पूर्वाः पञ्च चितयोऽभिहिताः। अथाभिधास्यमानां षष्ठीं चितिं चिनुत इति वचनव्यक्तिः।

अष्टमाधिकरणमारचयति।

क्रत्वङ्गं स्यान्न वा पिण्डपितृयज्ञः क्रतौ हि सः।
अमावास्योक्तितो मैवं तत्कालोक्तिः पुमर्थता॥ ११॥

एवमाम्नायते। अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्तीति। तत्रामावास्याशब्दवाच्ये कर्मणि विधीयमानत्वादयं पिण्डपितृयज्ञः क्रत्वङ्गमिति चेत्। मैवम्। अमावास्याशब्दस्य कालवाचित्वात्। कर्मणि त्वयं शब्दो लाक्षणिकः। न च वाक्येन क्रत्वङ्गत्वाभावेऽपि प्रकरणेन तद्भवेदिति वाच्यम्। तस्यानारभ्याधीतत्वात्। तस्मादयं पुरुषार्थः।

नवमाधिकरणमारचयति।

रज्जुर्द्वितीया पश्वर्था यूपार्था वान्वयात् पशौ।
पश्वर्था त्रिवृता यूपं परिवीयेति यूपगा॥ १२॥

ज्योतिष्टोमे श्रूयते। आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोतीति। तत्र सवनीयपशोरग्नीषोमीयविकृतित्वाच्चोदकप्राप्तं यूपपरिव्याणं कालोपलक्षणार्थमनूद्य परिव्याणोत्तरकाले त्रिवृद्रशनोपलक्षितपशोरुपाकरणं विधीयते। ततो रशनायाः पश्वन्वयात् पशुबन्धनेन पशोरितस्ततोऽपक्रमणनिवारकदृष्टार्थलाभाच्च पश्वर्था रशनेति चेत्। मैवम्। त्रिवृतेति तृतीयया

यूपमिति द्वितीयया शेषशेषिभावावगमादव्यवहितान्वय-लाभाच्च रशना यूपार्था। कालश्चाश्विनं ग्रहं ग्रहीत्वेत्य-नेनैवोपलक्षितः। पशुनपक्रमणवद् यूपदार्ढ्यमपि दृष्टमेव प्रयोजनम्। न च परिव्याणेन दार्ढ्यमतिदेशादेव सिद्धमिति वाच्यम्। तस्मिन् सति पुनर्विधानादेव द्वितीयया रशनया परिव्याणान्तराङ्गीकारात्। तस्मादियं द्वितीया रशना यूपार्था।

दशमाधिकरणमारचयति।

स्वरुर्यूपे पशौ वाङ्गं यूपस्येत्युक्तितोऽग्रिमः।
स्वरुणा पशुमञ्ज्यादित्युक्तेः पश्वङ्गता स्फुटम् ॥ १३ ॥

अग्नीषोमीयपशौ श्रूयते। यूपस्य स्वरुं करोति। स्वरुणा पशुमनक्तीति। तत्र स्वरोर्यूपसम्बन्धाभिधानाद् यूपाङ्गत्वमिति चेत्। मैवम। स्वरुणा पशुमिति तृतीयया द्वितीयया चाङ्गाङ्गिभावावगतौ सम्बन्धसामान्यवाचिन्याः षष्ठ्या यूपाङ्गच्छेदनजन्यत्वाभिप्रायेण नेतुं शक्यत्वात्। तस्मात् स्वरुः पश्वङ्गम्।

एकादशाधिकरणमारचयति।

आघारादेश्च मुख्यत्वं न वाग्नेयादिवत् तु तत्।
प्रधानाख्या नामतः सिद्धाः शेषा अस्येऽङ्गसंस्तुतिः ॥ १४ ॥

दर्शपूर्णमासयोराघाराज्यभागप्रयाजानुयाजादयः काल-संयोगमन्तरेणाम्नाताः। आग्नेयादयः षड्यागाः कालसं-योगेन चोदिताः। तत्राग्नेयादीनां यथा प्राधान्यमङ्गी-कृतम्। तथैवाघारादीनामप्यङ्गीकर्त्तव्यम्। यथा राज-सूये परस्परविलक्षणानामिष्टिपशुसोमानां बहूनां सम-

प्राधान्यम् । तद्वत् । एकप्रकरणपाठस्योभयत्रापि समानः । तस्मादाघारादीनामाग्नेयादीनां च समप्राधान्यमिति प्राप्ते ब्रूमः । राजा स्वाराज्यकामो राजसूयेन यजेतेत्यत्र राजसूयशब्दो राजसम्बन्धात् प्रवर्त्तमानो राजकर्तृकाणामेकप्रकरणपठितानां सर्वेषां यागानां नामधेयं भवति । दर्शपूर्णमासशब्दौ तु कालवाचिनौ सन्तौ कालसंयोगेन विहितानामाग्नेयादीनां षण्णां यागानां नामधेयतां प्रतिपद्येते । ततो दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति वाक्येन तन्नामधेयवत्त्वादाग्नेयादयः षडेव यागाः फलसम्बन्धित्वेन प्रतीयमाना मुख्याः । अन्ये त्वाज्यभागाघारादयस्तन्नामरहिता निष्फला आग्नेयादीनां शेषाः । एवं सत्यङ्गत्वेन स्तुतिरुपपद्यते । चक्षुषी वा एते यज्ञस्य यदाज्यभागावित्याज्यभागौ यज्ञशरीरस्याङ्गिनोऽङ्गत्वेन स्तूयेते । यत् प्रयाजानुयाजा इज्यन्ते वर्म वा एतद्यज्ञाय क्रियत इति यज्ञशरीरोपकारकत्वमन्देन प्रयाजानुयाजाः स्तूयन्ते । एवमाघारादिष्वप्युदाहार्यम् । एतच्च सति साहश्ये सम्भवति । तस्मादाघारादीनां नास्ति मुख्यत्वम् ।

द्वादशाधिकरणमारचयति ।

मुख्या न वा दीक्षणीया मुख्या स्यात् सोमसाम्यतः ।
ज्योतींषि यस्य स्तोमाः स्युरिति सोमैकमुख्यता ॥१५॥

ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यस्य प्रकरणे ऐन्द्रवायवग्रहादयः सोमयागा दीक्षणीयादीष्टयोऽग्नीषोमीयादिपशवश्चाम्नाताः । तत्राग्नेयादिपक्षपातिदर्शपूर्णमासनामवज्ज्योतिष्टोमनाम्नः सोमपक्षपातित्वाभावेन दीक्ष-

सूयनामवत् प्रकृतसर्वयागसाधारणत्वात् सोमसमाना: दीक्षणीयादीनामप्यस्ति मुख्यत्वमिति चेत्। मैवम्। सो: यागपक्षपाते हेतुसद्भावात्। ज्योतींषि स्तोमा यस्य यज्ञ: सोऽयं ज्योतिष्टोम इति हि तद्व्युत्पत्ति:। अत ए ब्राह्मणम्। त्रिवृत् पञ्चदश: सप्तदश एकविंश:। एतानि वाव तानि ज्योतींषि य एतस्य स्तोमा इति। स्तोमान ज्योतिष्ट्वं यज्ञप्रकाशकत्वम्। न चेष्टय: पशवो वा त्रिवृ दादिस्तोमयुक्ता: प्रतिभासन्ते। तस्माज्ज्योतिष्टोमनाम्न सोमयागानामेव फलसम्बन्धावगमादफला इष्टिपशवो न मुख्या इति सोमयागानामेव प्राधान्यम्।

इति माधवीये जैमिनीयन्यायमालाविस्तरे चतुर्थ- स्याध्यायस्य चतुर्थ: पाद:। समाप्तश्च चतुर्थोऽध्याय:।

---

# पञ्चमोऽध्यायः।



द्वितीयादित्रये प्रोक्तं भेदशेषप्रयुक्तिभिः।

अनुष्ठेयमनुष्ठानक्रमः पञ्चम ईर्य्यते ॥

अनेन चतुर्थपञ्चमयोरध्याययोः पौर्वापर्य्यं निरूपितम्। द्वितीयाध्याये कर्मभेदनिरूपणात् पृथगनुष्ठेयत्वमवगतम्। तृतीयाध्याये शेषशेषित्वनिरूपणान्निवेशनः सङ्गमन इति मन्त्रेण वज्रोरुपस्थानमनुष्ठेयम्। न त्विन्द्रोपस्थानमित्याद्यनुष्ठेयव्यवस्थावगता। चतुर्थाध्याये प्रयुक्तिनिरूपणादनुष्ठेयमेव निर्णीयते। पलाशशाखाच्छेदनस्य वत्सापाकरणमेव प्रयोजकम्। न तु प्रस्तरेण सह प्रहृतिः प्रयोजिका। तथा सति पौर्णमास्यां वत्सापाकरणाभावे सत्यप्रयोजकप्रहृत्यर्थं शाखाच्छेदनं न कर्त्तव्यमिति। एवं त्रिभिरध्यायैरनुष्ठेयस्वरूपे निश्चिते सत्यनुष्ठानक्रमस्याकाङ्क्षितत्वात् पञ्चमाध्याये सोऽभिधीयते।

पञ्चमाध्यायस्य प्रथमपादे प्रथमाधिकरणे प्रथमवर्णकमारचयति।

पदार्थानां क्रमो नैव नियतोऽथ नियम्यते।

अमानत्वादनियतिर्नियतिर्वेदमानतः ॥ १ ॥

य एतेऽनुष्ठेयाः पदार्था गृहपतिब्रह्मोद्गातृहोतृदीक्षादयस्तेषां पदार्थानां नास्ति क्रमनिर्णयः। क्रमबोध-

क्रमस्य प्रमाणस्याभावादिति चेत्। मैवम्। पदार्थेषु तदनुष्ठाने च यथा वेदः प्रमाणम्। तथैव क्रमेऽपि वेदः प्रमाणम्। तस्मात् क्रमस्य नियतत्वात् क्रमनिरूपकः पञ्चमाध्याय आरम्भणीयः।

द्वितीयवर्णकमारचयति।

न विधेयो विधेयो वा क्रमो नैवाक्रियात्वतः।

क्रियाविशेषणत्वेन द्रव्यवद् युज्यते विधिः॥ २॥

यद्यपि क्रमस्य क्रियात्वाभावात् स्वरूपेण न विधियोग्यता तथापि यथा दध्ना जुहोतीत्यादावक्रियारूपं दधिद्रव्यं क्रियाविशेषणं सद् विधीयते। दधिसाधनकं होमं कुर्य्यादिति। एवमनेन क्रमेण कर्तव्यमिति क्रियाविशेषणतया क्रमो विधीयताम्।

तृतीयवर्णकमारचयति।

दीक्षयित्वा गृहपतिं ब्रह्माणं दीक्षयेदिति।

क्रमः पाठाद् विधेयो वा पाठाद् दीक्षाविधिः श्रुतेः॥३॥

द्वादशाहस्य सत्त्रत्वात् सर्वेषां याजमान्यतः।

चोदकेनैव दीक्षायाः प्राप्तेः क्रमविधिर्मतः॥ ४॥

द्वादशाहे श्रूयते। अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति तत उद्गातारं ततो होतारमिति। तत्र गृहपत्यादिदीक्षाणामनुक्रमः पाठादवगम्यते। विधेयत्वं तु गृहपत्यादिदीक्षाणामेव। कुतः। दीक्षयेदिति श्रुत्या तद्विध्यवगमात्। न हि श्रौतस्य विधेयस्य सम्भवे सति वाक्यार्थः क्रमो विधातुमुचितः। तस्मान्न विधेय इति प्राप्ते ब्रूमः। द्वादशाहे सत्त्रे ये ऋत्विजस्ते यजमाना इति

ब्रह्मादीनां सर्वेषामृत्विजां यजमानत्वे सति चोदकप्राप्ता दीक्षा न विधातव्या। ततो दीक्षामनूद्याख्यातेन क्रमो विधीयते। यद्यप्यत्र क्रमस्य वाचकः शब्दो नास्ति तथापि वाक्येन प्रतीयते। स च प्रतीयमानः क्रमो मानान्तरेण कर्त्तव्यतया प्राप्त्यभावादिह विधीयते। नन्वेकस्य कर्त्तुर्युगपदनेकपदार्थानुष्ठानान्यथानुपपत्त्या क्रमस्य कर्त्तव्यतापि प्राप्तेति चेत्। न। विशेषस्याप्राप्तत्वाद् व्युत्क्रमेणाप्यनुष्ठातुं शक्यत्वात्। तस्माद् वाक्यावगत क्रमविशेषं नियन्तुमयं विधिः।

द्वितीयाधिकरणमारचयति।

अग्निहोत्रं जुहोतीति यवागूं पचतीति च।

क्रमः पाठादर्थतो वा पाठात् सर्वत्र दर्शनात् ॥ ५ ॥

होमद्रव्यसमुत्पत्त्यै पूर्वं पाकोऽवगम्यते।

यवाग्वेति श्रुता होमद्रव्यतातोऽर्थतः क्रमः ॥ ६ ॥

ग्रहपत्यादिदीक्षासु पाठप्राप्तस्यैव क्रमस्यादृतत्वादिहापि होमपाकयोः पाठात् प्राप्तः क्रम आदरणीय इति चेत। मैवम्। द्रव्यमन्तरेण होमासम्भवाद् द्रव्यनिष्पत्त्यै पाकस्यैव प्राथमिकत्वावश्यम्भावात्। होमद्रव्यत्वं च यवाग्वाग्निहोत्रं जुहोतीति तृतीययावगम्यते। तस्मात् पाठक्रमं बाधित्वार्थतः क्रमोऽत्राभ्युपगन्तव्यः।

तृतीयाधिकरणमारचयति।

स्याद् वसन्तादिमन्त्राणां क्रमो नो वान्यवद् भवेत्।

शाखान्तरे व्यत्ययेन न क्रमो नियतोऽत्र हि ॥ ७ ॥

दर्शपूर्णमासयोर्याजमाने काण्डे प्रयाजानुयाजानु-

मन्त्रणमन्त्रा आम्नाताः। वसन्तमृतूनां प्रीणामि। ग्रीष्म-मृतूनां प्रीणामीत्यादयः। तेषां नियतः क्रमोऽभ्युपगन्तव्यः। कुतः। अन्येष्वाग्नेयोपांशुयाजाद्यनुमन्त्रणमन्त्रेषु नियत-क्रमदर्शनेनात्रापि क्रमनियमस्य बुद्धिस्थत्वादिति चेत्। मैवम्। अत्र नियामकाभावात् तावदत्र पाठो नियामकः। वसन्तग्रीष्मवर्षाशरद्धेमन्तमन्त्राणामनेन क्रमेण तैत्तिरीयशाखायां पठितानां शाखान्तरे व्यत्ययेन पाठदर्शनात्। नाप्यत्र यवागूपाकवदर्थो नियामकः। वसन्त-मन्त्रे समिद्यागैकविषयस्य कस्यचित् प्रयाजस्याभु-मन्त्रणेऽप्यनुपपत्त्यभावात्। नाप्यत्र लिङ्गं नियामकम्। वसन्तमन्त्रे समिद्यागैकविषयस्य विशेषसामर्थ्यस्यादर्शनात्। तस्मादत्र नास्ति नियतः क्रमः।

चतुर्थाधिकरणमारचयति।

प्रयाजेषु क्रमो नास्ति विद्यते वा न विद्यते।
श्रुत्यर्थाभावतो मैवं क्रमः पाठान्नियम्यताम्॥ ८॥

समिधो यजति। तनूनपातं यजतीत्यादिषु प्रयाजेषु नियतः क्रमो नास्ति। कुतः। क्रमप्रापकप्रमाणाभावात्। यथा गृहपत्यादिदीक्षानुवादेनाख्यातश्रुत्या क्रमो विव-क्षितः। तथात्र क्रमविधायिका श्रुतिर्नास्ति। यजती-त्याख्यातेन समिद्यागादिपदार्थानामन्यतोऽप्राप्तानां विधा-नात्। यथा च दीक्षयित्वेति क्त्वाश्रुतिः। तत उद्गातारमिति पञ्चमी श्रुतिर्वा। तादृश्यपि नात्र श्रुतिरुपलभ्यते। न च पाकहोमयोरिवार्थतः क्रमो वक्तुं शक्यः। समिद्यागम-न्तरेणापि तनूनपाद्यागस्य कर्तुं शक्यत्वात्। तस्माना-

स्यत्र क्रमनियम इति चेत्। मैवम्। वाक्यपाठेन प्रतीतस्य क्रमस्य बाधाभावेनाभ्युपेयत्वात्। तस्मादस्ति क्रमनियमः।

पञ्चमाधिकरणमारचयति।

उपाकृतानां किं सप्तदशानां यूपबन्धने।

क्रमो नास्त्यस्ति वा नास्ति नियामकविवर्जनात्॥ ९॥

आद्यसंस्कृत्यनुष्ठानं यत्क्रमेण स एव हि।

क्रमोऽन्यत्र प्रवृत्तिस्तु क्रमस्यात्र नियामिका॥ १०॥

वाजपेये सप्तदश प्राजापत्यान् पशूनालभत इति विहितानां पशूनामुपाकरणनियोजनादयः संस्काराः कर्त्तव्याः। तत्रेदृग्गे पशावुपक्रम ईदृग्गे च समाप्तिरिति नियमकारिणः शास्त्रस्याभावादैच्छिकेन क्रमेणोपाकरणरूपः प्रथमः संस्कारोऽनुष्ठितः। उपाकृतानां यूपे नियोजनं संस्कारान्तरं कर्त्तव्यम्। तदानीमीदृशः पशुः प्रथमं नियोक्तव्य इति क्रमनियमकारिणां श्रुत्यर्थपाठानामभावान्नास्ति क्रम इति चेत्। मैवम। उपाकरणे यः क्रमः स्वीकृतस्तस्यैव नियोजनादिसंस्कारेषु स्वीकर्त्तव्यत्वात्। श्रुत्यर्थपाठा इव प्रथमप्रवृत्तिरपि क्रमं नियन्तुमर्हति। प्रवृत्त्या बुद्धिस्थस्य क्रमस्य त्यागे कारणाभावात्। प्रावृत्तिकक्रमस्वीकारे प्रथमपशावुपाकरणनियोजनयोः प्रथमद्वितीयसंस्कारयोर्मध्ये पश्वन्तरेष्वनुष्ठितैः षोडशभिरेव पदार्थैर्व्यवधानं भवति। तच्च सप्तदशेति विधिबलादभ्यनुज्ञातम्। प्रावृत्तिकं क्रमं परित्यज्य पश्वन्तराणां पूर्वं नियोजन कृत्वा पश्चात् प्रथमपशोर्यदि नियोजनं क्रियेत। तदा द्वात्रिंशत्पदार्थैर्व्यवधानं स्यात्। तत् तु नाभ्यनुज्ञातम्। तस्मात् प्रवृत्त्या क्रमो नियम्यते।

षष्ठाधिकरणमारचयति ।

प्राथम्यमग्नीषोमीये साद्यस्क्राख्यक्रतावुत ।
सवनीयेऽग्रिमो यस्मात् प्रकृतौ तदपेक्षितम् ॥ ११ ॥
आश्विनग्रहसामीप्यं सवनीयपशोः स्थितिः ।
नियमे तत्क्रमे स्थानाच्छिष्टयोः प्राकृतो नयः ॥ १२ ॥

साद्यस्क्रनामकः कश्चित् सोमयागः । तत्र श्रूयते । सह पशूनालभत इति । प्रकृतावग्नीषोमीयपशुरौपवसथ्ये पूर्वेद्युरालभ्यते । सवनीयपशुः सुत्यादिने प्रातःसवन आश्विनग्रहादूर्ध्वमालभ्यते । अनुबन्ध्योऽवभृथादूर्ध्वमालभ्यते । इह तु त्रयोऽपि पशवः सहालब्धव्याः । सोऽयं सहालम्भः सुत्यादिन आश्विनग्रहादूर्ध्वं सवनीयस्थाने भवतीत्येतदवश्यमभ्युपेतव्यम् । तथा सति प्रधानसोमप्रत्यासत्तिलाभात्तेषु त्रिषु पशुष्वग्नीषोमीयस्य प्रथममुपाकरणम् । कुतः । प्रकृतौ तत्प्राथम्यस्यापेक्षितत्वादिति चेत् । मैवम् । सवनीयो हि स्वस्थान एव वर्त्तते । आश्विनग्रहसामीप्यस्य सवनीयस्थानत्वात् । आश्विने गृहीते सति सवनीय एव बुद्धिस्थो भवति । प्रकृतौ तदानन्तर्यस्य क्लृप्तत्वात् । ततः सवनीयस्य प्राथम्ये स्थानान्निश्चिते सति स्थानभ्रष्टयोरग्नीषोमीयानुबन्ध्ययोः प्रकृताविव पूर्वोत्तरभावो द्रष्टव्यः ।

सप्तमाधिकरणमारचयति ।

स्त्रीपुंसदेवकौ सारस्वतौ तद्भंगः क्रमः ।
नास्त्यस्ति वात्र नास्त्येष तन्नियामकवर्जनात् ॥ १३ ॥
याज्यानुवाक्यापाठेन स्त्रीप्राथम्यं हि मुख्ययोः ।

मुख्यार्थत्वेन धर्माणां स्यान्मुख्यक्रमतः क्रमः ॥ १४ ॥

चितायागे सैप्तानां हविषां मध्ये चतुर्थपञ्चमे इत्थमाम्नायेते। सारस्वतौ भवतः। एतद्वै दैव्यं मिथुनमिति। सरस्वती च सरस्वांश्चेति विग्रहस्य समासे कृते पुमान् स्त्रियेति सूत्रेणैकशेषात् सारस्वताविति भवति। तौ देवते ययोर्यागयोस्तौ सारस्वतौ यागौ। एतच्च मिथुनमिति वाक्यशेषादवगम्यते। तयोर्यागयोर्निर्वापादयो धर्माश्चोदकतः प्राप्ताः। तत्र स्वेच्छया स्त्रीयागस्य पुंयागस्य वा प्रथमं निर्वापः कार्यः। कुतः। श्रुत्यर्थपाठप्रवृत्तिस्थानानामन्यतमस्य नियामकस्याभावादिति प्राप्ते ब्रूमः। हौत्रकाण्डे स्त्रीदेवतायाः पूर्वं याज्यानुवाक्ये आम्नाते। प्र णो देवी सरस्वतीति। पश्चात् पुंदेवतायाः। पीपिवांसं सरस्वत इति। अनेन याज्यानुवाक्याक्रमेण मुख्ययोर्द्वयोर्यागयोर्मध्ये स्त्रीयागस्य प्राथम्यमवगम्यते। ततो धर्माणां मुख्ययागार्थत्वान्मुख्यक्रमेणैव क्रमे नियते सति स्त्रीयागस्यैव प्रथमं निर्वापः कार्यः।

अष्टमाधिकरणमारचयति।

उपांशुयाजे पूर्वत्वमग्नीषोमीयकेऽथवा।

धर्मानुष्ठान आद्योऽस्तु मुख्ययोस्तादृशक्रमात् ॥ १५ ॥

गुप्तमौषधधर्माणां प्राथम्यं पूर्वपाठतः।

पाठक्रमस्याविलम्बादाज्यधर्मास्तु पश्चिमाः ॥ १६ ॥

दर्शपूर्णमासयोरुपांशुयाजोऽग्नीषोमीयश्चेत्येतदुभयं पौर्णमास्यामाम्नातम्। तत्रोपांशुयागस्याज्यं द्रव्यम्। आज्यस्य धर्मा उत्पवनचतुर्गृहीतत्वादयः। अग्नीषोमीयस्य पुरो-

डाशो द्रव्यम्। तस्य धर्मा निर्वापावघातादयः। तत्र मुख्यौ यागावुपांशुयाजाग्नीषोमीयौ पूर्वोत्तरभाविनौ। तथा सति पूर्वन्यायेन धर्मक्रमस्य मुख्यक्रमाधीनत्वादाज्यधर्माणामनुष्ठाने प्राथम्यमिति प्राप्ते ब्रूमः। औषधधर्मा निर्वापादयः पूर्वमाम्नाताः। पश्चादाज्यधर्माः। तत्र मुख्यक्रमप्रयुक्तमाज्यधर्माणां प्राथम्यं बाधित्वा पाठक्रमानुसारेणौषधधर्मा एव प्रथममनुष्ठेयाः। पाठक्रमो हि वैदिकैः शब्दैः सहसा प्रतीयते। मुख्यक्रमानुसारी तु क्रम उपपत्त्या कल्पनीयः। तस्मादग्नीषोमीयपुरोडाशार्थेभ्य औषधधर्मेभ्य ऊर्ध्वमाज्यधर्मा अनुष्ठेयाः।

नवमाधिकरणमारचयति।

अग्नीषोमीय आग्नेयात पूर्वो नो वास्तु पूर्वता।
आम्नाणक्रमतो मैवं मन्त्रक्रमबलित्वतः॥ १७॥
स्मृतिक्रमादनुष्ठानं मन्त्राणां स्मारकत्वतः।
प्राबल्यं ब्राह्मणस्यास्ति विधिनापि कृतार्थता॥ १८॥

अग्नीषोमीययागस्तैत्तिरीयब्राह्मणे पञ्चमप्रपाठके द्वितीयानुवाके समाम्नातः। ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छदिति। आग्नेययागस्तु षष्ठप्रपाठके तृतीयानुवाके आम्नातः। यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवतीति। तत्रानुष्ठानस्य ब्राह्मणोक्तविध्यधीनत्वादग्नीषोमीयस्य प्रथममनुष्ठानमिति प्राप्ते ब्रूमः। मन्त्रकाण्डे पूर्वं पठिता आग्नेयमन्त्राः। तथा हि हौत्रकाण्डे आज्यभागमन्त्रानुवाकादुत्तरस्मिन्ननुवाके प्रथममग्निर्मूर्धेत्यादिके आग्नेयी याज्यानुवाके

आम्नाते । ततः प्रजापते न त्वदेतानीत्यादिके प्राजापत्ये । ततोऽग्नीषोमा सवेदसमित्यादिके अग्नीषोमीये । आध्वर्यवकाण्डेऽप्यग्नये जुष्टं निर्वपाम्यग्नीषोमाभ्यामित्याग्नेयः पूर्वमाम्नातः । याजमानकाण्डेऽप्यग्नेरहं देवयज्ययान्नादो भूयासमित्याग्नेयस्य पश्चादग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासमित्याम्नायते । मन्त्रक्रमश्च प्रबलः । मन्त्रैः स्मृत्वा पश्चादनुष्ठेयत्वात् । ब्राह्मणं त्वप्राप्तपदार्थविधिनापि चरितार्थम् । अतोऽनुष्ठानस्मरणायैवोत्पन्नान् मन्त्रान् बाधितुं नालमिति मन्त्रक्रमेणाग्नेयस्यैव प्रथममनुष्ठानम् ।

दशमाधिकरणमारचयति ।

सारस्वताज्ये पूर्वत्वं बार्हस्पत्यचरावुत ।
धर्माणामाज्यनिष्ठानां प्राथम्यमुपदेशतः ॥ १९ ॥
सक्रमाणां पदार्थानां चोदकप्रापितत्वतः ।
प्राथम्यमन्तरङ्गत्वादाग्नेयविकृतौ चरौ ॥ २० ॥

अजरकल्पाभिधायामिष्टौ हविस्त्रयं श्रूयते । आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन् सरस्वत्याज्यभागा स्याद् बार्हस्पत्यश्चरुरिति । तत्र सारस्वतस्य ये धर्मास्त एव पूर्वमनुष्ठेयाः । कुतः । सारस्वतयागस्य बार्हस्पत्यात् पूर्वमुपदिष्टत्वात् । मुख्यक्रमेण हि धर्माणां क्रमो युक्त इति प्राप्ते ब्रूमः । न तावदत्राज्यधर्मा ओषधधर्मा वोपदिश्यन्ते । किन्तु चोदकेन प्राप्यन्ते । चोदकश्च सक्रमानेव पदार्थानतिदिशति । प्रकृतौ चौषधधर्माणां प्रथममनुष्ठेयत्वादिहापि बार्हस्पत्यचरुधर्मा एव प्रथममनुष्ठेयाः । किञ्च । आग्नेयस्य

प्रथमभाविनो विकृतिबार्हस्पत्यश्चरुः। उपांशुयाजस्य पश्चाद्भाविनो विकृतिः सारस्वतमाज्यम्। अतोऽन्तरङ्गत्वाच्चरुधर्मा एव पूर्वभाविनः।

एकादशाधिकरणमारचयति।

साकमेधेष्टयस्तिस्रो द्व्यहे स्युः सद्य एव वा।
प्रातरादेर्द्वयोरङ्गोः सत्त्वात् प्रकृतिवद् द्व्यहे ॥ २१ ॥
साङ्गमुख्यानुरोधेन प्रातरादेर्विधानतः।
श्रौतं सद्यस्त्वमन्यत् तु चोदकात् तेन दुर्बलम् ॥ २२ ॥

चातुर्मास्येषु साकमेधनामके तृतीये पर्वणि श्रूयते। अग्नयेऽनीकवते प्रातरष्टाकपालं निर्वपेन्मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरुं मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनमिति। ता एतास्तिस्र इष्टयो द्व्यहकालीनाः। यथा प्रकृतौ पर्वण्यन्वाधानादिकं प्रतिपद्योऽष्टिरिति द्व्यहकालीनत्वम्। तद्वत्। ननु प्रातर्मध्यन्दिनसायंशब्दैरेकस्मिन्नेवाह्नि त्रयः कालास्तिसृणामिष्टीनां विहिताः। तत्र। द्वयोरप्यङ्गोः प्रातरादिकालसद्भावात्। पूर्वेद्युः प्रातरादिकालेषु स्वकीयेषु तासामुपक्रमः। परेद्युः प्रातरादिषु ताः समापनीयाः। ततो द्व्यहकालीनत्वमिति प्राप्ते ब्रूमः। अत्राग्नयेऽनीकवते प्रातरष्टाकपालं निर्वपेदिति साङ्गं प्रधानं प्रातःकालीनतया विधीयते। प्रातःशब्दश्च स्वत एकमेव प्रातःकालमभिधाय पर्य्यवस्यति। प्रातरग्निहोत्रमित्यादौ तद्दर्शनात्। तस्मात् साङ्गस्य प्रधानस्यैकस्मिन्नेव प्रातःकाले विधानात् सद्यस्कालीनत्वं श्रौतम्। चोदकेन त्वन्वाधानाद्यङ्गं पूर्वेद्युः प्रातः प्रधानं

परेद्युः प्रातरिति कल्प्यते। उपदेशस्त्वादेकाद् बलीयान्। तस्मादेकाहकालीना इष्टयः।

द्वादशाधिकरणमारचयति।

प्रयाजेष्वपकर्षोऽनुयाजेषूत्कर्ष इत्यमू।
श्रुतमात्रे तदन्येषु तदाद्येषु च वाग्रिमः॥ २३॥
अन्येषां मुख्यकालत्वान्नैवं व्युत्क्रमसंक्रितः।
प्रयाजान्ते ह्यनुयाजादिके चैतौ समूहके॥ २४॥

अग्नीषोमीयपशौ प्रयाजानामपकर्षः श्रूयते। तिष्ठन्तं पशुं प्रयजन्तीति। प्रकृतौ हविष्यासादिते पश्चात् प्रयाजा इज्यन्ते। इहापि पशुसंज्ञपनादूर्ध्वं हविष्यासादिते पश्चादेव प्रयाजाश्चोदकेन प्राप्ताः। ते चात्र वचनाज्जीवत्येव पशावपकृष्यन्ते। तथा सवनीयपशावनुयाजाना-मुत्कर्षः श्रूयते। आग्निमारुतादूर्ध्वमनुयाजैश्चरन्तीति। तत्र प्रयाजमात्रस्यापकर्षः श्रुतः। अनुयाजमात्रस्योत्कर्षः। तावुभौ श्रुत्यनुसारेण तथैवाङ्गीकर्त्तव्यौ। यदि प्रयाजान्तस्याङ्गकलापस्यापकर्षः स्यात्। तदा प्रयाजेभ्यः पूर्वभाविनामाघारसामिधेन्यादीना ततोऽप्यपकर्षादत्यन्त-व्यवहितानां प्रधानकालीनत्वं न स्यात्। प्रयाजमात्रे त्वपकृष्टे सत्याघारादीनां मुख्यकालीनत्वं न लुप्यते। एवमनुयाजमात्र उत्कृष्टे तत ऊर्ध्वभाविनां सूक्तवाकशंयुवाकादीनामनुत्कर्षात् प्रधानसन्निधिर्न विनश्यति। तस्मात् प्रयाजमात्रस्यापकर्षोऽनुयाजमात्रस्योत्कर्ष इति प्राप्ते ब्रूमः। प्रकृतौ पदार्थानुष्ठानक्रमस्य क्लृप्तत्वात् सकलानामेव पदार्थानां चोदकेनातिदेशाद् व्युत्क्रमे सति

पूर्वेण पदार्थेनोत्तरस्य पदार्थस्य बुद्धावनवस्थापितत्वा-दनुष्ठानमेव लुप्येत । तस्मात् प्रयाजान्तस्याङ्गसमूहस्याप-कर्षः । अनुयाजादेरङ्गसमूहस्योत्कर्षः ।.

त्रयोदशाधिकरणमारचयति ।

सावनेष्वैष्टिकानां किं सौमिकेभ्यो न पूर्वता ।
पूर्वता वाथ नियमो नास्ति तद्धेतुवर्जनात् ॥ २५ ॥
प्रतिप्रस्थातृनिर्वाप ह्यध्वर्योरपि कर्त्तृता ।
प्रोक्षणाद्याः पुरा पश्चात् सौमिकाः स्युः प्रवृत्तितः ॥२६॥

सोमे प्रातरनुष्टेयोऽनुवाकः पठितः । ततः प्रचरणी-होमादयः पठिताः । ततः सवनीयादयः । ते च चोदका-गतनिर्वापादियुक्ताः । ततो बहिष्पवमानस्तोत्रं पठितम । तत्राध्वर्युर्होत्रे प्रातरनुवाकप्रैषं दत्त्वा तदानीमेव प्रति-प्रस्थातारमेवं प्रेष्यति । प्रतिप्रस्थातः सवनीयान्निर्वपस्वेति । ततः प्रचरणीहोमादिभ्य ऊर्ध्वं प्राप्तोऽपि सवनीयपुरोडाश-निर्वापः पर्वभिन्नेव प्रातरनुवाककाले प्रैषवशादपकृष्टः । सवनीयपुरोडाशानामलङ्कारप्रैषोत्कर्ष एवमाम्नात. । बहि-ष्पवमाने स्तुत आग्नीदग्नीन् विहर बर्हिः स्तृणीहि पुरो-डाशानलङ्कुर्विति । एवं स्थिते सति प्रकृतौ निर्वापोत्तर-भाविनोऽलङ्करणपूर्वभाविनः प्रोक्षणादयो ये पदार्थास्तेऽत्र चोदकप्राप्ताः । तेषां निर्वापवदपकर्षस्यालङ्करणवदुत्कर्ष-स्याकृतत्वादुभयोर्मध्यकाल एवानुष्ठानं प्राप्तम् । . तथा सति प्रचरणीहोमादिभिर्बहिष्पवमानान्तैः सौमिकपदार्थैः सह प्रोक्षणादिपदार्थानामैष्टिकानामेककालत्वेनानुष्ठानात् पौर्वापर्य्यकलहे सति नियामकाभावादैच्छिकः क्रम इति

प्राप्ते ब्रूमः। प्रातरनुवाकप्रचरणीहोमयोः सौमिकयोः पाठप्राप्तमनन्तरं विच्छिद्य प्रैषविधिबलादैष्टिको निर्वापः प्रवृत्तः। तेन च निर्वापेण तदनन्तरभावि प्रोक्षणादिकं बुद्धावुपस्थाप्यते। न तु सौमिक प्रचरणीहोमादिकं तदा केनचिदुपस्थाप्यते। ननु निर्वापः प्रतिप्रस्थातृकर्तृकः। प्रोक्षणादिकमध्वर्युकर्तृकमिति न निर्वापः प्रोक्षणादिकमुपस्थापयतीति चेत्। मैवम्। निर्वापेऽध्वर्योरपि कर्तृत्वमस्ति। प्रयोजकत्वात्। अतोऽसौ प्रोक्षणादीनामुपस्थापकः। अतस्ते पूर्वमनुष्ठेयाः। पश्चात् सौमिकाः प्रचरणीहोमादयः।

चतुर्दशाधिकरणमारचयति।

यूपच्छेदापकर्षः किं तदन्ते श्रुत एव वा।
प्रयाजवत्तदन्तत्वान्नयनं चापकृष्यताम् ॥ २७ ॥
अग्नीषोमप्रणयनं सौमिकं पाशुकी छिदा।
प्रयाजाघारवैषम्यात्क्रमात्रापकर्षणम् ॥ २८ ॥

ज्योतिष्टोमे वैसर्जनहोमादूर्ध्वं प्राचीनवंशगतो वह्निराग्नीध्रीये प्रणेतव्यः। सोमश्च प्राचीनवंशे पूर्वमवस्थापित इदानीं हविर्धाने प्रणेतव्यः। तयोरुभयोः प्रणयनादूर्ध्वं यूपच्छेद आम्नातः। तदेतत् सर्वं सुत्यादिनात् प्राचीन औपवसथ्ये दिने प्राप्तम्। तत्र यूपच्छेदो दिनत्रयात् पूर्वस्मिन् दीक्षाकालेऽपकृष्टः। दीक्षासु यूपं छिनत्तीति तद्विधानात्। तस्मिन्नपकृष्टे प्रयाजन्यायेन तदन्ताङ्गसमूहस्यापकर्षात् प्रणयनमप्यपकृष्यतामिति प्राप्ते ब्रूमः। प्रयाजाघारादीनामेव प्रधानं प्रत्यङ्गत्वे नैकप्रयोगान्तःपातित्वादवश्यम्भावी

परस्परक्रम इति प्रयाजापकर्षे तदन्ताङ्गसमूहस्यापकर्षो युक्तः। इह तु प्रणयनं सोमयागाङ्गम्। यूपच्छेदस्त्व-ग्नीषोमीयपश्वोरङ्गमिति प्रणयनच्छेदनयोर्नान्योन्यं क्रमो-ऽपेक्षितः। तस्मादुक्तस्य यूपच्छेदमात्रस्यापकर्षः।

पञ्चदशाधिकरणमारचयति।

सवनीये पिष्टलेपफलीकरणहोमकौ।
उत्कृष्यौ न वाद्यः स्यादनुयाजोत्तरत्वतः॥ २९॥
पश्वर्थाः स्युरनुयाजाः पुरोडाशगतौ तु तौ।
उक्तौ होमौ प्रयोगस्य भेदान्नोत्कर्षमर्हतः॥ ३०॥

सवनीयपुरोडाशे पिष्टलेपफलीकरणहोमौ चोदकेन प्राप्तौ। दृषदुपलाकपालादिष्ववशिष्टो यः पिष्टलेपस्तमुद्धृत्य जुह्वां चतुर्गृहीत आज्ये प्रक्षिप्य दक्षिणाग्नौ जुहोति। फलीकरणशब्देन तण्डुलकणा उच्यन्ते। तानपि तथा जुहोति। तावेतौ होमौ प्रकृतिवदिहाप्यनुयाजोत्तर-कालीनौ। ते चानुयाजा आग्निमारुतादूर्ध्वमुत्कृष्टा इति सूक्तवाकादिवदेतौ होमावुत्कृष्याविति चेत्। मैवम्। उत्कृष्यमाणा एतेऽनुयाजाः पश्वर्थाः। न तु पुरोडाशार्थाः। पुरोडाशप्रसङ्गसिद्धेर्वक्ष्यमाणत्वात्। उक्तहोमौ तु पुरो-डाशार्थौ। न च तयोः प्रसङ्गसिद्धिः। पशौ पिष्टाद्य-भावेन तद्धोमासम्भवात्। एवं सत्युक्तप्रणयनवद्धोमयोः प्रयोगभेदान्नास्त्यनुयाजैः सहोत्कर्षः।

षोडशाधिकरणमारचयति।

पुरोडाशाभिवासान्तस्यापकर्षोऽस्ति दर्शके।
न वाद्योऽस्त्वपकृष्टाया वेदेर्वैगुण्यहानये॥ ३१॥

अभिवासात् परा वेदिरिति तत्क्रमबाधनः।
प्रागेव विहिता दर्शे वेदिर्नातोऽपकर्षणम् ॥ ३२ ॥

दर्शपूर्णमासयोः पुरोडाशस्य कपालेषु स्थापितस्याच्छादनमाम्नातम्। भस्मनाभिवासयतीति। तत ऊर्ध्वं वेदिराम्नाता। तेनैव क्रमेण पौर्णमासीयागे प्रतिपद्यनुष्ठानं कृतम्। दर्शयागे तु वेदेरपकर्ष आम्नातः। पूर्वेद्युरमावास्यायां वेदिं करोतीति। तत्र वेदेः पूर्वभाविनोऽभिवासनान्तस्याङ्गसमूहस्यापकर्षः कर्त्तव्यः। अन्यथा वेदेर्वैगुण्यप्रसङ्गादिति प्राप्ते ब्रूमः। यदि दर्शः पौर्णमासीविकारः स्यात्। तदा पौर्णमास्यां क्लृप्तः क्रमोऽतिदिश्येत। न त्वसौ विकार इति कश्चित् क्रमोऽत्र स्वातन्त्र्येणान्वेयः। क्रमान्वयनं सर्वेषु पदार्थेष्वाम्नातेषु पश्चात् पाठादिभिः सम्पद्यते। वेदिपदार्थश्चाभिवासनादूर्ध्वं दर्शपूर्णमाससाधारण्येनाम्नातः। विशेषतस्तु दर्शयागे पूर्वेद्युरेवाम्नायते। तथा सत्यभिवासनवेद्योः क्रमबाधात् प्रागेव दार्शिकवेदेः पूर्वदिनसम्बन्धावगमात् तदेव तस्याः स्थानमिति वेदेरपि तावन्नास्त्यपकर्षः। तत्र कुतोऽभिवासनान्तस्याङ्गसमूहस्यापकर्षः।

सप्तदशाधिकरणमारचयति।

दैवात् सान्तपनी सायं प्राप्ता चेदग्निहोत्रकम्।
उत्कर्षेत्ति न वोत्कर्षः पौर्वापर्यस्य भावतः ॥ ३३ ॥
भिन्नप्रयोगप्राप्तत्वादग्निहोत्रं स्वकालके।
इष्टिमध्येऽपि हुत्वाथ यागशेषः समाप्यते ॥ ३४ ॥

चातुर्मास्येषु साकमेधनामके पर्वणि सान्तपनीयेष्टिः

श्रूयते। मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरुमिति। तां चेष्टिं समाप्य सायंकालेऽग्निहोत्रं हूयते। यदि कदाचिद्दैविकान्मानुषाद्वा प्रतिबन्धात् सेष्टिः सायमुपक्रान्ता। तदा सेष्टिरग्निहोत्रस्योत्कर्षमापादयति। कुतः। इष्ट्यग्निहोत्रयोः पौर्वापर्य्यसद्भावेनेष्टिं समाप्यैवाग्निहोत्रस्यानुष्ठेयत्वादिति प्राप्ते ब्रूमः। प्रयोगभेदादनयोः शास्त्रीयः कश्चित् क्रमोऽस्ति। सान्तपनीया तु स्वकालाद् भ्रष्टा। अग्निहोत्रस्यापि तद्भ्रंशो मा भूदितीष्टिमध्येऽप्यग्निहोत्रं स्वकालेऽनुष्ठाय पश्चादिष्टिशेषः समापनीयः।

अष्टादशाधिकरणमारचयति।

उक्थ्योत्कर्षे षोड़शी नोत्कृष्येतोत्कृष्यतेऽथवा।
स्तोत्रकालाय नोत्कर्षः पूर्ववत् षोड़शिग्रहे ॥ ३५ ॥
न तं पराश्चमुक्थ्येभ्य इत्यङ्गाङ्गित्वभावनात्।
सस्तोत्रे ग्रह उत्कृष्टे स्तोत्रकालः प्रबाध्यताम् ॥ ३६ ॥

ज्योतिष्टोमे षोड़शिग्रहं प्रकृत्य श्रूयते। न पराश्चमुक्थ्येभ्यो निगृह्णातीति। तृतीयसवने सूर्य्यास्तमयात् प्रागेवोक्थ्यग्रहास्त्रयो गृह्यन्ते। तेभ्यः परस्तादयं षोड़शी विहितः। यदि कदाचिद्दैवादुक्थ्यग्रहा अस्तमयादूर्ध्वमुत्कृष्येरन्। तदा तत ऊर्ध्वं विहितस्यापि षोड़शिग्रहस्य नास्त्युत्कर्षः। कुतः। पूर्वन्यायेन कालस्यानुसरणीयत्वात्। कालो ह्येवमाम्नातः। समयाध्युषिते सूर्य्ये षोड़शिनः स्तोत्रमुपाकरोतीति। समयाऽस्तमयः। तं प्राप्ते सूर्य्ये स्तोत्रमारम्भकालः। सोऽयमुत्कर्षे सति बाध्येत।

तत्रायुक्तम्। पूर्वत्राग्निहोत्रस्य स्वकालमबाधितुमेवेष्टिम-ध्येऽनुष्ठानाङ्गीकारादिति प्राप्ते ब्रूमः। पराञ्चमिति शब्दे-नोक्थ्येभ्य उत्तरकालः षोडशिग्रहाङ्गत्वेन विधीयते। ततो मुख्यग्रहस्य कालमबाधितुमुपसर्जनस्य स्तोत्रस्य कालं बाधित्वा सस्तोत्रो ग्रह उत्कृष्टव्यः।

इति माधवीये जैमिनीयन्यायमालाविस्तरे पञ्चमस्या-ध्यायस्य प्रथमः पादः।

---

द्वितीयपादस्य प्रथमाधिकरणमारचयति।

वाजपेये किमेकैकपशौ सर्वसमापनम्।
सर्वेषु वैकैकधर्म आद्यः साहित्यसिद्धये॥ १॥
वचनात् पशुसाहित्यं प्रयोगोक्त्या तु कल्प्यते।
धर्मसाहित्यमेतच्च सिद्धान्तेऽपि न हीयते॥ २॥

वाजपेये सप्तदशसु प्राजापत्येषु पशुष्वेकैकस्मिन् पशावुपाकरणनियोजनादिसंस्काराः सर्वे समापनीयाः। तथा सति साङ्गं प्रधानं कर्त्तव्यमिति प्रयोगवचनेनावगतं धर्माणां साहित्यं प्रसिध्यति। चोदकोऽपि धर्मसाहित्यं प्रापयति। प्रकृतावुपाकरणनियोजनादीनां साहित्य-दर्शनात्। तस्मादत्र काण्डानुसमयः। न तु पदार्थानु-समय इति प्राप्ते ब्रूमः। सप्तदश प्राजापत्यान् पशूना-लभत इति वचनात् पशुसाहित्यमवगतम्। तच्च प्रबलम्। प्रत्यक्षेण पशुनिष्ठेनैकशब्देन प्रापितत्वात्। धर्मसाहित्यं तु न प्रत्यक्षशब्देन प्रापितम्। किन्तु प्रयोगवचनेन परि-

कल्प्यते। यद्येकस्मिन् प्रयोगे धर्मसाहित्यं न स्यात्। तदा कतिपयधर्मवैकल्येन साङ्गप्रधानानुष्ठानविधिर्नोप-पद्येतेत्यर्थापत्तिः। चोदकेनापि विकृतौ धर्मसाहित्यवचन-मनुमीयते। तदुभयं प्रत्यक्षात् पशुसाहित्यवचनाद् दुर्ब-लम्। तस्माद् वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्तीत्यनेन प्रत्यक्षवचनेनावगतं पशुसाहित्यमबाधितुं सर्वेषु पशुष्वे-कैक उपाकरणादिधर्मः कर्त्तव्य इत्येवं पदार्थानुसमयोऽ-भ्युपेतव्यः। न तु काण्डानुसमयः। अस्मिन्नपि पक्षे प्रयोगवचनचोदकाभ्यामवगतं धर्मसाहित्यं न विरुध्यते। एकस्मिन्नेव प्रयोगे कृत्स्नधर्माणामनुष्ठितत्वात्।

द्वितीयाधिकरणमारचयति।

प्रतिग्रहे तु बहुश्वे पूर्वन्यायोऽस्ति वा न वा।
अस्ति तत्साम्यतो नैवं पुरोडाशस्य शोषतः॥ २॥

यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणांश्चतुष्क-पालान् निर्वपेदित्यत्र शतसंख्यादियुक्तबह्वश्वप्रतिग्रहे बहु-पुरोडाशेषूदाहृतप्रत्यक्षवचनेन साहित्यं प्राप्तम्। तत्र पूर्वन्यायेन सर्वेषु पुरोडाशेष्वेकैकोऽधिश्रयणादिधर्मोऽनु-ष्ठेय इति चेत्। नैवम्। तप्तेषु कपालेषु क्रमेण पुरो-डाशानधिश्रित्य यावता कालेन प्रथमपुरोडाशे द्वितीय-संस्कारं कर्त्तुमागच्छति तावतासौ शुष्को भस्मीभवति। तस्मादेकैकस्मिन् पुरोडाशे कृत्स्नधर्मसमापनमित्येवं काण्डानुसमयोऽभ्युपेतव्यः।

तृतीयाधिकरणमारचयति।

विर्वापे तु किमेकैकमुष्टेरावृत्तता न वा।

अस्त्वेकैकप्रतिष्ठानात् कपालादिषु तत्समम्। ४॥
चतुरो निर्वपेन्मुष्टीनिति निर्वापसंश्रयात्।
एकैकमुष्टेरंशत्वात् पदार्थत्वं चतुष्टये॥ ५॥

दर्शपूर्णमासयोराग्नेयाग्नीषोमीयनिर्वापयोः श्रूयते। चतुरो मुष्टीन् निर्वपतीति। तत्रैकैको मुष्टिर्मुष्ट्यन्तरनैरपेक्ष्येण प्रतितिष्ठतीत्येकैकस्य मुष्टेर्निर्वापाङ्गभूतपदार्थत्वमस्ति। ततो द्वयोर्निर्वापयोः क्रमेणैकैकमुष्टिं निरूप्य ततो द्वितीयमुष्टिरित्येवंविधः पदार्थानुसमयः कर्त्तव्यः। एवं कपालोपधानादिषु योजनीयम्। द्वयोः पुरोडाशयोरर्थे क्रमेणैकैकं कपालमुपधाय पश्चाद् द्वितीयमुभयत्र क्रमेणोपधेयमिति प्राप्ते ब्रूमः। यदि निर्वापपदार्थत्वं लौकिकं स्यात् तर्ह्येकस्य मुष्टेस्तदस्तु। इह त्वेकविधिगम्य एकः पदार्थः। विधिश्च चतुःसंख्याविशिष्टानेव मुष्टीन् विदधातीति मुष्टिचतुष्टयमेकः पदार्थः। एकमुष्टिस्तु तदंशः। न तु संपूर्णः पदार्थः। एवमाग्नेयपुरोडाशे कपालाष्टकोपधानमेकः पदार्थः। अग्नीषोमीये त्वेकादशकपालोपधानम्। एवं सर्वत्रैकविधिविहितस्यैव पदार्थत्वान्नांशानामनुसमयोऽस्ति।

चतुर्थाधिकरणमारचयति।

अवदानेऽनुसमयो होमान्ते वावदानके।
पदार्थत्वं विधेयत्वात्तेनानुसमयस्ततः॥ ६॥
अवद्यतिः प्रदानान्तोऽवदानस्य तदर्थतः।
अतोऽनुसमयस्तत्र होमान्तान्न तु केवलात्॥ ७॥

दर्शपूर्णमासयोर्हि हविषोऽवद्यतीत्येकेन विधिना

विहितत्वाद् द्विसंख्याविशिष्टमवदानमेक: पदार्थ:। तत स्तेनावदानमात्रेणानुसमय: कर्त्तव्य:। आग्नेयस्य हिरवदानं कृत्वा तद्धोमात् प्रागेवाग्नीषोमीयस्य द्विरवदानमिति प्राप्ते ब्रूम:। अवदानं होमपर्य्यन्तमेक: पदार्थ:। होमस्यावदानमन्तरेणानुपपत्ते:। होमविधिनैवाक्षिप्तं होमार्थमवदानम्। अत एव चतुरवत्तं जुहोतीत्येकेन विधिना सावदानक एको होमपदार्थो विहित:। उपस्तरणाभिघारणाभ्यां सह यच्चतुरवत्तं तस्मिन् हविर्विषयमवदानद्वित्वं विधातुं द्विर्हविषोऽवद्यतीत्युच्यते। तर्त्तं होमान्तस्यावदानस्यैकपदार्थत्वादाग्नेयमवदाय हुत्वा पश्चादग्नीषोमीयावदानमित्यनुसमय:।

पञ्चमाधिकरणमारचयति।

यूपाञ्जनादिरेकैक: संघो वानुसमीयते।
एकैक: पूर्ववन्मैवं वचनात् काण्डसङ्गते:॥ ८॥

ज्योतिष्टोमेऽग्नीषोमीयपशौ यूपस्य घृतेनाञ्जनमुच्छ्रयणमवटस्य पर्य्यूहणं यूपमूलस्य परिवृंहणं मध्ये रशनया परिव्याणमित्येते पदार्था आम्नाता:। ते चैकयूपपक्षे तथैव कर्त्तव्या:। एकयूपस्य च विकल्प: श्रूयते। एकयूपो वैकादशिनो वा अन्येषां यज्ञानां यूपा भवन्ति। एकविंशत्यश्वमेधस्येति। तत्र बहुयूपेष्वञ्जनादिरेकैक: पदार्थ: प्राजापत्यपशूपाकरणादिवदनुसमेतव्य इति प्राप्ते ब्रूम:। अञ्जनादिपरिव्याणान्तं यजमानो यूपं नावसृजतीति वचनेन यजमानस्य यूपत्यागनिषेधाञ्जनादि काण्डस्यानुसमय उपपद्यते। तस्मान्नात्र पदार्थानुसमय:।

षष्ठाधिकरणमारचयति ।

किं दैवाद्यवदानेषु काण्डानुसमयोऽथवा ।
एकानुसमयोऽस्त्वाद्यः प्रकृतौ तस्य दर्शनात् ॥ ९ ॥
पश्वैक्यात् प्रकृतावस्तु विकृतौ तद्बहुत्वतः ।
सजातीयपदार्थानुसमयोऽनन्तरत्वतः ॥ १० ॥

अग्नीषोमीयपशौ श्रूयते । दैवतान्यवदाय न तावत्येव होतव्यम । सौविष्टकृतान्यवद्यति । सौविष्टकृतान्यवदाय न तावत्येव होतव्यम । ऐडान्यवद्यतीति । अत्र प्रधानदेवतार्थानि स्विष्टकृदर्थानीडाभक्षणार्थानि चेति त्रिविधान्यवदानानि । तानि च तेनैव क्रमेणानुष्ठीयन्ते । प्राजापत्येषु सप्तदशसु पशुषु तानि चोदकप्राप्तानि । तत्र तेषां त्रिविधानामवदानानां काण्डमेकैकस्मिन् पशावनुसमेतव्यम् । तथा सति प्रकृ[illegible]माद्यत्नानादिति प्राप्ते ब्रूमः । प्रकृतौ पश्वेकत्वेन पदार्थानुसमयप्रसक्त्यभावादस्तु काण्डानुष्ठानम् । इह तु पदार्थानुसमयो युज्यते । दैवावदानरूपमेकं पदार्थं सर्वेषु पशुषु सम्पाद्य पश्चात् सौविष्टकृतावदानम् । तच्च सर्वेषु कृत्वा पश्चादैडावदानम् । एवं च स्तुपाकरणादिष्विव पशूनां साहित्यमबाधितं भवति । ततः पश्वानन्तर्ये य सजातीयो दैवावदानरूपो य पदार्थः स एव सर्वेषु पशुष्वनुसमेतव्यः ।

सप्तमाधिकरणमारचयति ।

नानाबीजेषु नानात्वमुलूखल उतैकता ।
अजिनास्तरणादीनां भिन्नत्वात् स्यादनेकता ॥ ११ ॥
स्तरणादौ तण्डुलान्ते पदार्थैक्यादनुक्रमात् ।

उलूखलैक्यं नीवारश्यामाकादाववस्थितम् ॥ १२ ॥

राजसूये नानाबीजेष्टिराम्नाता। अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणाम्। सोमाय वनस्पतये श्यामाकं चरुमित्यादि। तत्र तेषां बीजानामवघाताजिनास्तरणादयश्चोदकेनातिदिष्टाः। कृष्णाजिनास्तरणमुपर्य्युलूखलस्थापनम्। तत्र बीजावापोऽवघातः शूर्पेण परावपणं कणेभ्यस्तण्डुलानां विवेचनम्। ते चैते कृष्णाजिनास्तरणादयः पृथग्विधिभिर्विहितत्वाद्भिन्नाः पदार्थाः। ततो नानाबीजेषु कृष्णाजिनास्तरणमनुसमवेतव्यम। ऐवञ्च सति यावत्यो बीजजातयस्तावन्ति कृष्णाजिनानि। तद्वदुलूखलस्याप्यनेकत्वमिति प्राप्ते ब्रूमः। व्रीहीनवहन्तीति विहितोऽवघात एकः पदार्थः। स च कृष्णाजिनास्तरणादितण्डुलनिष्पत्त्यवसानः। तं च पदार्थं कृष्णव्रीहिष्वनुष्ठाय श्यामाकेषु स एव पदार्थोऽनुष्ठेयः। तथा सत्यनुक्रमेणैकमेवोलूखलं सर्वेषु बीजेष्वन्वेतुं शक्नोति। तत उलूखलकृष्णाजिनादीनां नास्त्यनेकत्वम्।

अष्टमाधिकरणमारचयति।

प्रयाजानुयाजसिद्ध्यै पात्रैक्यमुत भिन्नता।
वक्रोपभृद्द्वयोरर्थे दृष्टातो विकृतौ तथा ॥ १३ ॥
विकृतौ पात्रभेदोऽस्तु शुद्धाज्यपृषदाज्ययोः।
एकपात्रे ग्रहायोगाद्द्रव्यैक्यं प्रकृतौ द्वयोः ॥ १४ ॥

अग्नीषोमीयपशौ प्रयाजानुयाजसाधनद्रव्यं धारयितुमेकमेव पात्रं कर्त्तव्यम्। कुतः। प्रकृतावुभयार्थस्याज्यस्यैकयैवोपभृता धृतत्वेन विकृतावपि तदतिदेशादिति

प्राप्ते ब्रूमः। प्रकृतिवत् केवलेनाज्येन प्रयाजा इज्यन्ते। अनुयाजास्तु पृषदाज्येन यष्टव्याः। पृषदाज्येनानुयाजान् यजतीति तद्विधानात्। पृषदाज्यं नाम दधिमिश्रमाज्यम् न हि शुद्धमिश्रयोरेकेन पात्रेण धारणं भवति। तस्मादत्र पृथक् पात्रम्।

नवमाधिकरणमारचयति।

नक्षत्रेष्ट्युपहोमाः किं नारिष्टेभ्यः पुरा न वा।
प्रत्यक्षपाठान्मुख्यस्य सामीप्याद्यास्तु पूर्वता ॥ १५ ॥
प्राकृते प्रथमो बोध्यो वैकृते चरमस्ततः।
नारिष्टहोमाः पूर्वाः स्युरुपहोमास्तु पृष्ठतः ॥ १६ ॥

अग्न्यादिदेवतायुक्तानां कृत्तिकादिनक्षत्राणामिष्टयः काम्या विहिताः। अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेदित्यादयः। तत्र प्रधानहोमा अग्निर्नः पातु कृत्तिका इत्यादियाज्यानुवाक्यापुरःसरं श्रूयन्ते। तत्रोपहोमा एवमाम्नाताः। सोऽत्र जुहोति अग्नये स्वाहा। कृत्तिकाभ्यः स्वाहा। अम्बायै स्वाहा। दुलायै स्वाहेत्यादयः। नारिष्टहोमाश्च चोदकेन प्राप्ताः। दश ते तन्वो यज्ञ यज्ञिया इत्यादिभिर्मन्त्रैराज्याहुतयो नारिष्टहोमाः। एतेभ्यो नारिष्टहोमेभ्यः पूर्वमुपहोमाः कर्त्तव्याः। कुतः। अष्टाकपालं निर्वपेत् सोऽत्र जुहोतीति प्रत्यक्षपाठेन मुख्यसामीप्यमुपहोमानां प्रतीयते। तत्त्वतिदिष्टैर्नारिष्टहोमैर्व्यवधाने बाध्येत। तस्मादुपहोमानां पूर्वत्वमिति प्राप्ते ब्रूमः। नक्षत्रेष्टिरूपा विकृतिर्विधीयमाना स्वोपकारकमङ्गजातमपेक्षते। तदा चोदकः प्राकृतनारिष्टहोमा-

दिकं बोधयति। प्रत्यक्षवाक्यं तु वैकृतमुपहोमादिकम्। तयोर्मध्ये क्लृप्तोपकारितया नारिष्टहोमाद्यङ्गत्वं सहसा बुध्यते। उपहोमाद्यङ्गता तूपकारे कल्पिते पश्चाद् बुध्यते। अतः प्रधानप्रत्यासत्त्या नारिष्टहोमाः पूर्वमनुष्ठेयाः। उपहोमाः पश्चादनुष्ठेयाः।

दशमाधिकरणमारचयति।

अभिषेच्यप्राकृताङ्गसमाप्तौ देवनादयः।
मध्ये वा पूर्ववत् सर्वसमाप्तौ देवनादयः॥ १७॥
अभिषेकोऽपकृष्टोऽस्मात् पूर्वं प्रत्यक्षपाठतः।
देवनाद्यास्ततो मध्ये माहेन्द्रस्तोत्रतः पुरा॥ १८॥

राजसूये सोमयागस्याभिषेचनीयस्य सन्निधौ विदेवनशौनःशेपाख्यानाभिषेकाः क्रमेणाम्नाताः। तत्राभिषेचनीये चोदकप्राप्तमङ्गजातं नारिष्टन्यायेन प्रथमं समाप्य पश्चाद् विदेवनादयः कार्या इति प्राप्ते ब्रूमः। माहेन्द्रस्तोत्रं प्रत्यभिषिच्यत इति वाक्येन तस्य सोमयागस्य मध्येऽभिषेकोऽपकृष्टः। अभिषेकात् पूर्वभावित्वं विदेवनादीनां प्रत्यक्षपाठप्राप्तम्। ततो माहेन्द्रस्तोत्रादपि पूर्वस्मिन् काले प्रयाजाघारवद् विदेवनादीनामपकर्षः कर्त्तव्यः।

एकादशाधिकरणमारचयति।

चयने दीक्षणीयादि सावित्राण्यथवा पुरा।
प्राकृतत्वादिहाद्यः स्यादन्त्यः प्रत्यक्षपाठतः॥ १९॥

अग्निचयने सावित्राणि जुहोतीति सावित्रहोम आम्नातः। ततो महता प्रबन्धेनोखासम्भरणादिकमा

न्नाय पश्चादाग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाण इत्यादिना दीक्षणीयादिकमाम्नातम्। तत्र दीक्षणीयादिकं प्रकृतौ क्लृप्तोपकारतया शीघ्रं बुध्यमानत्वात् सावित्रहोमादिभ्यः पूर्वमनुष्ठेयमिति चेत्। मैवम्। प्रत्यक्षपाठेन क्रमावगमात्। चोदकप्राप्तस्यापि दीक्षणीयादेरग्निकाण्डे सावित्रादिभ्य ऊर्ध्वं पुनःपाठात् सावित्रादिष्वनुष्ठितेषु पश्चादनुष्ठानं कार्य्यम्।

द्वादशाधिकरणमारचयति।

• चयने रुक्मभृत्यादिः पुरोत स्वामिसंस्कृतिः।
पाठादाद्योऽन्तिमः क्लृप्तक्रमात् पाठस्य न क्षतिः॥२०॥

अग्निचयने दीक्षणीयादेरूर्ध्वं रुक्मधारणमाम्नातम्। कण्ठे धृतः सन् उरसि लम्बमानः सौवर्ण आभरणविशेषो रुक्मशब्दार्थः। उखास्थितोऽग्निः शिक्य ऽवस्थापितुः कण्ठे धार्य्यमाण उरःप्रदेशं यथा न दहति। तथा व्यवधायकत्वेन तद्धारणम्। अत एव ब्राह्मणम्। रुक्ममन्तरं प्रतिमुञ्चतेऽमृतमेव मृत्योरन्तर्धत्त इति। यजमानसंस्काराश्च वपनादयः प्रकृतौ दीक्षणीयानन्तरभाविन इह चोदकेन प्राप्ताः। तेभ्यः पूर्वमेव रुक्मप्रतिमोकः पदार्थः। तस्य प्रत्यक्षेण पाठात्। सावित्रादिषु तस्यादृतत्वादिति चेत्। मैवम्। यजमानसंस्काराणां दीक्षणीयानन्तर्य्यं प्रकृतौ क्लृप्तम्। रुक्मस्य तु पाठेन तत् कल्पनीयम्। तस्मात् संस्काराः पूर्वभाविनः। न च सावित्रदृष्टान्तो युक्तः। दीक्षणीयाया इव संस्काराणां रुक्मप्रतिमोकादूर्ध्वं पुनःपाठाभावात्। न च दीक्षणीयानन्तर्य्यं बाधिते रुक्मप्रति-

मोकपाठवैयर्थ्यम्। स्वरूपबोधनेन चरितार्थत्वात्। ततो सूक्तप्रतिमोकः पश्चात् कार्य्यः।

इति माधवीये जैमिनीयन्यायमालाविस्तारे पञ्चमाध्यायस्य द्वितीयः पादः।

---

तृतीयपादस्य प्रथमाधिकरणमारचयति।

एकादश प्रयाजाः किं प्रत्येकं स्यादुतान्यथा।
संख्यावृद्धिरिहाद्योऽस्तु प्रति मुख्यं गुणो यतः॥ १॥
प्रत्येकं समुदाये वा स्वरूपेण न सिध्यति।
संख्यावृद्धिः प्रयोगस्य सावृत्त्या सम्भविष्यति॥ २॥

अग्नीषोमीयपशौ श्रूयते। एकादश प्रयाजान् यजतीति। तत्र चोदकप्राप्तेषु पञ्चसु प्रयाजेष्वेकैकस्य प्रयाजस्येयमेकादशत्वसंख्या युक्ता। कुतः। प्रयाजानुद्दिश्य संख्यागुणे विहिते सति प्रति प्रधानं गुणस्याभ्युपेयत्वादिति प्राप्ते ब्रूमः। न ह्येकैकस्य प्रयाजस्य स्वरूपमात्रमुपजीव्येयमेकादशत्वसंख्या सम्पादयितुं शक्या। नापि पञ्चप्रयाजसमुदायस्य स्वरूपे सास्ति। तस्मात् प्रयोगद्वारा सा सम्पादनीया। प्रयोगस्य चावर्त्तयितुं शक्यत्वात् पञ्च प्रयाजान् द्विरावर्त्त्य पुनरपि चरमप्रयाजे सकृदावर्त्तिते सत्येकादशत्वसंख्या सम्पद्यते।

द्वितीयाधिकरणमारचयति।

आवृत्तिरूपसत्त्वेषा संघस्यैकैकगायवा।
त्रिरभ्यासं पठेत्वादाविव स्यात् समुदायगा॥ १॥

प्रथमा मध्यमाभ्येति प्राकृतक्रमसिद्धये।
एकैकस्या द्विरभ्यासे षट्संख्यापि प्रसिध्यति ॥४॥

अन्यो ब्रूते। "षडुपसद" इति। तत्र चोदकप्राप्तानां तिसृणामुपसदां पूर्वन्यायेनावृत्त्या षट्संख्या सम्पादनीया। सा चावृत्तिर्दण्डकलितवत् समुदायस्य युक्ता। यथा दण्डेन भूप्रदेशं संमिमानः पुरुष आमूलाग्रं कृत्स्नं दण्डं पुनः पातयति। न तु दण्डस्य प्रत्यवयवं पृथगावृत्तिं करोति। यथा त्रिवारं रुद्राध्यायं जपतीत्यत्र कृत्स्न एवाध्याय आवर्त्यते। न त्वध्यायैकदेश एकोऽनुवाकः पृथगेव त्रिः पठ्यते। तथा तिसृणामुपसदां समुदाय आवर्त्तनीय इति चेत्। मैवम्। प्राकृतक्रमबाधप्रसङ्गात्। एवं हि प्रकृतौ दीक्षानन्तरभाविनि दिने होतव्या प्रथमोपसत्। तत ऊर्ध्वं दिने द्वितीया। ततोऽप्यूर्ध्वं दिने तृतीया। ता एताः सकृदनुष्ठाय पुनरुपरितनदिनेऽनुष्ठीयमानायाः प्रथमायाः प्रथमात्वमपैति। चतुर्थीत्वमायाति। तस्मात् प्राकृतक्रमसिद्धये प्रथमां दिनद्वयेऽभ्यस्य ततो द्वितीयां द्विरभ्यस्येदित्येवं स्वस्थानविवृद्ध्या तासामावृत्तिः कार्या। न चाध्यायदृष्टान्तो युक्तः। अनुवाकसमुदायस्यैवाध्यायत्वात्। अध्यायस्य चावृत्तिविधानात्। न त्विह समुदायस्योपसत्त्वमस्ति। तस्मात् प्रत्येकमुपसदावर्त्तनीया। अनेन न्यायेन प्रयाजानामेकादशत्वसिद्धये स्वस्थानविवृद्ध्यो-त्तमः प्रयाजस्त्रिरभ्यसनीयः।

तृतीयाधिकरणमारचयति।

सामिधेन्यो बर्हिर्मन्त्रामागन्तोर्मध्यतः स्थितिः।

अन्ते वा मध्यतो धाय्याशब्दितानां तथेक्षणात् ॥ ५ ॥

इध्यमानेध्यवत्योस्ता मध्ये धाय्याविधानतः ।

आगन्तूनामधाय्यानां निवेशोऽन्ते हि युज्यते ॥ ६ ॥

दर्शपूर्णमासयोः सामिधेनीषु श्रूयते । एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्येति । तत्र पठिताः सामिधेन्य ऋच एकादशैव । त्रिः प्रथमामन्वाह त्रिरुत्तमामिति विधानादावृत्त्या पञ्चदश सम्पद्यन्ते । अवशिष्टानां षसामृचां दशतयीपठितानामागमेन संख्यापूरणं वक्ष्यते । तस्य चागन्तोर्मन्त्रस्य सामिधेनीनां श्रूयमाणानां मध्ये निवेशो युक्तः । कुतः । धाय्याशब्दोदितामागन्तूनां मन्त्राणां मध्ये निवेशदर्शनादिति चेत् । मैवम् । धाय्याना मध्यदेशस्य विहितत्वात् । इयं वै समिध्यमानवती । असौ समिद्धवती । यदन्तरा तद्धाय्या इति श्रूयते । पठितास्वेकादशसु सामिधेनीषु समिध्यमानो अध्वर इत्यसावष्टमी । समिद्धो अग्न आहुतेत्यसौ नवमी । तयोर्मध्ये धाय्यानां स्थानम् । धाय्यात्वं च न सर्वेषामागन्तुमन्त्राणाम् । किन्तु केषाञ्चिदेव । पृथुपाजवत्यौ धाय्ये इत्यादिविशेषविधानात् । पृथुपाजा अमर्त्य इत्याद्यृगद्वयमित्यर्थः । न च धाय्यानामिवेतरेषामागन्तूनां मन्त्राणां पठितसामिधेनीक्रमविच्छेदेन मध्ये निवेशनाय किञ्चित् प्रमाणमस्ति । तस्मादागन्तूनामन्ते निवेशः ।

चतुर्थाधिकरणमारचयति ।

स्तोमवृद्धौ किमागन्तोर्मध्येऽन्ते वास्तु मध्यतः ।

दाशमाइवदत्रत्र मध्यान्नान्ते न मध्यतः ॥ ७ ॥

इदमाम्नायते । एकविंशेनातिरात्रेण प्रजाकामं याज-

येत्। त्रिणवेनौजस्कामम्। त्रयस्त्रिंशेन प्रतिष्ठाकाममिति। तत्र प्रकृतौ बहिष्पवमानस्तोत्रे त्रयस्तृचा भवन्ति। उपास्मै गायता नर इत्यादिरेकः। दविद्युतत्या रुचेत्यादिर्द्वितीयः। पवमानस्य त्यादिस्तृतीयः। तेषु त्रिषु तृचेषूर्द्ध्वगानेन त्रिवृत्स्तोमो भवति। न त्वत्र पञ्चदशसप्तदशस्तोमादीनामिवावृत्तगानमस्ति। स च बहिष्पवमानविकृतावतिरात्रे चोदकेन प्राप्तः। तत्र त्रिवृत्स्तोमं बाधितुमेकविंशादिस्तोमा विहिताः। बहिष्पवमाने आवृत्तगानाभावात्त्रिषु तृचेष्ववस्थिताभिर्नवभिर्ऋग्भिरेकविंशस्तोमपूरणाभावात्तत्पूरणाय चत्वारस्तृचा आगमयितव्याः। त्रिणवस्तोमपूरणाय षट्तृचाः। त्रयस्त्रिंशस्तोमपूरणायाष्टौ तृचाः। ऋगागमनं चोपरिष्टाद्वक्ष्यते। तेषां चागन्तूनां मन्त्राणां प्राकृतबहिष्पवमानमध्ये निवेशः कार्य्यः। कुतः। द्वादशाहे तद्दर्शनादिति प्राप्ते ब्रूमः। द्वादशाहे हि वचनमेवमाम्नायते। स्तोत्रीयानुरूपौ तृचौ भवतः। वृषण्वन्तस्तृचा भवन्ति। तत उत्तमः पर्य्यास इति। अयमर्थः। प्राकृतानां बहिष्पवमानगतानां त्रयाणां तृचानां स्तोत्रीयोऽनुरूपः पर्य्यासश्चेति त्रीणि नामानि। तत्र चोदकागतयोरनुरूपपर्य्यासयोस्तृचयोर्मध्ये वृषण्वच्छब्दयुक्तास्तृचाः कर्त्तव्या इति। न चैवमतिरात्रे मध्ये निवेशनाय वचनमस्ति। तस्मात् क्रमसक्रममबाधितुमागन्तूनामन्ते निवेशः।

पञ्चमाधिकरणमारचयति।

आमेवे साम्न आगन्तोरन्ते मध्येऽथवाग्रिमः।

पूर्ववत्रीणि यत्तस्येत्युक्त्या मध्ये निवेशनम् ॥ ८ ॥

पूर्वोदाहृतेऽतिरात्रे माध्यन्दिनार्भवपवमानयोश्चोदकप्राप्तौ पञ्चदशसप्तदशस्तोमौ बाधित्वैकविंशादिविवृद्धस्तोमो वचनादनुष्ठीयते। तत्र बहिष्पवमानवदृगागमनं न भवति। किन्तु सामागमेन स्तोमपूरणमिति दशमे वक्ष्यते। तस्य चागन्तोः साम्नः पूर्वोक्तानामृचामिवान्ते निवेशनात् पठितानां तृचानां मध्ये तत् साम चरमतृचे गातव्यमिति प्राप्ते ब्रूमः। त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् चात्र ह्येवावपन्त्यत एवोद्वपन्तीति हि विशेष आम्नायते। अयमर्थः। स्तोमस्य विवृद्धये साम्नामावापः क्रियते। ह्रासाय चोद्वापः। तावुभावावापोद्वापौ गायत्र्यादिष्वेव। नान्यत्रेति। उक्ता ते जातमन्धस इत्येष माध्यन्दिनपवमानस्याद्यस्तृचः। स्वादिष्ठयेत्येष आर्भवपवमानस्य। तावुभौ गायत्रीच्छन्दस्कौ। तयोरावाप। न तु त्रिष्टुब्जगतीच्छन्दस्कयोरन्ययोस्तृचयोः सामावपनीयम्।

षष्ठाधिकरणमारचयति।

अदाभ्यग्रहचितिण्यावङ्गे किं सवने चितौ।
यागेऽग्नौ वात्र दृष्टत्वादाद्य आवर्ततां ततः ॥ ९ ॥
यागाग्न्योः फलवत्त्वेनानारभ्योक्तेस्तदङ्गता।
सवने सवने तस्मान्नावृत्तिश्चितौ चितौ ॥ १० ॥

अनारभ्य श्रूयते। योऽदाभ्यं गृहीत्वा सोमाय यजत इति। चित्रिणीरुपदधातीति च। तत्र ग्रहाणां सवननिष्पादकत्वं प्रत्यक्षेण दृष्टम्। अदाभ्यग्रहस्यापि सवननि-

प्राङ्कत्वया सवनाङ्गत्वे सति प्रति सवनमद्भ्यां आवृत्ति मीषः। तद्वेष्टकाभिश्चितिनिष्पत्तिरुत्तमाश्चितिश्चीनामिष्टकानां चित्यङ्गत्वे सति प्रति चयनं चितिश्चीनामावृत्तिरिति प्राप्ते ब्रूमः। सोमयागः फलवान्। न तु सवनम्। तथैवाग्निः फलोपेतः। न तु चितिः। तत्रानारभ्याधीतस्य वाक्यात् सम्बन्धः फलवत्त्वेन युक्त इति सवनचयने प्रत्यनङ्गत्वान्नास्ति तयोरावृत्तिः।

सप्तमाधिकरणमारचयति।

चितिश्च्यादेरुत्तमायामुपधानं परायवा।
अव्यवायादुत्तमायां मध्यमायां तु वाक्यतः॥ ११॥

उत्तमायां पञ्चम्यां चितौ चितिश्च्यादेरनारभ्याधीताया इष्टकाया उपधानं युक्तम्। तथा सति प्रकरणाधीतानां क्रमक्रमाणामिष्टकानां परस्परव्यवधानं न प्रसज्येतेति चेन्नैवम्। यां कांचिद् ब्राह्मणवतीमिष्टकामभिजानीयात्तां मध्यमायां चिताविति वाक्येनानारभ्याधीतेन ब्राह्मणेन विहितानामिष्टकानां मध्यमचितौ निवेशः।

अष्टमाधिकरणमारचयति।

लोकंपृणात ऊर्ध्वं स्याच्चितिश्च्युत ततः पुरा।
बादरायणदृष्ट्योऽर्ध्वं पूरणोक्तेस्ततः पुरा॥ १२॥

चितिश्चीरुपदधाति। वज्रिणीरुपदधाति। भूतेष्टका उपदधातीति विहितं चितिश्च्यादिकं मध्यमायां चितौ लोकपृणाभिधाया इष्टकाया ऊर्ध्वमुपधेयम्। कुतः। बादरायणेन तथा दृष्टत्वात्। अन्ते तु बादरायण इति सूत्रेण बाद

रायणस्य मतमुपन्यस्तम्। स चागन्तूनामन्ते निवेशनाच्च। लोकंपृणा च प्रकरणपठितानामन्तिमेष्टका। ततस्तस्या ऊर्ध्वं चित्रिण्यादिकमिति प्राप्ते ब्रूमः। लोकं पृण च्छिद्रं पृणेत्यनेन मन्त्रेणोपधीयमानेष्टका लोकंपृणा तस्याः कर्मण्यूनत्वादिदोषपरिहारेण संपूर्त्तिहेतुत्वं मन्त्रलिङ्गादवगम्यते। ब्राह्मणेऽप्येवमाम्नातम्। यदेवास्योनं यच्छिद्रं तदेतया परिपूरयति लोकं पृण च्छिद्रं पृणेति। यद्येतस्या इष्टकाया ऊर्ध्वं चित्रिण्यादय उपधीयेरन्। तदा चित्रिण्यादिगतं ऊनत्वच्छिद्रत्वे न पूर्येयाताम्। तस्माल्लोकंपृणातः पूर्वं चित्रिण्याद्युपधानम्।

नवमाधिकरणमारचयति।

आहिते पवमानेष्टिसंस्कृते वाग्निहोत्रकम्।
आधानेनाग्निनिष्पत्तेस्तन्मात्रे कर्म सम्भवेत्॥ १३॥
आधानस्यानपेक्षस्य नाग्न्युत्पादकता मता।
समुच्चितस्य हेतुत्वात् कर्म स्यादिष्टिसंस्कृते॥ १४॥

अग्न्याधानादूर्ध्वं विलम्ब्य पवमानेष्टयः क्रियन्ते। द्वादशसु रात्रिषु अनुनिर्वपन्तीति कालविधानात्ताभ्यः पुरा द्वादशसु दिनेष्वग्निहोत्रमनुष्ठेयम्। आधानमात्रेणाहवनीयाद्यग्निनिष्पन्नत्वादिति प्राप्ते ब्रूमः। आधानेन पवमानेष्टिनिरपेक्षेणाहवनीयाद्यग्निर्नोत्पद्यते अन्यथा पवमानेष्टिवैयर्थ्यप्रसङ्गात्। न च विकल्पः। आधानमुपजीव्य तस्यास्तदुत्तरकाले विधानात्। तत इष्टिभिः समुच्चित्यैवाधानमग्न्युत्पादकमितीष्टिभिः संस्कृते वह्नौ पश्चादग्निहोत्रानुष्ठानम्।

दशमाधिकरणमारचयति।

न धावेद्वर्षतीत्यादि चितौ सत्यां क्रतावुत।
आद्यश्चिर्निमित्तत्वान्न क्रतावग्निचित्त्वतः॥ १५॥

इदमाम्नायते। अग्निचिद्वर्षति न धावेन्न स्त्रियमुपेयादिति। तान्येतान्यग्निचिद्व्रतानि चितौ निष्पन्नायां सत्यां तत प्रभृति प्रवर्त्तन्ते। न तु चितेऽग्नौ क्रत्वनुष्ठानं प्रतीक्षन्ते। कुतः। अग्निचित्पदेन चयनस्य निमित्तत्वेनोपन्यासात्। न हि सति निमित्ते नैमित्तिकस्य विलम्बो युक्त इति प्राप्ते ब्रूमः। क्रतावुपयोक्तुमग्निश्चयनेन संस्क्रियते। न चानिष्पन्ने क्रतौ चयनसंस्कारः फलभाग्भवति। तस्मात् क्रतौ निष्पन्ने सति पश्चाच्चयनसाफल्यादयं पुरुषोऽग्निं चितवानित्यमुमर्थमर्हतीति क्रत्वन्ते तानि व्रतानि।

एकादशाधिकरणमारचयति।

इष्टिदण्डादिभिर्दीक्षा किंवेष्ट्यैवाक्रितोऽग्रिमः।
युक्तः संस्कार इष्ट्यैव दण्डादेर्व्यञ्जकत्वतः॥ १६॥

ज्योतिष्टोमे श्रूयते। आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाण इति। अन्यदपि श्रुतम्। दण्डेन दीक्षयति। मेखलया दीक्षयति। कृष्णाजिनेन दीक्षयतीति। तत्रेष्टिवद्दण्डादीनामपि साधनत्वाभिधानात् सर्वैरियं दीक्षेति चेत् मैवम्। इष्टेः क्रियारूपत्वात् संस्कारहेतुत्वं युक्तम्। दण्डादयस्तु द्रव्यरूपा न पुरुषं संस्कर्त्तुं प्रभवन्ति। न चैतावता दण्डादिवैयर्थ्यम्। दीक्षितोऽयमित्यभिव्यञ्जक-

पश्य दृष्टप्रयोजनस्य सद्भावात्। तस्मादिष्ट्यैव दीक्षा सिध्यति।

द्वादशाधिकरणमारचयति।

काम्यनैमित्तिकाः कार्य्या यथापाठं न वाग्रिमः।
पाठस्य क्रमहेतुत्वान्न प्रयोगपृथक्त्वतः॥ १७॥

काम्ययागाः श्रूयन्ते। ऐन्द्राग्नमेकादशकपालं निर्वपत् प्रजाकाम इत्यादयः। तथा नैमित्तिकयागाश्च तस्मिन् काण्डे आम्नाताः। अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वातिपातयेदित्यादयः। तत्र पाठः क्रमहेतुरिति प्रयाजोदाहरणेन वर्णितत्वाद्यथा पाठमेते यागाः क्रमेण कर्त्तव्या इति चेत्। मैवम्। एकप्रयोगाभावेन परस्पर क्रमाकाङ्क्षाया अभावात्। तस्मात् कामो वा निमित्तं वा यदोत्पद्यते। तदा तदौचितो यागः कर्त्तव्यः।

त्रयोदशाधिकरणमारचयति।

एतेनाग्निष्टेति सर्वसंस्थोऽग्निष्टोम एव वा।
अविशेषात् सर्वसंस्था ज्योतिष्टोमोऽत्र वर्ण्यताम्॥१८॥
अग्निष्टोमप्रक्रियात्वात् तस्य प्रथमयज्ञतः।
तेनेष्ट्वान्येन यष्टव्यं संस्था आगन्तवोऽपराः॥ १९॥

ज्योतिष्टोमे श्रूयते। एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमो य एतेनानिष्ट्वाथान्येन यजेत गर्त्तपतितमेव तज्जीर्यते प्रमीयत इति। यथा गर्त्तपतितमुच्छिष्टं पश्वन्नादिकं पुनर्न भाव्यपयुज्यते। केवलं जीर्य्यते। तथा प्रथमतोऽनुष्ठितं यज्ञान्तरं फलाय नोपयुक्तम्। यज्ञ-

ानश्च तेनापराधेनापमृत्युभाग् भवतीत्यर्थः। अग्नि-
ोमोऽत्यग्निष्टोम उक्थ्यः षोडश्यतिरात्रोऽप्तोर्यामो वाज-
ोयश्चेति ज्योतिष्टोमस्य सप्त संस्थाभेदाः। तत्र संस्था-
विशेषमनुपन्यस्य ज्योतिष्टोम इत्येव प्रकृतत्वादेतेनानिष्ट्-
वेतच्छब्दात् सर्वसंस्थोपेतो ज्योतिष्टोमोऽत्र परामृश्यते।
ततः सप्त संस्था अनुष्ठाय पश्चाद् यज्ञान्तरमनुष्ठेयमिति
प्राप्ते ब्रूमः। ज्योतिष्टोमस्य ह्यग्निष्टोमसंस्थैव नैजं रूपम्।
अग्निष्टोमस्य नित्यत्वात्, अत एव प्रकरणमेतदग्निष्टोम
इत्येतच्छब्देन स एव परामृश्यते। अत्यग्निष्टोमादि-
संस्थानां काम्यत्वेनानित्यत्वान्नित्यज्योतिष्टोमस्वरूपत्वमत
एवायुक्तमिति षट्संस्था आगन्तुकाः प्रकारविशेषाः। तस्मा-
दग्निष्टोमस्यैव प्रथमयज्ञत्वात् तेनेष्ट्वा यज्ञान्तरमनुष्ठातुं
शक्यते।

चतुर्दशाधिकरणमारचयति।

अन्येनेत्यत्र संस्थानामुक्तिः सर्वस्य वाऽग्निमः।

संनिधेस्तेर्हि काण्डस्य सर्वस्यो(?)क्तिर्हि वाक्यतः॥ २०॥

पूर्वोदाहृत एव वाक्ये योऽयमन्येनेत्यन्यशब्दः सोऽ
ग्निष्टोमेन समानानामत्यग्निष्टोमादिसंस्थाभेदानेव परामृ
शति। तेषामेव बुद्धौ संनिहितत्वादिति चेत्। मैवम्।
यज्ञानां प्रथमो यज्ञ इत्यनेन वाक्येन सर्वयज्ञप्रतियोगि-
कस्य प्राथम्यस्याभ्यासात्। बुद्धौ संनिहिता अशेषयज्ञा
अन्यशब्देनोच्यन्ते तस्मादत्यग्निष्टोमादयः संस्थाभेदा एका-
हाहीनसत्ररूपाश्च सोमविकृतिरूपाः सर्वे यागा अग्निष्टो-
मात् प्रागननुष्ठेयाः। सोमविकृतीनामेवायं नियमः।

न त्विष्टिपशूनामित्यस्मिन्नर्थे लिङ्गमिदमाम्नायते। प्रजापतिर्वा अग्निष्टोमः स उत्तरानेकाहानसृजत ते सृष्टा अब्रुवन्न वयं स्वेनात्मना प्रभवाम इति तेभ्यः स्वां तनूं प्रायच्छत्तया प्राभवन्निति। तस्मात् सोमविकृतिष्वयं नियमः।

पञ्चदशाधिकरणमारचयति।

एकस्तोमेऽन्यशब्दः स्याद् बहुस्तोमेऽपि वाग्रिमः।
त्रिवृदन्येत्यर्थवादान्नाद्यमात्रस्य सम्भवात्। २७॥

अत्र पूर्वोदाहृतोऽन्ये न्त्ययमन्यशब्द एकस्तोमके क्रतौ वर्त्तते कुतः। अर्थवादेन तदवगमात्। यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते स तं दीपयति यः पञ्चदश स तं य सप्तदश स तं य एकविंश स तमित्यर्थवादः। अस्यायमर्थः त्रिवृदादयश्चत्वारः स्तोमा अग्निष्टोमे विद्यन्ते तेषु त्रिवृत्स्तोमो विकृतिरूपं यज्ञमाप्नोति। स त्रिवृत्स्तोमस्तं यज्ञं दीपयति। प्रकाशयति। सर्वतो व्याप्नोतीति स्तोमान्तरस्याप्रवेशाय त्रिवृत एव सर्वस्मिन् यज्ञे व्यापावयमेकस्तोमकः क्रतुर्भवति। एवं पञ्चदशादिस्तोमव्याप्तियोजनीया। तथा सत्यर्थवादादेकस्तोमकानामेव बुद्धिस्थत्वात्त एवान्यशब्देनोच्यन्ते। एकस्तोमकाश्च पश्वादिष्वहीनेष्वाम्नाताः। त्रिवृदग्निष्टोमो भवति पञ्चदश उक्थ्यो भवतीत्यादयः। तस्मात् तद्विषयोऽन्यशब्द इति प्राप्ते ब्रूमः। स तं दीपयतीत्यत्र प्रकाशकत्वमात्रमुच्यते। तच्च व्याप्तिमन्तरेण सम्बन्धमात्रादुपपद्यते। तस्मादग्निष्टोमप्रतियोगिकतया बहुस्तोमे-

कस्तोमसाधारणत्वेन श्रूयमाणस्यान्यशब्दस्य संकोचहेत्व भावात् सर्वविषयोऽयमन्यशब्दः ।

इति माधवीये जैमिनीयन्यायमालाविस्तरे पञ्चमस्या-
ध्यायस्य तृतीयः पादः ।

---

चतुर्थपादस्य प्रथमाधिकरणमारचयति ।

आश्विनो दशमः पाठो यवाग्वा ऐच्छिकः क्रमः ।
नियतो वाग्रिमः पाठश्रुत्यर्थानां समत्वतः ॥ १ ॥
पाठात् क्रमः कल्पनीयः प्रत्यक्षस्तु श्रुतेः क्रमः ।
क्लृप्तिर्न शक्तिमुख्यत्र श्रुत्यर्थौ प्रबलौ ततः ॥ २ ॥

ज्योतिष्टोमे ऐन्द्रवायवादिग्रहेष्वाश्विनग्रहस्तृतीयस्थाने पठितः । तस्य च दशमस्थानत्वं वाचकेनैव शब्देनाम्नायते आश्विनो दशमो गृह्यत इति । तत्र क्रमबोधकौ श्रुतिपाठौ समबलौ । तथाग्निहोत्रहोमादूर्ध्वं यवागूपाकः पठितः । स चार्थवशात् पूर्वं प्राप्तः । तत्रार्थपाठौ समबलौ । तस्मादुभयत्रैच्छिकः क्रम इति प्राप्ते ब्रूमः । पाठो हि न क्रमस्याभिधायकः । किन्त्वन्यथानुपपत्त्या क्रमं कल्पयति । दशम इत्येषा श्रुतिस्तु साक्षादेव क्रममभिधत्ते । ततः पाठादपि श्रुतिः प्रबला । तथा पाठः क्रमं कल्पयन् वस्तुसामर्थ्यमनुसृत्यैव कल्पयति । वस्तुसामर्थ्यं च यवाग्वाः पूर्वमग्निहोत्रमनुष्ठातुम् । द्रव्यमन्तरेण होमासम्भवात् । तस्मात् पाठेन वस्तुसामर्थ्यलक्षणोऽर्थः

उपजीव्यत इत्यर्थस्य पाठात् प्राबल्यम्। तथा सति श्रुत्यर्थौ पाठं बाधित्वा क्रमं नियच्छतः।

द्वितीयाधिकरणमारचयति।

अवदानादि सान्नाय्ये पूर्वमाग्नेयकेऽथवा।
धर्मप्रवृत्तिक्रमतः सान्नाय्ये पूर्वतोचिता ॥ ३ ॥
प्रदानं पूर्वमाग्नेयेऽवदानं च तथोचितम्।
अङ्गानां मुख्यतन्त्रत्वान्मुख्यक्रमबलित्वतः ॥ ४ ॥

दर्शपूर्णमासयोः सान्नाय्यधर्मा वत्सापाकरणदोहनादय प्रथममाम्नाताः। पुरोडाशधर्मा निर्वापावघातादयः पश्चादाम्नाताः। तेनैव पाठक्रमेण धर्मानुष्ठानं प्रवृत्तम्। ततः प्रावृत्तिकक्रमेणावदानमपि सान्नाय्ये पूर्वमेव कर्त्तव्यमिति प्राप्ते ब्रूमः। याज्यानुवाक्यादिमन्त्रबलादाग्नेये पूर्वप्रदानमित्युक्तम्। तत्र प्रदानं फलप्रत्यासत्त्या मुख्यम्। अवदानं तु तदङ्गम् तथा सति मुख्यक्रममनुसृत्यावदानमप्याग्नेये पूर्वं कर्त्तव्यम्। मुख्यक्रमो हि प्रावृत्तिकक्रमात प्रबलः। प्रावृत्तिके हि क्रमे सान्नाय्ये पूर्वमवदानमभिघारणमासादनं च कृत्वा प्रदानमकृत्वैवाग्नेयेऽवदानादीनि कर्त्तव्यानि। तथा सति सान्नाय्येऽनुष्ठितान्यवदानादीन्यङ्गानि मुख्यात् प्रदानाद्विप्रकृष्यन्ते। मुख्यक्रमाश्रयणे त्वाग्नेये प्रथममवदानादिप्रदानान्तं कृत्वा पश्चात् सान्नाय्ये तदनुष्ठीयते। तत्र नास्त्यङ्गाङ्गिविप्रकर्षः ननु अवदानादिप्रदानान्त एकः पदार्थ इत्युक्तम्। तत्र कुतः क्रमविचारः। एवं तर्हि कृत्वाचिन्तास्तु। अथवा स्विष्टकृदवदानादिविषयैव चिन्तास्तु।

तृतीयाधिकरणमारचयति।

दर्शादीष्ट्वा सोमयागः क्रमोऽयं नियतो न वा।
उक्तेराद्यो न सोमस्याधानानन्तरताश्रुतेः॥ ५॥

दर्शपूर्णमासाविष्ट्वा सोमेन यजेतेति क्त्वाप्रत्ययेनावगम्यमानः क्रमो नियत इति चेत्। मैवम्। सोमेन यक्ष्यमाणोऽग्नीनादधीतेत्याधानानन्तरताया अपि श्रवणात्। तस्मादिष्टिसोमयोः पौर्वापर्यं न नियतम्।

चतुर्थाधिकरणमारचयति।

विप्रस्य सोमपूर्वत्वं नियतं वा न वाग्रिमः।
उत्कर्षतो मैवमग्नीषोमीयस्यैव तच्छ्रुतेः॥ ६॥

इष्टिपूर्वत्वं सोमपूर्वत्वं च विकल्पितमिति यदुक्तं तत्र ब्राह्मणस्य सोमपूर्वत्वमेव नियतम्। कुतः। उत्कर्षश्रवणात् आग्नेयो वै ब्राह्मणो देवतया। स सोमेनेष्ट्वाग्नीषोमीयो भवति। यदेवादः पौर्णमासं हविस्तत्तर्ह्यनुनिर्वपेत्तर्हि स उभयदेवतो भवतीति। अस्यायमर्थः। प्रजापतेर्मुखादग्निर्ब्राह्मणश्चेत्युभावुत्पन्नौ। ततो ब्राह्मणस्याग्निरेक एव देवतेत्याग्नेय एव ब्राह्मणः। न तु सौम्यः। सोमस्य तद्देवतात्वाभावात्। यदा स ब्राह्मणः सोमेन यजेत। तदा सोमोऽप्यस्य देवतेत्यग्नीषोमीयो भवति। तस्मादग्नीषोमीयस्य ब्राह्मणस्यानुरूपं पौर्णमासमग्नीषोमीयं पुरोडाशरूपं हविः सोमादूर्ध्वमनुनिर्वपेत्। तदा स ब्राह्मणो देवताद्वयसम्बन्धो भवतीति। यद्यप्यत्र कर्मान्तरं किञ्चिद्विधीयत इति कश्चिन्मन्यते तथापि पौर्णमासं हविरिति विस्पष्टप्रत्यभिज्ञानान्न कर्मान्तरम् किन्तु दर्शपूर्णमासयोः सोमा-

दूर्ध्वमुत्कर्षः। तस्माद्दिप्रस्य सोमपूर्वत्वमेव नियतमिति प्राप्ते ब्रूमः। नात्र दर्शशब्दः पौर्णमासशब्दो वा कश्चिद्धा गवाचो श्रूयते। पौर्णमासमित्येष तद्धितान्तो हविर्विशेषस्त्वेनोपन्यस्यते। तच्च हविरग्नीषोमीयपुरोडाशरूपमिति देवताद्वयेन संस्तवादवगम्यते। तस्मादेकस्यैव हविष उत्कर्षः। न तु क्रत्वोर्दर्शपूर्णमासयोः। तथा सति ब्राह्मणस्यैकस्मिन्नेवाग्नीषोमीयपुरोडाशे सोमपूर्वत्वनियमः। इतरत्र क्षत्रियवैश्ययोरिवास्यापीष्टिपूर्वत्वसोमपूर्वत्वे विकल्प्येते।

पञ्चमाधिकरणमारचयति।

नर्तुनित्याहितः कालो बाध्यः सोमस्य वाग्रिमः।
अङ्गसाम्यात् पुरैवास्य बाधात् सोमीयबाधनम् ॥ ७ ॥

इदमाम्नायते। सोमेन यक्ष्यमाणोऽग्नीनादधीत। नर्तुं न् सूर्ष्येन्न नक्षत्रमिति। सूर्ष्यतिधातुर्दर्शनार्थे वर्त्तते। ऋतुं नक्षत्रं वा न परीक्षेतेत्यर्थः। अनेन निषेधेनाधानस्य विहितः कालो बाध्यते। न तु सोमस्य विहितः कालः। वसन्ते ब्राह्मणोऽग्नीनादधीत। कृत्तिकास्वग्निमादधीतेत्यादिना वसन्तादृतवः कृत्तिकादिनक्षत्राणि चाधानकालत्वेन विधीयन्ते। सोमस्यापि वसन्ते ज्योतिषा यजेतेत्यृतुर्विहितः। पुष्यनक्षत्रमपि शाखान्तरेण प्राप्तम्। तत्र यद्यप्याधानं न सोमस्याङ्गं तथाप्यङ्गभूताग्निसंस्कारत्वादङ्गतुल्यमेवेति तदीय एव कालो बाधनीय इति चेत्। मैवम्। पूर्वमेव तत्कालस्य बाधितत्वात्। यदैवैनं यज्ञ उपनमेदथादधीतेति सोमयागादिचिकीर्षया कालमाधा-

नस्योपदिशता शास्त्रेण वसन्तवत् क्वत्तिकादिकालो बाधितः। तस्मादृतुनक्षत्रप्रतीक्षानिषेधेन सोमकाल एव बाध्यते।

षष्ठाधिकरणमारचयति।

आज्यं चोत्कृष्यते नो वा तस्याग्नीषोमयोगतः।
आद्यः प्रजापतिं विष्णुं वा यष्टुं शक्तितोऽन्तिमः॥७॥

अग्नीषोमीयस्य पुरोडाशस्य सोमादूर्ध्वमुत्कर्ष इत्युक्तम्। तद्वदुपांशुयाजार्थं यदाज्यं तस्योत्कर्षः कार्यः। अग्नीषोमसम्बन्धस्य समानत्वादिति चेत्। मैवम्। विष्णुप्रजापत्योरपि विधिकल्पितदेवत्वेन यष्टुं शक्यत्वात्। तस्मान्नाज्यस्योत्कर्षः।

सप्तमाधिकरणमारचयति।

द्व्यहकालाः किमैन्द्राग्नाद्याः सद्यस्कालगा उत।
आद्यः प्रकृतिवन्मैवं विकृत्युक्तिविशेषतः॥ ८॥

ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः। सौम्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम इत्यादयो विकृतयो द्व्यहकालाः कुतः। प्रकृतौ तद्दर्शनात्। पर्वण्यन्वाधानमिध्मस्य बर्हिषश्च संनहनं प्रतिपदीष्टिरिति द्व्यहकालत्वं प्रकृतौ दृष्टम्। तथैव विकृतावपि युक्तमिति चेत्। मैवम्। एकाहकालत्वस्य वाचनिकत्वात्। य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेतेति वचनाच्चोदकप्राप्तं द्व्यहकालत्वं बाध्यते।

अष्टमाधिकरणमारचयति।

आमिक्षादेरनियतिः स्यात् सोमादूर्ध्वमेव वा।

अविशेषाद्यथेच्छं स्यान्नासोमेति विशेषतः ॥ १० ॥

वैश्वदेव्यामिक्षेत्यादिः सान्नाय्यविकारः । अग्नीषोमीय-मेकादशकपालं निर्वपेद्वसन्ते ब्रह्मवर्चसकाम इत्यादिरग्नीषोमीयपुरोडाशविकारः । तस्योभयस्य सोमात् प्रागूर्ध्वं वा यथेच्छमनुष्ठानम् । कुतः । विशेषनियामकस्याभावादिति चेत् । मैवम् । नासोमयाजी संनयेदिति निषेधेन सान्नाय्यं सोमादूर्ध्वमुत्कृष्यते । अग्नीषोमीयस्य पुरोडाशस्योत्कर्षः पूर्वमेव दर्शितः । तस्मात्तद्विकारयोरप्युत्कर्षो युक्तः ।

नवमाधिकरणमारचयति ।

एकाहानामनियमो दर्शादेरूर्ध्वमेव वा ।

सोमवत् प्रथमो मैवमनुक्तेः स्यात्तदूर्ध्वता ॥ ११ ॥

गवा यजेतेत्यादिना गवादिनामकाः सोमविकारा एकाहा आम्नाताः । तेषामपि सोमवदिष्टिपूर्वत्वं विकल्पितमिति चेत् । मैवम् । सोमपूर्वत्वं वचनेन साक्षान्नोक्तम् । किन्तु सोमेन यक्ष्यमाणोऽग्नीनादधीतेत्याधानानन्तर्याभिधाने सत्यर्थादिष्टेः पूर्वं सोमानुष्ठानं सम्पद्यते । तस्मादनुक्तं पूर्वभावित्वं चोदको नातिदिशति । अर्थसिद्धमप्यतिदिश्यतामिति चेत् । न । द्वहासम्भवात् । सकृदेवाधानम् । तथा सति तदानन्तर्यं प्रकृतावुपक्षीणम् । न ह्येकस्यानन्तर्यस्य भिन्नकालयोः प्रकृतिविकृत्योः सम्बन्धः सम्भवति । तस्मादिष्ट्युत्तरकालीनत्वं सोमस्य निवारयितुं समर्थस्याधानानन्तर्यस्य विकृतिष्वनतिदेशाद

दर्शपूर्णमासाविष्ट्वा सोमेन यजेतेत्युक्तस्योत्तरकालीनत्वस्याऽतिदेशेनेष्टेरूर्ध्वमेव गवादिविकृतयोऽनुष्ठेयाः ।

इति माधवीये जैमिनीयन्यायमालाविस्तरे
पञ्चमस्याध्यायस्य चतुर्थः पादः ।
समाप्तश्च पञ्चमोऽध्यायः ।

---

# षष्ठोऽध्यायः ।

अनुष्ठानक्रमः सर्वः पञ्चमे सुनिरूपितः ।
कोऽनुष्ठातेत्यपेक्षायामधिकारोऽत्र वर्ण्यते ॥

अनेन पञ्चमषष्ठयोरध्याययोः पूर्वोत्तरभाव उपपादितः ।
षष्ठाध्यायस्य प्रथमपादे प्रथमाधिकरणमारचयति ।

कर्माधिकारः कर्त्तुर्नो किंवास्ति न यदश्रुतः ।
धात्वर्थभाव्यताभानात् फलभोगविवर्जनात् ॥ १ ॥
बलीयस्या विधिश्रुत्यावरुद्धा भावनात्र च ।
भाव्यः स्वर्गः पुमर्थत्वात् कामियोगाच्च सोऽस्त्यतः ॥२॥

दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति श्रूयते । तत्र यागक्रियानिष्पादकत्वं कर्तृत्वम् । फलभोक्तृतया स्वामित्वमधिकारः । तादृशोऽधिकारो यागकर्त्तुर्नास्ति । कुतः । फलभोगाभावात् । तथाहि यजेतेत्यत्राख्यातेन भावना-

भिधीयते। तस्यां च धात्वर्थो भाव्यः। एकपदोपात्तत्वात्। स्वर्गस्तु पदान्तरोपात्तत्वाद्वाक्येन भाव्यतयान्वेतव्यः। तच्च वाक्यमेकपदरूपया श्रुत्या बाध्यते। स्वर्गस्य भाव्यत्वाभावे सति गुणत्वमभ्युपेयम्। स्वर्गशब्दो नात्र सुखवाची किन्तु सुखसाधनं चन्दनादिद्रव्यं ब्रूते। लोके तथा व्यवहारात्। तच्च कामयितुं योग्यम्। तेन द्रव्येण विना यागानिष्पत्तेः। तस्मादस्मिन् वाक्ये फलानभिधाने तद्भोगाभावात् कर्तुर्यागे कर्तृत्वमेव। न त्वधिकार इत्यधिकारलक्षणं नारब्धव्यमिति प्राप्ते ब्रूमः। यजेतेत्यत्र प्रत्ययस्य केवलमाख्यातरूपत्वमेवेति न मन्तव्यम्। किन्तु लिङ्प्रत्ययत्वेन विधिरूपत्वमप्यस्ति। तत्राख्यातत्वाकारेण भावनामाचष्टे। विधित्वाकारेण पुरुषं प्रवर्त्तयति। पुरुषस्य स्वाभिमतफलमन्तरेण न प्रवर्त्तत इति तदपेक्षितं स्वर्गमेव भाव्यतया विधिरुपादत्ते। स्वर्गशब्दोत्कृष्टे सुखे रूढः। द्रव्ये तु लाक्षणिकः। तस्मात सुखस्य भाव्यत्वं विधिश्रुत्या सिद्धम्। धात्वर्थस्य तु भाव्यत्वमेकेन पदेन प्रतीयमानमपि न प्रत्ययेनावगम्यते। किन्तु प्रकृत्या। तथा सति स्वर्गभाव्यत्वं भावनायां प्रत्यासन्नम्। एकेनैव विधिरूपेण आख्यातप्रत्ययेनावगमात्। कामियोगादपि स्वर्गस्यैव भाव्यत्वम्। तस्मात् फलभोगसम्भवे कर्त्तुरधिकारोऽस्तीत्यधिकारलक्षणमारब्धव्यम्।

द्वितीयाधिकरणमारचयति।

अन्धादेर्यास्त्यसौ नो वा स्वर्गेच्छुत्वात् स विद्यते।
प्रधानोक्त्यनुसारेण यथाशक्त्यङ्गवर्णनम्॥ २॥

नैवाज्यावेक्षणादीनां पुरुषं प्रति चोदना।
क्रतुं प्रति विधिस्तस्मान्नाशक्तस्याधिकारिता ॥ ४

अन्धः पङ्गुर्बधिरो मूको गवाश्वादयश्च तिर्य्यञ्च इत्यादीनां चेतनत्वेन निरतिशयसुखरूपे स्वर्गे कामना सम्भवति। अथोच्येत। केषुचिदङ्गेषु शक्तिर्नास्ति। तथाहि। अन्धो नाज्यमवेक्षितुं क्षमः। पङ्गुर्विष्णुक्रमेष्वशक्तः। बधिरो नाध्वर्य्युप्रोक्तं शृणोति। ततः क्रमीर्वाचयतीति विहितस्यानुष्ठानं न सिध्यति। मूकोऽनुमन्त्रणादावशक्तः तिर्य्यञ्चो मनुष्यशक्ता इति। तत्र यथाशक्त्यङ्गानामनुष्ठेयत्वात् स्वर्गकामो यजेतेत्यनेन प्रधानवाक्येन सर्वाधिकारः प्रतीयते। स चाज्यावेक्षणाद्यङ्गवाक्यानुसारेण न संकोचयितुं युक्तः। किन्तु प्रधानानुसारेणाङ्गानुष्ठानमेव संकोचयितुं युक्तम। तस्मादन्धादेरप्यस्त्यधिकार इति प्राप्ते ब्रूमः। यद्याज्यावेक्षणादयः पुरुषार्थतया विधीयेरन्। तदा तल्लोपेऽपि न क्रतोर्वैकल्यम। इह तु क्रत्वङ्गतया ते विहिता इति तल्लोपे क्रतुरेव न निष्पद्येत। तस्मादशक्तस्य नास्त्यधिकारः।

तृतीयाधिकरणमारचयति।

स्त्रिया न सोऽस्त्यस्ति वा नो पुंलिङ्गेन तदीरणात।
प्रकृत्यर्थतया लिङ्गं संख्यावन्नाविवक्षितम ॥ ५ ॥
अस्त्युद्देश्यगतत्वेन संख्यया सदृशत्वतः।
यद्विभक्तिविकारादेरर्थस्तत्प्रकृतेर्न तु ॥ ६ ॥

स्वर्गकामो यजेतेति पुंलिङ्गशब्देनाधिकारिणोऽभिधानात् सोऽधिकारः स्त्रिया नास्ति। न च यद्वेकत्ववल्लिङ्गमविवक्षितमिति वाच्यम्। एकत्ववल्लिङ्गस्य प्रत्ययार्थत्वाभावात्।

पञ्चमाधिकरणमारचयति।

पुंसोरेकस्य वाधानं वसानावित्यतो द्वयोः।
एष क्षौमविधिर्द्वित्वं दम्पत्योरेकता ततः॥ ८॥

आधाने श्रूयते। क्षौमे वसानावग्निमादधीयातामिति। तत्र वसानाविति पुंलिङ्गद्विवचनाद्‌भयोः पुंसोराधानेऽधिकार इति चेत्। मैवम्। क्षौमस्याप्राप्तस्य विधेयतया पुंद्वित्वस्यापि विधाने वाक्यभेदान्न तद्विधीयते। किन्तु दम्पत्योः सहाधिकारेण प्राप्तं द्वित्वमनूद्य ते पतिश्च पत्नी चेति विग्रह्य पतिशब्दस्यैकशेषात् पुंलिङ्गद्विवचनमविरुद्धम्। तस्मादाधानेऽधिकारिणः पुंस एकत्वमेव।

षष्ठाधिकरणमारचयति।

उपस्थानादि दम्पत्योरुत पुंसो द्वयोरिदम्।
यजमानत्वमाम्नाने विद्वत्त्वात् पुंस एव तत्॥ ९॥

अगन्म सुवरित्यनेन मन्त्रेणायमद्य मितमद्द्वरित्यादिमन्त्रेण कर्त्तव्यमादित्यविषयमुपस्थानम। आदिशब्देन वसन्तमृतूनां प्रीणामीत्यादिना विहितमनुमन्त्रणादि। तत् सर्वं दम्पतिभ्यामुभाभ्यां कर्त्तव्यम्। कुतः। यजमानत्वस्योभयोः समानत्वात्। ततो यजमानत्वसमाख्यया यथा पुमानुष्ठीयते। तथा स्त्रियापीति चेत्। मैवम्। अध्ययनरहितया स्त्रिया तदनुष्ठातुमशक्यत्वात्। तस्मात् पुंस एवोपस्थानादिकम्।

सप्तमाधिकरणमारचयति।

शूद्रोऽपि यष्टा नो वा स्याद्वैधाध्ययनेन वा।
उपदेष्टृमुखाद्वास्य क्रतुवित्त्वेन यष्टृता॥ १०॥

त्रैवर्णिकैर्वेदविद्भिः कृतार्थो विषयः क्रतोः ।

नाक्षिपन्ति चतुर्थस्य विद्यां तद्‌ यष्टृता कुतः ॥ ११ ॥

लिखितपाठादिना तात्कालिकाचार्य्योपदेशेन वा शूद्र-
स्याप्यनुष्ठानहेतुभूतविद्यासम्भवाच्छूद्रोऽपि यागाधिकारीति
चेत् । मैवम् । क्रतुविधिवैयर्थ्यपरिहाराय हि शूद्रस्य
विहितापि विद्या कल्प्यते । क्रतुविषयस्य त्रैवर्णिकानुष्ठान-
नैव चरितार्थाः सन्तो न शूद्रस्य विद्यां कल्पयन्ति । त्रैवर्णि-
कानां तु विद्या न कल्पनीया । अध्ययनविधिनैव विहित-
त्वात् । तस्मान्न शूद्रस्य यागाधिकारः ।

अष्टमाधिकरणमारचयति ।

धन्येव कर्त्तेत्यन्योऽपि धन्येव विधिसार्थ्यतः ।

अन्योऽधिकुरुते द्रव्यमाक्षिपेद्‌ भुक्तिवत्क्रतुः ॥ १२ ॥

यथा विद्याधिकारहेतुः । तथा धनमपीति धनिन एव
यागाधिकारः । तावता विधीनां सार्थकत्वात् । विधे-
रन्यथानुपपत्त्या दरिद्रस्य धनार्जनमाक्षेप्तुमशक्यम् । तस्मा-
च्छूद्रवद्‌ दरिद्रोऽपि न कर्माधिकारीति चेत् । मैवम्
धनिकस्यापि धनार्जनं न यागविधिभिराक्षिप्तम् । भो-
जनादिभिर्धनकार्य्यैरेव तस्याक्षिप्तत्वात् । अत एव विद्या-
अध्ययनविधिरिव धनार्जनस्य न कोऽपि विधिरस्ति
याजनादिविधय उपायनियमार्था इति स्थितम् । तस्मा-
भोजनादिवत्क्रतोरपि धनकार्य्यत्वेन धनार्जनापेक्षत्वा-
दरिद्रोऽपि धनार्जनं कृत्वा क्रतावधिकरोति ।

नवमाधिकरणमारचयति ।

अङ्गहीनो न कुरुते कर्त्ता वा नाक्षमत्वतः ।

समाधायाङ्गवैकल्यं करोति द्रव्यहीनवत्॥ १३ ॥

कश्चिद्दीर्घरोगित्वादाज्यमवेक्षितुमसमर्थः। अन्यो वातरोगित्वात्स्वाधीनपादो विष्णुक्रमेष्वसमर्थः। अतो नाङ्गहीनः कर्माधिकारीति चेत्। मैवम्। धनहीनो यथा धनं सम्पाद्याधिकरोति। तथा विकलाङ्गोऽप्यौषधादिना वैकल्यं समाधायाधिकरोतु।

दशमाधिकरणमारचयति।

असमाधेयवैकल्ये कथं काम्येष्वकर्तृता।
नित्येषु त्वाहिताग्निश्चेद् यथाशक्ति करोति हि॥१४॥

कथमित्यनेन संशयः सूचितः। वैकल्यस्य समाधातुमशक्यत्वेनाक्षमत्वादत्यन्तमनधिकार एवेति चेत्। मैवम्। काम्येष्वङ्गवैकल्ये फलासिद्धेर्मास्तु तत्राधिकारः। नित्यानां त्वाहिताग्निना त्यक्तुमशक्यत्वादीषदङ्गलोपं सोढ्वापि नित्येष्वधिकरोति।

एकादशाधिकरणमारचयति।

विधिर्वरण एकादावपि स्यान्नियम एव वा।
अविशेषात्पञ्च आर्षा वाक्यभेदाय तूत्तरः॥ १५ ॥

दर्शपूर्णमासयोरार्षेयं वृणीत इति विधायेदमाम्नातम्। एकं वृणीते द्वौ वृणीते त्रीन् वृणीते न चतुरो वृणीते न पञ्चातिवृणीते इति। ऋषिगोत्रप्रवर्तकाः कश्यपभरद्वाजादयः। तस्य सम्बन्धी आर्षेयः। तं वृणीते कथयति। उच्चारयति कश्यपगोत्रोऽहम् भरद्वाजगोत्रोऽहमिति तदुच्चारणम्। एकमार्षेयमुच्चारयति तत्रोदाहृतम्। द्वावार्षेयावुच्चारयति। उपमन्यु वसिष्ठगोत्रोऽहमित्यादि। त्रीनार्षेयानुच्चारयति।

त्रैवर्णिकैर्वेदविद्भिः कृतार्थो विधयः क्रतौ ।
नाक्षिपन्ति चतुर्थस्य विद्यां तद् यज्ञना कुतः ॥ ११ ॥

लिखितपाठादिना तात्कालिकाचार्य्योपदेशेन वा शूद्रस्याप्यनुष्ठानहेतुभूतविद्यासम्भवाच्छूद्रोऽपि यागाधिकारीति चेत् । मैवम् । क्रतुविधिवैयर्थ्यपरिहाराय हि शूद्रस्य विहितापि विद्या कल्प्यते । क्रतुविधयस्तु त्रैवर्णिकानुष्ठानेनैव चरितार्थाः सन्तो न शूद्रस्य विद्यां कल्पयन्ति । त्रैवर्णिकानां तु विद्या न कल्पनीया । अध्ययनविधिनैव विहितत्वात् । तस्मान्न शूद्रस्य यागाधिकारः ।

अष्टमाधिकरणमारचयति ।

धन्येव कर्त्तातान्योऽपि धन्येव विधिसार्थ्यतः ।
अन्योऽधिकुरुते द्रव्यमाक्षिपेद् भुक्तिवत्क्रतुः ॥ १२ ॥

यथा विद्याधिकारहेतुः । तथा धनमपीति धनिन एव यागाधिकारः । तावता विधीनां सार्थकत्वात् । विधेरन्यथानुपपत्त्या दरिद्रस्य धनार्जनमाक्षेप्तुमशक्यम् । तस्माच्छूद्रवद् दरिद्रोऽपि न कर्माधिकारीति चेत् । मैवम् । धनिकस्यापि धनार्जनं न यागविधिभिराक्षिप्तम् । भोजनादिभिर्धनकार्य्यैरेव तस्याक्षिप्तत्वात् । अत एव विद्याध्ययनविधिरिव धनार्जनस्य न कोऽपि विधिरस्ति याजनादिविधय उपायनियमार्थी इति स्थितम् । तस्माद् भोजनादिवत्क्रतोरपि धनकार्य्यत्वेन धनार्जनापेक्षत्वाद् दरिद्रोऽपि धनार्जनं कृत्वा क्रतावधिकरोति ।

नवमाधिकरणमारचयति ।

अङ्गहीनो न कुरुते कर्त्ता वा नाक्षमत्वतः ।

समाधायाङ्गवैकल्यं करोति द्रव्यहीनवत् ॥ १३ ॥

कश्चिदक्षिरोगेणाज्यमवेक्षितुमसमर्थः । अन्यो वातरोगेणास्वाधीनपादो विष्णुक्रमेष्वसमर्थः । अतो नाङ्गहीनः कर्माधिकारीति चेत् । मैवम् । धनहीनो यथा धनं सम्पाद्याधिकरोति । तथा विकलाङ्गोऽप्यौषधादिना वैकल्यं समाधायाधिकरोतु ।

दशमाधिकरणमारचयति ।

असमाधेयवैकल्ये कथं काम्येष्वकर्तृता ।
नित्येषु त्वाहिताग्निर्यद् यथाशक्ति करोति हि ॥ १४ ॥

कथमित्यनेन संशयः सूचितः । वैकल्यस्य समाधातुमशक्यत्वेनाक्षमत्वादत्यन्तमनधिकार एवेति चेत् । मैवम् । काम्येष्वङ्गवैकल्ये फलासिद्धेर्मास्तु तत्राधिकारः । नित्यानां त्वाहिताग्निना त्यक्तुमशक्यत्वादापद्यङ्गलोपं सोढ्वापि नित्येष्वधिकरोति ।

एकादशाधिकरणमारचयति ।

विधिर्वरण एकादावपि स्यात्त्रिक एव वा ।
अविशेषान्न पञ्च आर्षो वाक्यभेदाय तूत्तरः ॥ १५ ॥

दर्शपूर्णमासयोरार्षेयं वृणीत इति विधायेदमाम्नातम् । एकं वृणीते द्वौ वृणीते त्रीन् वृणीते न चतुरो वृणीते न पञ्चातिवृणीते इति । ऋषिगोत्रप्रवर्त्तकाः कश्यपभरद्वाजादिः । तस्य सम्बन्ध आर्षेयः । तं वृणीते कथयति । उच्चारयति कश्यपगोत्रोऽहम् भरद्वाजगोत्रोऽहमिति तदुच्चारणम् । एकमार्षेयमुच्चारयति । तत्रोदाहृतम् । द्वावार्षेयावुच्चारयति । उपमन्युवसिष्ठगोत्रोऽहमित्यादि । त्रीनार्षेयानुच्चारयति ।

आङ्गिरसबार्हस्पत्यभारद्वाजगोत्रोऽहमित्यादि। न चतुर आर्षेयानुच्चारयेत्। पञ्चार्षेयानतिक्रम्य षडादीनार्षेयान्नैवोच्चारयेदित्यर्थः। तत्रैकार्षेयद्व्यार्षेयत्र्यार्षेयवाक्येषु विशेषादर्शनादेकं वृणीत इत्यादयस्त्रयोऽपि विषय इति चेत्। नैवम्। वाक्यभेदप्रसङ्गात्। तत्परिहाराय त्रीन् वृणीत इत्यस्यैव विधित्वमस्तु। एकं वृणीते द्वौ वृणीत इत्येतदुभयमवयुत्यानुवादेन स्तावकम्। एकवरणाद्विवरणे अप्रशस्ते अपि यदा कर्त्तव्ये। तदा त्रिवरणस्य प्रशस्तस्य कर्त्तव्यत्वं किमु वक्तव्यमिति स्तुतिः। चतुर्निषेधपञ्चातिक्रमनिषेधाभ्यामपि त्रित्वमेव स्तूयते। न च तयोर्निषेधौ विधातव्यः। प्रसक्त्यभावादेव तदप्रवृत्तेः। चतुरादयोऽत्यन्तविलम्बकारित्वादप्रशस्ताः। त्रित्वं तु न तथेति प्रशस्तम्। तस्मात् कर्मण्यविकुर्वन् यजमानस्त्रीनेवोच्चारयेत्। न न्यूनं नाप्यधिकमिति तात्पर्य्यार्थः।

द्वादशाधिकरणमारचयति।

विप्रादिरेव रथकृदन्यो वाऽद्योऽस्तु योगतः।
रूढ़े वर्णान्तरं तस्याधाने वर्षर्त्तु रुच्यते ॥ १६ ॥

आधानं श्रूयते। वर्षासु रथकार आदधीतेति। तत्र रथं करोतीति व्युत्पत्त्या त्रैवर्णिको रथकार इति चेत्। नैवम्। संकीर्णजातिविशेषे रूढ़त्वात् वैश्यायां क्षत्त्रियादुत्पन्नो माहिष्यः शूद्रायां वैश्यादुत्पन्ना करणी। तस्यां करण्यां माहिष्यादुत्पन्नो रथकारः तथाच याज्ञवल्क्यः। माहिष्येण करण्यां तु रथकारः प्रजायत इति। तस्य च रथकारस्याधानकालो वर्षर्त्तुः।

त्रयोदशाधिकरणमारचयति।

द्विजः स्थपतिरन्यो वा द्विजः षष्ठीसमासतः।

कर्मधारयमुख्यत्वान्निषादो रौद्रयागकृत्॥ १७॥

वास्तुमयं रौद्रं चरुं निर्वपेदिति प्रकृत्य श्रूयते एतया निषादस्थपतिं याजयेदिति। वास्तुशब्दः किञ्चित् प्रकृतिद्रव्यविशेषमाह। एतस्यामिष्टावधिकारी निषादस्थपतिशब्दवाच्यस्त्रैवर्णिकः। कुतः। निषादानां स्थपतिरिति षष्ठीसमासस्य त्रैवर्णिके सम्भवात्। तस्य चाधीतवेदत्वेन विद्यासम्भवाच्चेति चेत्। मैवम्। निषादश्चासौ स्थपतिश्चेति कर्मधारयसमासस्य मुख्यत्वात्। षष्ठीसमासे तु सङ्कीर्णजातिविशेषवाचिना निषादशब्देन तत्सम्बन्ध उपलक्ष्येत। न त्वयं कर्मधारये दोषोऽस्ति। ततस्तात्कालिकाचार्य्योपदेशादिना विद्यां सम्पाद्य ऽनको निषादो रौद्रयागं कुर्य्यात्।

इति माधवीये जैमिनीयन्यायमालाविस्तरे
षष्ठस्याध्यायस्य प्रथमः पादः।

---

द्वितीयपादस्य प्रथमाधिकरणमारचयति।

सत्त्रे फलांशः प्रत्येकं सर्वं वाद्यः समूहके।

कर्तृत्वादन्य एकैकस्यापि तत्स्याद् बहुत्वतः॥ १॥

इदमाम्नायते। ऋद्धिकामाः सत्त्रमासीरन्निति। अत्र सत्त्रे बहूनां समुदायस्य कर्तृत्वमवगतम्। सप्तदशावराः सत्त्रमासीरन्निति श्रवणात्। कर्तृत्वेन समुदायस्यैव फलि-

त्वात् पुरुषाणां प्रत्येकं फलांश एव न तु सर्वं फलमेकैकस्येति चेत्। मैवम्। एकैकस्यापि समुदायान्तःपातिनः कर्तृत्वसद्भावात्। अन्यथा समुदायस्यैकत्वेन सत्त्रमासीरन्निति श्रुतं कर्तृबहुत्वं नोपपद्येत तस्मादेकैकस्य कर्तुः सर्वफलसद्भावात् सर्वफलकामिनामेवात्राधिकारः। न त्वंशफलकामिनाम्।

द्वितीयाधिकरणमारचयति।

दर्शे कर्त्रैक्यनियमो नास्त्युतास्ति न कामिनि।
उद्देश्ये ग्रहवत्संख्या यतो नैव विवक्षिता॥ २॥
आख्यातोपात्तसंख्यात्र विधेयस्य विशेषणम्।
विवक्षितातः सत्यत्र कर्त्रैक्यं विनियम्यते॥ ३॥

दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यत्र स्वर्गकाम उद्देश्यः। तद्गतं चैकत्वं ग्रहैकत्ववदविवक्षितम्। तस्मादेको द्वौ बहवो वा दर्शपूर्णमासयोरधिकारिण इति प्राप्ते ब्रूमः। माभूत् स्वर्गकामपदगतस्यैकत्वस्य विवक्षा। यजेतेत्याख्यातगतं तु यदेकत्वं तद्विधेयस्य विशेषणात्। विधेया तु क्रिया, सा च स्वसिद्धये कारकान्तरवत् कर्तारमप्याक्षिपतीति क्रियाद्वारा कर्तापि विधेयः। अतो विधेयकर्तृगता येयमेकत्वसंख्या सा विवक्षितेति कर्त्रेकत्वं नियम्यते।

तृतीयाधिकरणमारचयति।

असमाप्य समाप्यं वा काम्यं कामे निवर्त्तिते।
आद्यः प्रयोजनाभावादन्त्यो निन्दादिसंश्रवात्॥ ४॥

चित्रया यजेत पशुकामः। कारीर्या वृष्टिकामो यजे-

नित्यादिषु कामप्रेरितेन पुरुषेण कर्मोपक्रान्तम्। तस्य च समाप्तेः प्रागेव केनापि निमित्तेन तत्फलप्राप्तौ दोषदर्शनेन वा कामो निवर्त्तते। तदा कर्मानुष्ठाने प्रयोजनाभावान्न समापनीयमिति चेत्। मैवम्। प्रक्रान्तस्य कर्मणोऽसमाप्तौ निन्दाप्रायश्चित्तयोः श्रवणात्। देवताभ्यो वा एष आवृश्च्यते यो यक्ष्य इत्युक्त्वा न यजते। त्रैधातवीयेन यजेतेति तदुभयं श्रुतम्। तस्मात् समापनीयम्।

चतुर्थाधिकरणमारचयति।

समाप्यमसमाप्यं वा लौकिकं शास्त्रकल्पनात्।
आद्यो नो गृहकृत्यादौ शास्त्रकल्पकवर्जनात्॥ ५॥

रथगृहनिर्माणादिरूपं यल्लौकिकं कर्म तदपि तच्चस्मृतावुक्तमिति वेदमूलत्वकल्पनाच्चित्रायागादिवन्निवृत्तेऽपि कामे समापनीयमिति चेत्। मैवम्। रथादौ रमणीयत्वस्य प्रयोजनस्यान्वयव्यतिरेकाभ्यामेव सिद्ध्युपायावगमात् तर्कोहापोहकुशलपुरुषोत्प्रेक्षामूला तच्चस्मृतिर्न वेदं कल्पयितुं प्रभवति। तस्मादवश्यं समापनीयमिति नास्ति नियमः।

पञ्चमाधिकरणमारचयति।

पर्य्युदासो निषेधो वा नाद्याद् गृञ्जनमित्यसौ।
नञ्धात्वोरन्वयादाद्यः कल्प्यं संकल्पतः फलम्॥ ६॥
पदान्वयात् तु नञ्विध्योर्निषेधोऽनर्थहानये।
संकल्पे लक्षणाप्राप्तिर्नैव काम्यविधिस्ततः॥ ७॥

अनारभ्य श्रूयते। न कलञ्जं भक्षयेन्न लशुनं न गृञ्जनमिति। तत्र न भक्षयेदिति सन्निधिवशान्नञ्धात्वोरन्वये

सत्यभक्षणमिति पर्य्युदासः सम्पद्यते तथा सति नेक्षेतो-द्यन्तमादित्यमित्यादाविव सङ्कल्पो विधेयः। तस्य चाभक्षणसङ्कल्पस्य विश्वजिन्न्यायेन स्वर्गः फलत्वेन कल्पनीय इति चेत्। मैवम्। पदैकदेशस्य धातोः पदान्तरेणान्वेतुमयोग्यत्वाद्विधायकपदस्य नञ्पदेनान्वये सति रागप्राप्तां भक्षणप्रवृत्तिमनूद्य निषेधस्य विधेयत्वात्। न च निषेधो व्यर्थः। नरकपातनिवारकत्वात्। एवं च सत्यश्रुतं न किमपि कल्पनीयम्। त्वत्पक्षे त्वश्रुतः सङ्कल्पः सङ्कल्पनीय इति तदर्थं भक्षणशब्दे लक्षणाश्रयितव्या। तस्मात् स्वर्गकामिनो नात्राधिकारः। किन्तु नरकाद्भीतस्याधिकारः।

षष्ठाधिकरणमारचयति।

प्राङ्मुखत्वादिनियम उपनीतेः पुराऽस्त्युत।
ऊर्ध्वं मन्त्राग्न्यसाध्यत्वादाद्योऽन्त्योऽस्तु तथा स्मृतेः॥८॥

प्राङ्मुखोऽन्नानि भुञ्जीत। गुरुरनुगन्तव्योऽभिवादयितव्यश्च। वृद्धः प्रत्युत्थेयः संमन्तव्यश्चेत्यादिस्मार्त्तनियम उपनयनात् प्रागप्यनुसर्त्तव्यः। तस्य नियमस्य वैदिकैर्मन्त्रैराहवनीयाद्यग्निभिर्वा साध्यत्वं नास्तीति प्रागपि तत्सम्भवादिति चेत्। मैवम्। श्रौतस्याध्ययनादिनियमस्योपनयनानन्तरभावित्वेन वेदमूलस्मृतिप्राप्तनियमस्याप्युत्तरस्मिन्नेव काले युक्तत्वात्। अत एव स्मर्य्यते। उपनयनादिनियम इति। प्रागुपनयनात् कामचारवादभक्षा इति च। तस्मादुपनयनात् पूर्वं नास्ति नियमः।

सप्तमाधिकरणमारचयति ।

यावज्जीवेति सातत्यं स्वकाले वा निमित्ततः ।
कालाङ्गलोपादाद्यः स्याद्वैधात्यागतोऽन्तिमः ॥ ८ ॥

इदमाम्नायते । यावज्जीवमग्निहोत्रं जुहोति । यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेति । तत्र जीवनस्य निमित्तत्वेनोपन्यासात् सति निमित्ते नैमित्तिकस्यावश्यभावात् जीवतोऽनुष्ठानसातत्यमत्र वर्ण्यते । ननु सायंप्रातःकालावग्निहोत्राङ्गत्वेन चोदितौ । अमावास्यापौर्णमासीकालौ दर्शपूर्णमासयोः । तथा सत्यङ्गलोपः सातत्ये प्रसज्येत । नायं दोषः । प्रधानलोपादरमङ्गलोप इति न्यायात् । तस्मात् सातत्यमिति प्राप्ते ब्रूमः । यद्यपि सायंप्रातरादिकालोऽङ्गं तथाप्यनुपादेयतया प्रयाजादिवद्विधेयो न भवति । किन्तु तस्मिन् काले स्वतः प्राप्ते सति कर्मानुष्ठेयतया विधीयते । तस्य च कालस्य जीवनरूपनिमित्तसंकोचकत्वेनैवान्वयः । तथा सत्युक्तकालविशिष्टमेव जीवनं निमित्तम् । तस्मिन् निमित्ते जीवनरूपो विशेष्यांशो यथा न वैधो नापि त्यक्तुं शक्यः । तथा विशेषणांशः कालोऽप्यविवेयो न त्यक्तुं शक्यश्च । तस्माद्वैधस्य त्यागासम्भवान्न सातत्यम् । किन्तु स्वकालेऽनुष्ठानम् ।

अष्टमाधिकरणमारचयति ।

सकृत्कृतिकृतावृत्तिर्दर्शादेः शास्त्रसार्थतः ।
सकृत् स्यात् कालसंयुक्तजीवनावृत्तितोऽन्तिमः ॥ १० ॥

दर्शपूर्णमासादीनां सकृदेवानुष्ठानम् । तावता विधि-

शास्त्रस्य चरितार्थत्वादिति चेत्। मैवम। कालविशिष्ट-जीवननिमित्तस्यावृत्तौ नैमित्तिकस्याप्यावर्त्तनीयत्वात्। तस्मादावृत्तिः।

नवमाधिकरणमारचयति।

क्रतौ सकृद्दहोमोऽसकृद्वा क्रतुसिद्धितः।

सकृन्निमित्तभेदस्यावृत्तौ होमोऽसकृद्भवेत्॥ ११॥

दर्शपूर्णमासयोः कुम्भ्यादिपात्रभेदमाज्यादिस्कन्दनं च निमित्तीकृत्य होम आम्नायते। भिन्ने जुहोति। स्कन्ने जुहोतीति। सोऽयं होमः सकृत् कार्य्यः। तावतैव क्रतूपकारसिद्धेरिति चेत्। मैवम्। भेदस्य स्कन्दनस्य वा निमित्तस्यावृत्तौ होमस्याप्यावर्त्तनीयत्वात्। तस्मान्नास्ति सकृत्त्वनियमः।

दशमाधिकरणमारचयति।

यथाकाम्यमुतावृत्तिर्गुरोरनुगमादिषु।

स्यादाद्यः प्रीतिहेतुत्वान्नियमादृष्टतोऽन्तिमः॥ १२॥

गुरुरनुगन्तव्योऽभिवाद्यश्चेति विहितेषु गुरुप्रीति-रूपस्य दृष्टस्यैव प्रयोजनत्वात प्रीत्यनुसारेणानुगमनादिकं सकृद्वा स्वेच्छया कर्त्तव्यमिति चेत्। मैवम्। दृष्टार्थेष्वपि विहितेषु नियमादृष्टसम्भवात् यदा यदा गुरुगमनादि-निमित्तं सम्पद्यते। तदा तदानुगमनादीन्यनुष्ठेयानि।

एकादशाधिकरणमारचयति।

सोमाधीतिप्रजं काम्यं नित्यं वा कामतोऽग्रिमः।

वीप्सानुष्ठेयविज्ञानलोकैस्तन्नित्यतेष्यते। १३॥

इदमाम्नायते। सोमेन यजेत. स्वाध्यायमधीयीत।

प्रजामुत्पादयेदिति। तत्र सोमः काम्यः। ज्योतिष्टोमेन स्वर्गकामो यजेतेति कामसंयोगेनाम्नातत्वात्। अध्ययनप्रजोत्पादनयोरपि विश्वजिन्न्यायेन स्वर्गे फलत्वेन कल्पिते कर्मियोगोऽपि कल्प्यते। तस्मादिदं त्रयं काम्यमिति चेत्। मैवम्। वीप्सादिना नित्यत्वसिद्धेः। वसन्ते वसन्ते ज्योतिषा यजेतेति वीप्सा प्रतिवसन्तं निमित्तीकृत्य सोमयागं विधत्ते। अध्ययनस्य तु न स्वर्गः फलम्। दृष्टप्रयोजनस्यानुष्ठेयविज्ञानस्य सम्भवात्। तत्र क्रत्वनुष्ठानस्य नित्यत्वाद्धेतोरध्ययनस्यापि नित्यत्वमनिवार्य्यम्। अनुत्पाद्य सुतान्न लोकं गच्छतीति स्मृतेर्लोकसिद्ध्यर्थमुत्पादनस्यापि नित्यत्वम्। अनेनैवाभिप्रायेणेदमाम्नातम्। जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवाञ्जायते ब्रह्मचर्य्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजाया पितृभ्य। एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारिवासीति। अत्र ब्राह्मणग्रहणमितरयोरप्युपलक्षणार्थम सोमादिविधिषु विशेषस्याश्रवणात्। तस्मात् सोमादिकं नित्यम्।

इति माधवीये जैमिनीयन्यायमालाविस्तरे षष्ठस्याध्यायस्य द्वितीयः पादः।

---

तृतीयपादस्य प्रथमाधिकरणमारचयति।

नित्ये सर्वाङ्गसंहारः शक्त्या वाद्यः फलित्वतः।

शक्त्या त्यागासम्भवेन निमित्ते जीवने स्थिते॥ १॥

यावज्जीवमग्निहोत्रं जुहोतीत्यादौ नित्ये कर्मणि सर्वाण्यङ्गान्युपसंहृत्य तद्विशिष्ट एव प्रयोगः कर्त्तव्यः। कुतः। भावनांशस्य कथम्भावस्य समुच्चितैः सर्वैरङ्गैः परिपूरणेन सर्वाङ्गोपेतस्यैव प्रधानस्य फलवत्त्वादिति चेत्। मैवम्। अग्निहोत्रदर्शपूर्णमासादिशब्दवाच्यं प्रधानम्। तस्य च स्ववाक्यगतजीवननिमित्तेनान्वयात् सति जीवने प्रधानं कर्म त्यक्तुमशक्यम्। ततो वाक्यान्तरगतेष्वङ्गेषु शक्यं किंचिदङ्गं परित्यज्यापि शक्यैरङ्गैरुपेतं प्रधानं कर्मानुष्ठेयम्।

द्वितीयाधिकरणमारचयति।

काम्ये शक्तौ सर्वाङ्गं शक्त्या लोपस्य सम्भवात्।
मैवं लोपे निष्फलत्वात्काम्येऽङ्गं न लुप्यते ॥ २ ॥
प्रधानानुष्ठितौ यद्वज्जीवनस्य निमित्तता
काम्यस्य न तथा यस्मात् काम्यं त्यक्तुं हि शक्यते ॥ ३ ॥

यथा नित्येष्वग्निहोत्रादिकर्मस्वशक्यमङ्गं परित्यक्तम् तथा काम्येष्वप्यैन्द्राग्नसौर्यादिष्वशक्याङ्गलोपसम्भवाच्छक्याङ्गोपेतमनुष्ठेयमिति चेत्। मैवम्। अङ्गलोपे काम्यमानफलानुत्पत्तेः। सर्वाङ्गोपेतमेव हि प्रधानं फलसाधनं विहितम्। तत्र प्रधानस्य त्यागे यथा नास्ति फलम् तथाङ्गत्यागेऽपि। फलसाधनत्वं हि शास्त्रैकसमधिगम्यम्। ततो यथावदङ्गं वा प्रधानं वा शब्दोपात्तं तस्य लोपे साधनत्वं नास्ति। न हि गमनसाधनस्य रथस्य चक्राद्यङ्गेष्वन्यतमस्य वैकल्ये गमनसाधनत्वं दृष्टम्। तस्माद् यदा सर्वाङ्गोपसंहारः कर्तुं शक्यते। तदैव काम्यमनु-

ष्ठेयम्। न च नित्येऽप्येवमस्त्विति शङ्कनीयम्। जीवनं निमित्तीकृत्य तत्र विधानात्। यथा गृहदाहं निमित्तीकृत्य विहिता क्षामवतीष्टिरवश्यं कर्त्तव्या। यथा वा लोके निमित्तभूतायां बुभुक्षायां सत्यां भोजनमवश्यं कर्त्तव्यम्। तथा जीवने सति कर्मावश्यमनुष्ठेयम्। न च जीवनवत् फलकामनाया अपि निमित्तत्वं शङ्कनीयम्। सत्यामपि कामनायां कर्मणोऽवश्यम्भावाभावात्। न हि कामिनः कर्माननुष्ठाने प्रत्यवायः श्रूयते। ननु शास्त्रीयप्रत्यवायाभावेऽपि फलानुत्पत्तिलक्षणो बाधोऽस्त्येव। यथा बुभुक्षोरभोजने राजदण्डाभावेऽपि पित्तक्षोभरूपो बाधोऽस्ति। तद्वदिति चेत् मैवम्। तर्हि यथा फलं सिध्यति। तथा कामिना प्रयतितव्यम्। फलं च शब्दावगतसर्वाङ्गोपसंहारमन्तरेण न सिध्यतीत्युक्तम्। नित्ये तु न फलसाधनत्वेन विधिः। किन्तु जीवननिमित्तसंयोगेन। तथा सत्यङ्गवैकल्येऽपि निमित्तनैमित्तिकसंयोगः सुत्यभिमतो नापैति। ततो विकलाङ्गमपि कर्त्तव्यमेव। अत एव नित्यस्याकरणे प्रत्यवायप्रायश्चित्ते शास्त्रेष्ववगम्येते। काम्येष्वङ्गवैकल्ये शास्त्राभिमतफलसाधनत्वाभावाद्विकलाङ्गं न प्रयोक्तव्यम्। अत एव तत्रेमे प्रत्यवायप्रायश्चित्ते न स्तः। तस्मात् काम्यं कृत्स्नाङ्गोपेतं यदा कर्त्तुं शक्नुयात्। तदा कुर्यात्। नित्यं तु यथा शक्नुयात्। तथा कुर्यात्। एतदेवाभिप्रेत्य श्रुतम्। यादृक्कीदृग् ज्ञातव्यमिति। तस्मान्नित्येष्वङ्गवैकल्ये काम्येष्वङ्गलोपो न सोढुं शक्यः।

तृतीयाधिकरणमारचयति।

नीवारादिद्रव्यभेदात् कर्मान्यत् स्यात्तदेव वा।
द्रव्यकर्मैक्यतः पूर्वस्तत्वेषद्भेदतोऽन्तिमः॥ ४॥

दर्शपूर्णमासयोर्व्रीह्यसम्भवे नीवारादि स्वीक्रियते। तदा कर्मान्तरं तदित्यभ्युपेयम्। कुतः। द्रव्यकर्मणो रेकत्वात्। द्रव्यं हि कर्मणः स्वरूपम्। ततो द्रव्यान्तरत्वे कर्मान्तरत्वमनिवार्य्यमिति चेत्। मैवम्। द्रव्यकर्मणो-रीषद्भेदस्यापि भावात्। द्रव्यमाश्रयः। कर्माश्रितम्। आश्रयाश्रितयोर्भेदाभेदावभ्युपगम्य तादात्म्यसम्बन्धो वर्ण्यते। तस्माद् द्रव्यभेदेऽपि न कर्म भिद्यते।

चतुर्थाधिकरणमारचयति।

द्रव्ये प्रतिनिधिर्नास्ति विद्यते वा न विद्यते।
मानाभावादस्ति कर्मचोदनाक्षेपिका यतः॥ ५॥

नित्यकाम्ययोः कर्मणोः श्रुतस्य व्रीह्यादिद्रव्यस्यापचारे द्रव्यान्तरं प्रतिनिधित्वेन कुत्रापि न विहितम्। ततो मानाभावान्नास्ति प्रतिनिधिरिति चेत्। मैवम्। कर्म-चोदना हि द्रव्यमन्तरेणानुपपन्ना द्रव्यसामान्यमाक्षिपति। तत्र व्रीहिशास्त्रं नियामकम्। तच्चासम्भवाद्यदा न प्रवर्त्तते। तदा मा भून्नियमः। तथापि सामान्याक्षेपस्य वारयितुमशक्यत्वात्तत्सामान्यं क्वचिद्विशेषे पर्य्यवस्यतीति प्रमाणसद्भावादस्ति प्रतिनिधिः। ततो द्रव्यान्तरेणापि तत् कर्मानुष्ठातव्यमेव न तु श्रुतद्रव्याभावमात्रात् कर्मलोपः।

पञ्चमाधिकरणमारचयति।

देवाग्निमन्त्रोच्चारणादावस्ति प्रतिनिधिर्न वा।

पुरेवास्तीह यन्मुख्ये कार्य्यं तन्नेति नास्त्यसौ ॥ ६ ॥

आग्नेयोऽष्टाकपालः । सौर्य्यं चरुमित्यादावुक्ता अग्निसूर्य्यादयो, देवाः । आहवनीयादयोऽग्नयः । बर्हिर्देवसदनं दामीत्यादयो मन्त्राः । प्रोक्षणादयः क्रियाः । एतेषां देवादीनामपचारेऽपि नीवारद्रव्यवत् प्रतिनिधिरस्तीति चेत् । मैवम् । कार्य्यसिद्ध्यभावात् । पुरोडाश निष्पादनं कार्य्यं व्रीह्यपचारेऽपि नीवारेण सिध्यति । देवादिकार्य्यं तु नान्येन सिध्यति । न ह्याग्नेययागो विष्णुना निष्पद्यते । नाप्याहवनीयकार्य्यो होमोऽसंस्कृतेन वह्निना सिध्यति । नापि बर्हिर्देवसदनं दामीत्येतन्मन्त्रसाध्यमर्थप्रकाशनमन्येन मन्त्रेण सिध्यति । नापि प्रोक्षणकार्य्यमदृष्टमविहितेनान्यार्थं विहितेन वा क्रियान्तरेण सिध्यति । तस्मान्नास्ति देवादीनां प्रतिनिधिः ।

षष्ठाधिकरणमारचयति ।

माषाद्याः प्रतिनिध्यर्हा न वाद्यस्तदवारणात् ।
नार्हा अयज्ञियत्वोक्तेरर्थात् तद्धि निवारणात् ॥ ७ ॥

मौद्गं चरुं निर्वपेच्छ्रीकाम इत्यत्र मुद्गाभावे माषाद्याः प्रतिनिधित्वमर्हन्ति । कुतः । मुद्गकार्य्यं चरुनिष्पादने समर्थत्वात् । निवारकस्य प्रतिषेधवचनस्याभावाच्चेति चेत् । मैवम् । अयज्ञिया वै माषा वरकाः कोद्रवा इति माषादिधान्येष्वयज्ञियत्ववचनस्य निषेधेन पर्य्यवसानात् । तस्मान्नार्हा माषाद्याः ।

सप्तमाधिकरणमारचयति ।

स्वामिनोऽस्ति प्रतिनिधिर्न वा द्रव्यवदस्ति सः ।

**न मृते प्रेरकाभावाज्जीवनेऽप्यफलित्वतः ॥ ८ ॥**

यथा यागसाधनद्रव्यस्य प्रतिनिधिः, तथा कर्तुर्यजमानस्यापि प्रतिनिधिरस्त्विति चेत्, मैवम्। किं यजमाने मृते सति प्रतिनिधिरन्विष्यते। किंवा कार्य्यान्तरव्यापृते। नाद्यः। असम्भवात्। अन्यस्मिन्नपचरिते यजमानः प्रतिनिधिं गृह्णाति। यजमानेऽपचरिते कोऽन्यः प्रतिनिधिं गृह्णीयात्। को वाध्वर्य्युप्रभृतीन् प्रेरयेत्। न द्वितीयः। यजमानकार्य्यस्य फलित्वस्यान्यस्मिन्नसम्भवात्। सम्भवे वा तस्यैव स्वामित्वेन प्रतिनिधित्वाभावात्। तस्मान्नास्ति यजमानस्य प्रतिनिधिः।

अष्टमाधिकरणमारचयति।

मृते सत्त्रिणि नान्यः स्यात् स्याद्वा नात्रापि पूर्ववत्।
स्यादस्वाम्यपि कर्तृत्वे साम्रदश्यस्य सिद्धये ॥ ९ ॥

सत्त्रेषु बहुयजमानेष्वेकस्मिन् मृते प्रतिनिधिर्नास्ति। कुतः। पूर्वाधिकरणे यजमानप्रतिनिधेर्निराकृतत्वादिति चेत्, मैवम्। भङ्ग्यन्तरेण तत्सिद्धेः। सत्त्रिणां हि कार्य्यद्वयम् फलभोक्तृत्वं यागकर्तृत्वञ्च। तत्र प्रतिनिधेः फलित्वाभावेऽपि कर्तृत्वं सम्भवति। ऋत्विक्कार्य्यकर्तृत्वे प्रतिनिधिमन्तरेण साम्रदश्याभावात्, षोडशैव कार्य्याणि निष्पादयेरन्, एकं कार्य्यं लुप्येत। तस्माद्यजमानस्य प्रतिनिध्यभावेऽप्यृत्विजः प्रतिनिधिसद्भावात् पुरुषान्तरं प्रतिनिधापयितव्यम्।

नवमाधिकरणमारचयति।

स स्वाम्यप्यतकर्त्रैव स्वामी तत्स्थानगत्वतः।

अनारब्धः फलाभावादस्वामी कर्तृमात्रता ॥ १० ॥

य. सत्त्रिणः प्रतिनिधिस्तस्य यजमानस्थाने स्वीकृतत्वेन यजमानत्वमप्यस्तीति चेत। नैवम। आरभ्यसमाप्ति पर्य्यन्तमनुष्ठितुः फलमुक्तम। प्रतिनिधिस्तु नारब्धवान्। अतः फलभावाद्यजमानत्वं नास्ति। किन्तु कर्तृत्वमात्र-मेव। मृतस्य तु समाप्त्यभावेऽपि फलमाम्नायते यो दीक्षितानां प्रमीयेतापि तस्य फलमिति।

दशमाधिकरणमारचयति।

नास्य स्युः फलिसंस्कारा: कार्य्या वा नाफलित्वतः।

अन्येषां साद्गुण्यार्थमफलिन्यपि ते मताः ॥ ११ ॥

सत्त्रे योऽयं प्रतिनिधिस्तस्य फलित्वाभावात् फल-योग्यताहेतवो वपनादिसंस्कारा न कर्त्तव्या इति चेत। नैवम। अस्य फलाभावेऽप्यस्मिन् संस्कृते सत्यन्येषां यत् साद्गुण्यं तत् संस्कृतेषु सप्तदशसु स्थितं भवति। ततः सप्तदशावराः सत्त्रमासीरन्नित्येतच्छास्त्रमनुगृहीतं भवति। अन्यथा संस्कृताः षोडशैवेति तच्छास्त्रं बाध्येत। यदि बहूनां यजमानानामन्नाभादेवरा अन्यसंख्या यजमानाः स्युः तत्रापि सप्तदशापेक्षिताः। न तु ततोऽन्यसंख्या इत्यर्थः। तस्मादफलिन्यपि तस्मिन् संस्काराः कर्त्तव्याः।

एकादशाधिकरणमारचयति।

किञ्चित् प्रतिनिधेयं स्यात्कृतत्स्यमुताग्रिमः।

आसेपात् समद्रव्ये मुख्यांशानुगमो यतः। १२ ॥

अतस्त्रीह्यपचारे नीवारप्रियंग्वादिकं किञ्चिद् द्रव्यं प्रतिनिधातव्यम्। प्रधानविधिना सामान्यतो द्रव्यमात्र-

स्याचिमत्वादिति चेत्। मैवम्। व्रीहिभिर्यजेतेत्यत्र न जातिः पुरोडाशं निष्पादयति। किन्तु व्रीहित्वजात्युपलक्षिता अंशा एव तन्निष्पादका इत्यंशानां मुख्यद्रव्यत्वम्। ते चावयवाः सदृशे नीवारादौ बहवोऽनुगच्छन्ति। भूयोऽवयवसामान्यं सादृश्यमित्यभ्युपगमात्। तस्मादत्यन्तसदृशमेव प्रतिनिधेयम्।

द्वादशाधिकरणमारचयति।

यवाः प्रतिनिधेयाः किं व्रीह्यर्थे तत्समा उत।

मुख्यलाभादग्रिमोऽन्त्यो व्रीहिपक्षे यवाविधेः॥ १३॥

व्रीहीणामसम्भवे यवानां प्रतिनिधित्वं युक्तम्। यवैर्यजेतेति विहितत्वेन मुख्यद्रव्यलाभादिति चेत्। मैवम्। व्रीहियवयोर्विकल्पत्वेन व्रीहिपक्षे यवविध्यभावात्। तस्मात् सदृशमेव प्रतिनिधातव्यम्।

त्रयोदशाधिकरणमारचयति।

सोमाभावे भवेत् पूतिर्विधिः प्रतिनिधावुत।

नियमो वचनादाद्यो लाघवात्तन्नियम्यते॥ १४॥

यदि सोमं न विन्देत पूतीकानभिषुणुयादिति लिङ्प्रत्ययस्य विधिवाचित्वादिदं वाक्यं पूतीकलताखण्डानां विधायकमिति चेत्। मैवम्। सदृशतया प्रतिनिधित्वेन प्राप्तेषु पूतीकादिद्रव्येषु नियममात्रविधौ लाघवात्। तस्मात् पूतीकद्रव्यं नियम्यते।

चतुर्दशाधिकरणमारचयति।

प्रतिनिध्यपचारे तु तेन मुख्येन वा समम्।

प्रक्रान्तत्वादग्रिमोऽन्त्यः श्रुतांशसमलाभतः॥ १५॥

सत्रेषु प्रवृत्तः पुरुषो ब्रह्मा वेदत्रयमधीतवान्। तस्मिन् मृते तादृशस्याभावात् स्वशाखामात्राध्यायी प्रतिनिधापितः। तेन च प्रयोगः प्रक्रान्तः। तस्मिन्नप्यपचरिते पुनः पुरुषान्तरान्वेषणायां लब्धेऽपि त्रिवेदिनि तमुपेक्ष्य प्रतिनिधिना समं स्वशाखामात्राध्यायिनं गृह्णीयात्। एकवेदाध्यायिकर्तृकप्रयोगस्य प्रक्रान्तत्वादिति चेत्। मैवम्। अध्वर्य्युद्गातृहोतृणां प्रयोगेषु प्रसक्तं वैकल्यं समाधातुं ब्रह्मणो वेदत्रयाध्ययनमपेक्षितम्। अतो मुख्येन सदृशं त्रिवेदिनमेव गृह्णीयात्। तथा सति त्रिवेदिब्रह्मप्रतिपादकश्रुत्यभिमतैर्बहुभिरंशैर्मुख्यसादृश्यं लभ्यते। तस्मान्मुख्येन सदृशस्य ग्रहणम्। न तु प्रतिनिधिना सदृशस्य।

पञ्चदशाधिकरणमारचयति।

पूतीकस्यापचारे स्यात्तेन सोमेन वा समम्।

आद्यः श्रुतांशसादृश्यात् पूतीकाविधितोऽन्तिमः॥१६॥

यदा सोमप्रतिनिधेः पूतीकस्यापचारः स्यात्। तदा तेन पूतीकेन सदृशं द्रव्यान्तरमुपादेयम्। पूतीकानभिषुणुयादिति श्रुतेः पूतीकांशैः सादृश्यलाभादिति चेत्। मैवम्। नास्ति पूतीकानां विधिः। किन्तु नियमार्थं तद्वचनमित्युक्तम्। ततः श्रुतस्य सोमसमांशस्य लाभाय सोमसमं द्रव्यान्तरमुपादेयम्।

षोडशाधिकरणमारचयति।

प्रतिनिध्युपमे मुख्यलाभे ग्राह्यं तु किं द्वयोः।

सङ्कल्पेन प्रतिनिधिर्मुख्यं शास्त्रार्थलाभतः॥१७॥

यदा मुख्यान् व्रीहीन लब्ध्वा नीवारैः सङ्कल्पः कृतः।

तदा कथञ्चिद् व्रीहिलाभेऽपि सङ्कल्पभङ्गो मा भूदिति नीवारा एवोपादेया इति चेत्। मैवम्। मुख्यशास्त्रार्थलाभेन सङ्कल्पं बाधित्वा व्रीहय एव कर्त्तव्याः।

सप्तदशाधिकरणमारचयति।

अमुख्ये संस्कृते मुख्यलाभे किं ग्राह्यमेतयोः।

अमुख्यस्तक्षणाद् यूपः खादिरस्तक्षणात् पुनः ॥ १८ ॥

यदा यूपार्थं खदिरमलब्ध्वा कदरे तक्षणादिसंस्कृते सति पश्चान्मुख्यः खदिरो यदि पशुनियोजनात् प्रागेव लभ्येत। तदा तक्षणादिसंस्कृतः प्रतिनिधिः कदर एव ग्राह्यः। असंस्कृतात संस्कृतस्य प्रशस्तत्वादिति चेत्। मैवम। मुख्ये खदिरे लब्धे पुनस्तक्षणादिसंस्कारः कर्त्तव्यः। तथा सति संस्कृतस्य मुख्यस्य लाभात् प्रतिनिधिः संस्कृतोऽपि त्याज्यः।

अष्टादशाधिकरणमारचयति।

पशौ नियुक्ते खदिरलाभे कार्य्यं पुनर्न वा।

सादगुण्याय पुनः कार्य्यं मुख्यावृत्तिर्गुणान्न हि ॥ १९ ॥

यदा संस्कृते प्रतिनिधौ पशुर्नियुज्यते। तदूर्ध्वं खदिरो यदि लभ्येत। तदापि पूर्वन्यायेन मुख्यलाभात् सादगुण्याय मुख्ये यूपे पुनर्नियोजनं कार्य्यमिति चेत्। मैवम। गुणभूतो यूपः। पशुनियोजनं प्रधानभूतम्। न हि गुणानुसारेण प्रधानस्यावृत्तिर्युक्ता। तस्मान्नियोजनं पुनर्न कार्य्यम्।

एकोनविंशाधिकरणमारचयति।

अमुख्यमुख्ये संस्कारयोग्यायोग्ये तदा नु किम्।

आद्यो बहुगुणालोपान्न मुख्यायास्तु लोपनम् ॥ २० ॥

अमुख्यः कदरः स्थूलत्वात्तक्षणादिसंस्कारयोग्यः। मुख्य खदिरः सूक्ष्मत्वादयोग्यः। तदा तक्षणादिबहुगुणलोपो मा भूदिति प्रतिनिधिरेवादरणीय इति चेत्। मैवम मुख्यसिद्धये गुणलोपस्य सोढुं शक्यत्वात्। तस्मात् कृशोऽपि मुख्य एवोपादेयः।

विंशाधिकरणमारचयति।

निर्योजनेऽप्ययोग्यश्चेत खदिरः किं तदा भवेत्।
मुख्यत्वेन स एव स्याद्वैयर्थ्येन हीतरः ॥ २१ ॥

यदा त्वत्यन्तकृशत्वात्तक्षणादिरहितोऽपि खदिरो निर्योजनेऽप्ययोग्यः। तदापि मुख्यत्वात् खदिर एवोपादेय इति चेत्। मैवम। उपात्तस्य प्रयोजनाभावान्नियोजनयोग्यः प्रतिनिधिरेव ग्राह्यः।

एकविंशाधिकरणमारचयति

शेषकार्य्येष्वपूर्णाश्चेद् व्रीहयः किं तदेतरत्।
व्रीहयो वा सर्वसिद्ध्यै नीवारादिकमिष्यते ॥ २२ ॥
पुरोडाशतया व्रीहेः प्रधानत्वादलोप्यता।
शेषकार्य्याणि लुप्यन्तां मुख्यवैगुण्यतो वरम् ॥ २३ ॥

स्विष्टकृदिडाप्राशित्रभक्षणादीनि शेषकार्य्याणि। तेष्वपर्य्याप्ताः प्रधानमात्रपर्य्याप्ता व्रीहयो यदा लभ्यन्ते। तदानीं सर्वकार्य्यसिद्धये व्रीहिभ्य इतरन्नीवारादिकमुपादेयमिति चेत्। मैवम्। व्रीहयः पुरोडाशार्थतया प्रधानयागस्य निष्पादका इति न लोपमर्हन्ति। अतः प्रधानस्यावैगु

ष्याय द्रव्याभावे शेषकार्य्याणि लोपमर्हन्ति। तस्मादन्या अपि शेष्य एवोपादेयाः।

इति माधवीये जैमिनीयन्यायमालाविस्तरे षष्ठ-स्याध्यायस्य तृतीयः पादः।

---

चतुर्थपादस्य प्रथमाधिकरणमारचयति।

अवत्तनाशे तच्छेषात् पुरोडाशादवद्यति।

यजेदाज्येन वाद्योऽत्र मध्यपूर्वाधसम्भवात्॥ १॥

कृत्स्नस्य मध्यपूर्वार्द्धे ये शेषस्थे न ते ततः।

हविर्नाशादाज्यविधिः सुतरां सर्वनाशने॥ २॥

दर्शपूर्णमासयोः पुरोडाशावदाने श्रूयते। मध्यादवद्यति। पूर्वार्धादवद्यतीति। तदवत्तं नश्येत। तदानीमवशिष्टात् पुरोडाशात् पुनरप्यवदातव्यम्। कुतः। अवदानापादानयोर्मध्यपूर्वार्धयोः शिष्टेऽपि सम्भवादिति चेत्। मैवम्। कृत्स्नपुरोडाशगते मध्यपूर्वार्धे अपादानत्वेन श्रूयते। न त्ववशिष्टभागगते मध्यपूर्वार्धे। ततो मुख्यस्य हविषो नाशादाज्यं प्रतिनिधाय यष्टव्यम्। अत एव श्रूयते। यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वाज्येन ता देवताः परिसंख्याय यजेतेति। तत्र सर्वशब्दस्य निमित्तविशेषणत्वेनाविवक्षितत्वादाशनमात्रे सर्वनाशस्य विधिः।

द्वितीयाधिकरणमारचयति।

इडाद्यर्थस्य नाशेऽन्यः शेषाद् ग्राह्यो न वाग्रिमः।

शेषसत्त्वान्न शेषेऽन्यप्रतिपत्त्यवरोधनात्॥ ३॥

इडाभक्षणार्थं प्राशित्रभक्षणार्थं वावत्तं यदि नश्येत्। तदा शेषस्य सद्भावात् तस्माच्छेषात् पुनरवदेयमिति चेत्। मैवम्। तस्य शेषस्यान्यथा प्रतिपत्त्या शंयुवाककालीनभक्षणरूपयावकद्धत्वात्। तस्मादवत्तनाशे द्रव्याभावादिडादिकं लुप्यते।

तृतीयाधिकरणमारचयति।

शेषभक्षाः किमन्येषामृत्विजां वान्यभक्षणम्।

ऋत्विजां परिसंख्यानात् स्वाम्यप्राप्तौ ततोऽन्तिमः॥४॥

दर्शपूर्णमासयोर्ये प्राशित्रादिशेषभक्षास्तेषां भक्षणमृत्विगभ्योऽन्यैः कर्त्तव्यम्। कुतः। ऋत्विजां परिसंख्यातत्वात्। ऋत्विजां कर्मकरत्वादेव भक्षणप्राप्तौ सत्यां पुनरप्येवमाम्नायते। यजमानपञ्चमा इडां भक्षयन्तीति। तदेतत् पुनराम्नातं परिसंख्यार्थम्। यजमानसहिता ऋत्विजः प्राशित्रादिकं न भक्षयेयुरित्यर्थः। तस्मादृत्विगभ्योऽन्येषां प्राशित्रादिभक्षणमिति चेत्। मैवम्। यजमानस्य कर्मकरत्वाभावेन पूर्वमप्राप्तं भक्षणमनेन विधीयते तस्मादपरिसंख्यातत्वादृत्विज एव प्राशित्रादिभक्षणम्।

चतुर्थाधिकरणमारचयति।

कपालभेदने होमो भग्ने दृष्टेऽथवाभयोः।

आद्यो भेदस्य भङ्गत्वात् संस्कार्य्यत्वे न मध्यमः॥ ५॥

संस्कृतावनिमित्तत्वान्नित्यानित्यविरोधनम्।

निमित्तता समा भङ्गे वचं वा तद् द्वयोर्हितिः॥ ६॥

दर्शपूर्णमासयोः कपालं प्रकृत्य श्रूयते भिन्ने जुहोतीति। तत्र भेदशब्दस्य भङ्गवाचित्वात् कपालभङ्गे ...

होम इत्येकः पक्षः। होमस्य संस्काररूपत्वादत्यन्तभङ्गे संस्कार्य्याभावात् संघर्षमात्रजन्ये भङ्गस्यापि भेदशब्दार्थत्वात् कपाले छिष्टे सत्ययं होम इति द्वितीयः पक्षः। संस्कारपक्षे भिन्नशब्दस्य संस्कार्य्यप्रतिपादनेनोपक्षयान्निमित्तप्रतिपादकत्वं न स्यात्। तथा सति होमस्य नैमित्तिकत्वाभावेन नित्यत्वं वक्तव्यम्। कपालभेदस्य कादाचित्कत्वात् संस्कार्य्यमनित्यमिति नित्यानित्यसंयोगविरोधः प्राप्नोति। ततो भिन्नशब्दो निमित्तप्रतिपादकः। निमित्तत्वं च भङ्गसंघर्षयोः समानम्। तस्मादुभयोरपि निमित्तयोर्नैमित्तिको होमः कर्त्तव्य इति राद्धान्तः।

पञ्चमाधिकरणमारचयति।

क्षामे यागो द्वयोः सर्वदाहे वा पूर्ववद्‌द्वयोः।

अंशदाहस्य नित्यत्वात् सर्वदाहे पुनर्यजिः॥ १॥

दर्शपूर्णमासयोः श्रूयते। अथ यस्य पुरोडाशौ क्षायतस्तं यज्ञं वरुणो गृह्णाति। यदा तद्धविः स तिष्ठेताथ स तदेव हविर्निर्वपेत्। यज्ञो हि यज्ञस्य प्रायश्चित्तिरिति। अस्यायमर्थः। यस्य यज्ञस्य पुरोडाशावाग्नेयाग्नीषोमीयौ क्षायतोऽत्यन्तदाहेन भस्मीभवतस्तं यज्ञं वरुणो गृह्णाति। न त्वयं यज्ञो यजमानाय फलं प्रयच्छति। यदि तादृशहविष्को यज्ञ आ समाप्तेरनुष्ठीयेत। तदा तत्प्रत्यवायपरिहाराय पुनस्तदेव हविर्निरूप्य यज्ञमनुतिष्ठेदिति। तत्र पुरोडाशे क्षामे सति यो यागो विहितः स पूर्वोक्तभेदन्यायेनाल्पदाहसर्वदाहयोर्द्वयोरपि कर्त्तव्य इति चेत्। मैवम्। तस्मिंस्तु कपालेषु पुरोडाशमवस्थाप्योपर्य्यङ्गारैरधि-

वामने कृते सति सूक्ष्मांशदाहस्य वर्जयितुमशक्यत्वेन नित्यत्वात् पुनर्भागस्यांशदाहो निमित्तं न भवति। सर्वदाहस्तु कादाचित्कत्वान्निमित्तमिति तत्रैवेयं प्रायश्चित्तरूपेष्टिः।

षष्ठाधिकरणमारचयति।

आर्त्तौ पञ्चशरावो यः स दोहद्वयसंक्षये।

एकनाशेऽपि वाद्योऽस्तु हविर्वेदुभयोर्मतः॥ ८॥

हविरार्त्त्यैकमात्रेण निमित्तं पर्य्यवस्यति।

उभयात्त्यविवक्षायामेकनाशेऽप्यसौ भवेत्॥ ९॥

दर्शपूर्णमासयोर्दोहौ प्रकृत्य श्रूयते। यस्योभयं हविरार्त्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेदिति। सोऽयं यागो दोहद्वयक्षयं निमित्तीकृत्यानुष्ठेयः। न त्वेकदोहक्षयम्। कुतः। उभयशब्दस्य श्रुतत्वात्। आर्त्तिशब्दस्य विशेषणत्वेन श्रूयमाणो हविःशब्दो यथा विवक्षितार्थः। तथा हविःशब्दविशेषणस्योभयशब्दस्यापि विवक्षितार्थत्वादुभयहविरार्त्तिरेव निमित्तमिति चेत्। मैवम्। आर्त्तिमात्रेऽपन्यासे साकाङ्क्षत्वान्निमित्तं न पर्य्यवस्यतीति हविःशब्दार्थो विवक्षितव्यः। तावतैव निमित्तस्य पर्य्यवसितत्वादुभयशब्दार्थो न विवक्षितः। हविरार्त्त्येकमात्रस्य निमित्तत्वे सति सायंदोहप्रातर्दोहात्त्योरुभयोर्निमित्तत्वं सिद्धमेवातोभयशब्देनानूद्यते। तस्मादेकनाशे द्वयनाशेऽप्यसावोदनो निर्वपणीयः।

सप्तमाधिकरणमारचयति।

अभिषुत्य ततो हुत्वा खादेदेकैकहेतुना।

संहृत्य वा निमित्तानि साहित्याविधितोऽग्रिमः॥ १०॥

होमाभिषवकर्त्तॄन् भक्षाङ्गत्वेन चोद्यते।
निमित्ततार्थिकी तस्मात् साहित्यं हेतुगं मतम् ॥ ११ ॥

ज्योतिष्टोमे श्रूयते। हविर्धाने ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान् भक्षयन्तीति। तत्राभिषवहोमयोरेक एव भक्षणहेतुः। कुतः। साहित्यस्याविवक्षितत्वात्। अभिषवहोमावत्र निमित्तत्वेनोच्येते। तत्र साहित्यविधौ वाक्यं भिद्येत। अभिषवहोमौ भक्षणहेतू तौ च सहितावित्येवं तद्भेदः। तस्मात् साहित्यस्याविवक्षितत्वादभिषवहोमयोः प्रत्येकं भक्षणनिमित्तत्वमिति प्राप्ते ब्रूमः। नात्र निमित्तमुपन्यस्यते। किन्तु होमाभिषवयोः कर्त्ता भक्षणं प्रत्यङ्गत्वेन पूर्वमप्राप्तत्वाद्विधीयते। तथा सत्यभिषवहोमयोर्यन्निमित्तत्वं प्रतीयते तदार्थिकमिति वाक्यभेददोषाभावात् साहित्यं प्रतीयमानं विवक्षितमिति सहितयोरेव तयोर्निमित्तत्वम्।

अष्टमाधिकरणमारचयति।

एकोऽपि वह्न्यनुगमः पुनराधेयकारणम्।
द्वाविव वाक्ये द्वित्वोपलक्षणात् पञ्चशराववत् ॥ १२ ॥
द्वयोस्तत्पादकत्वेन पुनराधेयचोदना।
नैकस्यातो द्व्यनुगमो हेतुः सूर्य्योदयादिग ॥ १३ ॥

अग्निहोत्रे श्रूयते। यस्योभावग्नी अनुगतावभिनिम्लोचेयातां सूर्य्यो वाभ्युदियात् पुनराधेयं तस्य प्रायश्चित्तिरिति। आहवनीयगार्हपत्यावुभावग्नी अनुगतौ नष्टौ यदा भवतः। तदा सूर्यस्यास्तमय उदयो वा यदि भवेत्। तदा पुनराधेयं कर्त्तव्यमित्यर्थः। तत्र यथा पञ्चशराव

वाक्ये निमित्तविशेषणभूत उभयशब्दार्थो न विवक्षितः। तथा निमित्तस्य वक्ष्यनुगमस्य विशेषणं द्वित्वमुपेक्षणीयम्। तत एकस्याप्यनुगमस्य निमित्तत्वमस्तीति चेत्। मैवम्। अग्नी आदधीतेति द्वित्वविशिष्टयोरग्न्योरुत्पादनाय पुनराधेयं चोदितम्। न त्वेकस्योत्पादनाय। न ह्येकस्मिन्ननुगते द्वयोरुत्पादनं सम्भवति। तस्मान्नैमित्तिकद्वित्वोपपत्तये निमित्तयोरपि वक्ष्यनुगमयोर्द्वित्वं विवक्षितव्यम्। तस्मादस्तमयकाल उदयकाले वा वह्निद्वयनाशः पुनराधेयहेतुः।

नवमाधिकरणमारचयति।

द्रव्यप्रतिनिधिः पञ्चशरावो भिन्नकर्म वा।
दोहद्वयार्त्तितो दर्शे द्रव्यं स्याद्दीपसितत्वतः॥ १४॥
प्राप्ते कर्मणि नैकेन विधिना द्रव्यदेवते।
शक्ये विधातुं ताभ्यां तु विशिष्टं कर्म चोद्यते॥ १५॥

योऽयं पञ्चशराव ओदनः पूर्वमुदाहृतः। नासौ कर्मान्तरकृप.। किन्तु पूर्वस्मिन्नेव कर्मणि दोहद्वयरूपे द्रव्येऽपचरिते सति तत्प्रतिनिधिद्रव्यत्वेनायं विधीयते। कुतः। दर्शयागे द्रव्यस्यापेक्षितत्वादिति चेत्। मैवम्। ऐन्द्रं पञ्चशरावमिति द्रव्यदेवतयोः प्रतीतौ कर्मान्तरविधेर्वारयितुमशक्यत्वात्। यदि पूर्वस्मिन्नेव कर्मण्युभयं विधीयते। तदा कर्मणः प्राप्तत्वादुभयोर्द्रव्यदेवतयोर्विधौ वाक्यं भिद्येत। तस्माद्द्रव्यदेवताभ्यां विशिष्टं कर्मान्तरं विधीयते।

दशमाधिकरणमारचयति ।

दर्शे प्रत्याम्नाय एतदङ्गं वा हविरार्त्तितः ।
दर्शयागे निवृत्तेऽस्य प्रत्याम्नायतया विधिः ॥ १६ ॥
पूर्वद्रव्यविनाशेऽपि द्रव्यस्यान्यस्य सम्भवात् ।
अनिवृत्तेस्तदङ्गं स्यादार्त्तिवैगुण्यहानये ॥ १७ ॥

पञ्चशरावद्रव्यकमिन्द्रदेवताकं यत् कर्मान्तरं कथितं तदेतद्दर्शयागस्य प्रतिनिधित्वेन विधीयते । कुतः । उभयहविरार्त्यौ दर्शयागस्य निवृत्तत्वादिति चेत् । नैवम् । पूर्वयोर्दधिपयसोर्नाशेऽपि पयोऽन्तरेण दध्यन्तरेण च दर्शेऽनुष्ठीयमाने हविरार्त्तिकृतं वैगुण्यं परिहरन्नयं पञ्चशरावयागो दर्शयागस्याङ्गं भवति ।

एकादशाधिकरणमारचयति ।

सत्त्रायागुरते योऽयं यजेद्विश्वजितेत्यसौ ।
य: कोऽप्युत प्रवृत्तः स्यादप्रवृत्तोऽथवाऽग्रिमः ॥ १८ ॥
अविशेषात् प्रवृत्तोऽस्तु सत्त्राङ्गं हि तथा भवेत् ।
निमित्तोक्तिरप्रवृत्तः प्रायश्चित्तं चरेदिदम् ॥ १९ ॥

इदमाम्नायते । य सत्त्रायागुरेत स विश्वजिता यजेतेति । आगुरते सङ्कल्पयति । तत्र सत्त्रं सङ्कल्प्य कश्चिदनुष्ठाने प्रवृत्तः । अपरो न प्रवृत्तः । तयोरुभयोर्मध्ये य: कोऽपि विश्वजिता यजेतेति । विशेषस्याश्रवणात् । एवमप्रवृत्त एव यजेतेत्यपि विशेषो न श्रूयते । तस्मादुभयोरन्यतर इत्याद्यः पक्षः । सत्त्रे प्रवृत्तस्य विश्वजिदनुष्ठाने सत्त्राङ्गत्वं विश्वजितो लभ्यते । तस्मात् प्रवृत्त एव विश्वजितं कुर्यादिति द्वितीयः पक्षः । यः सत्त्रायावगुरेत इति

निमित्तत्वेनोपन्यासात् सङ्कल्प्य यदि सत्रं नानुतिष्ठेत्। तदा प्रायश्चित्तार्थं विश्वजिद् यागं कुर्य्यादिति राद्धान्तः।

द्वादशाधिकरणमारचयति।

वत्सैर्दर्शे सवत्सस्य वत्समात्रस्य वा विधिः।
व्रतकालं लक्षयेद् वा वत्सयुक्ते व्रते विधिः॥ २०॥
भाति रागाद् व्रतप्राप्तेर्वत्समात्र विधीयते।
व्रतस्याकरणं वत्सः कालधीस्तदुपाकृतेः॥ २१॥

दर्शपूर्णमासयोः श्रूयते। बर्हिषा पूर्णमासे व्रतमुपैति वत्सैरमावास्यायामिति। व्रतं भोजनम्। अत एवाम्नायते। अमाषममांसं ब्रह्मसर्पिष्कं व्रतयतीति। तदेतद् व्रतं वत्ससंयुक्तमेव विधीयते। कुतः। वत्सैरिति तृतीयया साहित्यस्य प्रतिभानादित्येकः पक्षः। रागत एव प्राप्तत्वाद् व्रतं न विधातव्यम्। किन्तु वत्समात्रं विधीयतामिति द्वितीयः पक्षः। न हि वत्सः पाण्यादिवद्व्रतस्य करणम्। ततो न तस्य विधिः। किन्तु वत्सानामुपाकरणेन काल उपलक्ष्यते। तस्मिन् काले व्रतमुपेयात्।

त्रयोदशाधिकरणमारचयति।

सान्नाय्यिनः स कालः स्यादितरस्यापि वाग्रिमः।
वत्समत्त्वाल्लक्ष्यकालो ह्यन्यस्याप्यस्त्यतोऽन्तिमः॥ २२॥

यस्य सान्नाय्यमस्ति तस्यैवायं व्रतकालः। कुतः। लक्षकस्य वत्सापाकरणस्य सद्भावात्। यस्त्वमावास्यायां सान्नाय्यं न करोति। किन्त्वैन्द्राग्नं पुरोडाशं करोति। न तस्य वत्सापाकरणमस्ति। नापि पौर्णमास्यां तद् विद्यते। तस्मात् सान्नाय्यिन एव स काल इति चेत्। नैवम्। वत्स-

भापाकरणाभावेऽपि तदुपलक्षितकालस्य विद्यमानत्वात्। तस्मात् सर्वस्यापि स कालः।

चतुर्दशाधिकरणमारचयति।

प्रस्तरं शाखया युक्तं हरेच्छाखा विधीयते।
कालो वा प्रतिपत्त्यर्थः प्रहृत्यात्रोपलक्ष्यते ॥ २३ ॥
भाव्योऽङ्गत्वविधेर्भानात् प्रतिपत्तिमपेक्षते।
शाखोपयुक्ता तेनान्त्यः प्रस्तरे प्रतिपादनात् ॥ २४ ॥

दर्शपूर्णमासयोराम्नायते। सह शाखया प्रस्तरं प्रहरतीति। तत्र प्रस्तरप्रहरणं प्रति शाखाया अङ्गत्वेन विधिर्भासते। सत्यङ्गत्वे शाखया विना प्रस्तरप्रहरणस्य वैगुण्यप्रसङ्गात् मात्राद्यरहितेनापि शाखा सम्पादनीयेति चेत्। मैवम्। शाखा वत्सापाकरणादावुपयुक्ता तस्याः पुनरङ्गत्वविधिर्न सम्भवति। विनियुक्तविनियोगस्यान्याय्यत्वात्। तस्माच्छाखा प्रतिपत्तिमपेक्षत इति तत्प्रतिपत्त्यर्थः कालः प्रस्तरप्रहरणेनोपलक्ष्यते। तथा सति यदा प्रस्तरं प्रहरति। तदा शाखामपि विद्यमानां प्रहरेत्। न तु मात्राद्यरहितेन सम्पादनीया।

इति माधवीये जैमिनीयन्यायमालाविस्तरे
षष्ठस्याध्यायस्य चतुर्थः पादः।

---

पञ्चमपादस्य प्रथमाधिकरणमारचयति।

इष्टिरभ्युदये दर्शात् कर्मान्यदुत देवताः।
पूर्वास्त्याज्या विशिष्टस्य विधानादन्यकर्म तत् ॥ १ ॥

प्रकृतप्रत्यभिज्ञानाच्च कर्मान्तरचोदना।
देवताः प्रकृतास्तत्र द्रव्यमन्याभ्य उच्यते ॥ २ ॥

दर्शपूर्णमासयोः श्रूयते। यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान् विभजेत्। ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात्। ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुम्। येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुमिति। अयमर्थः। दर्शभ्रान्त्या केनचिच्चतुर्दश्यां हविर्निरुप्तं भवति। ततः प्रत्यूषे पूर्वस्यां दिशि चन्द्रमा अभ्युदेति। तदा निरुप्तास्तण्डुलास्त्रेधा विभक्तव्याः। असङ्क्लिष्टा ईषत् खण्डिता अतिसूक्ष्मकणाश्चेति त्रैविध्यम्। ते त्रिविधा दात्रादिगुणविशिष्टेभ्योऽग्न्यादिदेवेभ्य इति। तदेतत् प्रक्रान्ताद्दर्शकर्मणोऽन्यत् कर्म। कुतः। कालापराधप्रायश्चित्तार्थं द्रव्यदेवताविशिष्टस्य कर्मणो विधीयमानत्वात्। तत्र इदं प्रायश्चित्तं कृत्वा परेद्युर्दर्शकर्मानुष्ठेयमिति प्राप्ते ब्रूमः। हविर्निरुप्तमिति प्रकृतं यद्दर्शकर्म तत् परित्यज्य कर्मान्तरविधिकल्पने प्रकृतहानाप्रकृतप्रक्रिये प्रसज्येयाताम्। अतस्तस्मिन्नेव प्रकृते कर्मणि निरुप्तस्य हविषः पूर्वदेवताभ्यो दर्शसम्बन्धिनीभ्योऽपनयोऽत्राभिधीयते। तण्डुलोपलक्षितं यद्धविर्दधिरूपं आज्यरूपं च पूर्वेद्युर्निरुप्तं तद्धविः पूर्वदेवताभ्योऽपनीयाग्नेरिन्द्राच्च विभजेदिति देवतास्त्रिविधाः परस्परविभागोऽत्र विधीयते। न तु तण्डुलानां स्थविष्ठमध्यमाणिष्ठरूपस्त्रिविधविभागो विधीयते। तस्य प्राप्तत्वात्। ये मध्यमाः स्युरित्यादिविनियोगभेदादर्थप्राप्तः

स विभागः। ततः पूर्वदेवतात्यक्ता दातृत्वादिगुणयुक्ताभ्योऽग्न्यादिदेवताभ्यः पूर्वनिरुप्तं हविः प्रदातव्यम्। ननु प्रतिपदि प्रातर्निर्वापकालः। न तु दर्शे। तथा सति दर्शभ्रान्त्यापि चतुर्दश्यां निर्वापाभावान्निर्वापादूर्ध्वं चन्द्रोदयो न प्राप्नोति। नैष दोषः। एषो दारुहकालीनत्वेनार्थसिद्धे पूर्वद्युर्दोहातञ्चने तदभिप्रायेण निरुप्तमित्युच्यते। यद्वा। व्रीहिनिर्वापोऽपि पूर्वद्युर्विकल्पितः तथा च श्रूयते। यदि बिभियाद‍भिर्नोदेष्यतीति महापात्रे हवींषि निर्वपेदिति। अयमर्थः। भ्रान्त्या प्रमाणेन वा दर्शोऽयमिति निश्चितवतश्चन्द्रोऽभ्युदेष्यतीति भीतिर्नास्ति। तदा तस्मिन्नेव दिने प्रौढपात्रे सर्वाणि निर्वपेदिति। ततो निरुप्तस्यैव हविषस्तस्मिन्नेव कर्मणि कालव्यत्यासं निमित्तीकृत्य देवतान्तरसंयोगरूपः प्रयोगप्रकारभेद उपदिश्यते। ततो दर्शस्यैवायं नैमित्तिकः प्रयोगः। न तु दर्शलोपप्रायश्चित्तमिति नैमित्तिकं दर्शप्रयोगमनुष्ठाय पश्चात् स्वकाले नित्योऽपि दर्शप्रयोगोऽनुष्ठातव्यः।

द्वितीयाधिकरणमारचयति।

देवत्यागस्तथोपांशावश्रुते देवतान्तरे।

यागलोपोऽप्रसक्तत्वात् कृत्वा चिन्तेयमिष्यते॥ २॥

पूर्वोदाहृते वाक्ये यथा पुरोडाशे सान्नाय्ये च हविषि पूर्वदेवतात्यागः। तथैवोपांशुयाजहविष्याज्ये पूर्वदेवतां त्यक्त्वा प्रयोगान्तरं कर्त्तव्यमिति चेत् मैवम्। पुरोडाशसान्नाय्ययोरिवाज्ये देवतान्तरस्याश्रवणात्। तस्मात् पूर्वदेवतापरित्यक्तत्वादन्यदेवताया अश्रवणाच्च निर्दैवत उपांशु-

याजो लुप्यते । ननूपांशुयाजस्य दर्शे प्रसक्तिरेव नास्ति । तत् कुतो देवतापनयो लोपो वेति चेत् । एवं तर्हि क्त्वा-चिन्तास्तु ।

तृतीयाधिकरणमारचयति ।

ऊर्ध्वं चन्द्रोदये सेष्टिर्निर्वापात् पूर्वमप्युत ।
उक्तो रात्र्योऽन्तिमः पक्षो निरुप्तेर्विवक्षया ॥ ४ ॥

सा पूर्वोक्ताभ्युदयेष्टिर्हविर्निर्वापादूर्ध्वं चन्द्रोदये सति कर्त्तव्या निरुप्तं हविरभ्युदेतीत्युक्तत्वादिति चेत् । मैवम् । हविरभ्युदयस्य निमित्तत्वेन तद्विशेषणस्य निर्वापस्याविवक्षितत्वात । अन्यथा वाक्यभेदापत्तेः । यस्य हविरभ्युदेति तच्च हविर्यदि निरुप्तमित्येवं वाक्यभेदः । तस्मान्निर्वापात प्रागपि चन्द्रोदये सत्यविहितकाले कर्मोपक्रममात्रे णेयमिष्टिः कर्त्तव्या ।

चतुर्थाधिकरणमारचयति ।

प्राक प्राकृतीभ्यां निर्वापो वैकृतीभ्यांऽथवाग्रिमः ।
तण्डुलोक्तेर्वैकृतीभ्यो हविर्मात्रोपलक्षणात् । ५ ॥

निर्वापात प्राग यदा चन्द्रोदयः । यदा चन्द्रोदयादूर्ध्वं क्रियमाणो निर्वापः प्राकृतीभ्यां देवताभ्यां युक्तः । कुतः । तण्डुलान् विभजेदिति वाक्येन तण्डुलीभावादूर्ध्वं प्राकृतदेवतापनयश्रवणात् । निर्वापस्तु व्रीहीणामेवेति तस्मिन् काले प्राकृत्योऽग्न्यादिदेवता नापनीता इति प्राप्ते ब्रूमः वैकृतीभ्यां दातृत्वादिगुणयुक्ताभ्योऽग्न्यादिदेवताभ्यो निर्वापः कर्त्तव्यः । कुतः । तण्डुलशब्देन हविर्मात्रस्योपलक्षणात् । अन्यथा दधिपयसोरतण्डुलत्वेन देवता-

पनयो न स्यात्। हविर्मात्रविवक्षायां तु प्रैहीणामपि हविष्ट्वेन प्राकृतदेवतासम्बन्धमपनीय देवतान्तरसम्बन्धस्य कर्त्तुं युक्तत्वाद्वैकृतीभ्यो निर्वपेत्।

षष्ठमाधिकरणमारचयति।

प्राकृतीभ्योऽल्पनिर्वापेऽन्य इये शिष्टतण्डुलात्।
प्राकृतीभ्यो वैकृतीभ्यस्तूष्णीं वा निर्वपेदिह ॥ ६ ॥
प्राकृतीभ्य प्रवृत्तत्वाद्वैकृतीभ्यो निमित्ततः।
शिष्टांशस्यापदार्थत्वादसंयोगादिहान्तिमः ॥ ७ ॥

यदा प्राकृतीभ्यो मुष्टिमात्रे निरुप्ते सति चन्द्रोऽभ्युदेति। तदा मुष्टिचतुष्कपोऽवशिष्टोऽंशः प्राकृतीभ्य स एव निर्वप्तव्यः। कुतः। प्राकृतीनां प्रवृत्तत्वादित्येकः पक्षः। चन्द्रोदये निमित्ते सति नैमित्तिकस्य पूर्वदेवतापनयस्यावश्यंभावाद् वैकृतीभ्योऽवशिष्टांशनिर्वाप इति द्वितीयः पक्षः। अस्तु प्राकृतदेवतापनयो निमित्ताधीनः। अन्यदेवतासंयोगस्त्वंशस्य न सम्भवति। अन्यासु देवता प्राकृतदेवतास्थाने निवेशनीया। प्राकृतदेवतानां च निर्वापपदार्थेन संयोगः कृतः। न तु पदार्थांशेन। तत्स्थानपतितानां वैकृतीनां च नांशसंयोगो युक्त इत्यस्यांशस्य प्राकृतीभ्योऽपनीतत्वाद्वैकृतीभिरसंयोगाच्च तूष्णीमेव निर्वाप इति राद्धान्तः।

सप्तमाधिकरणमारचयति।

वेदिः सावाग्निनो वा स्यादन्यस्यापि दोषश्रुतेः।
साग्नस्येत्यग्निमोऽन्यः स्याद्देवमात्रविधानतः ॥ ८ ॥

न हि सान्नाय्यरहितस्य दधिपयसी विद्येते। तदभावे च दधनि चरुं शृते चरुमिति विधिर्न सङ्गच्छते। तस्मात् सान्नाय्यिन एव सा पूर्वोक्ताभ्युदयेष्टिरिति चेत्। मैवम्। अत्रोक्ता देवता एवात्र विधीयन्ते। दधिपयसोरपि विधाने वाक्यं भिद्येत। ततस्तण्डुलवत् प्राप्तयोर्दधिशृतयोरनूद्य-तया विध्यभावाद्दर्के चरुश्रपणसम्भवाच्च सान्नाय्यिवदन्य-स्यापि मेष्टिरस्ति।

सप्तमाधिकरणमारचयति।

सत्राय दीक्षितानां चेत् साम्युत्थानाभिवाञ्छनम्।
यजेद्विश्वजिता क्रीते राजन्ये तत् पुरापि वा। ८ ॥
आद्यः सोमविभागोक्तेरक्रीते तदसम्भवात्।
अर्थप्राप्तविभागस्यानुवादादन्तिमो भवेत् ॥ १० ॥

इदमाम्नायते। सत्राय दीक्षितानां साम्युत्तिष्ठासेत् सोमं प्रविभज्य विश्वजिता यजेतेति। सत्त्रिणां मध्ये यः कोऽपि सत्त्रेकदेशमनुष्ठाय सत्त्रं परित्यज्य यदि गन्तु-मिच्छेत् तदा स्वकीयं सोमं विभज्य तेन सोमेन विश्व-जिद्यागं कुर्यादित्यर्थः। तदेतद्विश्वजिदनुष्ठानं सोमे क्रीते पश्चादुत्तिष्ठासायां भवति। न तु पूर्वम्। कुतः। उच्यमानस्य सोमविभागस्य सोमक्रयात् पूर्वमसम्भवादिति चेत्। मैवम्। नात्र सोमविभागोऽङ्गत्वेन विधीयते। किन्तु क्रीतराजकस्य द्रव्यान्तरविभागप्राप्तोऽनूद्यते। सोम-ग्रहणं तु प्रदर्शनार्थम्। तस्मादुत्तिष्ठासां निमित्तीकृत्य विश्वजितस्तस्य विधानात् सोमक्रयात् प्रागप्युत्तिष्ठासायां विश्वजिद् भवति।

अष्टमाधिकरणमारचयति ।

ज्योतिष्टोमे द्वादश स्युर्दीक्षा एकादशोऽथवा ।

स्यादश्रुतेर्वचनादाद्यः प्रत्यक्षश्रुतितोऽन्तिमः ॥ ११ ॥

ज्योतिष्टोमप्रकरणे दीक्षापक्षाः श्रूयन्ते । तत्कल्प सूत्रकार उदाजहार । एका दीक्षा तिस्र उपसद पञ्चमीं प्रसुतस्तिस्रो वा दीक्षास्तिस्र उपसदः सप्तमीं प्रसुतश्चतस्रो वा दीक्षास्तिस्र उपसदोऽष्टमीं प्रसुत इति । तथान्यदपि श्रुतम् । द्वादश दीक्षा इति । दीक्षणीयेष्ट्या सम्पन्न संस्कारो दीक्षा । सा चैकस्मिन्दिनेऽनुष्ठानादिका भवति । तदूर्ध्वं त्रिषु दिनेषूपसन्नामका होमाः । पञ्चमे दिने सोमयागः । एवं त्रिषु चतुर्षु द्वादशसु वा दिनेषु दीक्षाधर्मा वाङ्नियमादयोऽनुवर्तनीया इत्यर्थः । तत्र ज्योतिष्टोमे द्वादशदीक्षापक्ष उपादेयः । कुतः । द्वादशरात्रीर्दीक्षितो भृतिं वन्वीतेति श्रवणात् । यज्ञार्थं याञ्चया द्रव्यसम्पादनं भृतिवननम् । तच्च नित्यम् । तत्सयोगेन द्वादशत्वपक्षोऽपि नित्यः । एकादिपक्षाणां तु विकृतिषूत्कर्ष इति भाष्यकारस्य मतम् । तदेतत् पूर्वपक्षीकृत्य वार्त्तिककारेणेवं सिद्धान्त कृतः । दीक्षितो भृतिं वन्वीतेत्येतावदेवात्र विधीयते । द्वादशेत्युक्तिस्तु प्रदर्शनार्था । एवं सति प्रत्यक्षश्रुतिसिद्धा एकादिपक्षा अबाधिता भविष्यन्ति । तस्मात सर्वे पक्षा ज्योतिष्टोमे विकल्पिताः ।

नवमाधिकरणमारचयति ।

द्वादशाहे किमेकादिविकल्पो द्वादशैव वा ।

आद्यः प्रकृतिवत् सर्वा दिकानामुक्तितोऽन्तिमः ॥१२॥

द्वादशाहस्य ज्योतिष्टोमविकृतित्वादेकादिदीक्षा द्वादशाहे विकल्पिता इति चेत् । मैवम् । अभीप्सत एव दीक्षाभिरिति श्रुतस्य दीक्षाबहुत्वस्य वाक्यशेषेण द्वादशसंख्यायां पर्य्यवसानात् । तथा च षट्संख्याकानि द्विकानि श्रूयन्ते । द्वाभ्यां लोमावद्यति । द्वाभ्यां त्वचम् । द्वाभ्यामसृक् । द्वाभ्यां मांसम् । द्वाभ्यामस्थि । द्वाभ्यां मज्जानमिति । किञ्च षट्त्रिंशदहो वा एष यद् द्वादशाह इत्याम्नातम् । तत्रोपसदो द्वादश सुत्या द्वादशेत्येतदविवादम् । तथा सति दीक्षाणां द्वादशत्वमन्तरेण षट्त्रिंशत् संख्या न पूर्य्यते । तस्माद् द्वादशाहे द्वादशैव दीक्षा नियताः ।

दशमाधिकरणमारचयति ।

गवामयन उक्ता तु या काचित पूर्णिमाथवा ।

चैत्री माघ्यन काचित् स्यादविशेषात् प्रशंसया ॥ १३ ॥

चैत्री स्यात क्रय एकाष्टकायामित्युपवर्णितम ।

माघ्यकृष्णाष्टमी त्वेकाष्टकातो माघपूर्णिमा ॥ १४ ॥

गवामयने श्रूयते । चतुरहे पुरस्तात् पौर्णमास्यै दीक्षेरन् । तेषामेकाष्टकायां क्रयः सम्पद्यत इति । पौर्णमास्याः पूर्वस्मिंश्चतुरहे दीक्षेरन् । एकादश्यां दीक्षामारभेत । तथा सति पौर्णमास्या उपरितने सप्तमीदिने द्वादश दीक्षा पूर्य्यन्ते । तदुपरितन्यामष्टम्यां सोमक्रय इत्यर्थः । तत्र विशेषस्यानुक्तत्वाद्वा काचित पूर्णिमेत्येकः पक्षः । चित्रापूर्णमासे दीक्षेरन् । मुख वा एतत संवत्सरस्य यच्चित्रापूर्णमास इति प्रशस्यमानतया चैत्री पौर्णमासीति द्वितीयः पक्षः । याज्ञिकसमाख्यया माघकृष्णाष्टम्या एका-

ष्टकात्वात् तत्र सोमक्रयसम्पत्तये माघ्याः पौर्णमास्याः पूर्व स्यामेकादश्यां दीक्षारब्धव्या।

एकादशाधिकरणमारचयति।

कुर्तोऽप्यवभृथोत्कर्षे जुहुयादग्निहोत्रकम्।
न वाद्योऽप्रतिषिद्धत्वान्नैवं दीक्षानुवर्त्तनात्॥ १५॥

ज्योतिष्टोमे दीक्षोपक्रमदिनमारभ्य पञ्चमे सप्तमे वा दिने सुत्या भवति। तस्मिन् सुत्यादिने त्रिषु सवनेष्वनुष्ठितेष्ववभृथः कर्त्तव्यः। तस्मिन् कृते दीक्षानियमा निवर्त्तन्ते। तथा सति कदाचिद्दैवान्मानुषाद्वा विघ्नादवभृथस्य केषुचिद्दिनेषूत्कर्षो भवति। तेषु दिनेषु दीक्षितनियमा न सन्ति। कुतः। नियमावधेरवभृथकालस्यातिक्रान्तत्वात्। ते च नियमा एवमाम्नायन्ते। दीक्षितो न ददाति न पचति न जुहोतीति। तेषां नियमानामभावे प्रागप्यवभृथाद्दानहोमादयः कार्य्या इति प्राप्ते ब्रूमः। दीक्षामोचनस्यावभृथः साधनम्। न तु कालः। अतोऽवभृथकालेऽतिक्रान्तेऽपि यावदवभृथं दीक्षानुवर्त्तत इत्यवभृथोत्कर्षे दीक्षितधर्माणां निषेधानामप्युत्कर्षाद्दानहोमादयस्तेषु न कार्य्याः।

द्वादशाधिकरणमारचयति।

दीक्षानुवृत्तौ कर्त्तव्यः प्रतिहोमो न वाग्रिमः।
पुंदोषान्न तथाप्यस्य दीक्षायां शास्त्रवारणात्॥ १६॥

अवभृथोत्कर्षे दीक्षानुवृत्तौ यावत्सु दिनेष्वग्निहोत्रं न हुतं तावत्कालीनापराधपरिहाराय प्रतिहोमः कर्त्तव्यः। यथा सायंकालीने प्रातःकालीने वा होमे पुरुषा-

वराग्रातिपतिते कालान्तरे होमः क्रियते। तद्वत्। अस्ति ह्यत्र पुरुषापराधो। अवभृथोत्कर्षस्य तत्कृतत्वात्। न त्ववभृथोत्कर्षः शास्त्रेण विहितः। तस्मात् प्रतिहोमः कार्य्य इति प्राप्ते ब्रूमः। भवत्ववभृथोत्कर्षोऽपराधकृतः। तथापि दीक्षायामनुवर्त्तमानायां दीक्षितो न ददातीत्यादिशास्त्रेणैव होमो निवारित इति नास्ति होमकर्त्तव्यता। सायंकालीनादिहोमस्य तु कर्त्तव्यस्यैव सतोऽकरणात् प्रतिहोमः प्राप्नोतीति वैषम्यम्।

त्रयोदशाधिकरणमारचयति।

दैवादुदवसानीयोत्कर्षे होमे कृतिर्न वा।
कृतिर्दीक्षामोचनाद्वा पुनराधेयसम्मिते॥ १७॥

कृतेऽवभृथे पश्चादुदवसानीयेष्टिर्विहिता। सा यदि केनापि निमित्तेनोत्कृष्टा। तदानीमवभृथेन दीक्षाया उन्मुक्तत्वाद्दीक्षितो न ददातीत्यादिनिषेधाभावाद्धोमः कर्त्तव्यः। तदकरणे च प्रतिहोमः कार्य्य इति चेत्। मैवम्। एतया पुनराधेयसम्मितयेष्ट्याग्निहोत्रं जुहुयादिति वचनेनोदवसानीयायां कृतायां पश्चादग्निहोत्राधिकारप्रतिपादनात्। ततस्तदुत्कर्षेऽग्निहोत्रं प्रतिहोमं वा कुर्य्यात्।

चतुर्दशाधिकरणमारचयति।

कृत्वाचिन्ताक्रमो नो चेत् प्रतिहोमोऽतिपाततः।
क्रमोऽस्त्वग्निष्टोमकादौ सायं पौर्णमीतरः॥ १८॥

अवभृथोदवसानीययोरुत्कर्षे होमकर्त्तव्यता तदकरणे प्रतिहोमं वाभ्युपेत्य कृत्वाचिन्ता क्रियते। अवभृथोदवसानीययोरिष्ट्योरनुष्ठितयोः सत्योः पूर्वमतिपन्नानां

होमानां प्रतिहोमा युगपद् बहवः प्राप्ताः। तेषु नियामका-भावान्नास्ति नियतः क्रम इति पूर्वपक्षः। अतिपातक्रमस्य बुद्धिस्थस्य त्यागे कारणाभावात् प्रतिहोमेऽपि स एव क्रम इति राद्धान्तः। तत्राग्निष्टोमस्य सूर्य्यास्तमयात् प्रागेव समाप्तत्वात् सायंहोमः प्रथममतिपद्यते। षोडशिनस्तु रात्रौ समाप्तेः प्रातर्होमः प्रथममतिपद्यते। तस्मादनेनैव क्रमेण प्रतिहोमं कुर्य्यात्।

पञ्चदशाधिकरणमारचयति।

भिन्ने होमो यत्र तत्र प्रकृते वा निमित्ततः।
सर्वत्र स्यात् फलित्वाय प्रकृतेनैकवाक्यता॥ १९॥

दर्शपूर्णमासयोः श्रूयते। भिन्ने जुहोति। स्कन्ने जुहोतीति। तत्र पात्रभेदस्य स्कन्दनस्य होमनिमित्तत्वात् क्रत्वन्तरेषु लोकव्यवहारे वा यत्र निमित्तं सम्पद्यते तत्र सर्वत्र होतव्यमिति चेत्। मैवम्। फलकल्पनाप्रसङ्गात्। प्रकृतेन तु दर्शपूर्णमासकर्म्मणा सहैकवाक्यतायां तत्फलेनैव फलवत्त्वं सिध्यति। तस्माद्दर्शपूर्णमासयोस्तन्निमित्तेन क्रियमाणो होमस्तदङ्गम्। न तु गृहदाहेष्टिवत् स्वतन्त्रं कर्म।

षोडशाधिकरणमारचयति।

व्यापन्नमप्सु किं तत् स्याद्‌निश्चेयमहेतुतः।
आर्य्यास्त्याज्यं कृमिकीटदूषितं तत् प्रमितितः॥ २०॥

इदमाम्नायते। व्यापन्नमप्सु हरतीति। तत्र व्यापन्नशब्दस्यार्थो निश्चेतुमशक्यः शक्यो वेति संशयः। निश्चायकस्य हेतोरभावादशक्य इति चेत्। मैवम्। कृमिकी

टादिभिर्दूषितं यद् द्रव्यमार्य्यैरभोज्यं तदेवात्र प्रसङ्ग-बलाद् व्यापन्नमिति निश्चेतुं शक्यते ।

सप्तदशाधिकरणमारचयति ।

उद्गातुः प्रतिहर्तुश्च सहापच्छेदनेऽस्ति न ।
प्रायश्चित्तमुतास्त्यत्र स निमित्तविघातः ॥ २१ ॥
एकैकस्यैव विच्छेदकर्तृत्वान्न विहन्यते ।
कालमात्रं तु तत्रैकं प्रायश्चित्तमतो भवेत् ॥ २२ ॥

ज्योतिष्टोमे श्रूयते । यद्युद्गातापच्छिद्येतादक्षिणो यज्ञः संस्थाप्योऽथान्यस्माहृत्त्व्यस्तत् तद्दद्यात् यत् पूर्वस्मिन् दास्यन् स्यात् । यदि प्रतिहर्तापच्छिद्येत सर्वस्वं दद्या-दिति । अस्यायमर्थः । प्रातःसवने बहिष्पवमानेन स्तोष्य-माणा ऋत्विजः शालाया बहिः प्रसर्पन्ति । तदानीमेकस्य पृष्ठतोऽन्य इत्येवं पिपीलिकावत् पङ्क्त्याकारेण गन्तव्यम् । तत्र पुरतो गन्तुः कच्छं गृहीत्वैव पृष्ठतोऽन्यो गच्छेत् । एवं सति यदि प्रमादादुद्गाता गृहीतं कच्छं मुञ्चेत् । तदा दक्षिणामदत्त्वा प्रक्रान्तो यज्ञः समापनीयः । तं समाप्य पुनरपि स यज्ञः प्रयोक्तव्यः । तस्मिन् प्रयोगे पूर्वं यद्दित्सितं द्रव्यं तद् तद्यात् यदा प्रतिहर्त्ता मुञ्चेत् । तदा तस्मिन्नेव प्रयोगे सर्वस्वं दद्यादिति । तत्र यद्युद्-गातृप्रतिहर्त्तारौ युगपन्मुञ्चेताम् । तदानीमुक्तं प्रायश्चित्त-निमित्तं विहन्येत । एककर्तृको ह्यपच्छेदो निमित्तत्वेन श्रुतः । अयं तूभयकर्तृकत्वान्नैकेन व्यपदेष्टुं शक्यते । तस्माच्छ्रूयमाणस्य निमित्तस्य विहितत्वान्नास्ति प्रायश्चित्त-मिति प्राप्ते ब्रूमः । द्वौ ह्यत्रापच्छेदौ । तदा त्वेकैकस्यैवैक

एव कर्त्तेति निमित्तस्य नास्ति विघातः। कालमात्रविच्छेदेनापच्छेदभ्रान्तिः। तस्मान्निमित्तविघाताभावान्नास्ति प्रायश्चित्तम्।

अष्टादशाधिकरणमारचयति।

समुच्चयो विकल्पो वा प्रायश्चित्तद्वयेऽग्रिमः।
अदक्षिणत्वं पूर्वस्मिन् प्रयोगेऽन्यत्तु पश्चिमे॥ २३॥
प्रयोगे पश्चिमे नास्ति निमित्तं तेन तद्द्वयम्।
प्राथमिकप्रयोगेऽतो विरुद्धत्वाद्विकल्प्यते॥ २४॥

अदक्षिणत्वं सर्वस्वदक्षिणत्वं चेति यत् प्रायश्चित्तद्वयं निमित्तभेदेन श्रुतं तन्निमित्तद्वयसन्निपाते समुच्चेतव्यम्। यद्यदक्षिणत्वसर्वस्वदानयोरन्योन्यविरोधः। तर्हि प्रयोगभेदेन व्यवस्थापनीयम्। अपच्छेदयुक्ते प्रथमप्रयोगे दक्षिणा न दातव्या। उत्तरप्रयोगे सर्वस्वं दातव्यम्। सत्यपि प्रयोगभेदे कर्म्मण एकत्वात् समुच्चय इति प्राप्ते ब्रूमः। न ह्युत्तरप्रयोगेऽपच्छेदो विद्यते। न चासति निमित्ते प्रायश्चित्तं युक्तम्। तस्मात् प्रथमप्रयोग एव निमित्तद्वयवशात् प्रायश्चित्तं प्राप्तम्। तच्चान्योन्यविरुद्धत्वाद्विकल्प्यते।

एकोनविंशाधिकरणमारचयति।

अपच्छेदक्रमे पूर्वः प्रबलः स्यादुतोत्तरः।
असञ्जातविरोधेन पूर्वेणोत्तरबाधनम्॥ २५॥
निरपेक्षोत्तरज्ञानं जायते पूर्वबाधया।
न बाधकान्तरं तस्य तेन प्रबलमुत्तरम्॥ २६॥

उद्गातृप्रतिहर्त्रोर्ज्ञातयोरपच्छेदयोर्यौगपद्ये समानबल-

स्यादस्तु प्रायश्चित्तयोर्विकल्पः । यदा तु क्रमेणापच्छेदौ स्याताम् । तदानीमसञ्जातविरोधित्वेन पूर्वस्य प्रबलत्वाच्छ्रुतिलिङ्गादाविवोत्तरस्य प्रवृत्तिर्निरुध्यत इति चेत् । मैवम् । श्रुतिलिङ्गादावुत्तरस्य पूर्वसापेक्षत्वात् पूर्वेण निरोधे सत्युत्तरयोरुत्पत्तिरेव नास्ति । इह तु ज्ञानद्वयमन्योन्यनिरपेक्षं वाक्यद्वयादुत्पद्यत इति नास्त्युत्पत्तिप्रतिबन्धः । उत्पद्यमानं चोत्तरज्ञानं स्वविरुद्धस्य पूर्वज्ञानस्य बाधेनैवोत्पद्यते । ननु निरपेक्षत्वस्य समानत्वात् पूर्वज्ञानमेवोत्तरस्य बाधकमस्त्विति चेत् । न । पूर्वज्ञानोत्पत्तिदशायामविद्यमानस्योत्तरज्ञानस्य बाध्यत्वायोगात् । उत्तरकाले तु स्वयं बाधितं पूर्वज्ञानं कथमन्तरस्य बाधकं भवेत् । न चान्यत् किञ्चिदुत्तरस्य बाधकं पश्यामः । तस्मादुत्तरकालीनापच्छेदनिमित्तं प्रायश्चित्तमनुष्ठेयम् ।

विंशाधिकरणमारचयति ।

उद्गातुः पश्चिमच्छेदे पुनर्यागस्य दक्षिणा ।
शतं द्वादशयुक्तं स्याद्यदि वा सर्ववेदसम् ॥ २७ ॥
तद्वाक्यात् पुरा दित्सुरित्युक्तेः शतदक्षिणा ।
प्रतिहर्तुः पुराच्छेदात् सर्ववेदसबाधितम् ॥ २८ ॥
शतदानं पूर्वयागे सर्ववेदसदित्सुता ।
प्राप्नेत्यूर्ध्वं प्रयोगे तद्दातव्यं सर्ववेदसम् ॥ २९ ॥

यद्युद्गाता पश्चादपच्छिद्यते । तदा तस्यापच्छेदस्य प्रबलत्वात्तन्निमित्तं प्रायश्चित्तमनुष्ठेयम् । तच्च प्रायश्चित्तमोदृशं प्रथमप्रयोगं दक्षिणारहितमनुष्ठाय द्वितीयप्रयोगे

र्वदित्सिता दक्षिणा दातव्येति। पूर्वं च गवां द्वादशाधिकं शतं दित्सितम्। तस्य ज्योतिष्टोमदक्षिणारूपेण विहितत्वात्। तस्मादुत्तरप्रयोगे द्वादशशतं देयमिति प्राप्ते ब्रूमः। प्रतिहर्त्तुः प्रथममपच्छेदे सति तन्निमित्तकं सर्वस्वदानरूपं प्रायश्चित्तं प्रथमप्रयोगे प्राप्तम्। तेन च क्रतुस्वभावप्रयुक्तस्य द्वादशशतस्य बाधात् सर्वस्वं दित्सितम्। न चोद्गात्रपच्छेदेन पश्चाद्भाविना सर्वदित्सा बाध्येत इति शङ्कनीयम्। बाधकस्य दक्षिणान्तरस्य तत्रानुक्तत्वात्। यद्दित्सितं तदुत्तरप्रयोगे देयमित्येतावदेवत्रोच्यते। दित्सितं च सर्वस्वमित्युक्तम्। अत उत्तरकालीनोद्गात्रपच्छेदनिमित्तेऽपि पुनःप्रयोगे पूर्वकालीनप्रतिहर्त्रपच्छेदप्रयुक्तं सर्वस्वमेव दातव्यम्।

एकविंशाधिकरणमारचयति।

अहर्गणे चेदुद्गातृच्छेद आवर्त्यतां गणः।
किंवा यत्र दिने छेदस्तदेवावर्त्यतां दिनम्। ३०॥
गणावृत्तिः प्रयोगैक्यात् प्रयोगोऽवान्तरः पृथक्।
तेनाहरेकमावर्त्यमनङ्गत्वान्न चेतरत्॥ ३१॥

द्वादशाहाद्यहर्गणे यदि कस्मिंश्चिदहन्युद्गातापच्छिद्येत। तदा तमहर्गणं दक्षिणारहितं समाप्य पुनरपि गण आवर्त्तनीयः। तत्र पूर्वं दित्सिता दक्षिणा दातव्या। कुतः। गणप्रयोगस्यैकत्वादिति प्राप्ते ब्रूमः। महाप्रयोगस्यैकत्वेऽप्यवान्तरप्रयोगस्य भिन्नत्वात्तद्दशेनैकमेवाहरावर्त्तनीयम्। न ह्यन्येषामह्नामेतदङ्गत्वमस्ति। तत

एकस्याङ्गे आवृत्ताविरतरावृत्तिप्रसङ्गो नास्ति। तस्मादेक-स्यैवाङ्गे आवृत्तिः।

इति माधवीये जैमिनीयन्यायमालाविस्तरे
षष्ठस्याध्यायस्य पञ्चमः पादः।

---

षष्ठपादस्य प्रथमाधिकरणमारचयति।
भिन्नप्रयाजादिकल्पा अपि सत्त्रेऽधिकारिणः।
तुल्यकल्पा एव वाद्यो वसिष्ठादिविधानतः॥ १॥
नराशंसाद्यङ्गतायां स्वामित्वोद्देशपूर्वकम्।
नाराशंसविधौ सन्निकर्षात् साद्गुण्यतोऽन्तिमः॥ २॥

प्रयाजेषु पुरुषभेदेनानुष्ठानप्रकारो भिद्यते। राज-न्यवसिष्ठादीनां नराशंसो द्वितीयः प्रयाजः। तनून-पादन्येषाम्। तत्र वसिष्ठात्रिवध्र्यश्वशुनककण्वकश्यप-संकृतिगोत्रोत्पन्ना ये नराशंसप्रयाजवन्तः। ये चान्ये तनूनपात् प्रयाजकाः। त एते भिन्नकल्पा अपि मिलित्वा सप्तदशावराः सत्त्रेऽधिकारिणः स्युः। कुतः। नराशंस-मुद्दिश्य तदङ्गत्वेन वसिष्ठादिविधानात्। तथा सति सत्त्रिणां मध्ये केषांचिद्वसिष्ठादिगोत्रजत्वेऽपि तदङ्गत्वं सिध्यतीति प्राप्ते ब्रूमः। वसिष्ठादीन् यजमानानुद्दिश्य नराशंसो विधीयते। तथा सति विधायकपदगतस्य धात्वर्थस्य विधेयत्वात् सन्निकर्षः। वसिष्ठादिविधौ तु पदान्तरोपात्तत्वाद्विप्रकर्षः। अतो वसिष्ठाद्युद्देशेन नरा-

शंसविधौ नराशंसानुष्ठाने वसिष्ठादीनां साद्गुण्यम्। इतरेषां तु वैगुण्यम्। तनूनपादनुष्ठाने तु वैपरीत्यम्। सर्वथा भिन्नकल्पानां सर्वेषां साद्गुण्यं न सिध्यति। अतः साद्गुण्याय तुल्यकल्पा एवाधिकारिणः।

द्वितीयाधिकरणमारचयति।

सायुज्यकामौ यजतोऽनेन राजपुरोहितौ।
राज्ञः पुरोहितौ राज्ञोऽस्तौ वा राजात्मकावुत ॥ ३ ॥
द्वयोर्द्वन्द्वसमासो वा तुल्यत्वायाद्यिमौ द्वयोः।
सिद्धौ द्वितीयो राज्ञोऽतिमात्रत्वाय तृतीयकः ॥ ४ ॥
अव्याहृत्वे चतुर्थः स्याद्वचनाद्भिन्नकल्पता।
तनूनपान्नराशंसौ विकल्पेते समत्वतः ॥ ५ ॥

कुलाययज्ञं प्रकृत्य श्रूयते। एतेन राजपुरोहितौ सायुज्यकामौ यजेयातामिति। तत्र राज्ञः पुरोहितस्य च भिन्नप्रयाजकल्पत्वादभिन्नप्रयाजकल्पत्वाय पुरोहितयो-रधिकारो वाच्यः। तथा सति राज्ञः पुरोहिताविति षष्ठीसमास इत्याद्यः पक्षः। पुरोहितं वृणीत इत्युपा-देयगतस्यैकत्वस्य विवक्षितत्वाद्राजद्वयमन्तरेण पुरोहित-द्वयासम्भवाद्राजपुरोहितश्च राजपुरोहितश्चेत्यस्मिन्नर्थे कृतैक-शेषत्वादुभयो राज्ञोः पुरोहिताविति द्वितीयः पक्षः। अराज्ञः पुरोहिताभावाद् व्यावर्त्याभावे राजपदं व्यर्थम्। ततो राजानौ च तौ पुरोहितौ चेति कर्मधारयसमास इति तृतीयः पक्षः। राजत्वपुरोहितत्वधर्मौ भिन्नजाति-वर्त्तिनावेकस्मिन् व्याहतौ। तस्माद्राजा च पुरोहित-श्चेति द्वन्द्वसमास इति चतुर्थः परिगृह्यते। तत्र वचन-

बलाद्विबकक्षयोरपि सहाधिकारः। उभयोः समप्रधानत्वाबराशंसतनूनपातौ विकल्पेते।

तृतीयाधिकरणमारचयति।

सत्त्रं वर्णत्रयस्योत विप्रस्यैवाविशेषतः।
त्रयस्य मैवं स्वामित्वं विप्राणामृत्विजां यतः॥ ६॥

ऋद्धिकामाः सत्त्रमासीरन्नित्यत्र विप्रा इति विशेषो न श्रूयते। तस्माद्दर्णत्रयस्य सत्त्राधिकार इति चेत्। मैवम्। विप्राणामेवार्त्विज्यमिति द्वादशे वक्ष्यते। ऋत्विक्कार्य्यं यजमानाः सत्त्रे समाम्नाताः। ये यजमानास्त ऋत्विज इति। तस्माद्विप्राणामेव सत्त्रम्।

चतुर्थाधिकरणमारचयति।

विप्रस्य सत्त्रं सर्वस्य वासिष्ठस्यैव वा भवेत्।
वैश्वामित्रस्यैव वाद्य ऋद्धिच्छुत्वेन मध्यमः॥ ७॥
ब्रह्मत्वाय ह्यवासिष्ठे ब्रह्मता स्तोमभागतः।
विश्वामित्रसमानानामेव होतृत्वमिष्यते॥ ८॥

ऋद्धिकामस्य सत्त्रं विहितम्। ब्राह्मणश्च सर्व ऋद्धि वाञ्छति। तस्माद्विप्रस्य सर्वस्य सत्त्राधिकार इत्याद्यः पक्षः। वासिष्ठो ब्रह्मा भवतीति वचनाद्वासिष्ठस्य ब्रह्मत्वासम्भवात् ब्रह्मत्वाय वासिष्ठस्याधिकारो वाच्यः। तथा सति भिन्नकल्पत्ववारणाय तुल्यकल्पा यजेरन्निति द्वितीयः पक्षः। वासिष्ठो ब्रह्मेति वाक्यं न वासिष्ठस्य ब्रह्मत्वाधिकारबोधकम्। रश्मिरसि क्षयाय त्वेत्यादयो मन्त्राः स्तोमभागाः। तानधीयानः स्वयमवासिष्ठोऽपि ब्रह्मतामर्हतीति स्तोमभागप्रशंसारूपेऽर्थवादे वासिष्ठो

ब्रह्मेति पठितत्वात्। तस्माद्वैश्वामित्रो होतेति विहितस्य होतृत्वस्य सिद्धये वैश्वामित्रस्य तत्समानकल्पानां चाधिकारः। नान्येषाम्।

पञ्चमाधिकरणमारचयति।

अनाधानस्य तत् किंवा धातुरेवाग्रिमो यतः।

एकस्याग्नेिषु तत् सिद्धिर्न स्वाग्निष्वात्मनेपदात्॥ ८॥

तत् सत्त्रमन्याधानरहितस्यापि सम्भवति। कुतः। सत्त्रिणां मध्ये कस्यचिदाहिताग्नित्वे तदीयेष्वग्निषु तेन सह प्रवृत्तैरनाहिताग्निभिरपि तस्य सत्त्रस्य साधयितुं शक्यत्वादिति चेत्। मैवम्। आदधीतेत्यात्मनेपदमाधानफलस्य कर्तृगामितां दर्शयति। तत् फलं चाग्नीनां कर्मयोग्यता। अतो येऽनाहिताग्नयो न तेऽधिकारिणः। यश्चाहिताग्निस्तस्यैव कर्मयोग्यता। नान्यस्य। किञ्च। सोमविकृतीनामिष्टिपूर्वकत्वं निर्णीतम्। इष्टिश्चाधानपूर्विका। तस्मादाधातुरेव सत्त्राधिकारः।

षष्ठाधिकरणमारचयति।

जुह्वादयो यस्य कस्य कार्य्याः साधारणा उत।

अविरोधादग्रिमोऽन्त्यो मृतदाहे विरोधतः॥ १०॥

सत्त्रिणां मध्ये यस्य कस्यचित् सम्बन्धिभिर्जुह्वादिपात्रैः सत्त्रं प्रयोक्तव्यम्। कुतः। अविरोधात्। अन्यदीयेष्वग्निष्वात्मनेपदं यथा विरुध्यते। नैवमत्र विरोधः कश्चिदुपलभ्यत इति प्राप्ते ब्रूमः। यस्य जुह्वादयः स चेत् सत्त्रमध्ये म्रियते। तदा मृतेन सह जुह्वादयो दह्यन्ते। आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च दक्षिणहस्ते जुहूमासा

दयेदित्यादिवचनैस्तदवगमात् । पात्रदार्ढ्ये चावशिष्टः सन्न-प्रयोगो विगुणः स्यात् । तस्मात् साधारणा भिन्ना एव जुह्वादयः सन्तिः सम्पादनीयाः ।

सप्तमाधिकरणमारचयति ।

सामिधेनीसाप्तदश्यं वैकृतं वैश्यगास्युत ।
वर्णत्रयस्य वाद्योऽस्तु वैश्यकर्तृविधानतः ॥ ११ ॥
प्रकृतौ पाञ्चदश्यस्य बाधकं वैश्य ईरितम् ।
विकृतौ त्रयगं वाक्यं त्रयोऽतोऽत्राधिकारिणः ॥ १२ ॥

अध्वरकल्पादिष्विष्टिविकृतिषु श्रूयते । सप्तदश सामि-धेनीरनुब्रूयादिति । तदेतत् सामिधेनीसाप्तदश्यं वैश्यस्य भवितुमर्हति । कुतः । प्रकृतौ सप्तदशानुब्रूयाद्वैश्यस्येति वाक्येन साप्तदश्याङ्गभूतकर्तृतया वैश्यस्य विहितत्वात् । तस्मात् साप्तदश्यद्वारा वैश्य एवाध्वरकल्पादिष्वधिक्रियत इति प्राप्ते ब्रूमः । प्रकृतौ पञ्चदश सामिधेनीरन्वाहेति वर्णत्रयसाधारण्येन पाञ्चदश्यं विधाय वैश्यं निमित्तीकृत्य पाञ्चदश्यबाधकतया साप्तदश्यं विहितम् । ततः साप्त-दश्यवाक्यस्य प्रकृतावेवान्वयसम्भवान्न विकृतिषूत्कर्षः । यत् तु विकृतिगतं साप्तदश्यवाक्यं तद्वर्णत्रयसाधारणम् । तस्मादध्वरकल्पादौ वर्णत्रयस्याधिकारः ।

इति माधवीये जैमिनीयन्यायमालाविस्तरे षष्ठस्या-ध्यायस्य षष्ठः पादः ।

---

सप्तमपादस्य प्रथमाधिकरणमारचयति ।

सर्वस्वदाने पित्रादावपि तद्धन एव वा ।

स्वत्वादाद्यः पितृत्वादावत्यागाद्धन एव तत् ॥ १ ॥

इदमामनन्ति । विश्वजिति सर्वस्वं ददातीति । तत्र धन इव पित्रादिष्वात्मीयत्वस्य समानत्वादस्ति पित्रादीनामपि तद्दानमिति प्राप्ते ब्रूमः । आत्मसम्बन्धत्यागपूर्वकं परसम्बन्धापादनं दानमित्युच्यते । न हि दीयमाने पितरि स्वकीयपितृत्वत्यागः परकीयपितृत्वापादनं वा सम्भवति । किञ्च । स्वशब्दस्यात्मा ज्ञातिरात्मीयं धनं चेति चत्वारोऽर्थाः । तेष्वेकस्मिन् प्रयोग एक एवार्थो वाच्यः । प्रकृतौ च गवादिधनस्य दक्षिणात्वादिहापि धनवाचित्वं युक्तम् । तस्माद्धनस्यैव दानम् ।

द्वितीयाधिकरणमारचयति ।

देया न वा महाभूमिः स्वत्वाद्राजा ददातु ताम् ।

पालनस्यैव राजत्वान्न स्वं भूर्दीयते न सा ॥ २ ॥

यदा सार्वभौमो राजा विश्वजिदादौ सर्वस्वं ददाति तदा गोपथराजमार्गजलाशयाद्यन्विता महाभूमिस्तेन दातव्या । कुतः । भूमेस्तदीयधनत्वात् । राजा सर्वस्येष्टे ब्राह्मणवर्जमिति स्मृतेरिति प्राप्ते ब्रूमः । दुष्टशिक्षाशिष्टपरिपालनाभ्यां राज्ञ ईशितृत्वं स्मृत्यभिप्रेतमिति न राज्ञो भूमिर्धनम् । किन्तु तस्यां भूमौ स्वकर्मफलभुञ्जानानां सर्वेषां प्राणिनां साधारणं धनम् । अतोऽसाधारणस्य भूखण्डस्य सत्यपि दाने महाभूमेर्दानं नास्ति ।

तृतीयाधिकरणमारचयति।

दानं केसरिणो नो वा विहितप्रतिषेधतः।
विकल्पः पर्य्युदासोऽयं येयजामहनीतितः॥ ३॥

न केसरिणो ददातीति विश्वजिति श्रूयते। तत्र सर्वस्वदानविधानात् केसरिदाननिषेधाच्चाश्वदानं विकल्पितमिति प्राप्ते ब्रूमः। नायं प्रतिषेधः। किन्तु पर्य्युदासः। तत्प्रकारश्च दशमस्याष्टमे पादे येयजामहमन्त्रोदाहरणेन व्युत्पादयिष्यते। ततस्तेन न्यायेनाश्वपर्य्युदासे सत्यश्वव्यतिरिक्तं सर्वस्वं देयमिति विधिनिषेधयोरेकवाक्यतालाभान्नाश्वस्य पाक्षिकमपि दानम्।

चतुर्थाधिकरणमारचयति।

अर्जयित्वापि किं सर्वं देयं यद्वा यदस्ति तत्।
सर्वोद्देशविधेराद्यो न प्राप्ते सर्वताविधेः॥ ४॥

पूर्वोक्ते सर्वस्वदाने सर्वमुद्दिश्य दानं विधीयते। पुरुषेण भोग्यं शय्यासनादिकं यत् सर्वं तद्दातव्यमिति। तस्मादविद्यमानं सर्वमर्जयित्वापि देयमिति चेत्। मैवम्। चोदकप्राप्तं दानमुद्दिश्य सर्वत्वविधानात्। सर्वशब्दस्य प्रसिद्धवाचित्वाद् विद्यमानविषयः। तस्माद्यदस्ति तदेव देयम्।

पञ्चमाधिकरणमारचयति।

धर्मार्थसेवकः शूद्रो देयो नो वा स दासवत्।
देयोऽस्वत्वात् पराधीनत्वाभावाच्च न दीयते॥ ५॥

यस्तु शूद्रो विहितं स्वधर्ममवगन्तुं सेवते सोऽपि सर्वस्वमध्यपातित्वाद्गर्भदासवद्देय इति चेत्। मैवम्। जीवि

क. यद्दानेन तस्मिन् सेवके स्वत्वाभावात् स्वेच्छाचारित्वे न परस्वत्वापादनासम्भवाच्च न देयः।

षष्ठाधिकरणमारचयति।

भूतं भावि च देयं स्यात् कालेऽवस्थितमेव वा।
आद्यः सर्वश्रुतेरन्त्योऽसम्भवादन्ययोस्तदा ॥ ६ ॥

विश्वजिन्मया कर्त्तव्य इत्यध्यवसायादूर्ध्वं दक्षिणादानात् पूर्वं यत् स्वेन भोग्यं सञ्चितं तद्भूतम्। यच्च दक्षिणादानादूर्ध्वं भविष्यत्येवेति निश्चितं तद्भावि। तदुभयमपि सर्वशब्दार्थत्वाद्दातव्यमिति चेत्। नैवम्। भूतस्य विनाशसम्भवाद्भाविनस्तदानीमप्राप्तत्वेनाविद्यमानस्य दानायोगाच्च दक्षिणाकालेऽवस्थितमेव देयम्।

सप्तमाधिकरणमारचयति।

दक्षिणाक्रतुभुक्त्यर्थं त्रयं देयमुतेष्टये।
शिष्टाथवा दक्षिणार्थमेवाद्यः सर्वशब्दतः ॥ ७ ॥
क्रतुशेषस्तदा बाध्यः प्रधानत्वादबाधनात्।
मध्योऽन्त्यो दक्षिणार्थस्यानुवादात् सर्वताविधिः ॥ ८

प्रकृतौ कर्मारम्भ एव यजमानेनात्मीयं धनं त्रिधा व्यवस्थापितम्। वचनबलात्। इदं मे भुक्त्यर्थमिदं मे यज्ञार्थमिदं मे दक्षिणार्थमिति। तदेतत् त्रयमपि दक्षिणार्थत्वाद्दातव्यमित्येकः पक्षः। दक्षिणा हि माध्यन्दिने सवने दीयते। तत ऊर्ध्वं तृतीयसवनमारभ्यावसानीयान्तः क्रतुभागोऽवशिष्टः। स च द्रव्याभावाद् बाध्येत। न चाङ्गभूतया दक्षिणया प्रधानस्य क्रतोर्बाधो युक्तः। ततस्तदबाधनाय क्रत्वर्थं भागमवस्थाप्यावशिष्टं सर्वं देयं

मिति द्वितीयः पक्षः। यद्दक्षिणात्वेन विधीयते तत्सर्वमित्यनूद्य विधानाद्दक्षिणार्थ एव भागो दातव्य इति राद्धान्तः।

अष्टमाधिकरणमारचयति।

विश्वजित्यष्टरात्रादौ शतं वा द्वादशाधिकम्।
सर्वं वाद्यश्चोदकोक्तिरन्त्यो नामातिदेशतः ॥ ९ ॥
एतद्भाष्ये वार्त्तिके तु सप्ताहानुजिघृक्षया।
आद्य. सिद्धान्तितः प्राप्तिमात्रत्वे नेदमीरितम् ॥ १० ॥

इदमाम्नायते। अथैतस्याष्टरात्रस्य विश्वजिदभिजितावेकाहावभित उभयतो ज्योतिर्मध्ये षडहः पशुकामो ह्येतेन यजेतेति। ज्योतिर्गौरायुरित्येतैस्त्रिभिर्नामभिरभिधेयानां त्रयाणां यागानामारोहावरोहाभ्यामुभयतो द्वितीयेऽह्नि सप्तमेऽह्नि च ज्योतिर्यस्य स उभयतो ज्योतिः षडहो भवतीति सोऽयं मध्ये प्रयोक्तव्यः। आदौ विश्वजित्। अन्तेऽभिजिदित्यर्थः। तत्राहर्गणस्य द्वादशविकृतित्वाद् द्वादशाहस्य च ज्योतिष्टोमविकृतित्वाच्चोदकपरम्परया द्वादशशतदक्षिणाष्टरात्रे प्राप्ता। ततः प्रथमस्याह्नो विश्वजितोऽपि सैव दक्षिणेति प्राप्ते ब्रूमः। स्वतन्त्र एको विश्वजित्। तस्य नाम्ना तदीया धर्माः प्रथमेऽहनि विश्वजित्यतिदिश्यन्ते। तस्मात् सर्वस्वं देयम्। तदेतद्भाष्यकारस्य मतम्। वार्त्तिककारस्तु द्वादशशतमित्येवं सिद्धान्तितवान्। विश्वजिद्व्यतिरिक्तेषु सप्तस्वहःसु चोदकप्राप्तां द्वादशशतदक्षिणामबाधितुं विश्वजिति नामातिदेशप्राप्ता सर्वस्वदक्षिणा बाधनीया। युक्तो हि बहूनामनुग्रहः। न च

विश्वजिति सर्वस्वामितरत्वासर्वस्वं वक्तुं शक्यम्। अहर्गण एवैकैव दक्षिणेति दशमे वक्ष्यमाणत्वात्। सूत्रकारस्तु नामातिदेशस्य प्राबल्यमात्रं व्युत्पादितवानिति द्रष्टव्यम्।

नवमाधिकरणमारचयति।

न्यूनेऽप्युक्तशतात् किं स्यात् सर्वताधिक एव वा।
सम्भवाद्नियमोऽन्यः स्याद्दानत्वे सर्ववर्णनात्॥ ११॥

यदेतद् द्वादशशतं प्रकृतितो विश्वजिति प्राप्तं तस्मान्न्यूनं कस्यचिद्धनम्। तस्मिन्नपि सर्वता सम्भवति। विद्यमानस्यानवशेषितत्वात्। तस्माद्ल्पधनयुक्तस्यापि विश्वजित्यधिकार इति प्राप्ते ब्रूमः। ज्योतिष्टोमे हि द्वादशशतं विधाय पश्चादुक्तम्। यद्येतावता नानमेयुरपि सर्वस्वेनेति। तत्राधिकस्यैव सर्वत्वादिहापि तदेव युक्तम्। तत्तु चोदकप्राप्तमपि पाक्षिकत्वपरिहारार्थेह नियम्यते। तस्मादृत्विजां वशीकारायाधिक एव सर्वता द्रष्टव्या।

दशमाधिकरणमारचयति।

देयैका षट्शतं वापरिमितं त्विति वारयेत्।
एकादिकां पूर्वसंख्यां यद्वा संख्यान्तरे विधिः॥ १२॥
नञ्प्रयोगान्निषेधः स्याद् व्युत्पत्त्या मानशून्यता।
कल्प्या बहुत्वं नैकादिनिषेधोऽन्यविधिस्ततः॥ १३॥

आधाने श्रूयते। एका देया षड्देया द्वादश देयाश्चतुर्विंशतिर्देयाः शतं देयं सहस्रं देयमपरिमितं देयमिति। तत्रापरिमितशब्दगतेन नञ्पदेन परिमाणं निषिध्यते। तथा सत्यपरिमितशब्दव्युत्पत्त्या देयद्रव्यस्य परिमाणशून्यता प्रतीयत इत्येकादिका पूर्वोक्तोक्ता गवां संख्या निवार्येत

इति प्राप्ते ब्रूमः । अपरिमितशब्दस्य रूढ्या बहुत्वमर्थः । तत्रैव प्रयोगबाहुल्यात् । ततो नैकादिपचा निवार्यन्ते । किन्तु संख्यान्तरं विधीयते ।

एकादशाधिकरणमारचयति ।

अर्वागपि बहुत्वं तत्सहस्रादूर्ध्वमेव वा ।
सम्भवादाद्यिमोऽन्त्यः स्यात् सहस्रामन्तरोक्तितः ॥ १४॥

अपरिमितशब्देन बहुत्वं विधीयते । तत्सहस्रादर्वागपि भवति । कुतः । द्विशतत्रिशतादौ बहुत्वसम्भवादिति चेत् । नैवम् । एकादिपचे पूर्वस्मादुत्तराभिवृद्धिदर्शनेनात्रापि सहस्रपचमनुपन्यस्य पश्चादभिधीयमानं बहुत्वं सहस्रादूर्ध्वं पर्य्यवस्यति ।

द्वादशाधिकरणमारचयति ।

माषान्मे पचतेत्येतद्वार्ष्णिष्वेवाखिलेषु वा ।
उक्तेर्विधेय तौ पचौ कल्पाचिन्तार्थवादतः ॥ १५ ॥

इदमाम्नायते । इति ह स्माह वटकुर्वार्ष्णिर्माषान् मे पचत न वा एतेषां हविर्गृह्णातीति । तत्र वार्ष्णिरित्युक्तत्वाद्वृष्णिगोत्राणामेवायं माषपाकविधिरिति चेत् । नैवम् । वृष्णिगोत्रोत्पन्नेन वटकुनाम्ना माषपाकस्य सम्बन्धो मात्र विधीयते । किन्तु माषपाकमात्रम् । वटकुसम्बन्धस्तु स्तावकत्वेनोपन्यस्यते । तस्मात् सर्वेषां माषपाकाधिकारः । तावेतौ पूर्वोत्तरपचौ कल्पाचिन्तयोपन्यस्तौ । परमार्थतस्तु माषपाकवाक्यमर्थवादः । तस्मादारण्यमेवाश्नीयादित्यनेन दर्शपूर्णमासयोरारण्याशनविधिना सह स्तावकत्वेनान्वयात् ।

त्वर्थाद्याधिकरणमारचयति ।

सहस्रवत्सरं सत्रं गन्धर्वादिनृणामुत ।
रसायनेन सिद्धानां कुलकल्पोऽथवोक्तितः ॥ १६ ॥
तदायुर्वाथ सार्द्धद्विशतानामुत मासगा ।
वत्सरोक्तिरुत द्वादशरात्रेषु दिनेषु वा ॥ १७ ॥
आद्यो दीर्घायुषः सत्त्वान्नृणामेवाग्निसम्भवे ।
द्वितीयोऽस्तु रसस्यायुर्हेतुत्वे तृतीयकः ॥ १८ ॥
क्रतुस्वकर्तुः फलित्वेऽस्तु तुर्योऽर्थासम्भवे सति ।
पञ्चमोऽस्तु चतुर्विंशत्युत्तमाः सत्रिणो यदि ॥ १९ ॥
षष्ठोऽस्तु यो मास एव संवत्सर इतीरणात् ।
सहस्रमासा नाधानादूर्ध्वं चेदस्तु सप्तमः ॥ २० ॥
वत्सरप्रतिमा द्वादश रात्रय इति श्रुतिः ।
न रात्रिष्वङ्गशब्दोऽत्र प्रतिमाया विशेषणात् ॥ २१ ॥
सारस्वाच्चित्रदाद्युक्तेरष्टमः पक्ष इष्यते ।
त्रिवृदादिपदैः स्तोमविशिष्टमहरुच्यते ॥ २२ ॥
साहः सङ्ख्यस्ततोऽहःसु गौणो संवत्सराभिधा ।
तस्माद्विश्वसृजां सत्रं सहस्रदिनमिष्यते ॥ २३ ॥

इदमाम्नायते। पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः पञ्चपञ्चाशतः पञ्चदशाः पञ्चपञ्चाशतः सप्तदशाः पञ्चपञ्चाशत एकविंशा विश्वसृजामयनं सहस्रसंवत्सरमिति। तत्र सहस्रसंवत्सरसत्त्रे गन्धर्वादीनामेवाधिकारः। तेषां दीर्घायुषः सद्भावादित्याद्यः पक्षः। वसन्ते ब्राह्मणोऽग्निमादधीतेत्यादिविधानामनुष्याणामेवाहवनीयाद्यग्नयः सम्भवन्ति। नान्येषां गन्धर्वादीनामिति चेत्। तर्हि

रसायनेन सिद्धानां दीर्घायुषां मनुष्याणामधिकार इत्यस्तु द्वितीयः पक्षः । रसस्यारोग्यपुष्ट्यादिजनकत्वमेव । न त्वायुर्हेतुत्वमिति चेत् । तर्ह्येकस्मिन् कुले समुत्पन्नानां पितृपुत्रपौत्रादीनां बहूनां सहस्रायुःसम्भवात् कुलाधिकार इति तृतीयः पक्षोऽस्तु । क्रतुकर्तुः फलं भवति । न च पितृपुत्रादिष्वेकोऽपि क्रतुं करोति । तस्मान्नास्ति फलमिति चेत् । तर्हि सत्रविधायकवचनबलादेव सत्त्रिणां दीर्घमायुर्भविष्यतीति चतुर्थः पक्षोऽस्तु । न ह्यस्य वचनस्य सोऽर्थः सम्भवति । तद्वाचकपदाभावात् । न च कल्पयितुं शक्यते । सम्भावितायुष्काणामपि सत्रान्तरेषु प्रवृत्तानां दैवान्म्रियमाणानां तत्सत्रविधिबलादायुर्वृद्धदर्शनादिति चेत् । तर्हि पञ्चपञ्चाशत इत्यस्य शब्दस्य पुरुषपरत्वमङ्गीकृत्य मार्द्धद्विशतानां पुरुषाणामधिकारेऽभिहिते वत्सरचतुष्टयेन सत्रस्य सहस्रसंवत्सरत्वं सम्पद्यत इति पञ्चमः पक्षोऽस्तु । चतुर्विंशतिपरमाः सत्रमासीरन्निति वचनादभ्यधिकानां न तत्राधिकार इति चेत् । तर्हि यो मासः स संवत्सर इति वचनात् संवत्सरशब्दस्य मासपरत्वे सति सहस्रमासं सत्रमित्येष षष्ठः पक्षोऽस्तु । अष्टमे वत्सर उपनीतो द्वादशवर्षाणि वेदमधीत्य विंशतिवयस्को विवाहं कृत्वा जातपुत्रोऽग्निमादधीत । तस्मादाधानादूर्ध्वमस्यायुषि न सन्ति सहस्रं मासा इति चेत् । तर्हि संवत्सरस्य प्रतिमा वै द्वादश रात्रय इति वचनात् संवत्सरशब्दो द्वादशरात्रिपरः । तथा सति रात्रीणां द्वादशसहस्राणि सम्पद्यन्ते । तासु च रात्रिषु षड्वत्सरशतद्वय-

दिवसरूपसंवत्सरत्वेन गण्यमानासु त्रयस्त्रिंशत्संवत्सरेभ्य ऊर्ध्वं मासचतुष्टयं भवति। तत्परिमितं चायुराधानादूर्ध्वमपि सम्भवतीति सप्तमः पक्षोऽस्तु। संवत्सरप्रतिमा वै द्वादश रात्रय इत्यस्मिन् वाक्ये संवत्सरशब्दो न रात्रिपरः। किन्तु तेन शब्देन प्रतिमा विशेष्यते। तस्मात् सप्तमः पक्षो युक्त इति चेत्। एवं तर्हि संवत्सरशब्दो दिनपर इत्यष्टम: पक्षोऽस्तु। तथा सति त्रिवृतः संवत्सरा इत्यादिवाक्यानां स्वारस्यं भवति। त्रिवृत्पञ्चदशः सप्तदश एकविंश इत्येते शब्दाः स्तोमवाचकाः सन्तः स्तोमयुक्ते एकैकस्मिन्नहनि यागरूपे लक्षणया वर्त्तन्ते। सत्रेषु तथाविधप्रयोगबाहुल्यात्। न त्वहःसंघे क्वचिदपि त्रिवृदादिशब्दाः प्रयुक्ताः। तैश्च शब्दैः सामानाधिकरण्यात् संवत्सरशब्दः स्वावयवभूतेऽहन्यवयवलक्षणया वर्त्तते। त्रिवृतः संवत्सरा इत्युक्ते त्रिवृत्स्तोमकयागयुक्तान्यहानीत्युक्तं भवति। तस्माद्विश्वसृजामृषीणामिदं सत्रं सहस्रदिनमिति राद्धान्तः।

इति माधवीये जैमिनीयन्यायमालाविस्तरे
षष्ठस्याध्यायस्य सप्तमः पादः।

---

अष्टमपादस्य प्रथमाधिकरणमारचयति।

चतुर्होत्राख्यमन्त्रेण होमः साग्न्यनग्न्योर्भयोः।
अनग्निके विधिर्वाथो होमत्वात् क्रतुहोमवत् ॥ १ ॥
उभयोः पुरुषार्थत्वात्तृतीया वचनात्तु तत्।
अथाहिताग्नेरेषा वा इत्यस्मो लौकिके श्रुतिः ॥ २ ॥

इदमाम्नायते। प्रजाकामं चतुर्होत्रा याजयेदिति। पृथिवी होता द्यौरध्वर्यु रित्यादिको मन्त्रश्चतुर्होता। तेन प्रजाकामं याजयेत्। सोऽयं होम आहिताग्निना कर्त्तव्यः। अग्निहोत्रादिक्रतुहोमेषु तथात्वदर्शनादित्येकः पक्षः। अनारभ्याधीतत्वेन क्रतुप्रवेशाभावात् पुरुषार्थतया विहितो होमः आहिताग्निरनाहिताग्निश्च साधारण इति द्वितीयः पक्षः। अनाहिताग्निरयं होमविधिरिति तृतीयः पक्षो युक्तः। कुतः। वचनबलात्। तत् तु वचनमेवमाम्नातम्। एषा वा अनाहिताग्नेरिष्टिर्यच्चतुर्होतार इति। तस्य चाहवनीयाद्यभावाल्लौकिकेऽग्नौ तद्धोमः।

द्वितीयाधिकरणमारचयति।

यस्तूपनयने होमो वैदिके वा स लौकिके।
अङ्गो पूर्ववदुक्तेरभावाद्वैदिकेऽस्तु सः॥ ३॥
आधानं विदुषो विद्यानुपनीतस्य नास्त्यतः।
असम्भवो वैदिकाग्नेर्होमोऽग्नौ लौकिके ततः॥ ४॥

यथा पूर्वत्रानाहिताग्नेर्होमविधायकं वाक्यमस्ति। तथोपनयनहोमस्य लौकिकाग्निविधायकवचनाभावादाहवनीये स होम इति चेत्। मैवम्। विद्वानेव ह्याधानेऽधिकारी। न चानुपनीतस्य विद्यास्ति। तत आहवनीयासम्भवाल्लौकिकेऽग्न्यावुपनयनहोमः कर्त्तव्यः।

तृतीयाधिकरणमारचयति।

स्थपतीष्टिर्वैदिकेऽग्नौ लौकिके वाद्य आक्षिपेत्।
आधानमिष्टिरन्त्यः स्यादवैवर्णिकासंस्कृतः॥ ५॥

एतया निषादस्थपतिं याजयेदिति विहितायाः इष्टे-

षोदकप्राप्तेष्वाहवनीयादिषु कर्त्तव्यत्वादाधानमन्त्रेणाहवनीयाभावादाधानमाक्षिप्याहिते तस्मिन्० वैदिकेऽग्नाविय- मिष्टिरिति चेत्। मैवम्। अत्रैवर्णिकत्वादविहितेनाधानेनाग्निसंस्कारासिद्धेः। तस्माल्लौकिकेऽग्नौ सेष्टिः।

चतुर्थाधिकरणमारचयति।

अवकीर्णिपशुः कुत्र विप्राद्याधानसम्भवात्।

वैदिके लौकिके ब्रह्मचारिण्याधानवर्जनात्॥ ६॥

इदमाम्नायते। यो ब्रह्मचार्यवकिरेत् स गर्दभं पशुमालभेतेति। तत्रावकीर्णिनो विप्रादेस्त्रैवर्णिकस्याधानसम्भवाद्वैदिकेऽग्नावयं पशुरिति चेत्। मैवम्। जायापती अग्निमादधीयातामित्युक्त्या ब्रह्मचारिण आधानाभावात्। तस्माल्लौकिकेऽग्नौ स पशुः कार्यः।

पञ्चमाधिकरणमारचयति।

चौलादि सर्वदा पुण्याहादौ वाताविशेषतः।

आद्योऽन्त्य. पूर्वपक्षादौ दिनानां स्मृतितो विधेः॥ ७॥

चौलोपनयनादीनां वैदिकानां कर्मणां तिथ्यादिविशेषस्याश्रवणात् सर्वदा तदनुष्ठानं युक्तमिति चेत्। मैवम्। शुक्लपक्षोत्तरायणपुण्यदिनादीनां स्मृतिषु विहितत्वात्।

षष्ठाधिकरणमारचयति।

याच्ञाक्रयावभावे स्तो विद्यमानेऽपि वाग्रिमः।

द्रव्यार्थत्वादपूर्वार्थं कुर्यात्तौ द्रव्यवानपि॥ ८॥

ज्योतिष्टोमे धनभिक्षा समाम्नाता। द्वादश रात्रीर्दीक्षितो भृतिं वन्वीतेति। सोमक्रयश्चाम्नातः। अरुणया पिङ्गाक्ष्या सोमं क्रीणातीति। तदुभयाम्नानं धनसोमयो-

द्रव्ययोर्लाभार्थमिति द्रव्याभावे तदनुष्ठेयमिति चेत्।
मैवम्। इतराङ्गवदेतदुभयं क्रत्वङ्गतया नित्यवदाम्नातम्।
तथा सति यदि द्रव्याभावे वन्वीत क्रीणाति चेति पाक्षि-
कत्वं कल्प्यते। तदा नित्यवच्छ्रवणमुपरुध्येत। तस्मात्
सत्यपि द्रव्ये तदुभयमदृष्टार्थं कर्त्तव्यम्।

सप्तमाधिकरणमारचयति।

अन्याभावेऽथ भावेऽपि पयोभक्षादयोऽग्रिमः।

निमित्ते सत्यनुष्ठानान्नियमादृष्टतोऽन्तिमः॥ ६॥

ज्योतिष्टोमे श्रूयते। पयो ब्राह्मणस्य व्रतमिति। तदेत-
दसत्यन्यस्मिन् भक्ष्ये कर्त्तव्यम्। कुतः। अन्याभावस्य
निमित्तत्वान्निमित्ते सति नैमित्तिकस्यानुष्ठेयत्वादिति
चेत्। मैवम्। न ह्यत्रान्याभावो निमित्तत्वेन श्रुतः।
तस्मात् सत्यप्यन्यस्मिन् भक्ष्ये नियमादृष्टाय पय एव व्रत-
येत्। एव मन्यत्रापि द्रष्टव्यम्। अग्नीदग्नीन् विहरेति
प्रैषार्थे पूर्वमेवाग्नीध्रेण वृद्धेऽपि दर्शपूर्णमासयोः स प्रैषः
कर्त्तव्यः। वाजपेये सत्यपि वाससोऽन्तरे दर्भमयं परिधा-
पयतीति विहितमनुष्ठेयम्। पशो यत् पशुर्मायुमकृतेति
मन्त्रेण संज्ञप्तहोमो विहितः। स च मारणवेलायाम-
मकृतेऽपि पशुना शब्दे कर्त्तव्यः।

अष्टमाधिकरणमारचयति।

अजीर्णसम्भवे कार्य्यं व्रतं नो वाग्रिमो विधेः।

रोगात्पत्त्या प्रधानस्य विरोधान्न पयोव्रतम्॥ १०॥

ज्योतिष्टोमे श्रूयते। मध्यन्दिनेऽपररात्रे व्रतं व्रतय-
तीति। तत्र यस्याजीर्णिः सम्भाविता तेनापि विहितत्वात्

पयोव्रतयितव्यमिति चेत्। मैवम्। रोगोत्पत्त्या प्रधाना-नुष्ठानविघ्नप्रसङ्गात्। तस्मात्तथाविधवेलायां पयो वर्जयेत्।

नवमाधिकरणमारचयति।

अग्नीषोमीयकः कोऽपि छाग एवोत चोदिते।

अविशेषेण कोऽपि स्याच्छागो मन्त्रे विशेषणात् ॥११॥

ज्योतिष्टोमे श्रूयते। अग्नीषोमीयं पशुमालभेतेति। तत्र विहिते पशौ विशेषस्याश्रवणाद्य. कोऽपि पशुरालब्धव्य इति चेत्। मैवम्। छागस्य वपाया मेदसोऽनुब्रूहीति मन्त्रे विशेषितत्वात्। तस्माच्छाग एवालब्धव्यः। शाखान्तरे विधाविवाजोऽग्नीषोमीय इत्येवं विशेषः श्रूयत इति चेत् तर्हि कत्वाचिन्तास्तु।

इति माधवीये जैमिनीयन्यायमालाविस्तरे

षष्ठस्याध्यायस्याष्टमः पादः।

समाप्तश्च षष्ठोऽध्यायः।

---

## सप्तमोऽध्यायः।

---

प्रमाणाद्यधिकारान्तैः षड्विचारैर्निरूपितै।

उपदेशोऽतिदेशोऽथ तत् सापेक्षो निरूप्यते ॥

अनेन षष्ठसप्तमयोरध्याययोः पूर्वोत्तरभाव उपपा-दितः। तथा हि। यत्रापेक्षितस्यार्थजातस्य प्रतिपादको

ग्रन्थसन्दर्भः पठ्यते स उपदेशः। अतिदेशस्तु पूर्वाचार्य्यै-र्दर्शितः। अन्यत्रैव प्रणीतायाः कृत्स्नाया धर्मसन्ततेः। अन्यत्र कार्य्यतः प्राप्तिरतिदेशोऽभिधीयत इति। प्राकृतात् कर्मणो यस्मात् तत्समानेषु कर्मसु। धर्मप्रवेशो येन स्यात् सोऽतिदेश इति स्मृत इति च। तत्रोपदेशः षड्भिरध्यायै-र्विचारितः। ततः षष्ठाध्यायस्योपदेशविचारत्वात् पूर्वभावि-त्वम्। सप्तमाध्यायस्यातिदेश विचारत्वात्तदुत्तरभावित्वम्।

सप्तमाध्यायस्य प्रथमपादे प्रथमाधिकरणमारचयति।

सर्वार्थं प्रकृतार्थं वा प्रयाजाद्युपदेशनम्।
यज्यन्वयेन सार्वार्थ्यान्नातिदेशो विचार्य्यताम्॥ १॥
अङ्गप्रधानयोर्मुख्यापूर्वभेदसमन्वयात्।
प्रकृतार्थं ततः कार्य्यमतिदेशविचारणम्॥ २॥

दर्शपूर्णमासप्रकरणे प्रयाजादय उपदिष्टाः। ज्योति-ष्टोमप्रकरणे दीक्षणीयादयः। तत्रैते सर्वे धर्माः सर्व-यागार्थत्वेनोपदिश्यन्ते। कुतः। यज्यन्वयात्। यागः करणम्। प्रयाजादय इतिकर्त्तव्यता इत्येतावदविवा-दम्। तत्र यदि प्रयाजादयो यागवदपूर्वेणान्विताः स्युः। तदानीमपूर्वनिष्पादकत्वमुभयत्र समानमिति कृत्वा कर-णोपकरणत्वलक्षणं सर्वसम्मतमवान्तरवैषम्यं बाध्येत। किञ्च। अवघातपेषणादीनां यागनिष्पादकत्वेन यज्य-न्वयो दृष्टः। तद्वदङ्गत्वसामान्यात् प्रयाजादीनामपि यज्यन्वयो युक्तः। यजिधातुश्च दर्शपूर्णमासज्योतिष्टोम-सौर्य्यश्येनादिषु सर्वेषु विशेषेष्वनुगतं यागमात्रं ब्रूते। तथा सति सौर्य्यश्येनादिष्वप्युपदेशेनैव कृत्स्नधर्मप्राप्ति-

रतिदेशविचारो न कर्त्तव्य इति प्राप्ते ब्रूमः। अपूर्वं हि मुख्यम्। फलवत्त्वात्। यजिर्न मुख्यः। फलरहितत्वात्। फलवति मुख्ये प्रयाजविधानं युक्तम्। अतः करणेतिकर्त्तव्यतयोरुभयोरपूर्वेण प्रथममन्वयः। पश्चात्तु परस्परं गुणप्रधानभावेनान्वयः। तथा सत्यपूर्वभेदस्य द्वितीयाध्याये निरूपितत्वादपूर्वविशेषेण तत् करणभूतयजिविशेषेण चान्विताः प्रयाजादिधर्मा ये यस्मिन् प्रकरण आम्नातास्ते तत्रैव व्यवतिष्ठन्ते। सत्येवं प्रकरणमर्थवद्भवति। सर्वेषां धर्माणां सर्वत्र प्राप्तौ प्रकरणमनर्थकं स्यात्। तस्मात् सौर्य्यादिप्रकरणे धर्मोपदेशाभावाद्धर्माकाङ्क्षां पूरयितुमतिदेशविचारः कर्त्तव्यः।

द्वितीयाधिकरणमारचयति।

इषौ समानमितरच्छ्येनेनेत्यनुवादकम्।
श्येनवैशेषिकाणां वातिदेशोऽनानुवादकम्॥ ३॥
ज्योतिष्टोमविकारत्वात्तद्धर्मातिदेशकात् समाः।
श्येनेष्वारितरत्वोक्तिरिषु वैशेषिकं प्रति॥ ४॥
इषुवैशेषिकाद्रक्तादितरच्छ्येनगं स्फुरेत्।
वैशेषिकं लोहितोष्णीषादि तेनातिदिश्यते॥ ५॥

इषुनामकः श्येननामकश्च द्वावेकाहौ ज्योतिष्टोमविकारौ। तयोरुभयोर्ज्योतिष्टोमधर्माश्चोदकेन प्राप्ताः। ते चोभयत्र समानाः। तच्च समानत्वमिषुप्रकरणेऽनेन वाक्येनानूद्यते। समानमितरच्छ्येनेनेति। नन्वत्रेतरशब्दोक्तिरनुपपन्ना। तत्प्रतियोगिनः कस्यचिदनिर्दिष्टत्वादिति चेत्। न। पूर्ववाक्यविहितस्य विशेषधर्मस्य

प्रतियोगित्वात्। इष्टौ यो वैशेषिको धर्मो विहितस्तं परित्यज्येतरच्चोदकप्राप्तं सर्वं श्येनेन समानमित्यर्थः। तस्मादनुवादकमिदं वाक्यमिति प्राप्ते ब्रूमः। इतरशब्दः प्रतियोगिसजातीयं ब्रूते। तद्यथा। देवदत्त एवाधीते। नेतरः कश्चिदित्युक्तेऽध्ययनप्रसक्तिमान्यज्ञदत्तादिर्माणवकः प्रतीयते। न तु गवाश्वघटपटादिः। एवमत्रापीषुवैशेषिकस्य पूर्ववाक्योक्तस्य प्रतियोगित्वात् तत्सजातीयं श्येनगतं लोहितोष्णीषादिरूपं वैशेषिकं धर्मजातमितरशब्देन प्रतिभाति। तच्च प्रकृताभावान्न चोदकेन प्राप्तम्। तस्मादिषावनुष्ठेयत्वेनातिदिश्यते।

तृतीयाधिकरणमारचयति।

वैश्वदेवब्राह्मणस्यातिदेशो वादमात्रगः।
भवेदङ्गविधिर्यो वा हविर्विध्यन्वयाद्भवेत्॥ ६॥
अर्थवादैकनिष्ठोऽसौ सैवमङ्गविधेरपि।
समानः सोऽन्वयोऽङ्गानां विधिरप्यतिदिश्यताम्॥ ७॥

चातुर्मास्येषु वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयनामकानि चत्वारि पर्वाणि। तत्र वैश्वदेवेऽष्टौ हवींषि विहितानि। आग्नेयमष्टाकपालं निर्वपति। सौम्यं चरुम्। सावित्रं द्वादशकपालम्। सारस्वतं चरुम्। पौष्णं चरुम्। मारुतं सप्तकपालम्। वैश्वदेवीमामिक्षाम्। द्यावापृथिव्यमेककपालमिति। तेषां हविषां ब्राह्मणेऽर्थवाद आम्नातः। वार्त्रघ्नानि वा एतानि हवींषीति। अङ्गविधयोऽपि तत्राम्नाताः। त्रेधा सन्नद्धं बर्हिर्भवति। त्रेधा एवद्ध इध्मः। नव प्रयाजा इज्यन्ते। नवानुयाजा इति।

एवं स्थिते वरुणप्रघासेषु पूर्वोक्तान्याग्नेयादीनि पञ्च हवींषि विधाय तदीयं पूर्वोदाहृतं ब्राह्मणमेतेषु पञ्चस्वतिदिशति। एतद्ब्राह्मणान्येव पञ्च हवींषि यद्ब्राह्मणानीतराणीति। तत्रार्थवादमात्रस्यातिदेशो न्याय्यः। तस्य हविर्विधिभिः सह स्तुत्यस्तावकरूपेणान्वयसम्भवादङ्गविधीनां च तदसम्भवादिति चेत्। नैवम्। उपकार्य्योपकारकभावेन हविषा मन्त्राणां चान्वयात्। तस्मादर्थवादसहितानामङ्गविधीनामतिदेशः।

चतुर्थाधिकरणमारचयति।

श्रुतमेककपालस्य ब्राह्मणस्यातिदेशनम्।
तत्पूर्ववत्तथैन्द्राग्न एतद्ब्राह्मण इत्यपि ॥ ८ ॥

एककपालब्राह्मणं वैश्वदेवे वरुणप्रघासेषु च पठितम्। ऐन्द्राग्नब्राह्मणं वरुणप्रघासेष्वेवाम्नातम्। एवं स्थिते साकमेधेषु विहितयोरेककपालैन्द्राग्नयोर्ब्राह्मणातिदेश आम्नायते। एतद्ब्राह्मण ऐन्द्राग्न एतद्ब्राह्मण एककपालो यद्ब्राह्मण इतरश्चेति। तत्रोभयत्र पूर्वन्यायेनार्थवादसहिताङ्गविधिकाण्डस्य सर्वस्यातिदेशः। पूर्वन्यायस्य विषयव्याप्तये वक्ष्यमाणोदाहरणस्मारणीयं बीजकथनम्।

पञ्चमाधिकरणमारचयति।

किं वैश्वदेविकाष्टैककपालादतिदेशनम्।
साकमेधेषु वरुणप्रघासस्थादुताग्रिमः ॥ ९ ॥
प्रकृतादर्थवाक्यस्थादन्तिमः सन्निधानतः।
ऐन्द्राग्नसाहचर्य्याच्च सार्थत्वमधिकत्वतः ॥ १० ॥

वैश्वदेवे द्यावापृथिव्य एककपालः। वरुणप्रघासेषु

काय एककपालः। तयोः पृथग्ब्राह्मणमाम्नातम्। साकमेधेषु वैश्वकर्मण एककपालः। तस्मिन् वैश्वदेविकैककपालब्राह्मणमतिदेष्टव्यम्। कुतः। प्रकृतित्वेन तस्मिन्नुपदिश्यमानधर्मबाहुल्यात्। वारुणप्रघासिकस्य तद्विकृतित्वादल्पा एव धर्मविशेषा उपदिष्टाः। शमीमय्यो हिरण्मय्यो वा स्रुचो भवन्तीत्यादयः। तत्र बहूनामनुग्रहो न्याय्य इति प्राप्ते ब्रूमः। वारुणप्रघासिकब्राह्मणस्य प्रत्यासन्नत्वात् तस्यैवातिदेशो युक्तः। ऐन्द्राग्नब्राह्मणं तत्रत्यमेवातिदिश्यते। वैश्वदेवे तदभावात्। तत्साहचर्य्यादिदमपि तत्रत्यमेव। ननु प्रकृतिभूताद् वैश्वदेविकैककपालादेव वारुणप्रघासिक इव साकमेधीयेऽपि चोदकेन धर्मातिदेशसिद्धौ ब्राह्मणातिदेशवाक्यमिदं व्यर्थमिति चेत्। न। हिरण्मयत्वाद्यधिकधर्मातिदेशायापेक्षितत्वात्। तस्माद्वारुणप्रघासिकैककपालब्राह्मणस्यैवात्रातिदेशो युक्तः।

इति माधवीये जैमिनीयन्यायमालाविस्तरे सप्तमस्याध्यायस्य प्रथमः पादः।

---

द्वितीयपादस्य प्रथमाधिकरणमारचयति।

अतिदेश्यं विनिश्चेतुं कवतीषु रथन्तरम्।
गायतीत्युच्यामयुक्ता शब्दार्थौ गानमेव वा॥ १॥
इति चिन्ता गानयुक्ता त्वभि त्वेत्युक्प्रसिद्धितः।
लाघवादतिदेशस्य योग्यत्वाच्चान्तिमो भवेत्॥ २॥

इदमाम्नायते। कवतीषु रथन्तरं गायतीति। कया

नश्चित्र आ भुवदित्याद्यास्तिस्र ऋचः कवत्यः। तासु वामदेव्यं सामाध्ययनतः प्राप्तम्। तद् बाधितुं रथन्तरं साम तास्वतिदिश्यते। तत्रातिदेशस्य स्वरूपं निश्चेतुं रथन्तरशब्दार्थश्चिन्त्यते। गानविशेषयुक्ताभि त्वा शूर नोनुम इतीयमृग्रथन्तरमित्युच्यते। कुतः। अध्येतृप्रसिद्धितः। रथन्तरं गीयतामिति केनचिदुक्ता अध्येतारः स्वरस्तोभविशेषयुक्तामभि त्वेत्यृचं पठन्ति। न तु स्वरस्तोभमात्रम्। तस्माद्गानविशिष्टाया ऋचो रथन्तरशब्दार्थत्वमिति प्राप्ते ब्रूमः। स्वरादिविशेषानुपूर्वीमात्रस्वरूपमृगक्षरव्यतिरिक्तं यद् गानं तदेव रथन्तरशब्दार्थः। कुतः। लाघवात्। किञ्च। कवतीष्वृक्षु गानमतिदेष्टुं योग्यम। न त्वृचस्तद् योग्यतास्ति। कया नोऽभि त्वेत्यमयोरृचोर्युगपदाधाराधेयभावेन पठितुमशक्यत्वात्। तस्माद्गानविशेष एव रथन्तरशब्दार्थः।

इति माधवीये जैमिनीयन्यायमालाविस्तरे सप्तमस्याध्यायस्य द्वितीयः पादः।

---

तृतीयपादस्य प्रथमाधिकरणमारचयति।

मास जुहोत्यग्निहोत्रमिति नामाग्निहोत्रतः।
नित्यादामाग्निहोत्रेऽस्मिन धर्माणां नातिदेशकम ॥१॥
उतातिदेशकं नैव ह्योर्मान्न समत्वतः।
अग्नये होत्रमित्यस्य नित्ये सम्पादितत्वतः ॥ २ ॥
तत्र मुख्यं ततोऽन्यत्र गौणत्वस्य प्रसिद्धये।
नित्याग्निहोत्रगान् धर्मास्तन्नामाति दिशेदिह ॥ ३ ॥

कुण्डपायिनामयने श्रूयते। मासमग्निहोत्रं जुहोतीति। तत्राग्निहोत्रमित्येतन्नाम नित्याग्निहोत्रादस्मिन् मासाग्निहोत्रे धर्मानतिदेष्टुं नार्हति। कुतः। तस्य नाम्नः उभयोरग्निहोत्रयोर्मुख्यवृत्त्या समानत्वादिति प्राप्ते ब्रूमः। अग्नये होत्रं यस्मिन् कर्मणि तदग्निहोत्रमित्यवयवार्थं नित्याग्निहोत्रे सम्पाद्य तन्नामधेयत्वं प्रथमाध्याये निर्णीतम्। अतस्तत्रैवायं शब्दो मुख्यः। न चोभयत्र मुख्यत्वं सम्भवति। अनेकार्थस्यान्याय्यत्वात्। मुख्यत्वासम्भवेन मासाग्निहोत्रे गुणयोगाद्वर्त्तितुं नित्याग्निहोत्रगुणानतिदिशति।

द्वितीयाधिकरणमारचयति।

गवामयन आद्येऽह्नि प्रायणीयेति नाम यत्।
तद्द्वादशाहिकादह्नो धर्मानतिदिशेन्न वा॥ ४॥
पूर्वन्यायेनातिदिशेन्नैवं प्रथमता द्वयोः।
अह्नांस्तुल्येति मुख्यत्वं समं नातिदिशेदतः॥ ५॥

द्वादशाहे प्रथमस्याह्नः प्रायणीयमिति नाम। तथा गवामयनेऽपि। तत्राग्निहोत्रनामन्यायेनातिदेश इति चेत्। मैवम्। प्रायणीयशब्दप्रवृत्तिनिमित्तस्य प्राथम्यस्य द्वयोस्तुल्यत्वेनोभयत्र मुख्यत्वेऽप्यनेकार्थत्वप्रसङ्गाभावात्। प्रारभ्यायति गच्छति प्रवर्त्तते कर्मानेनेति प्रायणीयम्। अतो नेतन्नाम धर्मानतिदिशति।

तृतीयाधिकरणमारचयति।

विश्वजित् सर्वपृष्ठः किमनुवादो रथन्तरम्।
वृहता वा समुच्चेयं यद्वा षाडहिकानि षट्॥ ६॥

अतिदेश्यानि तत्राद्यो माहेन्द्रादिचतुष्टये।
पृष्ठशब्दाच्चोदकेन सर्वेषामिह सम्भवात् ॥ ७ ॥
समुच्चयो वा विधये सर्वत्वं बहुपेक्षया।
न तु द्वयोरतः षण्णां पृष्ठानामतिदेशनम् ॥ ८ ॥

विश्वजित् सर्वपृष्ठो भवतीति श्रूयते। तत्र सर्वपृष्ठशब्दोऽनुवादः। कुतः। प्राप्तत्वात्। तथाहि। ज्योतिष्टोमे माध्यन्दिनपवमानानन्तरभावीनि माहेन्द्रादीनि चत्वारि स्तोत्राणि सन्ति। अभि त्वा शूर नोनुमः। कया नश्चित्र आ भुवत्। तं वो दस्ममृतीषहम्। तरोभिर्वो विदद्वसुमित्येतेषु चतुर्षु सूक्तेषु तानि स्तोत्राणि सप्तदशस्तोमतामापाद्य गीयन्ते। एकस्मिन् सूक्ते विद्यमानानां तिसृणामृचां ब्राह्मणोक्तविधानेन सप्तदशधाभ्यासः सप्तदशस्तोमः। तादृशेषु स्तोत्रेषु पृष्ठशब्दः श्रूयते। सप्तदशानि पृष्ठानीति। तानि पृष्ठानि विश्वजिति चोदकप्राप्तत्वात् सर्वपृष्ठशब्देनानूद्यन्त इत्येकः पक्षः। रथन्तरपृष्ठबृहत्पृष्ठयोर्ज्योतिष्टोमे विकल्पितयोरिहापि चोदकेन विकल्पप्राप्तौ सर्वशब्देन समुच्चयो विधीयते। तथा सत्यनुवादकृतं वैयर्थ्यं न भविष्यतीति द्वितीयः पक्षः। सर्वत्वं बहुषु मुख्यम्। न तु द्वयोः। तस्मादनेन सर्वपृष्ठशब्देन षट्संख्याकानि पृष्ठान्यतिदिश्यन्ते। षडहे प्रतिदिनमेकैकं पृष्ठं विहितम्। तानि च पृष्ठानि षड्रथन्तरबृहद्वैरूपवैराजशाक्वररैवतसामभिर्निष्पाद्यानि। यद्यपि विश्वजित एकाहत्वाज्ज्योतिष्टोमविकृतित्वमेव। न तु षडहविकृतित्वम्। तथापि सर्वपृष्ठोक्तिबलात्तानि षट्पृष्ठान्यतिदिश्यन्ते।

चतुर्थाधिकरणमारचयति ।

निष्कासेन तुषैश्चावभृथं यन्तीत्यनूद्यते ।
नोत्सिक्तः कर्मणो वा विधिः सौमिकधर्मणः ॥ ९ ॥
यो दर्शपूर्णमासाभ्यां वारुण्यां चोदकागतः ।
व्युत्सेकोऽनूद्यतामेष मैवं कर्मणि सौमिके ॥ १० ॥
मुख्योऽवभृथशब्दोऽयं तत्सादृश्यविवक्षया ।
धर्मानतिदिशन् कर्म विधत्ते धर्मसंयुतम् ॥ ११ ॥

वरुणप्रघासेषु श्रूयते । वारुण्या निष्कासेन तुषैश्चाव-
भृथं यन्तीति । निष्कास आमिक्षाया लेपः । प्राच्यां दिशि
देवा ऋत्विजो मार्जयन्तामित्यादिमन्त्रैर्दर्शपूर्णमासयोर्दिक्षु
सर्वास्वप उत्सिच्यन्ते । सोऽयं व्युत्सेको निष्कासविक्षनार्थ-
मवभृथशब्देन वारुण्यामिक्षायागे चोदकप्राप्तोऽनूद्यते ।
अस्ति हि व्युत्सेकस्यावभृथत्वम् । एष वै दर्शपूर्णमासयो-
रवभृथ इति श्रुतत्वादिति प्राप्ते ब्रूमः । सौमिके कर्मण्यव-
भृथशब्दो मुख्यः । तस्य शब्दस्याग्निहोत्रादिवद्विधेयक्रिया-
सामानाधिकरण्येन नामधेयत्वात् । तत्रैव वैदिकप्रयोग-
बाहुल्याच्च । व्युत्सेके त्वपूर्वसम्बन्धादुपचर्यते । न हि
सौमिके कर्मणीव व्युत्सेकेऽवभृथभावनामंशत्रयवतीं पश्यामः ।
येन तत्र मुख्यत्वमाशङ्क्येत । तस्मात् सौमिककर्मवाचिन-
मवभृथशब्दं वरुणप्रघासप्रकरणे प्रयुञ्जान आम्नायो सा-
मिक्षाद्रव्यकेन सौमिकधर्मानतिदिशन् कर्मान्तरं तद्धर्म-
संयुक्तं विधत्ते । न च विपर्ययेणात्रैव मुख्योऽवभृथशब्दो-
ऽस्त्विति शङ्कनीयम् । अपेक्षितस्य धर्मकलापस्यात्राभा-
वात् । तस्मात् सौमिकधर्मोपेतकर्मान्तरविधिः ।

पञ्चमाधिकरणमारचयति ।

तत्र द्रव्यं पुरोडाशस्तुषनिष्कासकावुत ।
प्राप्तोऽवभृथशब्देन पुरोडाशोऽतिदेशतः ॥ १२ ॥

तुषनिष्कासयोरत्र साक्षाच्छ्रुत्युपदेशतः ।
अतिदेशप्रापितस्य पुरोडाशस्य बाधनम् ॥ १३ ॥

अत्र पूर्वोक्ते कर्मान्तरे धर्मातिदेशकेनावभृथशब्देन पुरोडाशोऽतिदिश्यते । अतिदेशश्चोपदेशाद् दुर्बलः । तस्मात्तुषनिष्कासाभ्यां पुरोडाशो बाध्यते ।

षष्ठाधिकरणमारचयति ।

वैष्णवे त्रिकपाले वैष्णवान्नवकपालतः ।
धर्मातिदेशः स्यान्नो वा विद्यतेऽत्राग्निहोत्रवत् ॥ १४ ॥

श्रुत्या वैष्णवशब्दोऽयं देवताया विधायकः ।
न गौणवृत्तिमाश्रित्य धर्मानतिदिशत्यतः ॥ १५ ॥

आतिथ्येष्टौ वैष्णवो नवकपालो विहितः । तत्र श्रुतो वैष्णवशब्दो राजसूयगते वैष्णवत्रिकपाले प्रयुज्यमानोऽग्निहोत्रवन्नवकपालधर्मानतिदिशतीति पूर्वपक्षः । विष्णुर्देवतास्येति विग्रहे विहितस्तद्धितप्रत्ययो देवतामभिधत्ते न तु धर्मान् । तस्मान्नातिदिशति ।

सप्तमाधिकरणमारचयति ।

निर्मन्थ्येनेष्टकापाके बर्हिषावटसंस्तृतौ ।
अतिदेशो न वाद्योऽस्तु धर्माणां तत्र पूर्ववत् ॥ १६ ॥

अग्नीषोमीयपशौ धर्मवान्निर्मन्थ्योऽग्निराम्नातः । स निर्मन्थ्यशब्दोऽग्निचयने इष्टकापाके प्रयुक्तः । निर्मन्थ्येनेष्टकाः पचन्तीति । तथा दर्शपूर्णमासयोः सधर्मकं ब-

राम्नातम् । स च बर्हिःशब्दः पशौ प्रयुक्तः । बर्हिषा यूपा-वटमवस्तृणातीति । ततोऽभयत्र धर्मसिद्ध्यर्थमतिदेश इति चेत् । न । पूर्वोक्तवेणावशब्दवन्मुख्यया वृत्त्या विधिसम्भवे धर्मलक्षकत्वायोगात् । अग्निमन्थनस्य बर्हिर्लवनस्य च लोकसिद्धत्वेन शास्त्रीयधर्माभावेऽपि लौकिकधर्मैरुभयं निष्पाद्यते । तस्मान्नास्त्यतिदेशः ।

अष्टमाधिकरणमारचयति ।

सौमिकं प्राकृतं वा स्याद् द्वयोः प्रणयनं श्रुतम् ।
आद्योऽनामत्वतो मैवमनामत्वेन वाद्गतेः ॥ १७ ॥

चातुर्मास्येषु श्रूयते । द्वयोः प्रणयन्ति तस्माद् द्वाभ्यां यन्तीति । तत्र सौमिकं यत् सधर्मकमग्निप्रणयनं तदेव ग्रहीतव्यम् । कुतः । सोमस्य चातुर्मास्यप्रकृतित्वाभावेन तदीयप्रणयनस्यात्र चोदकप्राप्तस्य विध्यर्हत्वात् । दर्शपूर्ण-मासगतं त्वग्निप्रणयनं चोदकप्राप्तत्वादविधेयम् । तस्मात् सौमिकस्य धर्मा अत्र प्रणयनशब्देनातिदिश्यन्त इति प्राप्ते ब्रूमः । नायं प्रणयनशब्दः सौमिकस्य प्रणयनकर्मणो नामधेयम् । किन्तु निर्मन्थ्यबर्हिरादिशब्दवल्लौकिक एव । ततो न धर्मातिदेशः । यदि प्राकृतप्रणयनस्य प्राप्तत्वा-द्विधिवैयर्थ्यम् । तर्ह्यर्थवादत्वसम्बन्धाय तदाम्नानमस्तु ।

नवमाधिकरणमारचयति ।

आद्यन्तयोर्मध्ययोर्वा पर्वणोस्तत्र रूक्षकात् ।
आद्यन्तयोरूरुगत्या मध्ययोः पर्वणो भवेत् ॥ १८ ॥

तस्माद् द्वाभ्यां यन्तीत्येतेनार्थवादेन सम्बन्धाय पुनर्विधा-

माय प्राकृतमग्निप्रणयनं चोदकप्राप्तमपि श्रूयत इत्युक्तम् । तद्वैश्वदेवशुनासीरीययोराद्यन्तयोः पर्वणोर्भवितुमर्हति । कुतः । प्रसञ्जकात् । तथाहि । न वैश्वदेवे उत्तरवेदिमुपनिवपन्ति न शुनासीरीय इत्युत्तरवेदिप्रतिषेधस्तयोः पर्वणोरुत्तरवेदिं प्रसञ्जयति । अप्रसक्तस्य प्रतिषेधायोगात् । उत्तरवेदिश्चाग्निप्रणयनार्था । तस्मादुत्तरवेदिप्रसक्तिद्वारेणाद्यन्तयोरिदमग्निप्रणयनमिति प्राप्ते ब्रूमः । ऊरू वा एतौ यज्ञस्य यद्वरुणप्रघासाः साकमेधाश्चेति गमनसाधनत्वमूरुत्वं मध्यमयोः पर्वणोरुपन्यस्तम् । तत्सन्निधौ द्वयोः प्रणयन्तीति चोदकप्राप्तमग्निप्रणयनमर्थवादार्थं पुनर्विधाय द्वाभ्यां यन्तीत्यर्थवादेनोरुत्वकल्पनायुक्ताभ्यां पर्वभ्यां गमनमुपन्यस्यते । तस्मान्मध्यमयोस्तत्प्रणयनम् । न चात्रोत्तरवेद्यभावात् प्रणयनाभाव इति शङ्कनीयम् । उपात्र वपन्तीत्यनेनानारभ्यश्रुतेन वाक्येनोत्तरवेद्युपवापस्य विहितत्वात् । सा चोत्तरवेदिराद्यन्तयोः पर्वणोर्निषेधान्मध्यमयोर्व्यवतिष्ठते । तस्यां चोत्तरवेद्यां प्रणीतोऽग्निर्विधीयते । एतदर्थमेव हि सार्थवादं पुनर्विधानम् ।

उक्तमधिकरणद्वयमेकीकृत्य वार्त्तिककारेण योऽभिहितो निर्णयस्तं दर्शयति ।

अनङ्गत्वाच्च वैयर्थ्यात् सौमिकं प्राकृतं न च ।
अपूर्वं तत् प्रणयनं शाखान्तरसमीक्षितः ॥ १८ ॥

आहवनीयाद्वाग्निं प्रणयत इति शाखान्तरे मध्यमयोर्नूतनं प्रणयनं विहितम् । तेन समानवचनत्वादत्राप्यपूर्वं प्रणयनं विधीयते ।

दृशमाधिकरणमारचयति।

न विकारा विकारा वा स्वरसामादयो न हि।
वैष्णवन्यायतो नैवमनन्यगतिलिङ्गतः॥ २॰॥

गवामयने द्वयोर्मासषट्कयोर्मध्ये वर्त्तमानं विषुवन्नामकं प्रधानभूतमेकमहर्विद्यते। तच्च दिवा कीर्त्त्यम्। तस्मात् प्राचीनास्त्रयः स्वरसामनामका अहर्विशेषाः। तथोपरिष्टादपि त्रयः स्वरसामानः। तदेतदभिप्रेत्य श्रूयते। अभितो दिवा कीर्त्त्यं त्रयः स्वरसामान इति। तेषु च अहर्गतत्वसप्तदशस्तोमादयो धर्मा विहिताः। अन्यत्र त्वेवं श्रूयते। पृष्ठ्यः षड़हो द्वौ स्वरसामानाविति। तावेतावहर्विशेषौ पूर्वोक्तानां स्वरसाम्नां न विकारौ। कुतः। वैष्णवसमानत्वात्। यथा वैष्णवशब्दो देवतारूपगुणविधानेन मुख्यवृत्तित्वान्न धर्मानतिदिशति। तथा सामविशेषरूपगुणविधायकः स्वरसामशब्द इति प्राप्ते ब्रूमः। अनन्यगतिकलिङ्गवशात् स्वरसामानौ विकारौ भवतः। तथाहि पृष्ठ्यः षड़हो द्वौ स्वरसामानावित्येवं योऽयमष्टाह उपन्यस्तस्तत्र षट्स्वहःसु क्रमेण त्रिवृत्पञ्चदशः सप्तदश एकविंशस्त्रिणवस्त्रयस्त्रिंश इत्येवं स्तोमषट्कं चोदकेन प्राप्तम्। एवं स्थिते तृतीयषष्ठदिवसगतयोः सप्तदशत्रयस्त्रिंशयोरथव्यत्यासं विधाय सप्तमाष्टमयोरह्नोः सप्तदशस्तोमं सिद्धवत्कृत्य त्रिषु चरमेष्वहःसु सप्तदशस्तोमनैरन्तर्य्यमर्थवादेनानुवदति। यत् तृतीयं सप्तदशमहस्तत्त्रयस्त्रिंशस्थानमभि पर्य्याहरन्तीति व्यत्यासविधिः। त्रयाणां सप्तदशानामनवानताया इत्यर्थवादः। तत्र यद्य-

न्ययोरङ्गो: सप्तदशस्तोमं स्वरसामशब्दोऽतिदिशेत्। तद् नैरन्तर्य्यमुपपद्येत। न त्वन्यथा। तस्मान्न वैष्णवन्याये: गुणविधि:। किन्तु धर्माणामतिदेशक:। .

एकादशाधिकरणमारचयति।

वासोऽनसी वानलक्षणातिदेशकरे न वा।

आद्य: क्रियानिमित्तत्वाज्जातिवाचित्वतोऽन्तिम: ॥२१॥

वासो ददादीत्यनो ददातीति श्रूयते। तत्र यथा यूपशब्दस्य शास्त्रीयच्छेदनलक्षणादिक्रिया प्रवृत्तिनिमित्तम्। तथा वास:शब्दस्य लौकिकी कुविन्दकर्तृका तन्तुवानक्रिया। अन:शब्दस्य च वर्द्धकिकर्तृका दारुतक्षणक्रिया। तस्माद्वासोऽन:शब्दयो: क्रियातिदेशकत्वाद्वानतक्षणे कारयित्वा तदुभयं दातव्यमिति चेत्। न। गवाश्वादिवज्जातिवाचित्वात् पाचकादिशब्दानां क्रियामुपलभ्य प्रयुज्यमानत्वात् क्रियैव प्रवृत्तिनिमित्तम्। वास:शकटादिषु क्रियामनुपलभ्यापि जातिमुपलभ्य शब्दं प्रयुञ्जते। तस्माद् वासोऽन:शब्दौ न क्रियामतिदिशत:।

द्वादशाधिकरणमारचयति।

वैदिको लौकिको वाग्निर्निधेय: संस्कृतेर्वशात्।

आद्यो होमाय संस्कारो जात्यर्थत्वेन लौकिक: ॥२२॥

गर्गत्रिरात्रे आज्यदोहसामानि प्रकृत्य श्रूयते। अग्निमुपनिधाय स्तुवीतेति। तत्रोपनिधेयोऽग्निर्वैदिक: स्यात्। कुत:। आधानादिसंस्कारस्य प्रयोजनाकाङ्क्षितया समस्तवैदिककर्म्मशेषत्वादिति प्राप्ते ब्रूम:। आहवनीये जुहोति। गार्हपत्ये हवींषि श्रपयतीत्यादिभिर्होमादिभि: संस्कारा·

काङ्क्षा निवर्त्तिता। ततो नाहवनीयादिशब्दवदग्निशब्दः संस्कारनिमित्तः। किन्तु वासःशब्दवज्जातिवाची। तथा सति लौकिकत्वान्नाधानादिसंस्कारमतिदिशति। लौकिककार्य्येष्विव वैदिककार्य्येष्वप्यग्निर्लौकिकः शेषभावं भजते। तस्य सर्वकार्य्यसमर्थत्वात्। ततोऽग्निशब्दो जातिमात्रमुपस्थापयँल्लौकिकवह्निमात्रेण चरितार्थो विनाहवनीयादिसंस्कारवाचकं विशेषणं न वैदिकस्योपस्थापको भवति।

त्रयोदशाधिकरणमारचयति।

संस्कारः स्यादुपशये न वा यूपोक्तितोऽग्रिमः।
न स्यात् प्रयोजनाभावात् तुष्णीं छेदेन यूपता ॥ १३ ॥

यूपैकादशिन्यां श्रूयते। उपशयो यूपो भवतीति। एकादशानां यूपानां समूह एकादशिनी। तत्र दक्षिणतोऽवस्थापित एकादशो यूप उपशयः। तथाच श्रूयते। यद्दक्षिणत उपशय इति। तस्मिन्नुपशये परिव्याणादिको यूपसंस्कारोऽस्ति। संस्कारनिमित्तकस्य यूपशब्दस्य तत्र प्रयुक्तत्वादिति चेत्। न। संस्कारप्रयोजनस्यात्राभावात्। पशुं नियोक्तुं यूपः संस्क्रियते। तच्च नियोजनमितरेषु दशसु यूपेष्वस्ति। न त्वेकादश उपशये। तथाच तैत्तिरीयब्राह्मणम्। सर्वे वा अन्ये यूपाः पशुमन्तोऽथोपशयो वापशुरिति। परिव्याणादिसंस्काराभावेऽप्यमन्त्रकाश्छेदनादयः केचिद्धर्मास्तत्र वाचनिका विद्यन्ते। तावतांशेन सादृश्येन गौणी तत्र यूपोक्तिः। तस्मान्न यूपशब्दो धर्मानतिदिशति।

स्त्रयो यागा विहिताः। तेषु द्वादशाहिकीतिकर्त्तव्यता युक्ता। कुतः। अनुमितवाक्येन तत्प्रापणात्। गवामयनं हि द्वादशाहविकृतिरिति वक्ष्यति। अतस्तत्सम्बन्धिलिङ्गेन तदीयधर्मप्रापकश्चोदकोऽनुमीयत इति प्राप्ते ब्रूमः। सन्ति ज्योतिरादिनामकास्त्रय एकाहाः। तदीयधर्म्मा गावामयनिकेषु ज्योतिरादिषु ज्योतिरादिभिस्त्रिभिर्नामभि प्राप्ताः। नाम चानुमानिकाच्चोदकात् प्रबलम्। प्रत्यक्षश्रुतत्वात्। अतश्चोदकस्य बाधितत्वादेतेष्वैकाहिकीतिकर्त्तव्यता ग्राह्या।

इति माधवीये जैमिनीयन्यायमालाविस्तरे
सप्तमस्याध्यायस्य चतुर्थः पादः।
समाप्तश्च सप्तमोऽध्यायः।

---

## अष्टमोऽध्यायः।

---

सामान्येनातिदेशो योऽनुमानात् स निरूपितः।
विशेषेणातिदेशो यः सोऽष्टमेऽथ निरूप्यते॥

अनन सप्तमाष्टमयोरध्याययो पूर्वोत्तरभाव उपपादितः।

सप्तमस्य चतुर्थपादे प्रथमाधिकरणेनानुमानिकवाक्यकृतोऽतिदेशोऽस्तीति सप्तमोक्तं निरूपितम्। अष्टमे तु तद्विशेषा निरूप्यन्ते।

अष्टमाध्यायस्य प्रथमपादे प्रथमाधिकरणमारचयति।

कस्माच्चिद्वातिदिश्यन्ते नियतात् कर्मणोऽथवा।

अविशेषाद्यादिमोऽन्त्यः शास्त्रार्थस्य व्यवस्थितेः॥ १॥

विहितेतिकर्त्तव्यतारहिते सौर्य्यादौ कर्मणि तद्युक्ताद् यतः कुतश्चित् कर्मणो धर्मा अतिदिश्यन्ते। कुतः। नियामकस्य विशेषस्याभावात्। अतो विशेषचिन्ता न कार्य्येति चेत्। मैवम्। शास्त्रार्थस्य व्यवस्थाया नियामकत्वात्। तस्मान्नियतादेकस्मात् कर्मणो धर्मातिदेशः। तेन विशेषचिन्ता कर्त्तव्या।

द्वितीयाधिकरणमारचयति।

तद्धितोक्त्यादिलिङ्गं किं न विशेषनियामकम्।

भवेद्वा न ह्यशब्दत्वाद्भवेच्छब्दे प्रवेशतः॥ २॥

दर्शपूर्णमासयोराग्नेयमष्टाकपालं निर्वपतीत्यत्र तद्धितोक्त्या देवतानिर्देश एकदेवतायोगित्वमौषधद्रव्यकत्वं निर्वाप इत्येतान्याग्नेये यागसम्बन्धितया श्रूयमाणत्वादाग्नेयलिङ्गानि। सौर्य्यं चरुं निर्वपेदित्यत्रापि तान्युपलभ्यन्ते। न तेषामाग्नेयधर्मातिदेशं नियन्तुं सामर्थ्यमस्ति। कुतः। तेषामशब्दरूपत्वेन शब्दैकसमधिगम्येऽर्थे प्रामाण्यायोगादिति प्राप्ते ब्रूमः। लिङ्गस्यारितोपकारसहितमेव सौर्य्ययागं तच्छब्दो विदधाति। तथा सति प्रनाड्या लिङ्गस्य शब्दे प्रवेशादाग्नेयवत्सौर्य्ये-

ऽनुष्ठेय इत्येतादृशं चोदकवाक्यमनुमापयता लिङ्गेन धर्मविशेषा नियम्यन्ते।

तृतीयाधिकरणे प्रथमवर्णकमारचयति।

विध्यन्त ऐष्टिकः सोमे स्यान्नो वा स्यात् प्रवृत्तितः।
उपदिष्टैरपेक्ष्याद्विध्यन्तो नैष्टिकोऽत्र हि ॥ ३ ॥

ऐष्टिको विध्यन्तः प्रयाजादिः। स च सोमाङ्गभूते दीक्षणीयादौ प्रवृत्तत्वात् सोमेऽप्यनिवार्य इति चेत्। मैवम्। प्रत्यक्षोपदिष्टैरभिषवाद्यङ्गकलापैः सोमस्य निराकाङ्क्षत्वात्। तस्मान्नैष्टिको विध्यन्तः।

द्वितीयवर्णकमारचयति।

इष्ट्यग्निहोत्रसोमानां मूलप्रकृतिता न हि।
अस्ति वा नालौकिकत्वादियत्तानवधारणात् ॥ ४ ॥
लोकवत्सन्निपत्यारादुपकारिद्वयश्रुतेः।
इयत्ताया निश्चितत्वान्मूलप्रकृतिता त्रिषु ॥ ५ ॥

अलौकिकत्वेनैतावद्भिरङ्गैः संपूर्ण उपकार इति निश्चेतुमशक्यत्वादिष्ट्यादीनां नास्ति मूलप्रकृतित्वमिति चेत्। मैवम्। लोकसदृशत्वात्। यथा लोके भुजिक्रियायामोदनः करणम्। तस्य सन्निपत्योपकारिणः शाकसूपादयः। आरादुपकारिणः पीठप्रदीपादयः। तथा भावनायां यागः करणम्। अवघातादयः सन्निपातिनः। प्रयाजादय आरादुपकारिणः। अतो नात्यन्तमलौकिकत्वम्। इयत्ता तु लौकिके यथा प्रत्यक्षेण निश्चीयते। तथा श्रौते श्रुत्या निश्चीयताम्। तस्मादिष्ट्यग्निहोत्रसोमानां मूलप्रकृतित्वमस्ति।

चतुर्थाधिकरणमारचयति।

ऐन्द्राग्नादौ सौमिकः स्यादैष्टिको वा द्वयोरिह।
सम्भवादैच्छिकोऽन्त्योऽत्र स्यात् कपालादिलिङ्गतः। ६॥

ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकाम इत्यादौ सौमिकैष्टिकयोर्विध्यन्तयोरन्यतर इच्छया ग्राह्यः। कुतः। उभयत्र विध्यन्तसम्भवेनातिदेष्टुमर्हत्वादिति चेत्। न। कपालनिर्वापादिभिर्लिङ्गविशेषैरैष्टिकस्यैवालोचितत्वात्।

पञ्चमाधिकरणमारचयति।

न पशावैष्टिका स्याद्वा न कपालाद्यभावतः।
स्याद्व्यक्तद्रव्यदेवत्वप्रयाजस्रुच्यसाम्यतः॥ ७॥

अग्नीषोमीयपशावैष्टिको विध्यन्तो नास्ति। कुतः। पूर्ववदत्र निर्वापकपालादिलिङ्गाभावादिति चेत्। नैवम्। आग्नेयमष्टाकपालमित्युत्पत्तिवाक्ये यथा द्रव्यदेवते व्यक्ते। तथाग्नीषोमीयपशुमित्यत्रापि। न तु सोमेन यजेतेत्यत्रेव देवताया अव्यक्तत्वम्। तदेतद्व्यक्तद्रव्यदेवत्वमेकं लिङ्गम्। एकादश प्रयाजान् यजतीति प्रयाजवत्त्वं द्वितीयम्। स्रुच्यमभिघार्य जुह्वा पशुमनक्तीत्यभिघाराञ्जने लिङ्गान्तरे। आलम्भो लिङ्गान्तरम्। इष्टावपीषामालभत इति दर्शनात्। तस्मादस्ति पशावैष्टिकः।

षष्ठाधिकरणमारचयति।

सवनीयादिके दार्शो दैक्षो वा प्रकृतित्वतः।
आद्योऽन्त्यो लिङ्गतो ह्यत्र विकृतिः प्रकृतिर्भवेत्॥ ८॥

सवनीयानुबन्ध्यनिरूढादिपशुषु दर्शपूर्णमाससम्बन्धी विध्यन्तः। कुतः। दर्शस्य प्रकृतित्वात्। दैक्षोऽग्नीषोमी-

यपशुविध्यन्तः। दीक्षितेनानुष्ठेयेषु पशुविध्यन्तेषु प्रथमभावित्वात्। तस्य चाग्नीषोमीयस्येष्टिविकृतित्वान्न प्रकृतित्वमस्ति। अतो न तस्य विध्यन्तोऽतिदेशार्ह इति प्राप्ते ब्रूमः। आलम्भोऽग्नीषोमीयपशौ लिङ्गम्। तच्च सवनीयादिष्वस्ति। तथा प्रातःसवनादिषु वपादिप्रचारोऽपरं लिङ्गम्। इष्टिं प्रति विकृतेरप्यन्यत्र सवनीयादौ प्रकृतित्वं न विरुध्यते। तस्मादग्नीषोमीयपशोर्विध्यन्तं सवनीयादिपशुष्वतिदिशेत्।

सप्तमाधिकरणमारचयति।

स्यादैकादशिने दैक्षात् सौत्याद् वाद्योऽस्तु पूर्ववत्।
रशनाद्वयसौत्यत्वविशेषाल्लिङ्गतोऽन्तिमः॥ ८॥

एकादशिनाः पशव एवमाम्नायन्ते। आग्नेयः कृष्णग्रीवः। सारस्वती मेषी। बभ्रुः सौम्यः। पौष्णः श्यामः। शितिपृष्ठो बार्हस्पत्यः। शिल्पो वैश्वदेवः। ऐन्द्रोऽरुणः। मारुतः कल्माषः। ऐन्द्राग्नः संहितः अधोरामः सावित्रः। वारुणः कृष्णः। एकः शितिपृष्टस्तु शृङ्गरहित इति। यद्यप्यश्वमेधप्रकरणे एते पठितास्तथापि ज्योतिष्टोमप्रकरणेऽप्येते विधीयन्ते। तत्राग्नेयेन वापयति। मिथुनं सारस्वत्या करोति। रेतः सौम्येन दधाति। प्रजनयति पौष्णेनेत्यादिना। तेष्वैकादशिनेषु दैक्षादग्नीषोमीयाद्विध्यन्तस्यातिदेशः स्यात्। कुतः। अग्नीषोमीयस्य पशुप्रकृतित्वेन पूर्वाधिकरणे निर्णीतत्वादिति चेत्। मैवम्। सौत्यगतविशेषलिङ्गदर्शनात्। सुत्याकाले भवः सौत्यः सवनीयः पशुः। तत्र चोदकप्राप्ता रशनैका। वाचनिकी

द्वितीया। एतच्च तृतीये निर्णीतम्। तदेतद्रशनाद्वय-मग्नीषोमीयपशावसम्भवात् सवनीयस्य विशेषलिङ्गमेकम्। सुत्याकालीनत्वं द्वितीयम्। ते च द्वे लिङ्गे ऐकादशिनेषु दृश्येते। तत्रेदमाम्नायते। द्वे द्वे रशने आदाय द्वाभ्यां द्वाभ्यां रशनाभ्यामेकैकं यूपं परिव्ययतीति। सुत्याकालत्वं च तेष्वस्ति। ततः सौत्याद्धर्मातिदेशः।

अष्टमाधिकरणमारचयति।

ललामादिगणे चैवादैकादशिनतोऽथवा।
आद्यो विशेषराहित्यान्न गणत्वविशेषतः॥ १०॥

काम्यपशुकाण्डे पशुगणाः श्रूयन्ते। वसन्ते ललामां-स्त्रीन् वृषभानालभेतेति। तत्र रशनाद्वयादिविशेषलिङ्गा-भावाद्वैवादग्नीषोमीयाद्धर्मातिदेश इति चेत्। न। गण-त्वेन विशेषलिङ्गेनैकादशिनेभ्योऽतिदेशात्। ऐकादशि-नानां पशुगणप्रकृतित्वं लिङ्गादवगम्यते। तथा हि सौ-त्रामण्यां पशुगणं प्रकृत्यैवमाम्नायते। यज्ञियेषु यूपेष्वालभेत वहिर्धास्मा इन्द्रियं वीर्य्यं दध्यात्। भ्रातृव्यमस्मै जनये-देकयूप आलभत इति। यद्यत्राग्नीषोमीयः प्रकृतिः स्यात्। तदा चोदकादेकस्यैव यूपस्य प्राप्तत्वेन यूपत्रय-प्रसक्त्यभावात्तदुपन्यासेन दोषाभिधानम्। पुनरेकयूप-विधानं च व्यर्थं स्यात्। ऐकादशिनानां प्रकृतित्वे तु प्रतिपशु पृथग् यूपातिदेशेन प्रसक्तिसद्भावादुपपद्यते। तस्मात् पशुगणेष्वैकादशिनेभ्योऽतिदेशः।

नवमाधिकरणमारचयति।

इष्टेः सोमस्य वा धर्मा विश्वजित्प्रमुखेष्विह।

अविशेषादैच्छिकाः स्युः सोमस्याव्यक्तिसाम्यतः ॥ ११ ॥

विश्वजिता यजेत । अभिजिता यजेत । द्वादशाहेन यजेतेत्यादिषु नियामकाभावादिष्टिसोमयोरन्यतरस्य धर्मा इच्छया ग्रहीतव्या इति चेत् । मैवम् । अव्यक्तत्वलिङ्गेन सोमसाम्यात् । उत्पत्तिवाक्ये देवतानभिधानमव्यक्तिः । तस्मात् सोमस्य धर्मानतिदिशेत् ।

द्वादशाधिकरणमारचयति ।

अहर्गणेषु सोमस्य द्वादशाहस्य वाग्रिमः ।
पूर्ववद्दिनसंख्यादिर्विशेषैरन्तिमो भवेत् ॥ १२ ॥

द्विरात्रमारभ्य शतरात्रपर्यन्तेषु गवामयने च पूर्ववदव्यक्तत्वलिङ्गेन सोमस्य धर्मा इति चेत् । न । विशेषलिङ्गसद्भावात् । द्वादशाहपदान्तर्गताहःशब्दः षष्टिघटिकात्मकदिनपरः । द्विरात्रादिपदान्तर्गतो रात्रिशब्दश्च तादृशः । एतदेकं विशेषलिङ्गम् । अहःसंख्या द्वितीयम् । द्वादश दीक्षास्तृतीयम् । तच्च गवामयने विद्यते । तत्र श्रूयते एव दीक्षाभिरित्युक्त्वा दीक्षायुग्मानि षट्पन्यस्तानि । द्वाभ्यां लोमावद्यति । द्वाभ्यां त्वचम् । द्वाभ्यामसृक् । द्वाभ्यां मांसम् । द्वाभ्यामस्थि । द्वाभ्यां मज्जानमिति । तस्मादहर्गणेषु द्वादशाहस्य धर्माः ।

एकादशाधिकरणमारचयति ।

द्वादशाहस्य गव्यस्य वादित्यायङ्गितायने ।
पूर्वाद्यो गव्यधर्मा वत्सरत्वादिलिङ्गतः ॥ १३ ॥

आदित्यानामयनं तपस्विनामयनमित्यादिष्वहर्गणत्वादिलिङ्गेन द्वादशाहस्य धर्मा इति चेत् । न । गव्य·

लिङ्गस्य विशेषस्य सत्त्वात् । गवां सम्बन्धि गव्यं गवामयनमिति यावत् । तस्य धर्मा एतेषु ग्राह्याः । कुतः । संवत्सरसाध्यत्वसामान्यात् । षष्ट्युत्तरशतत्रयदिवससाध्यत्वनियमसद्भावाच्च । त्रय उपगायन्तीत्येतस्य गवामयनगतमाहाव्रतिकधर्मस्य दर्शनाच्च । तस्माद् गव्यस्य धर्माः ।

द्वादशाधिकरणमारचयति ।

साद्यस्क्रे सौमिकः पूर्वधर्मो वाऽव्यक्तभावतः ।
सौमिकः स्यादेकनामैकसंघस्थत्वतोऽन्तिमः ॥ १४ ॥

साद्यस्क्रा इत्येकनामका एकसंघवर्त्तिनो बहवो यागाः श्रुताः । तथा साहस्रा इति । तस्मिन् साद्यस्क्रसंघे प्रथमः साद्यस्क्रो धर्मसंयुक्तः समाम्नातः । एवं साहस्रेष्वपि । तत्र धर्मरहिते द्वितीयादिके साद्यस्क्रे साहस्रे वाऽव्यक्तत्वसाम्यात् सौमिको धर्म इति चेत् । मैवम् । एकनामत्वैकसंघवर्त्तित्वाभ्यां विशेषलिङ्गाभ्यां प्रथमसाद्यस्क्रप्रथमसाहस्रधर्मस्यैवौचितत्वाद् द्वितीयादिकसाद्यस्क्रादिष्वतिदेशः ।

त्रयोदशाधिकरणमारचयति ।

फलं च नियमः कर्त्ता संघः सौर्ये न वाऽग्निमः ।
प्रयाजवन्न विध्यादिविध्यन्तत्वविभेदतः ॥ १५ ॥

इष्टौ फलादयश्चत्वारः सन्ति । फलं स्वर्गः । नियमो यावज्जीविकत्वम् । कर्त्ता स्वर्गकामः । संघ आग्नेयादीनां षण्णां साहित्यम् । त एते चत्वारः सौर्ये प्रयाजादिवदतिदेष्टव्या इति चेत् । न । वैषम्यात् । प्रयाजादि-

याकाङ्क्षितविध्यन्तत्वादतिदिश्यते। विध्यादिस्त्वनाकाङ्क्षितः। सौर्य्यं चरुं निर्वपेदिति मुख्यविधेः प्रत्यक्षश्रवणात्। अन्यथा विध्यन्तेऽपि कस्याकाङ्क्षा वर्ण्येत। तस्मात् प्रधानकर्मणोऽनाकाङ्क्षितस्य विकृतावप्रवृत्तिस्तत्सम्बन्धा फलादयोऽप्यनाकाङ्क्षितत्वान्नातिदिश्यन्ते।

चतुर्दशाधिकरणमारचयति।

गोदोहमाद्यस्ति नो वा भवेत् प्रणयनाश्रयात्।
अनङ्गत्वादपेक्षाया अभावान्नातिदिश्यते ॥ १६ ॥

चमसेनापः प्रणयेद् गोदोहनेन पशुकामस्येति दर्शपूर्णमासयोः श्रुतम्। गोदोहनं सौर्य्येऽप्यतिदेष्टव्यम्। कुतः। तदाश्रयस्य प्रणयनस्य सद्भावादिति चेत्। मैवम। क्रत्वङ्गतया चमस एव प्रणयनसाधनमपेक्षितम्। न त्वनङ्गं पुरुषार्थं गोदोहनम्। अतः फलनियमादिवन्नातिदेशः।

पञ्चदशाधिकरणमारचयति।

स्पर्शद्वयं व्यवस्थाप्यं विकल्प्यं वा व्यवस्थितिः।
प्रकृताविव नो तत्र तस्य शाब्दत्ववर्जनात् ॥ १७ ॥

दर्शपूर्णमासयोर्हविषां स्पर्शनद्वयं व्यवस्थितमन्त्रद्वयसाध्यमाम्नातम्। चतुर्होत्रा पौर्णमासीमभिमृशेत् पञ्चहोत्रामावास्यामिति। पृथिवी होतेत्यादिमन्त्रश्चतुर्होता। अग्निर्होतेत्यादिमन्त्रः पञ्चहोता। तदेतदुभयं सौर्य्यादौ चोदकप्राप्तं सत्कालभेदेनानुष्ठानद्वये व्यवस्थापनीयम। कुतः। प्रकृतौ पौर्णमास्यमावास्ययोः कालभेदेन व्यवस्थितत्वादिति चेत्। न। प्रकृतौ तद्व्यवस्थाया आर्थिकत्वात्।

शास्त्रस्यैवाङ्गत्वेनातिदेशार्हत्वात्। तस्मादुभयं विकृता-
विच्छया विकल्पनीयम्।

षोडशाधिकरणमारचयति।

षट्सु कस्याप्युताग्नेयस्यैव सौर्य्योऽग्रिमो यतः।
अविशेषो न दैवैक्यादौषधद्रव्यकत्वतः॥ १८॥

दर्शपूर्णमासगतेषु षट्सु यागेषु यस्य कस्यापि विध्यन्तः सौर्य्ये कर्त्तव्यः। अस्यैवेति विशेषनियामकस्याभावादिति चेत् न। दैवतैक्यस्य नियामकत्वात्। सौर्य्ये शब्दगततद्धितप्रत्ययविग्रहस्य सूर्य्याविति द्विवचनेनापि कर्त्तुं शक्यत्वाद्दैवतैक्यमनिश्चितमिति चेत्। न। विधिशेषार्थवादोक्तावमुमेवादित्यमित्येकवचनेन तद्व्यपदेशादाग्नेयार्थवादेऽपि सोऽग्नयेऽभ्रियतेत्येकवचनं व्यपदिष्टम्। अत आग्नेयस्यैव विध्यन्तः। न त्वग्नीषोमीयैन्द्राग्नयोः। यद्यप्यैन्द्रयोर्दधिपयसोः प्राजापत्य उपांशुयाजेऽपि दैवतैक्यमस्ति तथाप्यौषधद्रव्यकत्वमाग्नेये विशिष्यते। तस्मात् तस्यैव विध्यन्तः।

सप्तदशाधिकरणमारचयति।

देवो बली हविर्वैन्द्रे पुरोडाशोऽग्रिमो यतः।
देवो मुख्योऽन्तरङ्गं तद्धविः कर्मण्यतो बली॥ १९॥

ऐन्द्रमेकादशकपालं निर्वपेदित्यत्र देवतासाम्येन सान्नाय्यधर्मः प्राप्नोति। हविःसाम्येन पुरोडाशधर्मः। तत्र देवो बली। कुतः। मुख्यत्वात्। तच्च प्राथमिकेन पदेनोच्यमानत्वात् प्रातिपदिकार्थत्वाच्चेति द्रष्टव्यम्। हविस्तु द्वितीयेन पदेनोच्यते। तत्राप्येकादशसु कपालेषु संस्कृत इत्यस्मिन्नर्थे

विहितस्य प्रत्ययस्यार्थः। अतो मुख्यत्वाद्देवतासामान्यं प्रबलमिति प्राप्ते ब्रूमः। त्यज्यमानतया त्यागरूपे कर्मणि हविः प्रत्यासन्नम्। देवता तु मनसैवोद्दिश्यमानत्वात् त्यागक्रियाया बहिरङ्गम्। यत् तु मुख्यत्वमुक्तं तच्छब्दोपाधिकम्। न तु स्वाभाविकम्। तस्मात् स्वाभाविकेनान्तरङ्गत्वेन हविःसामान्यस्य प्रबलत्वात् पुरोडाशधर्मः कार्य्य इति। एवमाग्नेयं पय इत्यत्र सान्नाय्यधर्मो द्रष्टव्यः।

अष्टादशाधिकरणमारचयति।

कपालेषु घृतस्थाने व्रीहिस्तेजोयुतिर्भवेत्।

घृतस्य नैवं वैशद्याच्चरुशब्दयुतेस्तथा॥ २०॥

प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमित्यत्र कृष्णले घूपांशु याजद्रव्यघृतस्य धर्माः कर्त्तव्याः। कृष्णलाख्यसुवर्णस्य घृतस्य च तेजस्वित्वसाम्यादिति चेत्। नैवम्। सुवर्णमकलव्रीह्योर्वैशद्यसाम्यात्। न हि घृतस्य प्रबलकाठिन्यविरलत्वादिरूपं वैशद्यमस्ति। चरुशब्दश्चौषधद्रव्यविषयः कृष्णलेषु प्रयुज्यमान ओषधधर्मान् प्रापयति। तस्माद् व्रीहिधर्माः कर्त्तव्याः।

एकोनविंशाधिकरणमारचयति।

क्षीरस्याज्यस्य वा नीरे मधुन्यप्यग्रिमो यतः।

द्रवत्वं न घृतेऽप्यस्य सत्त्वाद्वर्णाच्च सम्भवात्॥ २१॥

चित्रायामि श्रूयते। दधि मधु घृतमापो धानास्तण्डुलास्तत्संसृष्टं प्राजापत्यमिति। तत्र मधुन्युदके च द्रवत्वसामान्येन सान्नाय्यगतस्य पयसो धर्मा इति चेत्। न। घृतेऽप्यग्निसम्पर्केण द्रवत्वसद्भावाद्शुक्लवर्णत्वादाज्यधर्मा

चातुर्मास्यादीनां सम्भवात् तयोधर्माणां दोहनादीनामस-म्भवादुपांशुयाजगतस्याज्यस्य धर्माः कर्त्तव्याः।

इति माधवीये जैमिनीयन्यायमालाविस्तरेऽष्टम-स्याध्यायस्य प्रथमः पादः।

---

द्वितीयपादस्य प्रथमाधिकरणमारचयति।

सुरावाजिनयोः सौनस्येष्टेर्वा सोमशब्दतः।

आद्यो नैवं हविःसाम्यात् सोमशब्दः प्रशस्तये॥ १॥

सौत्रामण्यां सुराग्रहाः श्रुताः। आश्विनं गृह्णाती-त्यादिना। चातुर्मास्येषु वाजिनयागः श्रुतः। वाजिभ्यो वाजिनमिति। तत्रोभयत्र सौमस्य विध्यन्तः कार्य्यः। कुतः। सोमो वै वाजिनं सुरा सोम इति वाजिने सुरायाञ्च सोम-शब्दप्रयोगात्। सोमशब्दस्याग्निहोत्रशब्दवत्कर्म्मातिदेश-तीति चेत् नैवम्। ऐष्टिकहविःसाम्यात्। औषधविकृता सुरा। सान्नाय्यविकृतं वाजिनम्। तस्मादैष्टिको विध्यन्तः। सोमशब्दस्त्वर्थवादगतत्वान्नाग्निहोत्रादिनामवदतिदेशकः। यदि वाजिनस्य प्रतिपत्तिकर्मत्वान्नास्ति धर्मापेक्षा। तर्हि तस्मिन्नंशे कृत्वाचिन्तास्तु।

द्वितीयाधिकरणमारचयति।

पुरोडाशस्य सान्नाय्यस्य वा धर्मः पशौ यतः।

दैवैक्यमाद्यस्तन्नान्त्यो हविर्जात्यादिसाम्यतः॥ २॥

अग्नीषोमीयपशावग्नीषोमीयपुरोडाशधर्मः कार्य्यः। कुतः। देवतैक्यादिति चेत्। नैवम्। सान्नाय्यं पशोरुत्पत्रम्।

पशुरपि पयोवत्पक्षः। अवघातार्थमुखा सान्नाय्यपक्षोः समा।
इतिःसाम्यं च बलीय इत्युक्तम्। तस्मात् सान्नाय्यधर्म्माः।

तृतीयाधिकरणमारचयति।

दध्नोऽत्र पयसो वाथो घनत्वस्य समत्वतः।
द्रवत्वासक्तिकालेभ्यो धर्मः स्यात् पयसः पशौ ॥ ३ ॥

सान्नाय्यधर्मवत्यस्मिन् पशौ घनत्वेन दध्नो धर्म इति चेत्। मैवम्। द्रवति गच्छतीति द्रवत्वं पयस्यप्यस्ति। पयसि च तद्विद्यते। प्रत्यासन्नं च पयः। साक्षात् पशुप्रभवत्वात्। दधि तु पयसा व्यवहितम्। एकाहकालीने च पशुपयसी। द्व्यहकालीनं दधि। तस्मात् पशौ पयसो धर्मः कार्य्यः।

चतुर्थाधिकरणमारचयति।

द्वयोर्दध्नोऽथ पयस आमिक्षायां द्विजत्वतः।
द्वयोर्दध्ना घनत्वेन प्राधान्यात् पयसो भवेत् ॥ ४ ॥

तप्ते पयसि दध्यानयति। सा वैश्वदेव्यामिक्षेति श्रुतायामामिक्षायां सान्नाय्यगतयोर्दधिपयसोर्धर्मः कार्य्यः। कुतः। आमिक्षाया उभयजन्यत्वादित्येकः पक्षः। घनत्वसाम्यस्याधिक्याद्दधिधर्म इति द्वितीयः पक्षः। पयस्यामिक्षामुत्पादयितुं सहकारित्वेन दध्यानीयते। ततः पयस एव मुख्यकारणत्वात्तद्धर्म एव न्याय्यः।

पञ्चमाधिकरणमारचयति।

अहीनसत्रयोर्द्वादशाहाम्नावव्यवस्थितौ।
व्यवस्थितौ वाविशेषादाद्योऽन्त्यः स्वलिङ्गतः ॥ ५ ॥

साद्यस्कोऽथोऽतिरात्रः। एकाहः षडहः। नयस्छन्दोमाः॥

त्रिवाक्यमहः। उदयनीयोऽतिरात्रः इत्येवमहर्गणो द्वादशाहः। स च याज्ञिकप्रसिद्धा द्विविधः। सत्त्रमहीनश्चेति। संज्ञाव्यवस्थया द्वयोर्धर्मा आम्नाताः। एको द्वौ बहवो वाहीनेन यजेरन्। अदीक्षिता याजयेयुः। सप्तदशावरा अष्टाचत्वारिंशत्परमा वा ब्राह्मणाः सत्त्रमासीरन्। स्वयमृत्विजो ब्राह्मणाः सत्त्रमुपेयुरित्यादयः। ततो द्विविधो द्वादशाहस्य विध्यन्तः। द्वादशाहस्याहर्गणानां प्रकृतिरित्युक्तम्। अहर्गणाश्च द्विविधाः। द्विरात्रादय एकादशरात्रान्ता अहीनाः। त्रयोदशरात्रादीनि च सत्त्राणि। तत्राहीनसत्त्रयोः द्वादशाहविध्यन्तावव्यवस्थया प्राप्नुयाताम्। कुतः। व्यवस्थापकविशेषाभावादिति चेत्। नैवम्। तत्तल्लिङ्गस्य व्यवस्थापकत्वात्। आसीरन्नुपेयुरिति चोदनाद्वयं यजमानबहुत्वनियम ऋत्विग्यजमानैक्यं च सत्त्रलिङ्गम्। यजतिचोदना यजमानबहुत्वविकल्प ऋत्विग्यजमानभेदश्चाहीनलिङ्गम्। एतच्च दशमाध्याय एवं विचारयिष्यामः। अहीनसत्त्रयोर्लक्षणभेदो नास्त्यस्ति वा न हि। आवृत्तिसाम्यादाद्यः स्यादिज्यासिभ्यां तयोर्भिदेति। एतच्च लिङ्गद्वयं द्वादशाहे श्रूयते। द्वादशाहेन प्रजाकामं याजयेदिति। द्वादशाहमृद्धिकामा उपेयुरिति। द्वादशाहमृद्धिकामा आसीरन्निति च। द्विरात्रादिषु यजतिचोदनैवम्। द्विरात्रेण यजेत। त्रिरात्रेण यजेतेत्यादि। त्रयोदशरात्रादिषु सत्त्रलिङ्गमेवम्। त्रयोदशरात्रमृद्धिकामा उपेयुरिति। चतुर्दशरात्रं प्रतिष्ठाकामा आसीरन्निति च। तस्माद्यथालिङ्गं धर्मव्यवस्था।

षष्ठाधिकरणमारचयति ।

किं पञ्चदशरात्रस्य कुण्डपाय्ययनस्य च ।
अहीनत्वं सत्त्रता वातिरात्रैकत्वतोऽग्रिमः ॥ ६ ॥
उपायिलिङ्गतः सत्त्रे प्रबलं विधिवाक्यगम् ।
सत्त्रान्तरेभ्योऽहीनत्वलिङ्गमेतत् प्रशस्यते ॥ ७ ॥

पञ्चदशरात्र एवंविधः। त्रिवृदग्निष्टुदग्निष्टोमस्त्रिरात्रो दशरात्र उदयनीयोऽतिरात्र इति । कुण्डपायिनामयनस्योपक्रमे मासाग्निहोत्रम्। अवसाने दशरात्रः। महाव्रतमुदयनीयोऽतिरात्र इति । तयोरुभयोरादावतिरात्रो नास्ति। अन्ते तु विद्यते। तदिदमन्यतरतोऽतिरात्रत्वमहीनलिङ्गम्। सम्प्रतिपन्नाहीनेषु तद्दर्शनात्। श्रुतिश्च भवति। यदन्यतरतोऽतिरात्रस्तेनाहीन इति। तस्मात् सत्त्रलिङ्गस्योभयतोऽतिरात्रत्वस्याभावादहीनलिङ्गसद्भावाच्च तयोरहीनत्वमिति चेत्। मैवम्। उपायिचोदनारूपस्य सत्त्रलिङ्गस्य दर्शनात्। सत्त्रं यत्त्रं यं काममिच्छन्ति त एतं पञ्चदशरात्रमुपेयुरिति। कुण्डपायिनामयनेऽपि । भूतिकामा उपेयुरिति। इदं च लिङ्गं विधिवाक्यगतत्वात् प्रबलम्। या तु पञ्चदशरात्रे सलिङ्गा श्रुतिरुदाहृता तया सत्त्रान्तरेभ्योऽधिकत्वेन प्रशस्यते। इतराणि केवलसत्त्राण्येव। पञ्चदशरात्रस्तु स्वरूपेण सत्त्ररूपोऽप्यन्यातिरात्रत्वलिङ्गेनाहीन इत्यपि व्यवहारमर्हतीति। तस्मात् सत्त्रे एते उभे। तयोः सत्त्रधर्मानिवाति दिशेत् ।

इति माधवीये जैमिनीयन्यायमालाविस्तरे
ऽष्टमस्याध्यायस्य द्वितीयः पादः ।

तृतीयपादस्य प्रथमाधिकरणमारचयति ।

आग्नावैष्णव आग्नेयविकृतिः शुचिदेवकः ।
आग्नीषोमीयविकृतिरथवा व्यत्ययो द्वयोः ॥ १ ॥
प्रथमत्वतृतीयत्वसाम्यादाद्योऽन्तिमो भवेत् ।
द्विदेवत्वैकदेवत्वसाम्यस्य श्रुतिमत्त्वतः ॥ २ ॥

इष्टिगणः कश्चिच्छ्रूयते । आग्नावैष्णवमेकादशकपालं निर्वपेत् सरस्वत्यै चरुं बार्हस्पत्यं चरुमिति । गणान्तरं चैवमाम्नायते । अग्नये पवमानायाग्नये पावकायाग्नये शुचयेऽष्टाकपालमिति । तत्राग्नावैष्णवस्य प्रथमस्थानत्वादाग्नेयविकृतित्वं युक्तम् । शुचिदेवकस्य तृतीयस्थानत्वादग्नीषोमीयविकृतित्वमिति चेत् । न । द्विदेवतात्वादिसाम्यस्य श्रूयमाणत्वेनार्थसिद्धस्थानतो बलीयस्त्वात् । तस्मादाग्नावैष्णवोऽग्नीषोमीयविकृतिः । शुचिदेवक आग्नेयविकृतिः ।

द्वितीयाधिकरणमारचयति ।

त्रिवृत्स्वहःस्वादिमस्य द्वादशाहस्य वागमः ।
आद्यत्रिवृत्त्वतोऽन्त्यः स्यादहःसंख्यानुसारतः ॥ ३ ॥

जनकसप्तदशरात्रे श्रूयते चत्वारि त्रिवृन्त्यहान्यग्निष्टोममुखानीति । तत्र त्रिवृत्स्तोमविशिष्टं यत् प्रथममहस्तस्य विध्यन्त उत्तरेषु त्रिष्वहःसु कर्तव्यः । पूर्वन्यायेन आद्यस्य त्रिवृत्त्वसामान्यस्य विद्यमानत्वादिति चेत् । मैवम् । तदानीमेकस्यैवाह्नश्चतुरावृत्त्या चत्वार्यहानि न सिध्येयुः । किञ्च अग्निष्टोममुखानीत्यत्रैकस्यैवाग्निष्टोमत्वं विधी-

यते। त्वत्पक्षे तूत्तरेषामपि त्रयाणामग्निष्टोमत्वान्न ष्टु शब्दो नोपपद्यते। ततो द्वादशाहस्य विध्यन्तो ग्राह्यः। द्वादशाहे पृष्ठ्ये षडहे त्रिवृत्पञ्चदशः सप्तदश एकविंश इत्येतेषां चतुर्णामङ्गां परस्परविलक्षणानां संक्लृप्तयोग्यानां विध्यन्ते स्वीकृते सति नोक्तदोषद्वयम्। ननु पञ्चदशादीनां त्रिवृत्त्वमयुक्तमिति चेत्। न। वचनेन स्तोमभाववाधात्। तद्व्यतिरिक्तस्तु विध्यन्तोऽतिदेष्टव्यः।

तृतीयाधिकरणमारचयति।

चत्वारः षडहा द्वादशाहस्य षडहस्य वा।
चतुर्विंशतिसंपाद्यमाद्योऽन्त्यः षडहश्रुतेः॥ ४॥

षट्त्रिंशद्रात्रे श्रूयते। षडहा भवन्ति। चत्वारो भवन्तीति। तत्राहःसंज्ञकानां सोमयागानां संख्याविशेषः षडहपदान्तर्गतेन षट्शब्देनाभिधीयते। सा च षट्संख्या पुनश्चतुःसंख्यया विशिष्यमाणा चतुर्विंशतिसंख्याकानामङ्गां संपत्तिं पर्यवस्यति। अहःसंघस्य च प्रकृतिर्द्वादशाहः। अतस्तल्लिङ्गस्य संघत्वस्य दर्शनात्तस्यैव विध्यन्तः प्रवर्तते। यदि सकृत्प्रवृत्त्या चतुर्विंशतिसंख्या न पूर्यते तर्हि यावत्पूर्ति सोऽभ्यस्यतामिति प्राप्ते ब्रूमः। षड्भिरहोभिर्निष्पाद्यः कर्मविशेषः षडहशब्दवाच्यः। ते च कर्मविशेषाश्चत्वारः। तथा सति चतुर्विंशतिसंघो नात्र शाब्दः। ततः शब्दस्य षडहनामकस्य कर्मविशेषस्य विध्यन्तो ग्राह्यः। यदि विलक्षणा षडहाश्चत्वारो न स्युस्तर्ह्येक एव चतुरभ्यस्यताम्। त्वत्पक्षेऽपि द्वादशाहोऽभ्यस्यते। तस्मात् षडहत्वलिङ्गात् तस्यैव विध्यन्तः।

चतुर्थाधिकरणमारचयति।

प्रतीकथ्ये ज्योतिषो यद्वा द्वादशाहस्य नामतः।
आद्यः समाप्तिनामैतत् संस्थत्वादन्तिमो भवेत्॥ ५॥

प्रतीकथ्यं भवति। प्रतातिरात्रं भवति। पञ्चाग्निष्टोमः। पञ्चोकथ्य इत्यादयः श्रूयन्ते। तेषु ज्योतिष्टोमविध्यन्तः कार्य्यः। कुतः। उकथ्यः षोडश्यतिरात्रोऽग्निष्टोम इत्यादीनां ज्योतिष्टोमनामत्वादिति चेत्। मैवम्। उकथ्यादीनि स्तोत्राणि। तथा सति यस्य कर्मणः समाप्तिर्येन स्तोत्रेण क्रियते तस्मिन् कर्मणि संस्थानिमित्तक उकथ्यादिशब्दो वर्त्तते। ततो द्वादशाहगतेष्वहःसूकथ्यादिनामसम्भवात् संस्थलिङ्गेन द्वादशाहस्य विध्यन्तो भवति। तत्राद्यन्तौ प्रायणीयोदयनीयौ वर्जयित्वा मध्यवर्त्तिनो दशरात्रस्य विध्यन्तो द्विरात्रादिविकृतिष्वतिदेष्टव्य इति दशमाध्याये वक्ष्यते। तथा सति दशरात्रे दशकत्वोऽभ्यस्यमानः प्रत्यहमुकथ्यस्तोत्रेण समाप्यमानः प्रतीकथ्यनामतामापद्यते। एवमितरत्रापि योज्यम्।

पञ्चमाधिकरणमारचयति।

प्रतीकथ्यादौ स्तोत्रवृद्धिर्गणादिकाहतोऽथवा।
आद्यो गणविकारत्वादन्त्योऽत्र स्तोत्रजन्मतः॥ ६॥

पूर्वोदाहृते प्रतीकथ्ये प्रतातिरात्रे च स्तोत्रवृद्धिरपेक्षिता। तथा हि। ज्योतिष्टोमः सप्तसंस्थः। तत्राग्निष्टोमः प्रथमसंस्था। तत्र द्वादश स्तोत्राणि। प्रातःसवने बहिष्पवमानस्तोत्रमेकं चत्वार्याज्यस्तोत्राणि। माध्यन्दिनसवने माध्यन्दिनः पवमान एकं स्तोत्रं चत्वारि पृष्ठस्तोत्राणि।

तृतीयसवने आर्भवः पवमान एकं स्तोत्रं यज्ञायज्ञीयसामसाध्यमग्निष्टोमस्तोत्रमपरम्। तेन स्तोत्रेणायं प्रकृतिरूपो यज्ञः संतिष्ठते। तद्विकृतिषु प्रथमायामग्निष्टोमस्तोत्रादूर्ध्वं त्रीण्युक्थ्यस्तोत्राणि भवन्ति। तैः सा विकृतिः संतिष्ठते। ततोऽप्यूर्ध्वं षोडशेन स्तोत्रेणान्या विकृतिः संतिष्ठते। एवं विकृत्यन्तरेषु द्रष्टव्यम्। तस्मात् समाप्तिनिमित्तान्यग्निष्टोमोक्थ्यषोडश्यतिरात्रादिनामानि। एतदेवोपजीव्य पूर्वाधिकरणे द्वादशाहगतानामङ्गानामुक्थ्यादिनामसम्भवात् तदीयदशरात्रविध्यन्तः शतोक्थ्यादावतिदिष्टः। तस्य च दशरात्रस्याद्यन्तौ द्वावग्निष्टोमौ। तथा सति दशकृत्वस्तद्भ्यासे विंशतिरग्निष्टोमाः सम्पद्यन्ते। तेषामुक्थ्यत्वं सम्पादयितुं प्रत्यग्निष्टोममुक्थ्यनामकं स्तोत्रं वर्धनीयम्; अन्यथा शतोक्थ्यत्वं न स्यात्। किन्त्वशीत्युक्थ्यत्वमेव स्यात्। एवं शतातिरात्रेऽपि प्रत्यहमतिरात्रत्वप्रयोजकं स्तोत्रं वर्धनीयम्। तत्र गणत्वेन द्वादशाहविकारत्वात्तदीयस्तोत्रातिदेश इति प्राप्ते ब्रूमः। उक्थ्यादिस्तोत्राण्येकाहज्योतिष्टोम उत्पन्नानि। तस्मादेकाहाद्यथा द्वादशाहेऽतिदिश्यन्ते। तथा शतोक्थ्येऽप्येकाहादेवातिदिश्यन्ताम्। अन्यथा भिक्षुको भिक्षुकान्तरात्रिपद्यत इति न्याय आपतेत्। या त्वतिदेशपरम्परा तत्र तत्रोदाहृता न तत्र सर्वत्र प्रबलं लिङ्गमुपन्यस्तम्। इह तु गणत्वमहर्गतम्, न तु स्तोत्रगतम्। तस्माद् द्वादशाहीयस्तोत्रगतान् विशेषाननपेक्ष्य तद्विशेषरहितानि स्तोत्राणि ज्योतिष्टोमादतिदेष्टव्यानि।

षष्ठाधिकरणमारचयति ।

अहर्गायत्रमित्यत्र वर्णलोप ऋचोऽथवा ।
आद्यः संख्योक्तितो नैवं गद्यादौ तत्प्रसङ्गतः ॥ ७ ॥

वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेति श्रुतम् । तत्रेदमपरमाम्नातम् । गायत्रमेतदहर्भवतीति । तस्मिन्नह्नि बृहस्पतिसवरूपे प्रकृतिभूतात् ज्योतिष्टोमान्नानाच्छन्दांसि त्रिष्टुबादीन्यतिदिष्टानि । तेष्वधिकाक्षराणि विलोप्य चतुर्विंशत्यक्षराणि परिशेष्य गायत्रीत्वं सम्पादनीयम् । कुतः । चतुर्विंशत्यक्षरा गायत्रीत्यक्षरसंख्यायास्तच्छब्दप्रवृत्तिनिमित्तत्वश्रवणादिति चेत् । नैवम् । अतिप्रसङ्गात् । कविभिर्निर्मितगद्ये तत्तद्देशीयभाषासु च तयाक्षरसंख्यया गायत्रीत्वं केन वार्य्येत । तस्माद्गायत्र्यामुत्पन्नासु चतुर्विंशत्यक्षरास्वृक्षु वर्त्तमानः कश्चिदवान्तरजातिविशेषस्तत्प्रवृत्तिनिमित्तम् । तस्मात्तासामृचामागमः कर्त्तव्यः ।

इति माधवीये जैमिनीयन्यायमालाविस्तरेऽष्टमस्याध्यायस्य तृतीयः पादः ।

---

चतुर्थपादस्य प्रथमाधिकरणमारचयति ।

दर्विहोमो गुणो नाम वा गुणो दधिहोमवत् ।
गुणासम्भवतो लोकवेदयोर्नाम तद्भवेत् ॥ १ ॥

इदमाम्नायते । यदेकया जुहुयाद्दर्विहोमं कुर्य्यादिति । तत्र दर्व्या होमो दर्विहोम इति तृतीयासमासे सति दध्ना जुहोतीत्यादाविव होमानुवादेन गुणविधित्वसम्भवाद्-

र्व्यास्यौ गुणो विधीयत इति चेत्। नैवम्। न तावल्लोकसिद्धे स्थालीपाकाष्टकादिहोमे दर्विगुणं विधातुं शक्यः। लौकिकशिष्टाचारादेव तत्र साधनप्राप्तेः। नापि वेदसिद्धेऽग्निहोत्रनारिष्टादिहोमे। तत्तद्विहित जुह्वादिबाधप्रसङ्गात्। तस्माद्दर्विहोम इति नामधेयम्।

द्वितीयाधिकरणमारचयति।

लौकिकस्यैव सर्वस्य नामाथोऽष्टकास्यतः।

निमित्तसाम्याद्वैदेऽपि तदुक्तेः सर्वनाम तत्। २॥

अष्टकानां दार्विहोमिको ब्राह्मण इति स्मृतावष्टकामिके स्मार्तहोमे तत्प्रयोगाल्लौकिकस्यैव होमस्य तन्नामेति चेत्। नैवम्। दर्व्या होमो दर्विहोम इति प्रवृत्तिनिमित्तस्य लौकिकवैदिकयोः समानत्वाद्दर्विहोमं कुर्य्यादिति श्रुत्युक्तवैदिकहोमनामलिङ्गत्वाच्च सर्वस्यैव होमस्यैतन्नाम।

तृतीयाधिकरणमारचयति।

यजतेरपि नाम स्याज्जुहोतेरेव वाग्रिमः।

अविशेषेण मुख्यत्वाज्जुहोतेर्लक्षणान्यथा। ३॥

तन्नाम जुहोतिचोदनानां यजति चोदनानां च भवितुमर्हति। कुत.। विशेषाश्रवणादिति चेत्। नैवम् जुहोतिचोदनासु होमशब्दस्य मुख्यत्वात्। यजतिचोदनानां तन्नामत्वे लक्षणा स्यात्। तस्माज्जुहोति चोदनानाम।

चतुर्थाधिकरणमारचयति।

दर्विहोमे सोमधर्मा अपूर्वत्वमुताग्रिमः।

अव्यक्तयैज्यभावाच्च स्वाहोत्यादेरपूर्वता॥ ४॥

अथाम्नातानम्नारिष्टादिषु दर्विहोमेषूतपत्तिवाक्ये इवनात्‌वा अश्रवणादव्यक्तलिङ्गेन सोमधर्माः कर्त्तव्या इति चेत् । मैवम् । सोमे श्रुतस्य यजतिलिङ्गस्यात्राभावात् । किञ्च । पृथिव्यै स्वाहान्तरिक्षाय स्वाहेति दर्विहोम-मन्त्रेषु स्वाहाकार आम्नातः । स च सोमविध्यन्तातिदेशे विरुध्येत । तेन स्वाहाकारविरोधिनो वषट्कारस्य प्राप्यमाणत्वात् । किञ्च । उदाहृतैर्मन्त्रगतचतुर्थ्यन्तैः पदै-र्देवतासमर्पणाद्वास्त्यव्यक्तत्वम् । तस्माद्दर्विहोमानामपूर्व-कर्मत्वान्नास्ति तत्र कस्यापि विध्यन्तस्यातिदेशः ।

इति माधवीये जैमिनीयन्यायमालाविस्तरे-ऽष्टमस्याध्यायस्य चतुर्थः पादः ।
समाप्तश्चाष्टमोऽध्यायः ।

---

## नवमोऽध्यायः ।

---

अतिदेशोऽष्टमेऽध्याये समाप्तो नवमे पुनः ।
अतिदिष्टपदार्थानामूहानूहविचारणा ॥ • ॥

अष्टमनवमयोरध्याययोः पूर्वोत्तरभाव उपजीव्योप-जीवकरूपेणोपपन्नस्तः । मन्त्रसामसंस्कारेष्वतिदिष्टपदार्थेषु यत्रास्त्यूहो यत्र च नास्ति तदुभयमत्र विचार्यम् । तत्रच

न्यायमिदमाहुः। प्राकृतस्थानपतितपदार्थान्तरकार्ये तः।
ऊहः प्रयोगी विज्ञेय ऊह्यमानतयोदित इति।

नवमाध्यायस्य प्रथमपादे प्रथमाधिकरणे

प्रथमवर्णकमारचयति।

इष्ट्यग्निष्टोमसोमानां धर्मः किं यजयेऽथवा।

अपूर्वायात्र निर्णीतिः स्यादर्थे सप्तमोदिता॥ १॥

सप्तमस्याद्याधिकरणेऽवघातादीनां धर्माणां यज्यन्वयं निराकृत्यापूर्वान्वयो निर्णीतः। स एवात्रोहारम्भोपयोगित्वेन स्मार्यते। यदि यज्यर्थाः स्युः। तदा सर्वत्र यज्योपादिश्यन्ते। न त्वतिदेशः क्वाप्यस्ति। ततोऽतिदिष्टपदार्थविषय ऊहो नारभ्येत। अपूर्वार्थत्वे तु प्रकरणनियमितत्वादश्रुतधर्मकेष्वतिदेशादूह आरम्भणीयः।

अवघाते व्रीहिरूपं विवक्ष्येत न वा श्रुतेः।

आद्यः साधनतामात्रमवर्ज्यत्वाद् विवक्ष्यते॥ २॥

व्रीहीनवहन्तीत्यत्र व्रीहीणां स्वरूपं श्रूयमाणत्वाद् विवक्षितम्। तथा सति नैवारचरुमवहन्तीत्यत्र नीवाराणां प्रयोग नोहः। यदा व्रीहिष्वेव नियतोऽवघातो व्रीहिनिवृत्तौ निवर्त्तते। तदा कुत ऊहावसर इति प्राप्ते ब्रूमः। व्रीहिस्वरूपविवक्षायामपि व्रीहिगतोऽपूर्वसाधनत्वाकारो न वर्जयितुं शक्यः। अन्यथावघातवैयर्थ्यापत्तेः। ततोऽपूर्वसाधनत्वाकारोऽवश्यं विवक्षितव्यः। तत्र व्रीहिरूपस्यापि विवक्षायां गौरवं स्यात्। तदविवक्षायां तु नीवाराणामपि विहितत्वेनापूर्वसाधनत्वाकारसद्भावादवघातविषयत्वेनोहः सिध्यति।

तृतीयवर्णकमारचयति।

नापूर्वस्य निमित्तत्वमस्ति वा न प्रयोक्तृतः।

अस्ति शब्दात् प्रयोक्तृत्वमार्थिकी तु निमित्तता ॥ ३ ॥

अवघातप्रयाजाद्यनुष्ठाननिमित्तत्वमपूर्वस्य नास्ति। कुतः। अपूर्वस्य प्रयोजकत्वात्। निमित्तत्वप्रयोजकत्वयोः सिद्धसाध्यरूपेण विरुद्धत्वात्। यस्मिन् विद्यमाने क्रियते तन्निमित्तम्। यस्य सिद्ध्यर्थं क्रियते तत् प्रयोजकम्। वर्णिता चापूर्वस्य सप्तमाद्याधिकरणनिर्णयस्मारणेन प्रयोजकता। ततो यजतेर्निमित्तत्वं वक्तव्यम्। तथा सति यजतिवद्व्रीह्यादिस्वरूपस्यापि निमित्तत्वेन तदभावे सत्यवघाताभावान्नीवाराद्यूहो नास्तीति प्राप्ते ब्रूमः। अपूर्वस्य शाब्दं प्रयोजकत्वं सप्तमे वर्णितम्। इह त्वार्थिकी निमित्तता वर्ण्यते। यद्यपि स्वरूपेण साध्यमपूर्वं तथापि मनसि विपरिवर्त्तमानत्वाकारे सिद्धत्वमप्यस्ति। अतो यजेर्निमित्तत्वाभावात् दृष्टान्तेन व्रीहिस्वरूपस्याप्यनिमित्तत्वान्नीवाराद्यूहः सम्भवति।

द्वितीयाधिकरणे प्रथमवर्णकमारचयति।

मुसलाद्युच्चयं हन्त्ये स्यादपूर्वाय वोक्षितः।

आद्य. प्रकरणादन्त्यो व्यर्थं तत् स्यादिहान्यथा ॥ ४ ॥

प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्तीति श्रूयते। तत्र प्रोक्षणमुलूखलमुसलद्रव्यद्वारा हन्त्यर्थम्। कुतः। वाक्येन तच्छेषत्वप्रतीतेरिति चेत्। मैवम्। प्रकरणेनापूर्वशेषत्वावगमात्। न च वाक्यं प्रकरणाद् बलीय इति वाच्यम्। अपूर्वशेषत्वाभावे वैयर्थ्यप्रसङ्गात्। पूर्वपक्षे

यथावचनस्तथैव प्रोक्षणम्। तथा सति नैकतन्त्रत्वे कण्डनं व्रीहीणां नखनिर्भिन्नमिति श्रुतेषु नखेषु प्रोक्षणं नाद्रियते। सिद्धान्ते त्वपूर्वस्य प्रयोजकत्वाद्बहि-तत्वोह:।

द्वितीयवर्णकमारचयति।

मन्द्रादिकमपूर्वाय परायावान्तराय वा।

फलादाद्यो नो समं तल्लक्षणा तु विधित्स्यते॥ ५॥

ज्योतिष्टोमे श्रूयते। यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयान्मन्द्रं प्रायणीयायां मन्द्रतरमातिथ्यायामुपांशूपसत्सूच्चैरग्नीषोमीय इति। तत्र ध्वनिकृतावचभाव: परमापूर्वप्रयुक्त:। तस्य फलवत्त्वादिति चेत्। मैवम्। अवान्तरापूर्वेऽपि समानं फलवत्त्वम्। परमापूर्वजननद्वारेण फलसम्बन्धात्। समाने च फलवत्त्वे सन्निकृष्टलक्षणा निर्णेय:। तथाहि। दीक्षणीयादिशब्दा अङ्गकर्मवाचिन:। न च मन्द्रत्वादिधर्माणां कर्मस्वरूपं प्रयोजकम्। अपूर्वप्रयुक्तो निर्णीतत्वात्। ततो दीक्षणीयादिशब्दैरपूर्वं लक्षणीयम्। तत्र वाक्यगतमवान्तरापूर्वं सन्निकृष्टम्। तद्द्वारकं परमापूर्वं विप्रकृष्टम्। तस्मादवान्तरापूर्वप्रयुक्ता एते धर्मा:। अश्वमेधगतवैश्वानरीयायामुच्चाभाव: फलम्। तथाहि। अश्वमेधे समाम्नायते। वैश्वानरी दीक्षणीया भवतीति। यदि परमापूर्वप्रयुक्त: स्यात्। ततस्तस्योपकारविशेषनिबन्धन इति तत्कार्यापन्नायां वैश्वानरीयायां भविष्यति। यथाग्नावैष्णवापूर्वप्रयुक्त:। तदा वैश्वानरीयायां तदपर्वं न भवति। किन्त्वन्यदेवेति नास्त्यूह:।

तृतीयाधिकरणमारचयति ।

अग्न्यादेः स्वर्गदेवौ हेतू यद्वाऽत्र चोदितम् ।

आद्यो लिङ्गान्नैवमङ्गस्यापूर्वाकाङ्क्षितत्वतः ॥ ६ ॥

दर्शपूर्णमासयोर्मन्त्रौ श्रुतौ । अग्नेरहं सुवर्गस्येत्येकः । अग्नेरहमुज्जितिमनूज्जेषमित्यपरः । तयोरुभयोः स्वर्गदेवौ क्रमेण प्रयोजकौ । कुतः । तल्लिङ्गदर्शनात् । तथा सति सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम इत्यत्र स्वर्गान्तोऽरमावाप्यस्तूह इति प्राप्ते ब्रूमः । चोदितं यदपूर्वं तस्यैव फलवत्त्वेनानुष्ठेयतयेतिकर्त्तव्यताकाङ्क्षा युक्ता । अतो मन्त्रयोरपूर्वं प्रयोजकम् । तथा सति विकृतावगत्य ब्रह्मवर्चसम् । सूर्यस्याहमुज्जितिमनूज्जेषमित्येवं मन्त्रयोरस्तूहः ।

चतुर्थाधिकरणमारचयति ।

देवः प्रयोजकोऽपूर्वं वाद्योऽस्य फलदत्वतः ।

न विधेये गुणो ह्येषोऽपूर्वस्य फलितोचिता ॥ ७ ॥

आग्नेयोऽष्टाकपाल इत्यादिषु सर्वेषु कर्मसु धर्माणामग्न्यादिर्देवः प्रयोजकः । कुतः । यागेन पूजिताया देवतायाः फलप्रदत्वात् । सम्भवति हि फलप्रदत्वम् । मन्त्रार्थवादादिभ्यो विग्रहादिपञ्चकावगमात् । विग्रहो हविःस्वीकारस्तद्भोजनं तृप्तिः प्रसादश्चेत्येतच्चेतनस्योचितं पञ्चकम् । महस्ताणो गोत्रभिद्वज्रबाहुरिति विग्रहः । अग्निरिदं हविरजुषतेति हविःस्वीकारः । अद्धीन्द्र प्रस्थितमा हवींषीति हविर्भोजनम् । तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयतीति तृप्तिप्रसादौ । ततः सेवित-

राजादिवत् पूजितदेवतायाः फलप्रदत्वेन प्राधान्यात् सैव धर्माणां प्रयोजिका। तथा सति यत्र सौर्यादावग्निर्नास्ति तत्राग्निदेवतायां नियता धर्मा एव नावतातिदिश्यन्ते। कुतस्तत्रोहस्य प्राप्तिरिति पूर्वपक्षः। किं देवतायाः फलप्रदत्वलक्षणं प्राधान्यं शब्दादापाद्यते। वस्तुसामर्थ्याद्वा। नाद्यः। स्वर्गकामो यजेतेति शब्देन विधेयस्य यागस्य फलप्रदत्वावगमात्। द्रव्यदेवते तु सिद्धत्वेन विध्यनर्हे। तत्र यथा द्रव्यस्य विधेयं प्रति गुणत्वम्। तथा देवताया अपि। यदि यागस्य कालान्तरभावि फलं प्रति व्यवहितत्वम्। तर्हि तत्साधनभूता देवता ततोऽपि व्यवहिता। का तर्हि फलस्य गतिः। अपूर्वमिति वदामः। तच्च श्रुत्या श्रुतार्थापत्त्या वा प्रतीयमानत्वाच्छाब्दमिति तस्य फलप्रदत्वमुचितम्। नापि वस्तुसामर्थ्याद्देवस्य फलप्रदत्वम्। विग्रहादिपञ्चकप्रतिपादकयोर्मन्त्रार्थवादयोः स्वार्थतात्पर्याभावात्। अन्यथा वनस्पतिभ्यः स्वाहा मूलेभ्य स्वाहेत्यादिमन्त्रेष्वपि देवत्वं विग्रहादिपञ्चकयुक्तं कल्प्येत। तच्च प्रत्यक्षविरुद्धम्। ततो न राजादिवत् फलप्रदत्वम्। किञ्च। विग्रहादिमद्देवतानाद्यपि न विना कर्मणा फलमभ्युपगच्छति। ततः प्राप्ताप्राप्तविवेकेनोभयवादिसिद्धस्य यागस्यैव फलप्रदत्वमस्तु। किञ्च। मातापितृगुरुशुश्रूषायां विनापि देवतां फलप्रदत्वमुभयवादिसिद्धम्। तस्मात् फलप्रदमपूर्वमेव धर्माणां प्रयोजकम्। तथा सत्यग्न्यादिदेवाभावेऽप्यपूर्वप्रयुक्तधर्माणामतिदेशादस्ति तत्रोहस्यावकाशः।

पञ्चमाधिकरणमारचयति।

व्रीह्यादयः प्रयोक्तारोऽपूर्वं वा प्रोक्षणादिषु।

वाक्यश्रुतिभ्यामाद्यः स्याच्चोदिताकाङ्क्षयान्तिमः॥ ८॥

व्रीहीन् प्रोक्षतीत्यत्र वाक्येन द्वितीयाश्रुत्या च प्रोक्षणे व्रीहिस्वरूपं प्रयोजकमिति चेत्। नैवम्। फलवत्त्वेन कर्त्तव्यतया चोदितस्यापूर्वस्येतिकर्त्तव्यतायामाकाङ्क्षा भवति। व्रीहिस्वरूपं तु सिद्धत्वान्न कर्त्तव्यतया चोद्यते। किन्तु गुणत्वेन। ततो द्रव्यस्वरूपस्य नेतिकर्त्तव्यताकाङ्क्षा। तस्माद्वाक्यश्रुती उपेक्ष्य प्रकरणादपूर्वस्य प्रयोजकत्वमेष्टव्यम्। न चापूर्वप्रयुक्तौ ध्रुवादौ प्रोक्षणातिप्रसङ्गः। प्रकृतापूर्वाय हविराकारस्य विवक्षितत्वात्। सप्तमस्य प्रथमाधिकरणे सन्निपत्योपकारिणामारादुपकारिणां च सामान्येनापूर्वप्रयुक्तत्वमतिदेशारम्भसिद्धये वर्णितम्। तदेवात्रापि प्रथमाधिकरणस्य प्रथमवर्णके ऊहारम्भसिद्ध्यै स्मारितम्। द्वितीयवर्णके पुनः सन्निपत्योपकारिणां विशेषाकारेण साधितम्। पुनरपि दार्ढ्याय द्वितीयाधिकरणस्य प्रथमवर्णक ऊहारम्भसिद्धये स्मारितम्। तृतीयपञ्चमाधिकरणयोस्तु क्रमेण वाक्यं लिङ्गं श्रुतिं चोपजीव्य प्रवृत्तास्त्रयः पूर्वपक्षाः निराकृताः। अतो न पुनरुक्तिभ्रमः कर्त्तव्यः।

षष्ठाधिकरणमारचयति।

प्राचीनापांशुतापूर्वे परमेऽवान्तरेऽथवा।

यज्ञयोगाद्‌द्वादिमोऽन्त्यो देशबन्धप्रयुक्तताः॥ ९॥

ज्योतिष्टोमे श्रूयते — त्वरा वा एषा यज्ञस्य तस्माद्यत्किञ्चित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्तीति। अत्रोपांशुता परमापूर्वे सम्बद्धा। परमापूर्वप्रयुक्तेत्यर्थः। कुतः। शकुनिग्राहकगतिन्यायेन यज्ञसम्बन्धावगमात्। तथाहि। यज्ञस्य सम्बन्धि यत्किञ्चिदग्नीषोमीयात् प्राचीनमारादुपकारकं प्रधानहविःसंस्कारकं च। तस्य सर्वस्योपांशुत्वं विधीयते। यज्ञो नाम परमापूर्वम्। तस्य यज्ञस्य साध्यत्वात्। येयमुपांशुत्वानुष्ठितिः। एषा त्वरा छद्म गतिः। यथा शकुनिं जिघृक्षतः प्रच्छन्नगतिर्भवति शनैः पादन्यासो दृष्टिप्रणिधानमशब्दकरणं चेति तत् सर्वं शकुनिग्रहणाय। तथैवानुष्ठातुरुपांशुत्वानुष्ठानं छद्मगतिरूपमनुष्ठानसाध्याय यज्ञशब्दनिर्दिष्टाय परमापूर्वाय। सति च परमापूर्वप्रयुक्तत्वे कुण्डपायिनामयनेऽप्यग्नीषोमीयपशोः प्राचीनेषूपांशुत्वस्योह इति प्राप्ते ब्रूमः। अवान्तरापूर्वप्रयुक्तमुपांशुत्वम्। कुतः। देशसम्बन्धेन श्रुतत्वात्। अग्नीषोमीयात् प्राचीनं यत् किञ्चिदिति मर्य्यादया देशलक्षिता ये पदार्थास्ते श्रूयमाणेन वाक्येनोपांशुसम्बद्धाः प्रतीयन्ते। यज्ञसम्बन्धस्तु न वाक्येन श्रूयते। यज्ञस्य त्वरेत्यन्वयप्रतीतेः। न हि यज्ञस्य यत्किञ्चित् प्राचीनमित्यन्वयः सम्भवति। तस्मादित्यनेन पदेन व्यवधानात्। तस्मान्मर्य्यादावच्छिन्नपदार्थजन्यावान्तरापूर्वप्रयुक्तमुपांशुत्वम्। यज्ञस्य त्वरेत्यनेनार्थवादेनावान्तरापूर्वप्रयुक्तमेवोपांशुत्वं प्रशस्यते। एवं सत्युदाहृतोहाभावः फलम्। यत् तु द्वितीयाधिकरणस्य द्वितीयवर्णकेऽग्नीषोमीयात् प्राचीने दीक्षणीयादौ स्वरा

न्तरमुक्तं तद्दीक्षणीयादिसंयोगात्तत्प्रधानविषयम्। इदं तूपांशुत्वमङ्गविषयमिति न विरोधः।

सप्तमाधिकरणमारचयति।

प्रणीतावाग्यमे यज्ञौ योजनीयौ पुरेव तौ।

पुरा हविष्कृदाह्वानाद्ये तत्रापूर्वकारिताः॥ १०॥

दर्शपूर्णमासयोराम्नायते। यज्ञं तनिष्यन्तावध्वर्युयजमानौ वाचं यच्छत इति। तत्र प्रणीतासम्बन्धिनि वाङ्नियमे यज्ञसंयोगात् परमापूर्वं प्रयोजकमिति पूर्वपक्षः। यज्ञशब्दस्य तनिष्यन्तावित्यनेनान्वयः। न तु वाग्यमेन। अतो न परमापूर्वं प्रयोजकम्। तथा सति हविष्कृदाह्वाने वाग्विसर्गस्य विहितत्वात्ततः पुरा ये प्रोक्षणादिपदार्थास्तेष्वन्वितास्तत्वेनावान्तरापूर्वेण प्रयुज्यन्ते।

अष्टमाधिकरणमारचयति।

विकर्षप्रोक्षणे कार्ये प्रतीष्टकमुतैकधा।

आद्योऽवयव्यसत्त्वेन नैवं भूदेशसत्त्वतः॥ ११॥

इष्टकाभिरग्निं चिनुत इति श्रुतम्। तत्रेदमाम्नायते। मण्डूकेनाग्निं विकर्षति। वेतसशाखयावकाभिश्चाग्निं विकर्षति। हिरण्यशकलसहस्रेणाग्निं प्रोक्षति। दध्ना मधुमिश्रेणाग्निं प्रोक्षतीति। शाखाग्रे मण्डूकं बद्ध्वा तेन विकर्षतीत्यर्थः। ते च विकर्षणप्रोक्षणे प्रतीष्टकं कर्त्तव्ये। कुतः। चिताभ्य इष्टकाभ्यः पृथगग्निशब्दार्थस्य कस्यचिदवयविद्रव्यस्याभावादिति चेत्। नैवम्। उपहिताभिरिष्टकाभिः संयुक्तस्य प्रदेशस्यावयविद्रव्यत्वात्। तस्य चाग्निश-

धारत्वेनाग्निशब्दार्थत्वम्। तस्मादग्नेरेकत्वात् सकृदेव विकर्षणप्रोक्षणे कुर्यात्।

नवमाधिकरणमारचयति।

पत्नीसंयाजसंस्था किं सर्वेष्वन्त्येतरेषु वा।

अविशेषादादिमोऽन्त्योऽसंस्थितत्वोक्तिलिङ्गतः॥ १२॥

द्वादशाहे श्रूयते। पत्नीसंयाजान्तान्यहानि संतिष्ठन्त इति। तत्र द्वादशसंख्याकेषु सर्वेष्वहःसु पत्नीसंयाजान्तं कर्मानुष्ठायावशिष्टं हारियोजनादिकं त्याज्यम्। कुतः। एतावत्सु पत्नीसंयाजैः समाप्तिः। नेतरेष्विति विशेष नियामकाभावादिति चेत्। मैवम्। असंस्थितत्ववाक्योक्त लिङ्गेन प्रागुत्तमादह्नो यानीतराण्यहानि तेषु पत्नीसंयाजान्तान्यहानि संतिष्ठन्त इत्यस्य विधिः। शेष एवमाम्नायते। न बर्हिरनुप्रहरत्यसंस्थितो हि तर्हि यज्ञ इति। तत्र पत्नीसंयाजैः सर्वेषामह्नां समाप्तावसंस्थितत्वं व्याहन्येत। तस्मात् संतिष्ठन्त इति शब्दो न समाप्तिवचनः। किं तर्हि सत्येव तदहःसम्बन्धिकर्त्तव्यशेषे व्यापारोपरममात्रं ब्रूते। अयं च कर्त्तव्यशेषश्चरमेऽहन्यनुष्ठातव्यः। तथा सति द्वादशानामह्नां विहितः सहप्रयोगोऽनुगृहीतो भवति। तथा हि। द्वादशाहेन यजेतेति सहप्रयोगो विहितः। अत एव दीक्षोपसदादिकं तन्त्रेणानुष्ठीयते। तत्र प्रथममहः पत्नीसंयाजान्तमनुष्ठाय हारियोजनादिकं बर्हिःप्रहरणान्तं कर्त्तव्यत्वेनावस्थाप्य द्वितीयमहः प्रक्रमेत। एवमुत्तरत्रापि। तत्र सर्वत्रावशिष्टं कर्त्तव्यमुत्तमेऽहन्यनुष्ठातव्यम्। तथा सत्युपक्रमैक्यवदुपसंहारस्याप्येकत्वाद्विहितः सहप्रयोगः सिध्यति।

एकैकस्याङ्गः पत्नीसंयाजैः समासौ भिन्नाः प्रयोगाः प्रसज्ये-रन्। यत्तु दशमस्याङ्गो मानमग्रहेण समापनं तद्वाचनि-कम्। तस्मादुक्तमव्यतिरिक्तानामेवाङ्गां पत्नीसंयाजानन्तरं व्यापारोपरमः।

दशमाधिकरणमारचयति।

त्रिरनूक्तिरृचो धर्मः स्थानधर्मोऽथवाग्रिमः।

स्त्रीलिङ्गत्वान्न तत्प्रातिपदिकप्रबलत्वतः॥ १३॥

दर्शपूर्णमासयोः सामिधेनीः प्रकृत्य श्रूयते। त्रिः प्रथमामन्वाहेति। सोऽयं त्रिरभ्यासः आदौ पठितस्य प्र वो वाजा इत्यृग्विशेषस्य धर्मः। कुतः। प्रथमामित्यस्य पदस्य स्त्रीलिङ्गत्वादृक्परत्वोपपत्तेरिति चेत्। नैतद्युक्तम्। स्त्रीलिङ्गवाचिनष्टाप्प्रत्ययादपि पूर्वपठितस्य स्थानवाचिनः प्रथमेत्यस्य प्रातिपदिकस्य प्रबलत्वात्। अतो विकृतिष्वन्यस्या अप्यृचः प्रथमस्थाने पठितायास्त्रि-रभ्यासः कर्त्तव्यः। स्थानान्तरे पठितायाः प्र वो वाजा इत्यस्या अप्यृचो नास्त्यभ्यासः।

एकादशाधिकरणे वृत्तिकारमतमारचयति।

प्रतिप्रयोगमारम्भयजिरस्ति न वास्त्यसौ।

अङ्गत्वेन न तत्सर्वधर्मं प्राधानवद्भवेत्॥ १४॥

आम्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावार-प्स्यमान इति विहितैयमारम्भणीयेष्टिर्दर्शपूर्णमासयोर्या-वज्जीवमावर्त्यमानयोः प्रतिप्रयोगमावर्त्तनीया। कुतः। प्रयाजादिवदङ्गत्वादिति चेत्। नैतद्युक्तम्। कुतः। सर्वप्रयोगसाधारणत्वात्। यावज्जीवं मया दर्शपूर्ण-

मासौ कर्त्तव्याविल्यध्यवसाय आरम्भः। स चैक एव। तेन चारम्भेण प्रयुक्तेयमिष्टिः। तस्मान्नावर्त्तनीया। यथाधानं सर्वक्रतुसाधारणत्वात् सकृदेव कर्त्तव्यम्। तद्वत्। आधानस्य सकृदनुष्ठानं क्रतुगस्य तृतीयपादे वक्ष्यते।

स्वकीयं मतमारचयति।

अन्वाधानाङ्गमारम्भो यद्वा पुरुषसंस्कृतिः।
फलवत्त्वाद्दर्शादेर्नाऽन्यः प्रयोगान्न पृथक्फलम्॥ १५॥

दर्शपूर्णमासयोरन्वाधानस्य प्रथमपदार्थत्वेनारम्भरूपत्वादारम्भप्रयुक्तेयमिष्टिरन्वाधानस्याङ्गम्। तथा सति यागफलेनैव फलवती स्यात। कर्त्तृसंस्कारपक्षे पृथक्फलं कल्प्येत। तस्मात प्रतिप्रयोगमन्वाधानावृत्तौ तदङ्गभूतेयमिष्टिरावर्त्तनीयेति प्राप्ते ब्रूमः। आरम्भो नाम पुरुषस्य प्रथमप्रवृत्तिः। न त्वन्वाधानपदार्थः। अतो नान्वाधानाङ्गम। किन्त्वारप्स्यमानो निर्वपेदिति पुरुषसंयोगात्तत्संस्कारोऽयम। न च फलकल्पनाप्रसङ्गः। कृतारम्भस्य पुरुषस्य प्रयोगपरिगृहीतत्वेन पृथक्फलाकाङ्क्षाया अभावात् नन्वेवमपि तत्तत्प्रयोगानारप्स्यमानस्य संस्कारायावृत्तिः स्यात्। न स्यात्। प्रयोगमारप्स्यमान इत्यश्रुतत्वात्। दर्शपूर्णमासावारप्स्यमान इति हि श्रूयते। तयोश्चैक एवारम्भः। तस्मान्नास्त्यावृत्तिः।

द्वादशाधिकरणमारचयति।

सवित्राख्याद्युहमीयं न वार्यः सकृदस्तु तत्।
अहो मात्रिकनस्यैव निर्वापान्वयसम्भवात्। १६॥

दर्शपूर्णमासयोर्निर्वापमन्त्रः श्रूयते। देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामीति। तत्र सवित्रश्विपूषशब्दाः कर्मणि संगत-देवताकृत्यमर्थमभिधातुमर्हन्ति। तथा सति दृष्टप्रयोजनत्वाभात्। अग्निश्च कर्मसमवेता देवता। ततः कयाचिदपि व्युत्पत्त्या सवित्रादिशब्दैरग्निरभिधीयताम। अथोच्येत। अग्निशब्देनैवाग्नेरभिधानात पुनस्तदभि-धानं व्यर्थम्। किञ्च। देवतान्तरेषु रूढास्ते शब्दा नाग्नि-मभिदध्युरिति। एवं तर्हि तास्तिस्रो देवता अग्निना सह कर्मणि विकल्प्यन्ताम्। ततः प्राकृतस्य मन्त्रस्य विकृ-तिष्वतिदेशे सति सवित्रादिशब्दस्थाने तत्तद्देवतावाचकः शब्द ऊहनीय इति प्राप्ते ब्रूमः। नात्रोहः कर्तव्यः। कुतः। अविकृतस्यैव मन्त्रस्य निर्वापशेषत्वेनान्वयस-म्भवात्। न हि प्रकृतावग्निना सह सवित्रादिदेव-तानां विकल्पः। वाक्यभेदादिदोषप्रसङ्गात्। तस्मादना-स्त्यूहः।

द्वादशाधिकरणे प्रथमवर्णकमारचयति।

तत्राग्निशब्दो नोह्यः स्यादूह्यो वा स्तावकत्वतः।
सवित्रादिवदाद्यो नो समवेतार्थवर्णनात्॥ १७॥

तस्मिन् पूर्वोदाहृत एव मन्त्रेऽग्नये जुष्टमित्ययमग्नि-शब्दो विकृतिषु नोहनीयः। कुतः। देवतान्तरवा-चिनसवित्रादिशब्दवदग्निशब्दस्याप्यत्र निर्वापस्तावकत्वे न पाठादिति प्राप्ते ब्रूमः। विषमो दृष्टान्तः कर्मण्यसमवे-तार्थाः सवित्रादिशब्दाः। अग्निशब्दस्त्वाग्नेये कर्मणि सम-

वेतमर्थं ब्रूते। नन्वत्र जुष्टशब्दोऽसमवेतार्थः। निर्वापात् पूर्वं हविषो जुष्टत्वाभावात्। तद्योगादग्निशब्दोऽपि तथा स्यादिति चेत्। मैवम्। जुष्टं यथा भवति। तथा निर्वपामीति क्रियाविशेषणत्वेन भविष्यज्जोषणपरत्वे सति समवेतार्थत्वात्। तस्मात् सौर्य्ये यागे सूर्य्याय जुष्टं निर्वपामीत्येवमूहनीयम।

द्वितीयवर्णकमारचयति।

नोह्य ऊह्योऽथवा धान्यशब्दो नासङ्गमोक्तितः।
ऊह्यो लक्षणयार्थस्य गोपानस्येव सङ्गतिः। १८॥

दृषदि पेषणाय तण्डुलावापे मन्त्रो विहितः। धान्यमसि धिनुहि देवानिति। सोऽयं धान्यशब्दोऽसमवेतमर्थं ब्रूते। निस्तुषाणां तण्डुलानां धान्यशब्दार्थत्वाभावात्। ततः सवित्रादिशब्दवन्नोहनीय इति चेत्। मैवम। लक्षणावृत्त्या धान्यशब्दस्य तण्डुलरूपेऽर्थे समवेतत्वात्। यथा गावः पीयन्त इत्यत्र मुख्यवृत्त्यभावेऽपि नासमवेतार्थत्वं लोका वर्णयन्ति किन्तु दुग्धं लक्षयित्वार्थं समवेतमेव प्रतियन्ति। तद्वत। तस्माच्छाक्यानामयने षट्त्रिंशत्संवत्सरे धान्यशब्द ऊहनीयः। तत्र ह्येवमाम्नायते। संस्थिते संस्थितेऽहनि गृहपतिर्मृगयां याति। स तत्र यान् मृगान् हन्ति तेषां तरसमयाः सवनीयाः पुरोडाशा भवन्तीति। तत्र दृषदि पेषणाय मांसमावपन्मांसमसि धिनुहि देवानित्येवं मन्त्रमूहेत। न च धान्यशब्दवल्लक्षको मृगशब्द ऊहे प्रयोक्तव्य इति वाच्यम्। लक्षणावृत्तेः प्रकृतावार्थिकत्वेनातिदेशानर्हत्वात्।

चतुर्दशाधिकरणमारचयति ।

ऊह्यो यज्ञपतिर्नो वा वृद्ध्यर्थोत्साहतोऽग्रिमः ।
प्रत्यक्षेण कृतस्नमन्त्र इडार्थो नोहनं ततः ॥ १८ ॥

दर्शपूर्णमासयोरिडोपह्वानमन्त्रे वाक्यमेतदाम्नायते । दैव्या अध्वर्यव उपहूताः मनुष्या य इमं यज्ञमवान्ये च यज्ञपतिं वर्धानिति । ये दैव्या अध्वर्यवो यज्ञमवन्ति ये च मनुष्या यज्ञपतिं वर्धयन्ति ते सर्वेऽप्यत्रोपहूता इत्यर्थः । अस्मिन् वाक्ये यज्ञपतेरभिवृद्धिकथनेनोत्साहजननेन समवेतोऽर्थः प्रतीयते । तत इडोपह्वानमन्त्रात् पृथक् कृत्वाभिवृद्ध्यर्थे जपे मन्त्रवाक्यमिदं लिङ्गेन विनियुज्यताम् । तथा सति सत्रे यज्ञपतीनां बहुत्वाद् बहुवचनान्ततया शब्द ऊहनीय इति प्राप्ते ब्रूमः । प्रत्यक्षश्रुत्या कृत्स्नो मन्त्र इडोपह्वाने विनियुक्तः । एकवाक्यत्वं च कृत्स्ने मन्त्र उपलभ्यते । प्रकरणं चेदमिडायाः । ततः श्रुतिवाक्यप्रकरणैर्विरोधान्न लिङ्गविनियोगः सम्भवति । तदभावे च यज्ञपतिवृद्धिप्रतिपादकमन्त्रान्तरवाक्यमिडाप्रतिपादकेन महावाक्येन सहैकवाक्यतामापन्नमिडां प्रशंसति । प्रशंसा चैकवचनान्तेनापि यज्ञपतिशब्देन सिध्यतीति नास्ति सत्रे तदूहः ।

पञ्चदशाधिकरणमारचयति ।

यजमाना नोहितव्य ऊह्यो वा न हि पूर्ववत् ।
मन्त्रः फलप्रधानोऽत ऊह्यः सर्वफलित्वतः ॥ २० ॥

दर्शपूर्णमासयोः सूक्तवाकेन प्रस्तरं प्रहरतीति प्रहरणकरणत्वेन विनियुक्ते सूक्तवाकमन्त्रे वाक्यमेतदाम्नायते ।

अयं यजमान आयुराशास्त इति। तत्र पूर्वोक्तयज्ञपतिशब्दवत् सत्त्रेषु यजमानशब्दो नोहितव्य इति चेत्। नैवम्। वैषम्यात्। तथा हि। सर्वत्र प्रकरणे मन्त्रो द्विविधः। क्रियाप्रकाशकः फलप्रकाशकश्चेति। पूर्वोदाहृतमन्त्र इडोपह्वानक्रियाप्रकाशकः। उपहूतं रथन्तरं सह पृथिव्येत्यस्मिन्ननुवाके तदुपह्वानमन्त्ररूपे सर्वस्मिन्नपि तदवभासात्। इडोपहूतोपहूतेडोपो अस्मा इडा ह्वयतामिडोपहूता। दैव्या अध्वर्यव उपहूता इत्यादिभिरवान्तरवाक्यैरुपह्वानक्रियाया एव प्राधान्यावभासात्। तन्मध्यपतितं त्वेकमेव यज्ञपतिवाक्यं वृद्धिफलं गमयतीति न तस्य स्वार्थो विवक्षितः। सूक्तवाकमन्त्रस्तु फलमेव प्रकाशयति। न तु प्रहरणक्रियाम्। इदं द्यावापृथिवी भद्रमभूदित्यस्मिन्ननुवाके सूक्तवाकमन्त्रे सर्वस्मिन् फलावभासात्। अयं यजमान आयुराशास्ते। सुप्रजास्त्वमाशास्ते। उत्तरां देवयज्यामाशास्ते। भूयो हविष्करणमाशास्ते। दिव्यं धामाशास्त इत्यादिभिः सर्वैरप्यवान्तरवाक्यैः फलस्यैवावभासनात्। तस्माद्विवक्षितं फलम्। फलिनश्च सत्त्रेषु सर्वे यजमानाः। ततः सर्वेषां फलसिद्धये यजमानशब्दो बहुवचनान्तत्वेन सर्वेषु सत्त्रेषूहनीयः।

षोडशाधिकरणे प्रथमवर्णकमारचयति।

हरिवच्छब्द ऊह्यः स्यान्नो वेन्द्रसमवायतः।
ऊह्यो नैवं स्तावकत्वादसता स्तुतिसम्भवात्। २१।

ज्योतिष्टोमे सुब्रह्मण्याह्वानार्थे निगदे पठ्यते। इन्द्रागच्छ हरिव आगच्छ मेधातिथेर्मेष वृषणश्वस्य मेने गौरा

वस्कन्दिन्नहल्यायै जारेति। सोऽयं निगदो विकृतावग्निष्टुति चोदकेनातिदिष्टः। तत्राग्नेयी सुब्रह्मण्या भवतीत्यग्नि-सम्बन्धविधानादिन्द्रपदं परित्यज्याग्न आगच्छेत्यूहः कृतः। तस्मिन्निगदे यानीन्द्रपदस्य विशेषणानि हरिव इत्यादिसंबुद्ध्यन्तपदानि तान्यूहनीयानीति तावत् प्राप्तम्। कुतः। इन्द्र एव नियमेन समवेतस्यार्थस्याभि-धानात्। अग्नौ तस्याभावात्। स चार्थस्तत्तत्सम्बुद्ध्यन्तपद-मनूद्य व्याचक्षाणेन ब्राह्मणेन स्पष्टीकृतः। तथा च श्रूयते। हरिव आगच्छेति पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरीताभ्यां ह्येष सर्वं हरतीति। मेधातिथेर्मेषेति मेधातिथिं ह्रि काण्वायनिं मेषो भूत्वा जहार। वृषणश्वस्य मेन इति वृष-णश्वस्य मेनका नाम दुहिता बभूव तामिन्द्रश्चकमे। गौरावस्कन्दिन्निति गौरमृगो भूत्वा राजानं पिबतीति। एतस्यार्थस्येन्द्र एवान्वितस्याग्नावसम्भवात् तत्परित्यागे-नाग्नेरुचितानि कानिचिद्विशेषणान्यूहनीयानीति प्राप्ते ब्रूमः। इन्द्रशब्दस्य कर्मसमवेतदेवताप्रकाशकत्वान्न-स्तावकत्वमित्यस्ति तस्योहः। हरिवदादिशब्दा ब्राह्म-णव्याख्यातगुणाभिधानद्वारेणेन्द्रं स्तुवन्ति। स्तुतिश्च विद्य-मानगुणवदविद्यमानेनापि गुणेन कर्तुं शक्यते। तस्मा-दग्निस्तुतिसम्भवान्नास्त्यूहः।

द्वितीयवर्णकमारचयति।

ऊह्यं तस्यै श्रुतं नो वा भाविद्रव्या समन्वयात्।
एकाऽन्द्रायां साण्ड ऊहो नोहः साम्यात् श्रुतिर्द्वयोः॥२२॥

ज्योतिष्टोम एकहायन्या मन्त्र एवमाम्नायते। इयं गौः

सोमक्रयणी। तया ते क्रीणामि। तस्यै शृतं तस्यै शर-स्तस्यै दधि तस्यै मस्तु तस्या आतञ्चनं तस्यै नवनीतं तस्यै घृतं तस्या आमिक्षा तस्यै वाजिनमिति। साद्यस्क्रे त्वेवमाम्नातम्। त्रिवत्सः साण्डः सोमक्रयण इति। तस्मिन् साण्डे पूर्वोक्तो मन्त्रश्चोदकेनातिदिष्टः। तस्मिन्मन्त्रे पूर्व-भागस्य समवेतार्थत्वादयं साण्डः सोमक्रयणः। तेन क्रीणा-मीत्येवमूहोऽस्ति। तथैव तस्यै शृतमित्याद्युत्तरभागेऽप्य-स्यूहः। यद्यप्येकहायन्याम् शृत्यादिकं न सम्भवति तथापि त्रिवत्सरवर्षोत्तरकाले भविष्यति। साण्डोऽपि कस्यांश्चिद्गवि वत्सोत्पादनेन क्षीरादिनिमित्तम्। तत-स्तस्मिन्नपि समवेतोऽयं उत्तरभाग ऊहनीयः। तथा सति तस्मै शृतमित्येवं पुंलिङ्गतया पठनीयमिति प्राप्ते ब्रूमः। एकहायन्यामपि मुख्यया वृत्त्या समवेतार्थत्वाभावेन स्तुति-त्वात् साण्डेऽपि स्तुतित्वान्नास्त्यूहः।

सप्तदशाधिकरणमारचयति।

दैव्या इत्यस्ति मेष्या नो वाऽस्मा इति पशूक्तितः।

अस्ति मैवं पश्वनूक्तेः पुंव्यक्तित्वविवक्षया॥ २३॥

अध्रिगुनामा दैव्यः शमिता। तं प्रति प्रैषमन्त्रो होता पाशुके पठति। दैव्याः शमितार आरभध्वमुत मनुष्या उपनयत मेध्या इत्यादि। अतिरात्रे सवनीय-पशुरेवमाम्नायते। सारस्वती मेष्यतिरात्र इति। तस्यां मेष्यामप्युदाहृतो मन्त्रोऽस्ति। कुतः। पशुधर्मविधेः सर्वपशुसाधारणत्वेनाग्नीषोमीयपशाविव मेष्यां सम्भवात्। ननु तस्मिन् मन्त्रे ह्यस्मा अग्निं भरतेति पुंलिङ्गं श्रु-

र्थ्यन्तपदं श्रुतम्। तच्च न मेषां युक्तमिति चेत्। मैवम्। अश्वे पशव इत्युक्त्या प्रातिपदिकार्थस्य जातिमात्रस्य विवक्षितत्वादिति प्राप्ते ब्रूमः। पशुशब्दस्तावन्न मन्त्रे पठितः। तथा सति प्रयुक्त इदं शब्दः पुरोवर्त्तिनीं व्यक्तिमाचष्टे। व्यक्तिविशेषश्चाग्नीषोमीये पुमात्मक इति श्रूयमाणचतुर्थ्येकवचनद्योत्यं लिङ्गमपि विवक्षितम्। तस्मान्न मैषामस्त्ययं मन्त्रः। ननु पशुधर्मा अग्नीषोमीय एवोपदिष्टाः। प्रकरणेन तन्नियमादिति तृतीयेऽभिहितम्। अष्टमेऽप्यग्नीषोमीयपशुः सवनीयादिपशूनां प्रकृतिरित्युक्तम्। ततो मेषामयं मन्त्रश्चोदकप्राप्तः। पुंलिङ्गं चोहनीयमिति चेत्। एवं तर्हि कृत्वाचिन्तास्तु।

अष्टादशाधिकरणमारचयति।

इरागिराविकल्पः स्यादुतेरा वा विशेषतः।

आद्यो नैवं वाधपूर्वमिराया विहितत्वतः॥ २४॥

ज्योतिष्टोमे श्रूयते। यज्ञायज्ञीयेन स्तुवीतेति। यज्ञायज्ञेत्यनेन शब्देन युक्तायामृच्युत्पन्नं साम यज्ञायज्ञीयम्। तस्यामृचि गिराशब्दः पठ्यते। यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षस इति। तत्र सामगा योनिगानमधीयानाः सहैव गकारेण गायन्ति। गायिरेति। ब्राह्मणे तु गकारलोपपूर्वकमाकारयकारादिकं गानं विधीयते। ऐरं कृत्वोद्गेयमिति। गिराशब्दे गकारलोपादिराशब्दो भवति। इरायाः सम्बन्धि गानमैरम्। तादृशं कृत्वा प्रयोगकाले उद्गानं कर्त्तव्यमित्यर्थः। तत्र योनिगानब्राह्मणयोः समानबलत्वेन विशे-

षाभावाद्विकल्पेन प्रयोक्तव्यमिति प्राप्ते ब्रूमः। न गिरा गिरेति ब्रूयाद्यद्गिरागिरेति ब्रूयादात्मानमेव तदुद्गाता गिरेदिति गकारसहितगाने बाधकमुक्ता गकाररहित-मिरापदं गेयत्वेन विधीयते। तत्पदादेरिकारस्य गाना-र्थमाकारो यकार ईकारश्चेति त्रीन् वर्णान् प्रयुञ्जते। तत आयीर इरेत्येवं गातव्यम्।

एकोनविंशाधिकरणमारचयति।

इरापदं न गेयं स्याद् गेयं वा गीत्यनुक्तितः।
न गेयं गीयमानस्य स्थानेपातात् प्रगीयते॥ २५॥

ब्राह्मणेन विहित इराशब्दो न गातव्यः। कुतः। ऐरमिति शब्दे न गीतेरनुक्तत्वात्। पाणिनीयेन विमुक्ता-दिभ्योऽणिति सूत्रेणेराशब्दादण्प्रत्ययो मत्वर्थीयो विहितः। तथा सतीरापदोपेतं छन्दस्येतावानेवार्थो भवति। यदि प्रगीतेरापदमस्यस्तीति विवक्ष्येत। तदानीमाकारो यकार ईकारो रेफ आकारश्चेत्येतैः पञ्चभिर्वर्णैर्निष्पन्नमा-योरारूपं गीयमानेराशब्दप्रातिपदिकं भवति। तादृशात् प्रातिपदिकात् पाणिनीयेन छशाच्छ इति सूत्रेण प्रत्ययान्तरे सत्यायोरोयं छन्देति ब्राह्मणपाठो भवेत्। तस्मान्न गेयमिति प्राप्ते ब्रूमः। गीयमानस्य गिरापदस्य स्थाने इरापदं विधीयत इति पदमात्रस्य बाधः। गानं तु न बाध्यते। किञ्च। विमुक्तादिसूत्रेणाण्प्रत्ययेऽपि पूर्व-स्मान्मतौ छः सूक्तसाम्नोरिति सूत्रात् सामानुवृत्तेरैरं सामे-त्यर्थो भवति। सामत्वं च गीतिसाध्यम्। यदा तु तस्य

विकार इत्यस्मिन्नर्थेऽण्प्रत्ययः। तदानीमिरायां विकार इति विग्रहे यथोक्तं गानं लभ्यते। तस्माद् गातव्यम्।

इति माधवीये जैमिनीयन्यायमालाविस्तरे
नवमस्याध्यायस्य प्रथमः पादः।

---

द्वितीयपादस्य प्रथमाधिकरणे प्रथमवर्णकमारचयति।

सामोक्तिबृहदाद्युक्ती गीतायामृचि केवले।
गाने वा गान एवेति स्मार्य्यते सप्तमोदितम्॥ १॥

सामान्यवाची सामशब्दो विशेषवाचिनो बृहद्रथन्तरादिशब्दाश्च गानमात्रे वर्त्तन्ते। न तु गानविशिष्टायामृचीत्ययं नियमः सप्तमस्य द्वितीयपादे सिद्धः। सोऽत्र वक्ष्यमाणविचारोपयोगितया स्मार्य्यते।

द्वितीयवर्णकमारचयति।

ऊहग्रन्थोऽपौरुषेयः पौरुषेयोऽथवाग्रिमः।
वेदसामसमानत्वाद्विधिसार्थत्वतोऽन्तिमः॥ २॥

यस्मिन् ग्रन्थे सामगास्तृचे सामैकैकं गायन्ति सोऽयमूहग्रन्थो नित्यः। न तु पुरुषेण निर्मितः। कुतः। अनध्यायवर्जनेन कर्त्तुरस्मरणेनाध्यापकानां वेदत्वप्रसिद्ध्या च वेदसामनामकयोनिग्रन्थसदृशत्वादिति चेत्। मैवम्। अपौरुषेयत्वे विधिवैयर्थ्यप्रसङ्गात्। यद्योन्यां तदुत्तरयोर्गायतीति विधीयते। अयमर्थः। अपौरुषेयत्वेन सम्प्रतिपन्नवेदसामनामके ग्रन्थे कया नश्चित्र आ भुवदित्येतस्यां योन्यामिकस्यामृचि यद्वामदेव्यनामकं सामोपदिष्टं

तदेवोत्तरयोर्ऋचोः कस्त्वा सत्यो मदानाम्। अभी षु ण
सखीनामित्यनयोर्द्वितीयतृतीययोर्गातव्यमिति। अयं विधि
रूहग्रन्थस्य वेदत्वे व्यर्थः स्यात्। वेदसमवदध्ययनादे
तत्सिद्धेः। उपरितन ऋग्द्वये सामोहस्य पौरुषेयत्वेऽपि
सामस्वरूपस्य तदाधारभूतानां तिसृणामृचां च वेदत्वा
दनध्याया वर्जनीयाः। कर्तुरस्मरणं जीर्णकूपारामादि
ष्विव चिरकालव्यवधानादुपपन्नम्। अस्मरणमूलैवाध्या
पकानां वेदत्वप्रसिद्धिः। यथा बह्वृचा अध्यापका महा
व्रतप्रयोगप्रतिपादकमाश्वलायननिर्मितं कल्पसूत्रमरण्ये
ऽधीयानाः पञ्चममारण्यकमिति वेदत्वेन व्यवहरन्ति।
तद्वत्। न च तस्यापि वेदत्वमस्त्विति वाच्यम्। प्रथमारण्य
केन पुनरुक्तत्वात्। अर्थवादराहित्येन ब्राह्मणसादृश्या
भावाच्च। तस्मात् पञ्चमारण्यकवदूहः पौरुषेयः। पौरुषे
यस्य च न्यायमूलत्वाद्यत्र वक्ष्यमाणन्यायविरोधस्तदप्रमा
णम्।

द्वितीयाधिकरणमारचयति।

सामर्चं प्रति मुख्यं स्याद् गुणो वा बाह्यपाठतः।
मुख्यमभ्यसितुं पाठो गुणो गीताच्चरैः स्तुतः॥ २॥

रथन्तरं गायतीत्यादौ यद्गानं विहितं तदेव साम
शब्दार्थ इति प्रतिपादितं स्मारितं च। तदेतद्गानमृचं
प्रति प्रधानकर्म स्यात्। कुतः। यागप्रयोगाद्बहिरध्ययन
कालेऽपि पठ्यमानत्वात् गुणकर्मत्वे तु व्रीहिप्रोक्षणादि
वद्यागप्रयोगमध्य एव गानमनुष्ठीयेत। ततो बहिर्गानस्य
विश्वजिदादिवत् फलं कल्पनीयम्। मध्यकालीनगानं तु

प्रयाजादिवद्द्वारादुपकारकम्। तस्मात्सृष्टमेतत्। न तु गुणकर्मेति प्राप्ते ब्रूमः। न तावद्दृष्टिपाठः प्रधानकर्मत्वं कल्पयितुं शक्नोति। भूमिरथिकशृष्टेष्टिन्यायेन प्रयोगपाटवाय गानाध्ययनोपपत्तेः। यथा भूमिरथिको भूमौ रथमालिख्याभ्यासं करोति। यथा वा छात्रः शुष्केष्ट्या प्रयोगपाटवं सम्पादयति। तद्वत्। नापि गुणकर्मत्वे प्रयोजनाभावात् प्रधानकर्मत्वमिति वाच्यम्। गानेन संस्कृतैर्ऋग्वर्णैः स्तुतिसम्भवात्। आज्यैः स्तुवते। पृष्ठैः स्तुवत इति स्तुतिविधानात्। तस्मादृगक्षराणां स्वरविशिष्टत्वाकाराभिव्यक्तिर्दृष्टं प्रयोजनमित्यदृष्टस्याकल्पनीयत्वाद् गानं संस्कारकर्म।

तृतीयाधिकरणमारचयति।

अङ्गे सामर्चं कृत्स्नं वा प्रत्यृचं तिसृभिः श्रुतेः।
अङ्गैर्नैवं स्तुतेरङ्गैरसिद्धिः प्रत्यृचं भवेत्॥ ४॥

एकं सामतृचे क्रियते स्तोत्रीयमिति श्रूयते। तत्र त्रेधा विभक्तेषु सामाङ्गेष्वेकैकोऽङ्ग एकैकस्यामृचि गातव्यः। कुतः। एकस्य साम्नस्तिसृभिर्ऋग्भिर्निष्पादनस्य श्रवणादिति प्राप्ते ब्रूमः। स्तोत्रीयमिति निष्पादकत्वं कृत्स्नस्य साम्नो विधीयते। न तु सामाङ्गानाम्। स्तुतिर्नाम गुणकथनपरमेकं वाक्यम्। तच्च वाक्यमेकस्यामृचि सम्पूर्णम्। ततः कृत्स्नेन साम्ना तद्वाक्यं संस्कार्यमिति प्रत्यृचं सामाभ्यसनीयम्। तथा सति द्वितीयतृतीययोर्ऋचोस्तृचैव साम्न आवर्त्यमानतया सामान्तरत्वाभावाद्-

कृयनिष्पाद्यत्वमप्यविरुद्धम्। तस्मात् प्रत्यृचं कृत्स्नं साम समापनीयम्।

चतुर्थाधिकरणमारचयति।

तिसृष्वृचूदितं साम विषयासु समासु वा।
यथेच्छानियमादन्त्यः शरलेशापनुत्तये॥ ५॥

विषमच्छन्दस्कासु समच्छन्दस्कासु वा तिसृष्वृक्षु स्वेच्छया साम गातव्यम्। इत्थमेवेति नियामकस्य कस्यचिदभावादिति चेत् मैवम्। शरलेशप्रसङ्गस्य नियामकत्वात्। शरो हिंसा। लेशोऽल्पत्वम्। शॄ हिंसायां लिश अल्पीभाव इत्येतद्धातुद्वयदर्शनात्। यद्यधिकच्छन्दस्कायां योनावृत्पन्नं साम न्यूनच्छन्दस्कयोरुत्तरयोर्गायेत्। तदा सामभागेनैव तत्पूर्त्तेरवशिष्टः सामभाग आश्रयाभावाद्धिंस्येत। यदि योनिरप्यधिकच्छन्दस्कयोर्गायेत्। तदा साम्नोऽल्पत्वादवशिष्ट ऋग्भागः सामरहितः स्यात्। तस्मात् समानच्छन्दस्कास्वेव गातव्यम्।

पञ्चमाधिकरणे प्रथमवर्णकमारचयति।

छन्दः स्थयोरुत्तरास्थयोर्वा गीतिरिहाहनम्।
अविशेषाद्विकल्पः स्यादन्त्यः संज्ञावाल्लत्वतः॥ ६॥

सामगानात्मकपाठाय द्वौ ग्रन्थौ विद्येते। छन्द उत्तरा चेति। तत्र छन्दोनामके ग्रन्थे नानाविधानां साम्नां योनिभूता एवर्चः पठिताः। उत्तराग्रन्थे तृचात्मकानि सूक्तानि पठितानि। एकस्मिंस्तृचे छन्दोगता योन्यृक् प्रथमा। इतरे द्वे उत्तरे। एवं स्थिते सति रथन्तरमुत्तरयोर्गायति। यद्योन्यां तदुत्तरयोर्गायतीत्यत्र द्विविधे उत्तरे

सम्भाविते । रथन्तरस्य छन्दोग्रन्थेऽभि त्वा शूरेतीयमृग्यो-
नित्वेन पठिता । तस्या उपरि त्वामिद्धि हवामह इत्या-
द्यो बृहदादिसाम्नां योनयः पठिताः । उत्तराग्रन्थे त्वाभि
त्वा शूरेति सूक्ते तस्या ऋच ऊर्ध्वं न त्वा वाँ अन्य इत्येषा
साम्नः कस्याप्ययोनिभूता पठिता । तत्र छन्दोग्रन्थापेक्षया
समान्तरयोर्योनी द्वे रथन्तरस्य स्वयोन्युत्तरे भवतः । उत्त-
राग्रन्थापेक्षया तृचगते द्वितीयतृतीये स्वयोन्युत्तरे भवतः ।
तत्र विशेषनियामकाभावाद्ययोः कयोश्चिदुत्तरयोर्गानमिति
चेत् मैवम् । उत्तरेति संज्ञा सहसा बहिस्था भवति ।
प्रतियोगिनिरपेक्षत्वात् । पूर्वपठितां योनिमक्षमपेक्ष्य यदु-
त्तरात्वं तद्विलम्बेन प्रतीयमानत्वाद् दुर्बलम् । ईदृशमेवो-
त्तरात्वं छन्दसि पठितयोः स्वयोन्यनन्तरभाविन्योः सामा
न्तरयोन्योर्द्वयोर्ऋचोः । तृचगतयोस्तु द्वितीयतृतीययो-
रुत्तरात्वं संज्ञया वर्त्तते । अतस्तयोरेव गानम् । एवं सति
पूर्वाधिकरणनिर्णीतं समास्वेव गानमनुगृहीतं भवति ।
किञ्च । तृचात्मकेषु सूक्तेषु या प्रथमा योनिभूता तन्नाम्ना
छन्दोग्रन्थस्य योनिग्रन्थ इत्यध्यापकसमाख्या । इतरस्य तु
तृचसंघरूपस्य ग्रन्थस्योपरितनयोर्नामधेयेनोत्तरेति स-
माख्या । स एव ग्रन्थः कर्माङ्गसमर्पकं प्रकरणम् । पञ्च-
दशसप्तदशादिस्तोमानां तृचेष्वेवोत्पत्तेः । तस्मादुत्तरा-
ग्रन्थस्थयोस्तृचगतयोर्द्वितीयतृतीययोरयमूहः ।

द्वितीयवर्णकमारचयति ।

वैशोकेति जगत्यौ द्वे आनेये गीतयेऽथवा ।
बृहत्यावादिमः साम्यान्नोत्तरात्वश्रुतेर्बलात् ॥ ७ ॥

द्वादशाहे चतुर्थेऽहनि वैशोकनामकं साम विहितम्। तच्च विश्वाः पृतना इत्येतस्यामतिजगत्यामुत्पन्नम्। तस्मिंश्च तृचे तस्या योनेरुत्तरे द्वे बृहत्यौ त्रिमिं नमन्तो-त्यादिके आम्नाते। तत्र बृहत्यावुपेक्ष्य तयोः स्थाने द्वे उत्पत्तिसिद्धे अतिजगत्यावानीय तासु तिसृषु गेयम्। तथा सति समासु गानं पूर्वत्र निर्णीतमनुगृह्यते। अतिजगतीषु स्तुवन्तीति श्रूयमाणमतिजगतीबहुत्वमन्यथा नोपपद्येतेति चेति। मैवम्। उत्तरयोर्गायतीत्यत्रास्य संज्ञारूपस्योत्तराशब्दस्याधीयमानयोर्बृहत्योर्मुख्यत्वात्। श्रुतिश्च बहुत्वलिङ्गात् समासु गानमिति न्यायाच्च बलीयसी। यद्वै तदतिजगतीबहुत्वं तद् बृहत्योः स्वीकारेऽप्युपपद्यते। एकविंशस्तोमस्यात्र विहितत्वेन तत्सिद्धये प्रथमाया अतिजगत्याः सप्तकृत्व आवर्त्तनीयत्वात्। तस्मात् वैशोकं साम बृहत्योरूहनीयम्॥

षष्ठाधिकरणे प्रथमवर्णकमारचयति।

रथन्तरे ककुब्ग्राह्या ग्राह्या वाद्योऽर्थवत्त्वतः।

पुनः पदाप्रसिद्ध्यादेरन्त्योऽर्थोऽन्यत्र वीक्ष्यताम्॥ ८॥

इदमाम्नायते। न वै बृहद्रथन्तरमेकच्छन्दो यत्तयोः पूर्वा बृहती ककुभावुत्तरे इति। अयमर्थः। बृहद्रथन्तरं तदेतत्सामद्वयमितरसामवदेकच्छन्दस्कं न भवति। यस्मात् कारणात्तयोर्बृहद्रथन्तरसाम्नोराश्रयभूतास्वृक्षु पूर्वा बृहतीच्छन्दस्का। उत्तरे तु द्वे ऋचौ ककुप्छन्दस्के। इतरेषां वामदेव्यादिसाम्नामाश्रये तृचेऽवस्थितास्तिस्र ऋच एकच्छन्दस्का उत्तरास्य आम्नाताः संशयविलेशपरिहाराय समासु

गायेदिति न्यायेन निर्णीतावेव । इह तु वाचनिकं विषमच्छन्दस्कासु गानमिति । तत्र रथन्तरस्याश्रयतया तृचो नोत्तराग्रन्थे समाम्नातः । किं तर्हि प्रगाथस्तदाश्रयत्वेनाम्नातः । स च द्वाभ्यामृग्भ्यां निष्पन्नत्वात्तृचो भवति । तयोश्च द्वयोर्ऋचोरभि त्वा शूरेत्येषा प्रथमा । सा च बृहती । न त्वावाँ अन्यो दिव्य इत्येषा द्वितीया । सा च पङ्क्तिच्छन्दस्का । तथा सति तां पङ्क्तिमपनीय तस्याः स्थाने दशतयीगते द्वे उत्पत्तिककुभावृचौ ग्रहीतव्ये । कुतः । अर्थवत्त्वात् । उदाहृतेन ककुभावुत्तरे इति वाक्येन रथन्तरसाम्न आश्रयत्वेन ककुभोर्विनियुज्यमानयोः ककुबुत्पत्तिरर्थवती भवति । अन्यथा वैयर्थ्यं स्यात् । किञ्च । आम्नातायाः एकस्याः पङ्क्तेः स्वीकारे सत्यृचोर्द्वयोरेव लाभाद्दैकं साम तृचे क्रियते स्तोत्रीयमिति वचनं विरुध्येत । तस्माद्रथन्तरसाम्नि द्वे ककुभावुत्तरे ग्रहीतव्ये । अयमेव न्यायो बृहत्साम्न्यपि योजनीय इति प्राप्ते ब्रूमः । आम्नातयोर्बृहतीपङ्क्त्योरेव ककुब्ग्रथनीया हि । अभि त्वा शूरेत्येषा बृहती प्रथमा स्तोत्रीया । तस्यामविकृतायामेव रथन्तरं गातव्यम् । ततस्तस्यामृचि चतुर्थं पादं पुनरुपादायोत्तरस्याः पङ्क्तेः पूर्वार्द्धेन सह ग्रथनीयम् । सेयमष्टाविंशत्यक्षरा त्रिपदा द्वितीया स्तोत्रीया । सा चैका ककुप् संपद्यते । तस्यां च ककुभि चरमं पादं पङ्क्तेरुत्तरार्द्धेन सह प्रग्रथ्य तृतीया स्तोत्रीया कर्त्तव्या । सा च द्वितीया ककुप् संपद्यते । अनेन प्रग्रथनप्रकारेण द्वयोर्ऋचोराम्नातयोस्तृचनिष्पत्तेर्नास्त्युक्ता वचन-

विरोधः। अस्मिंश्च ग्रथने पुनःपदेति श्रौतोक्तिलिङ्गम्। तथाच श्रूयते। एषा वै प्रतिष्ठिता बृहती या पुनःपदा। तद् यत् पदं पुनरारभते तस्माद् वत्सो मातरमभि हिंकरोतीति। अयमर्थः। या बृहती पुनःपदा भवति सैषा प्रतिष्ठिता। स्थिरा भवति। पदं चतुर्थः पादः। सोऽप्यृगन्तरसम्पादनाय पुनः पठ्यते। ततः सा बृहती पुनःपदा। सेयमुन्नाता। तस्याः पादो वत्सः। तथा सति यस्मादत्र चतुर्थं पादमुन्नाता पुनरारभते तस्माद् वत्सो मातरमभिवीक्ष्य हिमिति शब्दं करोतीति। न केवलं लिङ्गमात्रेण प्रग्रथनम्। किन्तु छन्दोगानां प्रसिद्ध्यापि। ते ह्येवं स्मरन्ति काकुभः प्रगाथ इति। किञ्च। प्रगाथशब्दार्थपर्य्यालोचनेनापि ग्रथनं गम्यते। प्रकर्षेण गानं यत्र स प्रगाथः। प्रकर्षो नामाम्नातादृक्पाठादाधिक्यम्। तच्च पूर्वोक्तरीत्या पादाभ्यासपुरःसरमृगन्तरसम्पादनेनोपजायते। तस्मादोत्पत्तिककुभौ ग्रहीतव्ये। किं तर्हि प्रग्रथनेन द्वे उत्तरे ककुभौ सम्पाद्य तासु तिसृषु रथन्तरं गातव्यम्। तथा बृहदपि। एवं सति पङ्क्तेः पाठः सार्थो भवति। न चैवं ककुबुत्पत्तेर्वैयर्थ्यमिति शङ्कनीयम्। वाचः स्तोमे तदुपयोगात्। तस्मान्न क्वापि प्रग्रथनेऽनुपपत्तिः।

द्वितीयवर्णकमारचयति।

यौधाजये रौरवे च बृहत्योरागमोऽथवा।
ग्रथनं पूर्ववत्पत्नौ षष्टिलिङ्गमिहोच्यते॥ ८॥

इदमाम्नायते। रौरवयौधाजये बार्हते त्वचे भवतः

इति । अयमर्थः । रौरवनामकं किञ्चित् साम । तथा यौधाजयनामकमपरम् । तयोरुभयोः साम्नोर्बृहतीच्छन्दस्कास्वृच आश्रय इति । उत्तराग्रन्थे तु तस्य सामद्वयस्याश्रय एकः प्रगाथ आम्नातः । तस्मिंश्च प्रगाथे पुनानः सोमेत्याद्यृक्प्रथमा । सा च बृहती । दुहान ऊधर्दिव्यमित्यसावृग्द्वितीया । सा तु विष्टारपङ्क्तिः । तामेतां विष्टारपङ्क्तिमपनीय तस्याः स्थान उत्पत्तिबृहत्यौ द्वे ऋचावानेतव्ये इति पूर्वपक्षः । बृहतीविष्टारपङ्क्त्योः प्रग्रथनविशेषेण द्वे बृहत्यावुत्तरे सम्पादनीये इति राद्धान्तः । तत्रोभयत्र युक्तिः पूर्वन्यायेन द्रष्टव्या । लिङ्गं त्वेवमाम्नायते । षष्टिस्त्रिष्टुभो माध्यन्दिनसवनमिति । अयमर्थः । रौरवयौधाजयनामके सामनी माध्यन्दिनसवने गीयेते । तस्मिंश्च सवने त्रिष्टुप्छन्दस्का ऋचः षष्टिर्भवन्तीति । सेयं षष्टिसंख्या प्रग्रथनपक्ष उपपद्यते । तथाहि । माध्यन्दिसवने पवमान एकः । पृष्ठस्तोत्राणि चत्वारि । पवमाने त्रीणि सूक्तानि । उच्चा ते जातमित्येकं सूक्तम् । तत्र गायत्र्यस्तिस्र ऋचः । पुनानः सोमेति द्वितीयं सूक्तम् । तच्च प्रगाथरूपम् । तत्र पूर्वा बृहती । उत्तरा विष्टारपङ्क्तिः । प्र तु द्रव परि कोशमिति तृतीयं सूक्तम् । तत्र त्रिष्टुभस्तिस्रः । पृष्ठस्तोत्रेष्वभि त्वा शूरेति प्रगाथरूपं प्रथमं सूक्तम् । तत्र पूर्वा बृहती । उत्तरा पङ्क्तिः । कया नश्चित्र इति द्वितीयम् । तत्र तिस्रो गायत्र्यः । तं वो दस्ममृतीषहमिति तृतीयं प्रगाथरूपम् । तत्र बृहतीपङ्क्त्यौ । तरोभिर्वो विदद्वसुमिति प्रगाथरूपं चतुर्थम् । तत्रापि बृहतीपङ्क्त्यौ । एव

मस्मिन् सवने सप्त सूक्तानि। तेषु नव सामानि गेयानि। प्रथमे सूक्ते गायत्रमामहीयवं चेति द्वे सामनी। द्वितीये रौरवं यौधाजयं च। तृतीय औशनम्। चतुर्थे रथन्तरम्। पञ्चमे वामदेव्यम्। षष्ठे नौधसम्। सप्तमे कालेयम्। तत्र प्रथमसूक्तस्य सामद्वयनिष्पत्तये द्विरावृत्तावाश्रयभूता ऋचः षड्गायत्र्यो भवन्ति। पञ्चमसूक्तगता वामदेव्यसामाश्रयभूतास्तिस्र ऋचः सप्तदशस्तोमसिध्यर्थमावर्त्यमानाः सप्तदश गायत्र्य इत्येवं मिलित्वा त्रयोविंशतिर्गायत्र्यः। षष्ठे सूक्ते बृहतीपङ्क्त्योः प्रग्रथनेन बार्हतस्तृचो भवति। तथा सप्तमेऽपि। तत्रोभयत्र सप्तदशस्तोमे सति चतुस्त्रिंशद्बृहत्यो भवन्ति। द्वितीयसूक्तेऽपि प्रग्रथनेन बार्हतं तृचं सम्पाद्य सामद्वयार्थमावृत्तौ षड्बृहत्यो भवन्ति। चतुर्थसूक्ते रथन्तरसामार्थं पूर्ववर्णकोक्तरीत्या प्रग्रथने सति द्वे ककुभावुत्तरे भवतः। प्रथमा तु स्वतः सिद्धा बृहती। तत्र सप्तदशस्तोमे कृते सति पञ्च बृहत्यो द्वादश ककुभश्च सम्पद्यन्ते। तस्य च स्तोमस्य विधायकं ब्राह्मणमेवमाम्नायते। पञ्चभ्यो हिंकरोति स तिसृभिः स एकया स एकया पञ्चभ्यो हिंकरोति स एकया स तिसृभिः स एकया सप्तभ्यो हिंकरोति स एकया स तिसृभिः स तिसृभिरिति। अयमर्थः। एका स्वतः सिद्धा बृहती। प्रग्रथिते द्वे ककुभावित्येवं विधस्तृचस्त्रिभिः पर्यायैरावर्त्तनीयः। प्रथमे पर्याये त्रिर्बृहती गातव्या। सकृत् सकृत् ककुभौ। द्वितीये पर्याये सकृद्बृहती। त्रिवारमनन्तरा ककुप्। सकृदन्या। तृतीये पर्याये सकृद्बृहती। त्रिस्त्रिः ककुभाविति।

हिंकरोति हिंकारोपलक्षितं मानं कुर्य्यादित्यर्थः। तदेवं तृतीयसूक्तव्यतिरिक्तेषु षट्सु सूक्तेषु त्रयोविंशतिर्गायत्र्यः पञ्चचत्वारिंशद्बृहत्यो द्वादश ककुभः सम्पन्नाः। तत्र ककुबष्टाविंशत्यक्षरा। तस्यां षोडशाक्षरे गायत्रीपादद्वये योजिते चतुश्चत्वारिंशदक्षरा त्रिष्टुप् सम्पद्यते। अनया दिशा द्वादशानां ककुभां त्रिष्टुप्सम्पादनाय चतुर्विंशतिर्गायत्रीपादा योजनीयाः। तथा सत्यष्टौ गायत्र्यो गताः। पञ्चदश गायत्र्योऽवशिष्यन्ते। तासां पञ्चचत्वारिंशत् पादाः। तांश्च तावतीषु बृहतीषु संयोज्य त्रिष्टुभः सम्पादनीयाः। तत एताः पञ्चचत्वारिंशत्ककुप्सु निष्पन्ना द्वादश तृतीये सूक्ते स्वतः सिद्धास्तिस्र इत्येवं प्रग्रथनपक्षे षष्टिस्त्रिष्टुभ उत्तराग्रन्थे समाम्नाता एव लभ्यन्ते। उत्पत्तिबृहत्यानयने तु प्रकरणाम्नातानां तावतीनामलाभात् प्रकृतहानाप्रकृतप्रक्रिये प्रसज्येयाताम्। तस्मात् त्रिष्टुभः षष्टिरित्येतद्बृहतीप्रग्रथनस्य लिङ्गम्। प्रग्रथनप्रकारस्त्वभिधीयते। पुनानः सोम इत्यस्या बृहत्याश्चतुर्थं पादं पुनरुपादाय द्विरभ्यस्य दुहान ऊधर्दिव्यमित्येतस्या विष्टारपङ्क्तेः पूर्वार्द्धेन संयोजयेत्। सा बृहती भवति। एतदीयं चतुर्थं पादं द्विरभ्यस्योत्तरार्द्धेन योजयेत्। सापि बृहती भवति। तस्माद्योधाज्यशरीरवर्याबृहत्यौ उत्तरे प्रग्रथनीये। एवं नौधसकालेययोरपि द्रष्टव्यम्।

तृतीयवर्गकमारचयति।

श्यावाश्वान्धीगवेऽनुष्टुब्भिर्वा यथार्थेऽथवा।

पुरस्त्रिष्टुं जगत्यां चतुर्विंशतिकान्तेनम् ॥ १० ॥

इदमाम्नायते। पञ्चच्छन्दा आवाप आर्भवः पवमानः सप्तसामा। गायत्रसंहिते गायत्रे तृचे भवतः। श्यावा- श्वान्धीगवे आनुष्टुभे तृचे भवतः। उष्णिहि सफम्। ककुभि पौष्कलम्। कावमन्त्यं जगतीष्विति। अयमर्थः। अस्ति तृतीयसवने पवमान आर्भवसंज्ञकः। तस्मिन् पञ्च सूक्तानि सप्त सामानि। स्वादिष्ठया मदिष्ठयेत्येकं सूक्तम्। तस्मिन् गायत्र्यस्तिस्र ऋचः। तासु गायत्रं संहितं चेति द्वे सामनी। पुरोजिती वो अन्धस इति सूक्तान्तरम्। तत्रैका- नुष्टुप्। उत्तरे द्वे गायत्र्यौ। तासु श्यावाश्वमान्धीगवं चेति द्वे सामनी। इन्द्रमच्छ सुता इत्यपरं सूक्तम्। तस्मिन्नुष्णिह स्तिस्रः। तासु सफं साम। पवस्व मधुमत्तम इति प्रगाथः। तस्मिन् पूर्वा ककुप्। उत्तरा पङ्क्तिः। तत्र पौष्कलं साम। अभि प्रियाणि पवते चनोहित इत्यन्यत् सूक्तम्। तत्र तिस्रो जगत्यः। तासु कावं साम। एतेषां पञ्चानां सूक्तानां मध्ये पुरोजिती वः पवस्वेत्यनयोः सूक्तयो- र्यद्यपि द्वे छन्दसी तथापि समासु गानं निष्पादयितुं प्रग्रथने कृते सत्येकमेव छन्दः सम्पद्यते। ततो गायत्र्यनुष्ट- बुष्णिक्ककुब्जगतीभिः पञ्चच्छन्दाः पवमानोऽस्मिन् सवन आवपनीय इति। तत्र पुरोजिती व इत्यस्मिन् सूक्ते श्यावा- श्वमान्धीगवं च समासु गातुमुत्तरे गायत्र्यावाम्नाते परि- त्यज्य द्वे उत्पत्त्यनुष्टुभावानेतव्ये इति पूर्वपक्षः। चतुर्थं पादं पुनरुपादाय द्वे अनुष्टुभौ ग्रथनीये इति राद्धान्तः। तत्रोभयत्र पूर्ववर्णकद्वयन्यायेन युक्तिर्द्रष्टव्या। लिङ्गं त्वेवमाम्नायते। चतुर्विंशतिर्जगत्यस्तृतीयसवन एका च

ककुबिति। सेयं संख्या प्रग्रथन उपपद्यते। तथा हि। गायत्रसंहितयोः साम्नोराश्रये गायत्रे तृचे द्विरभ्यस्ते सति षड्गायत्रो भवन्ति। चतुर्विंशत्यक्षरा गायत्री। अष्टाचत्वारिंशत्यक्षरा जगती। ततः षड्भिर्गायत्रीभिस्तिस्रो जगत्यो भवन्ति। श्यावाश्वान्धीगवयोराश्रयभूताः प्रग्रथिता द्विरभ्यस्ताः षडनुष्टुभो भवन्ति। मिलित्वा सप्त जगत्यः सम्पन्नाः। सफस्य पौष्कलस्य च सामान्तरवत्तृचे गानं न कर्त्तव्यम्। किंत्वेकैकस्यामृचि। तत् कुतोऽवगम्यते। उष्णिहि ककुभीति सप्तम्येकवचनान्ताभ्यां विशेषविधानात्। अष्टाविंशत्यक्षरयोरुष्णिक्ककुभोरेका जगती गायत्रीपादश्च सम्पद्यते। ककुभि मध्यमः पादो द्वादशाक्षरः। उष्णिहि च परः पाद इति तयोर्भेदः। कावस्याश्रयभूताः स्वतः सिद्धास्तिस्रो जगत्य इति मिलित्वा पवमानेऽस्मिन्नेकादश जगत्यो भवन्ति। गायत्रीपादश्चातिरिच्यते। आर्भवपवमानवत्तृतीयसवने यज्ञायज्ञीयस्तोत्रमेकमस्ति। तस्य चाश्रयो यज्ञायज्ञा वो अग्नय इत्यसौ प्रगाथः। तत्र पूर्वा बृहती। उत्तरा विष्टारपङ्क्तिः। तयोः प्रग्रथनेन ककुभावुत्तरे कर्त्तव्ये। तत्रैकविंशस्तोमः। तस्या विधायिका विष्टुतिरेवमाम्नायते। सप्तभ्यो हिंकरोति स तिसृभिः स तिसृभिः स एकया सप्तभ्यो हिंकरोति स एकया स तिसृभिः स तिसृभिः सप्तभ्यो हिंकरोति स तिसृभिः स एकया स तिसृभिरिति। अयमर्थः। प्रथमाया बृहत्यास्त्रिषु पर्य्यायेषु त्रिवारमेकवारं पुनस्त्रिवारमिति सप्त बृहत्यः। मध्यमायाः ककुभः प्रथमद्वितीययोः पर्य्याययोस्त्रिःपाठः।

अन्त्ये सकृत्। उत्तमायाः ककुभ आदौ सकृत्। द्वितीयतृतीययोस्त्रिस्त्रिरित्येवं चतुर्दश ककुभः। तासु ककुप्सु द्वादशाक्षरा मध्यमपादाश्चतुर्दश। तेषु सप्त पादाः सप्तसु बृहतीषु योजनीयाः। ततः सप्त जगत्यो भवन्ति। अवशिष्टा अष्टाक्षराः ककुभामाद्यपादा अन्त्यपादाश्च मिलित्वाऽष्टाविंशतिः। तेषु षड्भिः पादैरेका जगतीत्यनेन क्रमेण चतुर्विंशतिपादैश्चतस्रो जगत्यो भवन्ति। ये तु द्वादशाक्षरा सप्त पादाः पूर्वमवशिष्टास्तेषु पवमानशेषोऽष्टाक्षरः पादो योजनीयः। ककुभां शेषेष्वष्टाक्षरेषु चतुर्षु पादेषु चत्वार्यक्षराणि योजनीयानि। ते द्वे जगत्यौ भवतः। तदेवं यज्ञायज्ञीयस्तोत्रे त्रयोदश जगत्यः पूर्वोक्ताः पवमानगता एकादशेति चतुर्विंशतिर्जगत्यः। चतुरक्षरवर्जिताश्चत्वारोऽष्टाक्षरपादा मिलित्वा ककुबेका भवति। अनेन लिङ्गेन श्यावाश्वमान्धीगवं च प्रशंसितं तृचे गातव्यम्। न तु तत्रोत्पत्त्यनुष्टुब्गानयनमिति स्थितम्।

चतुर्थवर्णकमारचयति।

चतुःशतं प्रशंसनमृचः पादस्य वाग्रिमः।

तृचे मुख्यत्वतो नैवमृगन्यत्वस्य वर्णनात्॥ ११॥

गवामयने ब्रह्मसाम विहितम्। अभीवर्त्तो ब्रह्मसाम भवतीति। तत् प्रकृत्य श्रूयते। चतुःशतमैन्द्रा बार्हताः प्रगाथा इति। चतुरुत्तरशतसंख्याका इन्द्रदेवताका बृहतीच्छन्दस्काः प्रगाथा ऋग्द्वयात्मकाः। तत्रैकस्य प्रगाथस्य द्वे ऋचौ। द्वितीयप्रगाथगतामिकामृचं च प्रशस्य त्र्यृचेऽभीवर्त्तनामकं साम गातव्यम्। तथा सत्याम्नाताः

सामविकृतानामेव तिसृणामृचां साम्नामृचश्च गुणत्वं भवति। पूर्वोक्तरीत्या पादप्रग्रथने तु विकृतत्वादेक-स्तृचः स्यादिति प्राप्ते ब्रूमः। यथा यथा ऋचो भवन्ति तदेव सामेत्यृचामन्यत्वमत्र वर्ण्यते। तच्च पादप्रग्रथने सम्भवति। ऋक्प्रग्रथने तु येयमेकपूर्वस्य तृचस्यान्त्या सैवोत्तरस्य तृचस्याद्येत्यन्यत्वमृचां न स्यात्। तस्मात् पादस्य प्रग्रथनम्।

सप्तमाधिकरणमारचयति।

समुच्चेया विकल्प्या वा विभिन्ना गीतिहेतवः।
आद्यः प्रयोगग्रहणादर्थैकत्वाद्विकल्पनम्॥ १२॥

छान्दोग्ये तलवकारादिशाखाभेदेषु विलक्षणा गीति-हेतवोऽक्षरविकारादय आम्नायन्ते। ते सर्वे कर्मानुष्ठाने समुच्चेतव्याः। कुतः। प्रयोगवचनेन सर्वेषां परिगृहीत-त्वात्। मैवम्। एकैकशाखोक्तैरेवाक्षरविकारादिभिर-ध्ययनकाल एव गीतिस्वरूपनिष्पत्तेः। तन्निष्पत्तिलक्ष-णस्य प्रयोजनस्यैकत्वात् प्रयोगवचनपरिगृहीता अपि व्रीहियववद् बृहद्रथन्तरवच्च विकल्प्यन्ते।

अष्टमाधिकरणे प्रथमवर्णकमारचयति।

ऋक्सामभ्यां विकल्पेन स्तुतिः साम्नैव वाग्रिमः।
पुरेव मैवमृङ्निन्दासामप्राशस्त्यदर्शनात्॥ १३॥

क्वचित् कर्मविशेषे श्रूयते। ऋचा स्तुवते। साम्ना स्तुवत इति। तत्र पूर्वन्यायेन विकल्प इति चेत्। मैवम्। ऋङ्निन्दासामप्रशंसयोर्वाक्यशेषेऽवगमात्। यदृचा स्तुवते तदसुरा अन्ववायन्यत्साम्ना स्तुवते तदसुरा नान्ववायन्

एवं विद्वान् साम्ना स्तुवीतेत्यृचं निन्दित्वा साम प्रैशस्त्य लिङ्प्रत्ययेन साम विहितम् । तस्मात्साम्नैव स्तोतव्यम् ।

द्वितीयवर्णकमारचयति ।

गानस्य नियमो नीत विद्यते वङ्कोपस्थितौ ।

नाम्नो न इयतोऽस्त्येवं प्रकृतित्वाच्छ्रुतेरपि ॥ १४ ॥

क्वचित् कर्मविशेषे श्रूयते । अयं सहस्रमानव इत्येतयाहवनीयमुपतिष्ठत इति । अस्याऋगप्रगीता संहिताग्रन्थे समाम्नाता । प्रगीता गानग्रन्थे । ततो वङ्क्युपस्थाने तस्यामृचि गानं न नियतम् । किन्तु विकल्पितमिति प्राप्ते ब्रूमः । अस्त्येव नियमो गाने । कुतः । सामवेदे गानस्यैव प्रकृतत्वात् । ऋचां संहितापाठोऽत्र गानायैव । न ह्याधारमन्तरेण गातुं शक्यते । अधीयते । अयं सहस्रेत्यृक्प्रतीकपूर्वकेण वाक्येनोपस्थानविधानाद्वाक्यस्य प्रकरणात् प्रबलत्वादृचैवोपस्थानमिति । तन्न । प्रकृतप्रगीतमन्त्रवाचिन्या एतयेति सर्वनामश्रुतेः प्रबलतरत्वात् । तस्मात् प्रगीतयोपस्थानम् ।

तृतीयवर्णकमारचयति ।

त्रैस्वर्यादि समुच्चेयं विकल्प्यं तान एव वा ।

प्रयोगावधितो द्वौ नो वचनात् स्मृतिकल्पितात् । १५ ॥

अग्निर्मूर्धेत्यादियाज्यापुरोऽनुवाक्यादयो मन्त्राः सामप्रसङ्गाद्विचार्य्यन्ते । ते च कस्याञ्चिच्छाखायां त्रैस्वर्य्येणाधीयन्ते । केचिच्चातुःस्वर्य्येण । उदात्तानुदात्तस्वरितेभ्यो व्यतिरिक्तश्चतुर्थः स्वर एकश्रुतिः । तां चाध्यापकाः प्रचय इत्याचक्षते । तत्र प्रयोगवचनस्य सर्वाङ्गोपसंहारित्वात्

समुच्चयस्तैस्वर्यादीनामित्येकः पक्षः । अध्ययननिवृत्ति-लक्षणस्य प्रयोजनस्यैकत्वाद्विकल्प इति द्वितीयः पक्षः । नैतौ द्वौ पक्षौ युक्तौ । एकश्रुतेर्व्याकरणस्मृतौ विहितत्वात् । तथा च पाणिनीयं सूत्रम् । यज्ञकर्मण्यजपन्यूङ्खसामस्विति । अग्निं गृह्णामि सुरथमित्यादयो मन्त्रा यजमानेनैव जप्यन्ते । न्यूङ्खाः प्रणवाः । सामानि रथन्तरादीनि । एतेभ्यो जपादिभ्यो व्यतिरिक्तानां मन्त्राणां यज्ञकर्मण्येकश्रुतिर्भवति । अनया च स्मृत्यानुमितं वेदवाक्यमेतत् । तानो यज्ञकर्मणीति । तान इत्येकश्रुतेः पूर्वाचार्यसंज्ञा । न चैकश्रुतित्वे स्वराध्ययनं व्यर्थमिति वाच्यम् । स्वरविशेषेण बहुव्रीहितत्पुरुषसमासादिनिश्चये सत्यर्थविशेषस्यावबोद्धुं शक्यत्वात् । जपादिषु तु यथाध्ययनं स्वरः प्रयोक्तव्यः ।

नवमाधिकरणमारचयति ।

आयीभावो योनिवशादुत्तरावशतोऽथवा ।
गीत्यर्थत्वादादिमोऽन्त्यो वर्णाभिव्यञ्जकत्वतः ॥ १६ ॥

ययोन्यां तदुत्तरयोर्गायतीति श्रूयते । तत्र कया नश्चित्र आ भुवदित्यसावृग्योनिः । तस्यामृचि कयेत्यक्षरद्वयमाद्यो भागः । नश्चित्र आ भुवदित्यक्षरषट्कं द्वितीयो भागः । तस्मिन्भागे द्वितीयाक्षरे चकारस्योपरितनमिकारं विलोप्य तस्य स्थाने आयीभावमाम्नाय गीतिर्निष्पादिता । कस्त्वा सत्यो मदानामित्यनन्तरभाविन्युत्तरा । तस्यां योनिन्यायेन चतुर्थाक्षरे तकारस्योपरितनं यकारमाकारं लोपयित्वा तयोः स्थाने आयीभावः

कार्य्यः। अभी षु ण इत्यसावपरोत्तरा। तस्यामपि चतु-र्थाचरे णकारस्योपरिस्योपरितनमकारं लोपयित्वा तस्य स्थान आयीभावः कर्त्तव्यः। अन्यथा गीतिनाशप्रसङ्गा-दिति प्राप्ते ब्रूमः। नात्र योनौ वर्णान्तरस्यागमः। किं तर्हि विद्यमान एव चकारस्योपरितन इकारः सामप्रसिद्धया प्रक्रियया वृद्धः सन्नैकारो भवति। तस्य सन्ध्यचरत्वादकारः पूर्वभागः। इकार उत्तरभागः। तावुभौ विश्लेषेण गोयमानावायीभावं प्रतिपद्येते। तथा च सामगा आहुः। वृद्धं तालव्यमायीभवतीति। तथा सत्युत्तरयोश्चतुर्थाचरे नास्ति तालव्य इकार इत्यायी-भावो न कर्त्तव्यः। अभी षु णः सखीनामविता जरि-तॄणामित्येतस्यामुत्तरायां द्वादशाचरगतस्य रेफस्योपरितन इकारः पूर्ववदायीभवति। सोऽयमायीभाव उक्तरीत्या वर्णाभिव्यञ्जकत्वादुत्तरागतवर्णवशेन कर्त्तव्यः। गीत्य-र्थत्वाभावेन योनिक्रमे तेन विनापि न गीतिर्विन-श्यति।

दशमाधिकरणमारचयति।

स्तोभा नात्र प्रदिश्यन्ते नागीतित्वेन वर्णवत्।

स्वरादिवत् प्रदिश्यन्ते गीतिकालोपयोगतः॥ १० ॥

वामदेव्यसाम्नो योनौ द्वयोरर्द्धयोर्मध्य औकारद्वयेन हाशब्देन हायीशब्देन च निष्पन्नः स्तोभ एवमाम्नातः। औ औ हो हायीति। सोऽयं स्तोभो नोत्तरयोरतिदि-श्यते। कुतः। अगीतित्वात्। यच्चोभ्यां तदुत्तरयोर्गाय-तीति गीतिमात्रमतिदिश्यते। तत्र प्रथमाया ऋचो

वर्णा यथा नातिदिश्यन्ते। तथा स्तोभा अपीति प्राप्नुमः। स्वरा वर्णविश्लेषो विराम इत्येते गीत्युपयोगित्वात् यथातिदिश्यन्ते। तथा स्तोभा अपि गीतिकालपरिच्छेदकत्वादतिदिश्यन्ताम्।

एकादशाधिकरणमारचयति।

स्तोभस्य लक्षणं नास्ति किंवास्ति न विवर्णता।
आधिक्यमप्यतिव्याप्तं विशिष्टं लक्षणं भवेत्॥ १८॥

न तावद् विवर्णत्वं तल्लक्षणम्। वर्णविकारस्य विपरीतवर्णत्वेन स्तोभत्वप्रसङ्गात्। अग्न आ याहीत्यस्यामृच्यकारस्य स्थाने ओकारं कृत्वा गायन्ति ओग्नायीति। अधिको वर्णः स्तोभ इत्युक्ते सत्यभ्यासेऽतिव्याप्तिः। पिबा सोममिन्द्र मन्दतु त्वेत्येतस्यामृचि दतुत्वेत्यक्षरत्रयं गानकाले विरभ्यस्तम्। अतो विकाराभ्यासयोरतिव्याप्तेर्नास्ति लक्षणमिति चेत्। मैवम्। अधिकत्वे सत्यृगविलक्षणवर्णः स्तोभ इति विशिष्टस्य तल्लक्षणत्वात्। लोकेऽपि सभायां विप्रलम्भकेनोच्यमानं प्रकृतार्थानन्वितं कालक्षेपमात्रहेतुकं शब्दराशिं स्तोभ इत्याचक्षते। तस्मादस्ति लक्षणम्।

द्वादशाधिकरणमारचयति।

न स्युः स्वर्वान्नीवारा व्रीहिस्थानेऽभितेन हि।
विकाररहितास्ते स्युः प्रोक्षणादिरतो भवेत्॥ १९॥
मध्वाशनखपूतत्वपरिधीरापदेष्वपि।
ये धर्माः षड्हादीनां ते कार्य्याः स्थामपाततः॥ २०॥

सामोह्ो मतः। अथ संस्कारोहः। वाजपेये नैवा-

रूपक: श्रुत:। तत्र नीवाराणां व्रीहिस्थानपाते प्रमाणा-भावाद् व्रीहिधर्मा: प्रोक्षणावघातादयो नीवारेषु न कर्त्तव्या इति चेत्। मैवम। नैवार इत्यस्य विकारार्थतद्धितस्य व्रीहिस्थानीयत्वे प्रमाणत्वात्। यथा व्रीहयस्तण्डुल-द्वारेण हविर्निष्पादनसाधनम्। तथा नीवारा अपि। तस्मात् सन्ति प्रोक्षणादय:। अयं न्यायो मध्वशनादौ योजनीय:। संस्थिते पृष्ठ्ये षडहे मध्वाश्नयेद् घृतं वेत्यत्र षडहधर्मो व्रत-नियमादिर्मध्वशने कर्त्तव्य:। राजसूये नैर्ऋतं चरुं नखा-वपूतमित्यत्रोलूखलमुसलयोर्धर्म: प्रोक्षणं नखेषु कर्त्तव्यम्। चातुर्मास्येषु परिधौ पशुं नियुञ्जीतेत्यत्र यूपधर्म: पशुनि-योजनं विस्पष्टमेव परिधौ श्रुतम्। ज्योतिष्टोम ऐरं कृत्वोद्गेयमित्यत्र गिरापदधर्म आयीभावादिरिरापदे कर्त्तव्य:।

त्रयोदशाधिकरणमारचयति।

न यूपधर्मा: परिधौ सन्ति वान्यार्थकत्वत:।

नाविरोधादञ्जनाद्या: स्युर्नियोजनसाधने॥ २१॥

चातुर्मास्येषु यूपकार्य्यं पशुनियोजनं स्थविष्ठे मध्यम-परिधावाम्नायते। परिधौ पशुं नियुञ्जीतेति। तत्र नियो-जनकार्य्येण परिधेर्यूपस्थानीयत्वेऽपि न यूपधर्मास्तक्षणा-दयोऽञ्जनादयश्च तत्र युक्ता:। त:। अग्निपरिधानार्थं मध्यमपरिधेरितरपरिधिवदुत्पन्नत्वादिति चेत्। वाढम्। अन्यार्थमुत्पन्नस्यापि वचनान्नियोजनसाधनत्वमस्ति। यूपो-ऽपि पशुनियोजनार्थं संस्क्रियते। ततो नियोजनसाधने प-रिधौ युक्ता: संस्कारा:। ननु परिधिस्तक्षसहित: प्रयानश्च।

तत्र तत्रणोच्छ्रायौ यूपधर्मौ विरुध्येते। एवं तर्हि तौ मा भूताम्। अविरुद्धास्त्वञ्जनादयः कर्त्तव्याः। तथा सति संस्कारनिमित्तस्य यूपशब्दस्य परिधावपि मुख्यत्वाद् यूपाययाज्यमानायानुब्रूहीत्यस्मिन् प्रैषमन्त्रे परिधयेऽज्यमानायेत्येवमूहो न कर्त्तव्यः।

चतुर्दशाधिकरणमारचयति।

शृतदध्नोः प्रणीतानां न धर्माः सन्ति वा न हि।
अपाकार्थत्वतः सन्ति पाकहेतुत्वमास्थितः॥ २२॥

अभ्युदयेष्ट्यां शृते चरुम्। दधनि चरुमिति शृतदधनी आम्नाते। तयोः प्रणीता धर्मा न कर्त्तव्याः। हविश्श्रपणार्थमुत्पन्ना उत्पवनादिधर्मसंस्कृता आपः प्रणीताः। दधिपयसो तु श्रपणार्थं नोत्पन्ने। किन्तु हविष्ट्वेन प्रदानार्थमुत्पन्ने। ततः साम्याभावान्नोत्पवनादयो धर्मास्तयोरिति चेत्। मैवम्। अन्यार्थमुत्पन्नयोरपि दधिपयसोरत्र चन्द्रोदयं निमित्तीकृत्य चरुश्रपणहेतुत्वं वाचनिकम्। ततः समानत्वात्तद्धर्माः सन्ति।

पञ्चदशाधिकरणमारचयति।

बृहद्रथन्तरे धर्माः संकीर्णा वा व्यवस्थिते।
पृष्ठैक्यात् संकरो धर्मे निर्देशाद्व्यवस्थितिः॥ २३॥

ज्योतिष्टोमे विकल्पितं पृष्ठस्तोत्रं विहितम्। बृहत्पृष्ठं भवति। रथन्तरं पृष्ठं भवतीति। तत्रोभयत्र धर्माः श्रुताः। बृहति प्रस्तूयमाने मनसा समुद्रं ध्यायेत्। रथन्तरे प्रस्तूयमाने संमीलयेदित्यादयः। त उभयत्र संकीर्य्येरन्। पृष्ठमिति लक्षणस्य कार्य्यस्यैकत्वादिति

चेत्। न। निर्देशभेदात्। साङ्कर्ये त्वैलक्षण्येन बृहदिति रथन्तरमिति च द्वौ निर्देशौ नोपपद्येयाताम्। किञ्च। उभयधर्मसाहित्यं विरुद्धम्। उच्चैर्गेयं बलवद्गेयमिति बृहद्धर्म। नोच्चैर्गेयं न बलवद्गेयमिति रथन्तरधर्मः। तस्मादुभयोर्धर्मा व्यवतिष्ठन्ते।

षोडशाधिकरणमारचयति।

तयोर्धर्माः समुच्चेया न वा कण्वरथन्तरे।
द्विस्थानत्वाद्भाष्य आद्यो विरोधाद्वार्त्तिकेऽन्तिमः॥२४॥

वैश्यस्तोमे कण्वरथन्तरं पृष्ठं भवतीति श्रूयते। तत्र कण्वरथन्तराख्यसाम्नः पृष्ठस्तोत्रसाधनयोः प्राकृतयोर्बृहद्रथन्तरयोः स्थाने पतितत्वादुभयसम्बन्धिधर्माः समुच्चेतव्याः। ये तु विरुद्धा धर्मा उच्चैर्गेयं नोच्चैर्गेयमित्यादयस्ते विकल्प्यन्ताम्। समुद्रध्याननिमीलनादीनां विरोधाभावात् प्रकृताविव निर्देशभेदस्यात्राभावाच्च समुच्चय इति भाष्यकारस्य मतम्। विकल्पितयोरेव द्वयोः स्थाने पतितत्वाद्विरुद्धधर्माचारस्यात्र विकल्प एव युक्तः। न तु समुच्चय इति वार्त्तिककारस्य मतम्। तत्रोभयत्र तत्तन्मतविपरीतः पूर्वपक्ष ऊह्यः।

सप्तदशाधिकरणमारचयति।

द्विसामके द्वयोर्धर्मसाङ्कर्यं वा व्यवस्थितिः।
पृष्ठैक्यात् संकरो मैवं धर्माणां सामगत्वतः॥२५॥

गोसव उभे कुर्य्यादित्यादिना श्रौतवाक्ये बृहद्रथन्तरसामद्वयसाध्यं पृष्ठस्तोत्रं विहितम्। तत्र पृष्ठस्तोत्रस्यैकत्वेन धर्मव्यवस्थाया असम्भवाद्द्वयोरुभयधर्माः कर्त्तव्याः।

रथन्तरेऽप्युभयधर्मा इत्येवं साङ्कर्य्यमिति चेत्। मैवम्। न ह्येते पृष्ठस्तोत्रप्रयुक्ता धर्माः। किन्तु सामप्रयुक्ताः। ततः साम्नोर्भेदाद्धर्मा व्यवतिष्ठन्ते।

अष्टादशाधिकरणमारचयति।

सौर्य्यादौ पार्वणौ होमौ स्तो न वा कालदेवकौ।
स्तः संघदेवकौ संघाविकारत्वान्न तत्र तौ॥ २६॥

दर्शपूर्णमासयोः श्रूयते। स्रुवेण पार्वणौ जुहोतीति। तत्र पर्वशब्दः कालविशेषवाची। ततः कालदेवकौ तौ होमावाराादुपकारकतया प्रयाजादिवत्सौर्य्यादिविकृतिष्वतिदिश्येते इति चेत्। मैवम्। पर्वशब्दस्याग्नेयादित्रिकसंघपरत्वात्। दानार्थवाचिनः पृणातेर्धातोर्निष्पन्नोऽयं पर्वशब्दः। स च प्रियते दीयतेऽस्मिन्नित्यधिकरणव्युत्पत्त्या कालमाचष्टे। भावव्युत्पत्त्या तु क्रियापरः सन् प्रकरणवशादाग्नेयादिकमेतत्रयमंत्रमाह। तथा च मन्त्रवर्णोऽप्यनुगृहीतो भवति। ऋषभं वाजिनं वयं पूर्णमासं यजामह इत्येको मन्त्रः। अमावास्या सुभगा सुशेवा धेनुरिव भूय आप्यायमानेत्यपरो मन्त्रः। तत्राग्नीषोमवत्कर्मत्रयसङ्घस्य व्यासक्तदेवतात्वम्। न च संघस्य विकृतिः सौर्य्यादिः। किन्त्वाग्नेयस्यैव। ततः सङ्घार्थयोर्होमयोर्नास्ति सौर्य्यादौ प्राप्तिः।

एकोनविंशाधिकरणमारचयति।

संकीर्णौ सङ्कर्ययोर्होमौ न वा प्रकरणादुभौ।
संकीर्णावुपकार्य्यस्य भेदादेतौ व्यवस्थितौ॥ २७॥

दर्शपूर्णमासप्रकरणे पठितत्वात् प्रयाजादिवद्दर्शेऽपि

होमद्वयं कर्त्तव्यम्। पूर्णमासेऽपि तथेति चेत्। मैवम्। उपकार्य्ययोर्व्यवस्थितत्वेनोपकारकयोर्होमयोरपि व्यवस्थाया युक्तत्वात्।

विंशाधिकरणमारचयति।

देवता यजयो वा स्युः प्रयाजे समिदादयः।
विष्ण्वादिवद्देवतात्वं न चतुर्थ्याद्यभावतः ॥ २८ ॥

दर्शपूर्णमासयोः प्रयाजपञ्चकमाम्नातम्। समिधो यजतीत्यादिना। तत्र यथा विष्णुं यजति वरुणं यजतीत्यादौ द्वितीयानिर्दिष्टा विष्ण्वादयो देवताः। तथा समिदादीनां देवतात्वम्। ततो यागैर्देवताः संस्क्रियन्त इति दृष्टार्थत्वलाभ इति चेत्। मैवम्। सर्वत्र चतुर्थ्या तद्धितेन वा देवता निर्दिश्यते। तद् यथा। यदग्नये सायं जुहुयात्। आग्नेयोऽष्टाकपाल इति। न चात्र समिदादिषु चतुर्थीतद्धितौ विद्येते। तादर्थ्यप्रतीतौ देवता भवति। न च द्वितीयया तादर्थ्यं प्रतीयते। किंत्वीप्सितत्तमत्वम्। तच्च कर्मनामत्व उपपद्यते। अग्निहोत्रं जुहोतीत्यादौ तद्दर्शनात्। यथा पाकं पचतीत्युक्ते पचिक्रियायाः कर्त्तव्यता प्रतीयते। तथा समिधो यजतीत्युक्ते समिद्याग कर्त्तव्य इत्यर्थो भवति। विष्णुं यजतीत्यादौ तादर्थ्यमुपचर्य्यते। प्रयाजमन्त्रेषु समिधो अग्न आज्यस्य वियन्त्वित्यादिषु समिदादिशब्दैर्बहुवचनैर्वचनान्तैर्देवता निर्दिष्टाः। तदेव निमित्तीकृत्य ता इयैरेव मन्त्रैरिह यागा अभिधीयन्ते। समिधो यजति तनूनपातं यजति। इडो यजति। बर्हिर्यजति। स्वाहा-

कारं यजतीति । तस्मान्नात्र देवतासंस्कारविधिः । किन्तु यागाः केवला विधीयन्ते । तेषां च श्रुत्यादिभिः कार्य्यविशेषानवगमात् प्रकरणेनारादुपकारकत्वम् । पञ्चमप्रयाजस्य तु वक्ष्यमाणाज्यभागादिदेवतासंस्कारकत्वं दशमेऽभिधास्यते ।

इति माधवीये जैमिनीयन्यायमालाविस्तरे नवमस्याध्यायस्य द्वितीयः पादः ।

---

तृतीयपादस्य प्रथमाधिकरणमारचयति ।

अग्निशब्दादयो नोह्या ऊह्या वा न हि चोदनात् ।
विवक्षा देवहविषोर्दृष्टत्वादूह्यते ततः ॥ १ ॥

प्रकृतावग्नये जुष्टं निर्वपामीति देवताविषयो मन्त्र आम्नातः । व्रीहीणां मेध सुमनस्यमान इति द्रव्यविषयः । विकृतिषु सूर्य्याय जुष्टं निर्वपामीति नीवाराणां मेध सुमनस्यमान इत्येवमूहो न कर्त्तव्यः । कुतः । चोदकेन यथावस्थितस्यैव मन्त्रपाठस्यातिदिष्टत्वादिति चेत् । मैवम् । प्रकृतौ देवताहविर्लिङ्गयोरेव विवक्षा । तथा सति तत्प्रकाशनरूपस्य दृष्टप्रयोजनस्य लाभात् । अविवक्षिते मन्त्रविवक्षायामदृष्टार्थो मन्त्रपाठः प्रसज्येत । तस्मात् सूर्य्यनीवारलक्षणार्थप्रकाशनायोहः कर्त्तव्यः ।

द्वितीयाधिकरणमारचयति ।

हरिताक्तिः पौण्डरीके न त्याज्या त्यज्यतेऽथवा ।
जाऽदृष्टार्थत्वतो मैवं गुणाद् द्रव्यस्य भासनात् ॥ २ ॥

ऐन्द्रं चरुं निर्वपेच्छ्रियै श्रीकाम इत्यत्र पौण्डरीकाणि बर्हींषि भवन्तीति श्रुतम्। तत्र स्तरणमन्त्रश्चोदकप्राप्त:। दर्भै: स्तृणीत हरितैरिति। तत्र पूर्वन्यायेन दर्भशब्दस्थाने पुण्डरीकशब्द: प्रयोक्तव्य:। हरितशब्दस्तु प्रकृतौ नापूर्वार्थद्रव्यवाची। ततोऽसमवेतार्थत्वाद्विकृतावप्यदृष्टार्थमनूहेन प्रयोक्तव्य इति चेत्। मैवम्। गुणद्वारा गुणिद्रव्यप्रकाशने सति दृष्टार्थत्वलाभेन समवेतार्थत्वात्। तस्मात् पुण्डरीकै: स्तृणीत रक्तैरित्यूहनीयम्।

तृतीयाधिकरणमारचयति।

यूपस्पर्शे वैदिके वा लौकिके मन्त्रकीर्त्तनम्।
आद्य: प्रकरणान्मैवं लौकिके प्रतिषेधत:॥ ३॥

ज्योतिष्टोमेऽग्नीषोमीयपशुप्रकरणे यूपस्पर्शस्य प्रायश्चित्तमाम्नातम्। यद्येकं यूपमुपस्पृशेदेष ते वायो इति ब्रूयादिति। तदिदमुच्छ्रयणाञ्जनादिकालीनवैदिकस्पर्शे भवति। कुत:। तत्प्रकरणादिति चेत्। मैवम्। यूपो वै यज्ञस्य दुरिष्टमामुञ्चते यद्यूपमुपस्पृशेद्यज्ञस्य दुरिष्टमामुञ्चेत्तस्माद्यूपो नोपस्पृश्यत इति प्रतिषिध्य पश्चात् प्रायश्चित्ताम्नानात्। प्रतिषेधश्च लौकिकस्पर्शविषय:। वैदिकस्य विहितत्वात्। तस्माल्लौकिके स्पर्शे प्रायश्चित्तम्।

चतुर्थाधिकरणमारचयति।

पाशं पाशान् द्वयो: पश्वोरेको मन्त्रोऽथवा द्वयम्।
एकैकत्वे द्वयत्वे किमूहस्योहोऽथवा द्वयो:॥ ४॥
एकेनैव कृतार्थत्वादेको मन्त्रस्तदापि च।
अविकारेण बह्वर्थ एकार्थे समवायत:॥ ५॥

प्राकृतत्वादुभावूह्य एकार्थोऽत्र विवक्षया।
बह्वर्थोऽप्यूहनीयोऽत्र द्वयोः शक्तिरकृत्रिमः॥ ६॥

ज्योतिष्टोमेऽग्नीषोमीयपश्वावेकवचनान्तबहुवचनान्तौ द्वौ पाशमन्त्रौ भिन्नयोः शाखयोराम्नातौ। अदितिः पाशं प्रमुमोक्तु तमित्येकत्र। अदितिः पाशान् प्रमुमोक्तु तानित्यपरत्र। तावुभौ पाशद्वयोपेतायां विकृतौ चोदकेनातिदिष्टौ। सा च विकृतिरेवमाम्नायते। मैत्रं श्वेतमालभेत वारुणं कृष्णमपां चौषधीनां च संधावन्नकाम इति। तत्रैकेनैव मन्त्रेण चरितार्थत्वान्न द्वयोरतिदेश इत्याद्यः पक्षः। तदाप्यविकृतस्यैव प्रयोक्तुं शक्यत्वाद् बहुवचनान्तौ मन्त्रौ युक्तः। प्रकृतावेकस्मिन् पशावसमवेतार्थतया बहुवचनस्य विकृतावनूहनीयत्वादित्येकः पक्षः। तादृग्बहुवचनोपेतत्वादेव मन्त्रोऽप्यसमवेतार्थः प्रकृतौ भवति। एकवचनान्तस्तु मन्त्रः प्रकृतौ समवेतार्थत्वाद्विकृतावतिदिश्यताम्। स च द्विवचनान्तत्वेनोहनीय इति पक्षान्तरम्। प्रकृतौ विद्यमानयोरुभयोर्मन्त्रयोर्विकृतावतिदेशस्य वारयितुमशक्यत्वादेकमन्त्रपक्षस्यावान्तरत्वेनोपन्यस्तावुभावपि पक्षावयुक्तौ। मन्त्रद्वयातिदेशपक्षे त्वेकवचनान्तः प्रकृतौ समवेतार्थतया विकृतावूहनीयः। बहुवचनान्तो यथावस्थित एव पठनीय इति पूर्वपक्षः। लोके वेदे वा बहुवचनस्य द्वयोरर्थयोरकृत्रिमशक्तित्वाद् द्विवचनान्ततया सोऽप्यूहनीय इति राद्धान्तः।

पञ्चमाधिकरणमारचयति।

उत्कृष्यौ न वा मन्त्रौ बह्वर्थोऽसङ्गतत्वतः।

उत्कर्षो न विकल्पोऽसौ गुणे लच्चाप्यकल्पना ॥ ७ ॥

योऽयं पूर्वोदाहृतो बहुवचनान्तः पाशमन्त्रस्तस्य प्रकरणादुत्कर्षो बहुपाशयुक्तेषु पशुगणेषु कर्त्तव्यः। कुतः। एकस्मिन् पशौ प्रकृते तस्यानन्वितत्वादिति चेत्। नासावुत्क्रष्टव्यः। किंत्वेकवचनान्तेन मन्त्रेण सह विकल्पनीयः। न हि पाशानित्यत्र प्रधानांशस्यानन्वितत्वमस्ति। प्रातिपदिकविभक्त्योः प्रातिपदिकं प्रधानम्। धर्मिवाचकत्वात्। विभक्तिस्तु कर्मत्वकरणत्वादिधर्मवाचकत्वाद्गुणभूता। तथा विभक्तिवचनयोर्विभक्तेस्तु कर्मादिकारकवाचित्वात् प्राधान्यम्। वचनस्य कारकसंख्याभिधायित्वाद् गुणत्वम्। तथा सति बहुवचनान्ते पाशशब्दे प्रातिपदिकं कर्मकारकविभक्तिश्चैकस्मिन्नपि पाशे संगच्छेते। गुणभूते तु बहुवचने लक्षणावृत्तिः कल्पनीया। पाशावयवगतं बहुत्वं लक्ष्यत इति। तस्माद् गुणभूतं वचनमात्रमनुसृत्य क्रत्स्नस्य मन्त्रस्य प्रकरणपाठो न बाधनीयः। किन्तु प्रधानानुसारेण मन्त्रयोः समानबलत्वाद्विकल्पः कर्त्तव्यः।

षष्ठाधिकरणमारचयति।

पत्नीमिति द्विपत्न्यादावूह्यो नो वाह्यतेऽर्थतः।
नोपदेशस्य सामान्यादतिदेशाप्रवृत्तितः॥ ८ ॥

दर्शपूर्णमासयोर्मन्त्र आम्नायते। पत्नीं संनह्येति। तत्रैकपत्नीकस्य यजमानस्य प्रयोगे समवेतार्थ एकवचनान्तः पत्नीशब्दः। स च द्विपत्नीकस्य बहुपत्नीकस्य च प्रयोगेऽर्थवशादूहनीय इति चेत्। मैवम्। किमुपदेश-

प्राप्तस्योहः । अतिदेशप्राप्तस्य वा । नाद्यः । उपदेशस्य सर्वप्रयोगसाधारणत्वात् । यद्येकपत्नीकप्रयोगार्थमेवायं मन्त्रोपदेशः स्यात् । तदानीमेकवचनं विवक्ष्येत । न त्वेवमस्ति । अन्यथा द्विपत्नीकबहुपत्नीकप्रयोगयोर्मन्त्र एव नोपदिश्येत । तत्र कुतं ऊहानूहचिन्तावकाशः । साधारणे तूपदेशे सर्वप्रयोगसमवेतार्थतया पत्नीपदे प्रातिपदिकं कर्मकारकविभक्तिश्चेत्युभयमेव पाशन्यायेन विवक्षितम् । एकवचनं त्वदृष्टार्थतया सर्वप्रयोगेऽसमवेतार्थतया पत्नीपदेषु यथावस्थितमेव पठनीयम् । नाप्यतिदेशप्राप्तस्योह इति द्वितीयः पक्षः । द्विबहुपत्नीकप्रयोगयोरविकृतित्वेनातिदेशायोगात् । तस्मादत्र नास्त्यूहः ।

सप्तमाधिकरणमारचयति ।

ऊह्यो नो वैष विकृतावुह्योऽपाठेन पाशवत् ।
नादृष्टच्छान्दसत्वाभ्यां पाशे छान्दसता न हि ॥ ८ ॥

एष एकवचनान्तः पत्नीमन्त्रो विकृतौ द्विबहुपत्नीकप्रयोगयोरूहनीयः । कुतः । पाठाभावात् । प्रकृतावर्थानुसारेण प्राप्तोऽप्यूहः सर्वप्रयोगसाधारणेन मन्त्रपाठेन बाधितः । विकृतौ तु बाधकस्य पाठस्याभावेनास्मदायत्तप्रयोगेऽर्थानुसारेणोहो युक्तः । अत एव पूर्वत्र द्विपाशयुक्तायां विकृतावेकवचनान्तो बहुवचनान्तश्च पाशमन्त्र ऊहित इति चेत् । मैवम् । पत्नीमित्येकवचनस्याविवक्षितत्वेन प्रकृतावदृष्टार्थतया यथावस्थितपाठे सति विकृतावप्यदृष्टार्थं यथावस्थितस्यैव पठितव्यत्वात् । अथोच्येत ।

प्रकृतौ छान्दसत्वेन व्यत्ययेनैकवचनमेव द्वित्वबहुत्वयोरप्यर्थयोर्वर्त्तत इति। एवं तर्हि विकृतावप्यूहमन्तरेणैव द्वित्वबहुत्वाभिधानान्माभूदूहः। न चैवं पाशेऽप्यूहो मा भूदिति शङ्कनीयम्। प्रकृतावेकवचनबहुवचनयोरेकस्मिन्नेव पाशे वैदिकप्रयोगदर्शनात्। द्वित्वे तदभावात्। तस्मात् पाशस्योहो विकृतौ। न तु पत्नीपदस्य।

अष्टमाधिकरणमारचयति।

अग्नीषोमीयसवनस्यास्तुल्यविधयो यदि।

प्राप्ता इति तदा मन्त्रे पत्नीन्यायेन नोहनम्॥ १०॥

अग्निष्टोमोक्थ्यषोडश्यतिरात्ररूपासु ज्योतिष्टोमस्य संस्थास्वेकोत्तरवृद्ध्या सवनीयाः पशव आम्नाताः। आग्नेयः पशुरग्निष्टोम आलभ्य ऐन्द्राग्न उक्थ्ये द्वितीयः। ऐन्द्रो वृष्णिः षोडशिनि तृतीयः। सारस्वती मेष्यतिरात्रे चतुर्थीति। त एते सवनीयपशवोऽग्नीषोमीयपशुना समानविधयो न तु तद्विकृतय इति कस्यचित् पूर्वपक्षिणो मतम्। तदेवाभ्युपगम्य कृत्वाचिन्ता क्रियते। अद्रिगुप्रैषमन्त्रे प्राप्ता अग्निं भरतेति वाक्ये पुंलिङ्गचतुर्थ्येकवचनान्त इदंशब्दः पठितः। तस्य मेष्यां स्त्रीलिङ्गतया नास्त्यूह इति प्रथमपादे निर्णीतम्। इह त्वेकवचनस्य पशुद्वित्वबहुत्वयोः पत्नीशब्दवत् पूर्वोत्तरपक्षौ द्रष्टव्यौ। अर्थानुसारेण द्विवचनबहुवचनयोरूह इति पूर्वः पक्षः। उपदेशस्य साधारणत्वेन सर्वत्र समवेतार्थयोः प्रातिपदिकविभक्त्योरेव विवक्षितत्वेनैकवचनस्याविवक्षितत्वात् कथञ्चिद्विवक्षितत्वेऽपि छान्दसेन वचनव्यत्ययेन द्व्यर्थबह्वर्थवाचित्वान्नास्त्यूह इति

राद्धान्तः । परमार्थेनस्तु नवनीयपशूनामग्नीषोमीयविकृतित्वादस्त्येव लिङ्गवचनयोः प्राप्तन्यायेनोहः ।

नवमाधिकरणमारचयति ।

व्रीहिप्रतिनिधावूहो व्रीहीणामिति नास्ति वा ।

अस्त्यूहो न सादृश्यादंशानां साधनत्वतः ॥ ११ ॥

श्रुतस्य द्रव्यस्यापचारे भूयोऽवयवसामान्योपेतं द्रव्यान्तरं तस्य प्रतिनिधिर्भवति । तद् यथा । व्रीहीणामपचारे नीवारास्तेषां स्थाने निविशन्ते । तदेतत् षष्ठेऽध्यायेऽवस्थितम् । प्रतिनिहितेषु नीवारेषु व्रीहीणां मेधेत्ययं मन्त्र ऊहितव्यः । कुतः । अर्थानुसारादिति चेत् । मैवम् । नैवारे चरौ नीवाराणां साधनत्वेन विहितानां व्रीहिस्थानीयतया भवति मन्त्रस्योहः । इह तु न नीवाराः साधनत्वेन विहिताः । किन्तु भूयोऽवयवसादृश्यद्वारा प्राप्यन्ते । ततोऽवयवानामेव साधनत्वम् । तथा सति व्रीह्यवयवेष्वविकारेण यथा व्रीहिशब्दः । तथा नीवारावयवेष्वपि प्रवृत्तेर्नास्त्यूहः ।

दशमाधिकरणमारचयति ।

द्विपशोश्चक्षुराद्यूहो न वोहः पशुभेदतः ।

तेजोमात्रस्य सूर्य्यादाविकोभावादनूहनम ॥ १२ ॥

अग्नीषोमीयपशावध्रिगुप्रैषे पशुसम्बन्धिचक्षुरादीनां सूर्य्यादिसंसर्ग आम्नायते । सूर्य्यं चक्षुर्गमयतात् । वातं प्राणमन्ववसृजतात् । दिशः श्रोत्रमित्यादिः । मैत्रं श्वेतमालभेत वारुणं कृष्णमिति विहितयोर्द्वयोः पश्वोर्मन्त्रगताश्चक्षुरादिशब्दा द्विवचनान्तत्वेनोहनीयाः । कुतः । पशु-

भेदेन चक्षुरादीनां भिन्नत्वादिति चेत्। नैवम्। न ह्यत्रेन्द्रियाधिष्ठानं शरीरगतं गोलकं चक्षुःशब्देन विवक्षितम्। तद्विवक्षायामेकस्मिन्नपि पशौ गोलकभेदादेकवचनान्तचक्षुःशब्दस्यानन्वयप्रसङ्गात्। गोलकस्य सूर्य्यादिप्राप्त्यसम्भवाच्च। यत् तु रूपदर्शनादिसामर्थ्यलक्षणं तेजोमात्रं तदत्र चक्षुरादिशब्दैर्विवक्षितम्। तच्च पश्वनेकत्वेऽपि नर्ता निर्गत्य सूर्य्यादावेकीभूतत्वात् समुद्रप्रविष्टनदीवदभेदेनावतिष्ठते। तस्मान्नास्त्यूहः।

एकादशाधिकरणमारचयति।

एकधेत्यविकारः स्यादभ्यासो वा सहत्वतः।

आद्यो नैवं प्राकृतस्य सकृत्त्वस्योचितत्वतः॥ १२॥

तस्मिन्नेवाग्निषोमीये श्रूयते। एकधास्य त्वचमाच्छ्यतादिति। छिन्धीत्यर्थः। तत्र द्वयोः पश्वोरेकधेत्यस्य शब्दस्य नास्ति विकारः। कुतः। तस्य शब्दस्येह सहत्ववाचित्वात्। एकधा गाः पाययतीत्यत्र यौगपद्ये प्रयोगदर्शनात् पश्वनेकत्वेऽपि त्वगुत्पाटनस्यैककालीनत्वं बहुपुरुषकर्तृकस्य घटत इति प्राप्ते ब्रूमः। प्रकृतावेकस्मिन् पशौ यौगपद्यलक्षणोऽर्थो न सम्भवति। ततः सकृत्त्वं तस्य शब्दस्यार्थः। त्वगियमनयवशो बहुकृत्वो न छेत्तव्या। किन्तु सर्वापि सकृदेकप्रयत्नेनोत्कृत्ता भवति। यत् प्रकृतौ सकृत्त्वं तदेव विकृतावुचितम्। ततः प्रतिपशु सकृत्त्वमभिधातुमेकधेत्ययं मन्त्रोऽभ्यसितव्यः।

द्वादशाधिकरणमारचयति।

अविकारो विकारो वा स्यान्मेधपतिशब्दयोः।

विकारे स्वामिदेवार्थं एकार्थौ वाऽन्तिमेऽपि किम्॥१४॥
स्वाम्यर्थौ देवतार्थौ वा स्यादन्यायत्वतोऽग्रिमः।
अर्थसत्त्वाद्विकारोऽत्र द्वावर्थौ शब्दयोर्द्वयोः॥ १५ ॥
मन्त्रैक्यादर्थ एकोऽत्र स्वाम्यस्मिन्नाययाद्विता।
देवार्थाग्नीर्देव एकोऽधिष्ठाने हे द्विधेरणम्॥ १६ ॥

अध्रिगुप्रैषनिगदस्यादाविदमाम्नायते। दैव्याः शमितार उत मनुष्या आरभध्वम्। उपनयत मेध्या दुर आशासाना मेधपतिभ्यां मेधमिति। शाखान्तरे तु मेधपतये मेधमिति। अयमर्थः। शमितारः पशुघातिनो द्विविधाः। दैव्या मानुषाश्च। तानुभयान् सम्बोध्य होता कर्त्तव्यविशेषान्निर्दिशति। आरम्भः कर्त्तव्यः। मेधो यज्ञः। तद्योग्या दुरः पदार्थान् हिंसाहेतूनिहानयत। किं कुर्वन्तः। यज्ञपतिभ्यां यज्ञपतये वा यज्ञमाशासाना इति। तत्रैकवचनान्तस्य मेधपतिशब्दस्य द्विवचनान्तस्य च बहुपशुयुक्तासु विकृतिष्वनूह ऊहो वेति संशयः। ऊहपक्षेऽपि किमेकवचनान्तस्य यजमानोऽर्थो द्विवचनान्तस्याग्नीषोमौ देवते इत्येवमर्थभेदः। किंवा शब्दद्वयस्यैक एवार्थ इति संशयः। एकार्थत्वपक्षेऽपि यजमान एवार्थो देवतैव वेति संशयः। तत्राग्नीषोमीये पशौ यजमानोऽग्नीषोमौ चेति त्रयो मेधस्य पतयः। तेष्वेकवचनस्य द्विवचनस्य चान्यायनिगदत्वेन प्रकृतावविवक्षितस्य वचनस्य विकृतावनूह इत्याद्यः पक्षः। प्रकृतौ समवेतार्थत्वे सम्पादयितुं शक्ये सत्यन्यायनिगदत्वाभावाद्विकृतावूहः कर्त्तव्य इति द्वितीयः पक्षः। अस्मिन् द्वितीयपक्षेऽपि

प्रकृतावुपन्यस्तप्रकारेणार्थभेदाद् विकृतिषु बहुयजमान-युक्तास्वहीनादिषु यजमानानुसारेणैकवचनान्त ऊह-नीयः। अनेकपशुयुक्तासु विकृतिषु देवतानुसारेण द्विव-चनान्त ऊहनीयः। सोऽयं शाखाविकल्पेन प्रथमः पक्षः। शाखाभेदेन पाठभेदेऽपि मन्त्रभेदाभावादर्थभेदो न युक्तः। किंत्वेक एवार्थ इति पक्षान्तरम्। तदापि देवतायाः सम्प्रदानत्वेन स्वामित्वाभावान्मेधपतिशब्द-योग्यता नास्तीति यजमान एव तच्छब्दार्थः। तस्मिंश्च यजमाने स्वत एकत्वम्। जायया सह द्वित्वमित्येकवचन-द्विवचने उभे अपि समवेतार्थे। ततो यजमानद्वयोपे-तायां विकृतावेकवचनान्तो द्वित्वेनोहनीयः। यजमान-बहुत्वोपेतायां विकृतौ द्विवचनान्तो बहुत्वेनेति पूर्वपक्षः। मेधस्य यजमानार्थत्वं नैवाशासनीयम्। तस्य सिद्धत्वात्। देवतार्थत्वं त्वाशासनीयम्। ततो मेधमाशासाना इत्येतद् देवतायां समवेतार्थं सम्प्रदानस्याप्युद्देश्यत्वेन प्राधान्या-न्मेधपतित्वमविरुद्धम्। देवताकारेणैकत्वादग्नित्वसोम-त्वाकारेण द्वित्वाच्चैकवचनद्विवचने उपपद्येते। तस्माद्देव-तानुसारेण विकृतावूह इति राद्धान्तः।

त्रयोदशाधिकरणमारचयति।

आदित्येष्विकवाच्येषु ऊह्यो नो वोह्यतेऽन्यवत्।
गणार्थत्वादनूहोऽतो विकल्पः प्रकृताविव ॥ १७ ॥

प्रजापशुसम्पत्तिकामस्य बहुदेवत्यः पशुराम्नायते। यः कामयेत प्रथेयपशुभिः प्र प्रजया जायेयेति स एताम-विंशामादित्येभ्यः कामाया लभेतेति। वशा वन्ध्या।

कामाय कामुकेभ्य इत्यर्थः। अत्र चोदकप्राप्तो मेधपतय इत्येकवचनान्तः शब्द आदित्यानां बहुत्वाद् बहुवचनान्तत्वेनोहनीयः। यथा मेधपतिभ्यामिति द्विवचनान्त ऊह्यते। यथा वा पाश इत्येकवचनान्त ऊह्यते। तद्वदिति चेत्। मैवम्। प्रकृतावग्नीषोमयोर्गणैकत्वमेकवचनान्तो ब्रूते। आदित्यानामपि गणैकत्वं समानमित्यनूहः। तस्माद्विकृत एकवचनान्त इतरेण सह प्रकृताविवात्रापि विकल्पते।

चतुर्दशाधिकरणमारचयति।

कृष्णग्रीवादिकेनोह ऊहो वास्य न पूर्ववत्।
दैवत्वं न गणस्यात ऊहो बह्वभिधित्सया॥ १८॥

यूपैकादशिन्यामग्न्यादिदेवताकाः पशव आम्नाताः। प्रैवाग्नेयेन वापयति मिथुनं सारस्वत्या करोति रेतः सौम्येन दधाति प्रजनयति पौष्णेनेत्यादिना। ते च स्वनामभिरन्यत्राम्नाताः। आग्नेयः कृष्णग्रीवः। सारस्वती मेषी। बभ्रुः सौम्यः। पौष्णः श्याम इत्यादिना। तत्रास्यैकवचनान्तस्य मेधपतिशब्दस्यादित्येष्विव नोह इति चेत्। मैवम्। वैषम्यात्। आदित्यगणस्य तत्र दैवत्वम्। इह त्वेकैकस्य पृथग्दैवत्वम्। अतो बहून् देवानभिधातुं बहुवचनान्तत्वमूहनीयम्।

इति माधवीये जैमिनीयन्यायमालाविस्तरे
नवमस्याध्यायस्य तृतीयः पादः।

---

चतुर्थपादस्य प्रथमाधिकरणमारचयति ।

षड्विंशतिवङ्क्रयोऽस्येत्यनूहः स्यादुतोह्यते ।
ऊहेऽपि वचनान्तत्वमस्येत्यावर्त्त्यतेऽथवा ॥ १ ॥
षड्विंशतिरिताभ्यामः समवेतोक्तिर्भवेदुत ।
अनूह्योऽकारणत्वेन दृष्टलाभात्तदूहनम् ॥ २ ॥
संख्यायाश्च पशोर्युक्तेर्वङ्क्रीणां मुख्यतावशात् ।
अमी पक्षा युज्यतेऽन्त्यस्ता अनुष्ठेति शेषतः ॥ ३ ॥

अध्रिगुप्रैषे वाक्यमिदमाम्नायते । षड्विंशतिरस्य वङ्क्रयस्ता अनुष्ठ्योच्यावयतादिति । अयमर्थः । वङ्क्रयो वक्राणि पार्श्वास्थीनि; तान्यस्य पशोः षड्विंशतिसंख्यानि । एकैकस्मिन् पार्श्वे त्रयोदशानामवस्थितत्वात् । ताश्च वङ्क्रीरनुष्ठ्यानुक्रमेण गणयित्वेति यावत् । उच्यावयतादुद्धरतादिति । सोऽयं मन्त्रो वङ्क्रीणामुद्धरणे कारणतया न विनियुक्तः । किन्तु संज्ञपनात् प्राक्पशौ नीयमाने होत्रा प्रयुज्यते । ततोऽसमवेतार्थत्वादनूह इत्याद्यः पक्षः । अकारणत्वेऽपि नादृष्टार्थत्वम् । शमितृणामुद्धरणीयार्थस्मारकत्वेन दृष्टार्थत्वात् । तस्मात् प्रकृतौ समवेतार्थतया विकृतावूहः । तदापि चत्वारः पक्षाः । तत्र संख्या मुख्यत्वेन प्रकाश्या । तेन द्वयोः पश्वोर्द्विगुणितां षड्विंशतिसंख्यां प्रकाशयितुं द्विवचनान्ततया षड्विंशतिशब्द ऊहनीय इत्याद्यः पक्षः । पशोश्चोदितत्वेन मुख्यत्वात्तद्वाचकं षष्ठ्यन्तमस्येति पदं पश्वनुसारेणावर्त्तनीयमिति द्वितीयः पक्षः । शक्तियोगः षड्विंशतिसंख्यायाः पशुना सह सम्बन्धः । तस्य मुख्यत्वात् प्रतिपशु विभक्तां संख्यां प्रकाशयितुं षड्-

विंशतिपदस्याभ्याम इति तृतीयः पक्षः। अत्र सर्वत्र मुख्यानुसारेण पदान्तराण्यूहनीयानि। संख्येयानां बह्वीनां मुख्यत्वात्। तासामियत्ता समस्य वक्तव्या। ततो द्विपक्षाग्रदनयोर्वङ्क्रयः। षट्सप्ततिरेषां वङ्क्रय इत्येवं यथायोगमूहनीयमिति चतुर्थः पक्षः। अयमेव सिद्धान्तो वाक्यशेषानुगुणत्वात्। ता अनुष्ठ्योच्यय वाक्यशेषः। स च व्याख्यातः।

द्वितीयाधिकरणमारचयति।

न चतुस्त्रिंशदित्येष निषेधो नियतो न वा।
गिरापदवदाद्यः स्यान्नैवकारहतत्वतः॥ ४॥
निषेधः प्राप्तिपूर्वोऽतः प्रापकोऽत्रानुमीयते।
निषेधकप्रापकाभ्यां चतुस्त्रिंशद्विकल्प्यते॥ ५॥

अश्वमेधे त्रयः सवनीयाः पशवः श्रुताः। अश्वस्तूपरो गोमृगस्ते प्राजापत्या इति। तेष्वश्वस्य चतुस्त्रिंशद्वङ्क्रयः। तथा च मन्त्रः। चतुस्त्रिंशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य स्वधितिः समेतीति। वाजीगन्धर्ववाहको जातिविशेषः। अत एव आम्नायते। हयो भूत्वा देवानवहदर्वासुरान् वाजी गन्धर्वानिति। देवबन्धुर्देवानां प्रियः। स्वधितिश्छेदनहेतुः शस्त्रमित्यर्थः। एवं सत्यध्रिगुप्रैषे विशेषोऽयमाम्नायते। न चतुस्त्रिंशदिति ब्रूयात् षड्विंशतिरित्येव ब्रूयादिति। सोऽयं चतुस्त्रिंशद्वाजिन इत्यादिकाया ऋचः प्रतिषेधो गिरापदनिषेधवन्नित्यो न तु विकल्पितः। यथा न गिरागिरेति ब्रूयादैरं कृत्वोद्गेयमित्यत्र गिरापदनिषेध-

पुरःसरमिरापदे विहिते सति निषिद्धस्य नित्यनिवृत्तिः। तथा चतुस्त्रिंशन्मन्त्रनिषेधपुरःसरं षड्विंशतिमन्त्रे विहिते सति नित्यनिवृत्तिर्निषिद्धस्येति चेत्। नैवम्। षड्विंशतिरित्येव ब्रूयादित्येवकारेण विधित्वप्रत्ययबाधात्। षड्विंशतिमन्त्रस्तावच्चोदकतः प्राप्तत्वान्न विधेयः। तस्य चतुस्त्रिंशन्मन्त्रेणापवादप्रसक्तौ न चतुस्त्रिंशदित्यनेनापवादकं मन्त्रं प्रतिषिध्य चोदकप्राप्तस्यानपोदितत्वेन यथापूर्वमवस्थानमनूद्यत इत्येवमर्थं सूचयितुमेवकारः प्रयुक्तः। गिरापददृष्टान्तस्तु विषमः। अप्राप्तत्वादिरापदं तत्र विधीयते। तेन च विहितेन पाठप्राप्ते गिरापदे बाधिते स बाधो न गिरागिरेति प्रतिषेधेनानूद्यतेऽतो दृष्टान्ते निषेधानुवादो दार्ष्टान्तिके विध्यनुवाद इति महद्वैषम्यम्। ननु विधिवाक्यस्थस्यैवकारस्यानुवादत्वे सति न चतुस्त्रिंशदित्यस्मिन्निषेधे कृत्स्नवाक्यतात्पर्य्यान्निषिद्धस्य निवृत्तिस्तदवस्था स्यात्। मैवम्। प्रापकस्यापि सद्भावेन निषेधप्राप्तिभ्यां चतुस्त्रिंशन्मन्त्रस्य विकल्पितत्वात्। अथोच्येत। चतुस्त्रिंशद्वाजिन इत्ययं मन्त्रः केवलं स्वरूपेणैव पठितः। न त्वस्याध्रिगुप्रैषवत् प्रापकं किञ्चिदस्तीति। तन्न। प्रापकवचनस्य कल्पनीयत्वात्। अन्यथा प्रसक्त्यभावेन प्रतिषेधानुपपत्तेः। तस्मात् प्रसञ्जकेनोपजीव्येनानुमितविधिना प्रत्यक्षनिषेधेन च समानबलतया चतुस्त्रिंशदित्ययं मन्त्रोऽस्त्वस्याध्रिगुप्रैषे विकल्प्यते।

तृतीयाधिकरणमारचयति।

पृथग्वचनमश्वस्य स्यादन्याभ्यां समस्य वा।

आद्यः पद्मे निषिद्धेऽत्र विशेषो नियतो यतः ॥ ६ ॥
वङ्क्रियत्तानुक्तिदोषादृगेवात्र निषिध्यते ।
पक्षे प्राप्तः प्राकृतोऽस्मिन् समस्योक्तिः पुरा यथा ॥ ७ ॥

पूर्वोक्ताश्वस्य तूपरगोमृगाभ्यां समस्य वङ्क्रियत्ता न वक्तव्या । किन्तु पृथगेव । कुतः । यस्माच्चतुस्त्रिंशद्वाजिन इत्ययं मन्त्रविशेषोऽश्वस्य नियतः । ननु प्रत्यक्षनिषेधेनानुमितविधिना च विकल्पः पूर्वमुक्तः । तत्र । ऋचो निषेधाभावात् । न चतुस्त्रिंशदिति ब्रूयादित्यृचि प्रथमपदमात्रं निषिध्यते । ननु निषेधस्य प्रसक्तिपूर्वकत्वमुपजीव्य विधिरनुमितः । तत्रानुमापकस्य निषेधस्याभावेनानुमेयस्य विधेरप्यभावाच्चतुस्त्रिंशदित्यस्या ऋचः प्राप्तिरेव नास्ति । तत्र कुतो नियतिरिति चेत् । न । प्रकरणपाठमन्त्रलिङ्गाभ्यां विनियोगविधेरनुमेयत्वात् । तस्मादनेन मन्त्रेणाश्वस्य पृथग्वचनमिति प्राप्ते ब्रूमः । यदि चतुस्त्रिंशदित्येकमेव पदं निषिध्येत । तदा तस्यामृचि वङ्क्रीणामियत्ता नोच्येत । ननु षड्विंशतिरित्येव ब्रूयादित्यनेन वाक्येन संख्यावाचिपदान्तरप्रक्षेपविधानादियत्तोच्यत इति चेत् । न । तस्य वाक्यस्यैवकारेण विधिशक्तेः कुण्ठितत्वात् । तस्मान्न पदमात्रस्य निषेधः । किन्तु कृत्स्नाया ऋचः । तथा सति पूर्वोक्तविकल्पस्य तदवस्थत्वादृग्विशेषविधिपक्षे पृथग्वचनं कर्त्तव्यम् । तन्निषेधपक्षे चोदकप्राप्ते प्राकृतेऽध्रिगुप्रैषे प्रथमाधिकरणन्यायेन समस्य वक्तव्यम् । तत्र तूपरगोमृगयोः प्रत्येकं षडविंशतित्वादश्वस्य चतुस्त्रिंशत्त्वात् समासेन षडशीतिरेषां वङ्क्रय इत्येवमूहनीयम् ।

चतुर्थाधिकरणमारचयति।

पत्नी वपाऽथवोरूकोरलयोरविशेषतः।
पत्नी वपा सन्निधानाद्भ्रान्तिच्छेदनिषेधतः॥ ८॥

अध्रिगुप्रैषे वचनमिदमाम्नायते। वनिष्टुमस्य मा राविष्टोरूकं मन्यमाना इति। वनिष्टुर्वपासमीपवर्त्ती कश्चित् पश्वङ्गविशेषः। तं मा राविष्ट। तस्य लवनं मा कुरुत। व्यत्ययेन लकारस्य रेफः। किं कुर्वन्तः। उरूकं मन्यमानाः। वनिष्टावुरूकबुद्धिं कुर्वन्त इत्यर्थः। अत्रोरूकशब्देन काकविरोधी कश्चिदुलूकनामा पक्षिविशेषोऽभिधीयते। कुतः। रलयोरविशेषात्। पर्य्यङ्कः पल्यङ्कः। रोमाणि लोमानीत्यादिदर्शनात्। उरूकशब्दः सादृश्यलक्षकः। पक्षिसदृशं वनिष्टुं विवेकेन मन्यमाना मा राविष्टेति वाक्यार्थः। तस्मादुरूकः पक्षीति प्राप्ते ब्रूमः। उरूकशब्देनात्र वपा लक्ष्यते। कुतः। वनिष्टुसन्निधानात्। सति हि सन्निधावुरूकभ्रान्तिर्वनिष्टौ सम्भवति। भ्रान्तिप्राप्तं च लवनमत्र निषिध्यते। उरूकं मन्यमाना वनिष्टुं मा राविष्टेत्युक्तत्वात्। वपालवनकाले भ्रान्त्या वनिष्टोर्य्यल्लवनं तस्य निषेधे सति दृष्टोऽर्थो लभ्यते। भ्रान्तिनिवारणस्य दृष्टत्वात्। त्वत्पक्षे तु वनिष्टोर्लवनमेव नास्ति। तस्यायुक्तम्। हृदयाद्यङ्गवल्लवितव्यत्वात्। वनिष्टुमस्नीधे षड्वत्तं सम्पादयतीत्याद्यनुष्ठानविधानात्। ततो लवननिषेधस्यासमवेतार्थत्वेनादृष्टार्थो मन्त्रपाठः प्राप्नुयात्। तस्माद्वपावचन उरूकशब्दः। यद्यपि वपायामप्रसिद्धस्तथाप्युरुविस्तीर्णमूको मेदो यस्येत्यवयवार्थद्वारा मेदस्विन्यां वपायां

युक्त उरूकशब्दः। एवं सत्यनेकवपासु विकृतिष्वेकवचनान्त उरूकशब्द ऊहनीयः ।

पञ्चमाधिकरणमारचयति ।

प्रशसेत्यसिरर्थः स्यात् स्वधितिर्वा छेदनादसिः ।
स्वधितिः कात्स्नर्याय बाह्वोः स्यात् स्वधितिश्छेदसाधनम् ॥ ९ ॥

अध्रिगुप्रैषे वाक्यान्तरमाम्नातम् । प्रशसा बाहू इति । तत्र शसु हिंसायामित्यस्माद्धातोः सोपसर्गादुत्पन्नस्य सकारान्तप्रातिपदिकस्य तृतीयैकवचनान्तस्य प्रशसेति रूपं भवति । तच्चासेर्वाचकम् । तदेतत् केनचिद् ब्राह्मणवाक्येनानूद्यते । दशप्रयाजानिष्ट्वाह शासमाहरेत्यसिर्वै शास इत्याचक्षत इति । सोऽयमसिर्बाह्वोश्छेदनहेतुः । तस्माद् दृष्टार्थलाभादसिः प्रशसेत्यस्य पदस्यार्थ इति चेत् । मैवम् । शंस स्तुतावित्यस्माद्धातोरयमुत्पन्नः प्रशसावित्यस्य द्वितीयाद्विवचनान्तस्य शब्दस्य छान्दसे औकारलोप आकारादेशे च कृते प्रशसेति भवति । बाह्वोः प्रशस्तत्वं नाम कात्स्नर्यम् । प्रशस्तौ बाहू कृणुतादित्युक्ते निःशेषेणोद्धर्त्तव्यौ बाहू इतीदृशो दृष्टार्थो लभ्यते । नात्र छेदनसाधनत्वमसेः सम्भवति । स्वधितेस्तत्साधनत्वेन विहितत्वात् । तस्मात् स्तुतिरेवास्य शब्दस्यार्थः । तथा सति बाहुबहौ बहुवचनान्तत्वेन प्रशसेति पदमूहनीयम् ।

षष्ठाधिकरणमारचयति ।

साद्गुण्यमुत साकल्यं श्येनाद्युक्त्या विवक्षितम् ।
प्रसिद्धसन्निधेराद्यस्तत्सत्त्वादखिलोद्धृतिः ॥ १० ॥

अध्रिगुप्रैषवचन एतदाम्नायते । श्येनमस्य वक्षः

कृणुतादिति। तत्र यथामी पिष्टपिण्डाः सिंहाः क्रियन्तामित्युक्ते प्रसिद्धसिंहसन्निधानात् पिष्टपिण्डेषु सिंहसादृश्यं कर्त्तव्यतया प्रतीयते। तथैवास्य पशोर्वक्षः श्येनं कृणुतादित्यत्र श्येनसादृश्यं वक्षसि कर्त्तव्यतया प्रतीयते। ततो वक्ष उद्धृत्य कर्त्तनाद्युपाये पक्षचरणचञ्च्वादिकं सम्पाद्य श्येनसंस्थानं कर्त्तव्यमिति प्राप्ते ब्रूमः। वक्षसि श्येनसादृश्यं स्वत एव पूर्वमस्ति। ततो यथा तन्न नश्यति तथा साकल्येनोद्धरणीयमिति विवक्षया श्येनशब्दः प्रयुज्यते। तथा सति हविरविकलं भवति। अंसादिष्वनेन न्यायेन साकल्यविवक्षया तत्तद्रूपकोक्तिर्द्रष्टव्या। एतदेवाभिप्रेत्य श्रूयते। गात्रं गात्रमस्यानूनं कृणुतादिति।

सप्तमाधिकरणमारचयति।

ज्योतिष्मती भवेन्नोवा दर्शाद्युद्धृतलोपने।

निमित्तसत्त्वात् स्यान्नाग्निहोत्राद्युद्धृतिवर्जनात्॥११॥

अग्निहोत्रप्रक्रियायामिदमाम्नायते। अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वायेदिति। प्रतिदिनमग्निहोत्रं होतुं गार्हपत्यादुद्धृत्याहवनीयेऽग्निः प्रक्षिप्यते। सोऽयमुद्धृतोऽग्निः कदाचिदहुतेऽग्निहोत्रे यदि शाम्येत्तदानीमियमिष्टिः प्रायश्चित्तमित्यर्थः। तत्र दर्शपूर्णमासाद्यर्थमुद्धृतस्याप्यग्नेः शान्तौ सेयं ज्योतिष्मतीष्टिर्भवेत्। कुतः। अग्न्युद्वानस्य निमित्तस्य सद्भावादिति चेत्। मैवम्। अग्निहोत्रार्थमुद्धृतस्यैवाग्नेरुद्वानं निमित्तमिति प्रकरणादवगम्यते। अनया चेष्ट्याग्निहोत्रार्थैवाग्निः पुनरुत्पाद्यते।

तथा सत्यग्निहोत्रस्येयमिष्टिः सामवायिकमङ्गं भवति। अतोऽग्निहोत्रार्थादुद्धृतोद्दानस्य निमित्तस्याभावान्नैमित्ति-कोष्टिर्न प्रवर्त्तते।

अष्टमाधिकरणमारचयति।

धार्य्योद्दाने सास्ति नो वा सर्वार्थत्वेन विद्यते।

गतश्रीत्वनिमित्तं तत्परार्थत्वान्न विद्यते॥ १२॥

इदमाम्नायते। धार्य्यो गतश्रिय आहवनीय इति। गतश्रीशब्दार्थस्त्वेवं श्रूयते। त्रयो वै गतश्रियः शुश्रुवान् ग्रामणी राजन्य इति। श्रोत्रो गौतमो भारद्वाज इति कल्पसूत्रकारः। गतश्रीभिर्धार्य्यमाणस्याहवनीयस्य सर्व-कर्मार्थत्वे सत्यग्निहोत्रार्थत्वमप्यस्तीति तदुद्दाने सा ज्योति-ष्मतीष्टिर्विद्यत इति चेत्। मैवम्। न ह्यस्य धारणेऽग्नि-होत्रं निमित्तम्। किन्तु गतश्रीत्वम्। सर्वकर्मसमुदा-यस्य चोदनया कयाचिदप्यचोदितत्वात् सर्वार्थत्वं शङ्कितु-मप्यशक्यम्। गतश्रीत्वं निमित्तीकृत्य धृतोऽग्निः प्रसङ्गात् सर्वकर्मस्रूपकुर्वन्नग्निहोत्रेऽप्युपकरोतीति चेत्। उपकरोतु नाम। नैतावता प्रायश्चित्तस्य निमित्तं लभ्यते। अग्नि होत्रार्थमुद्धृतस्योद्दानं तन्निमित्तम्। न चात्र तदस्ति। किन्त्वन्यस्य यस्य कस्यचित् कर्मणोऽर्थे समुद्धृतस्य गतश्रीत्व-निमित्तं धारणं क्रियते। तस्मान्निमित्ताभावान्नास्ति सेष्टिः।

नवमाधिकरणमारचयति।

दर्शार्थोद्धरणे वाचेत्यादिर्नो वा समन्त्रकम्।

कर्त्तुं स्यात्र निमित्तस्य कालस्यात्र विवर्जनात्॥ १३॥

अस्त्यग्निहोत्रे वत्सापाकरणमन्त्रः। वाचा त्वा होत्रा प्राणेनोद्गात्रा चक्षुषाध्वर्य्युणा मनसा ब्रह्मणा श्रोत्रेणाग्नीधैतैस्त्वा पञ्चभिर्दैव्यैर्ऋत्विग्भिरुपाकरोमीति। सोऽयं मन्त्रो दर्शपूर्णमासार्थेऽपि वत्सापाकरणे पठनीयः। कुतः। तदुपकरणस्याग्निहोत्रेऽप्यङ्गत्वात्। इष्टेर्हि तस्मिन्नग्नौ पर्वणि सायं प्रतिपदि प्रातश्चाग्निहोत्रमनुष्ठीयते। यदि तत्र मन्त्रो न पठ्यते तदानीमग्निहोत्राङ्गमुपकरणं विगुणं स्यात्। ततः समन्त्रकं कर्त्तुं मन्त्रः पठनीय इति चेत्। मैवम्। अग्निहोत्राङ्गे समन्त्रकाग्न्युपकरणे निमित्तस्य कालस्यासम्भवात्। अधिवृत्तसूर्य्ये आविःसूर्य्ये च काले क्रमेण सायं प्रातश्चाग्निहोत्रवत्सापाकरणं विहितम्। दर्शपूर्णमासार्थं तु पर्वणि प्रातरग्निहोत्रे हुते पश्चादग्निमुद्धृत्यान्वाधानं क्रियते। अतो निमित्तस्य कालस्याभावान्नैमित्तिकं समन्त्रकोपकरणं नास्ति।

दशमाधिकरणम रचयति।

प्रदेयधर्म्माः स्युर्नो वा पयसि प्रायणीयगे।
चरुवत् स्युः पाकहेतुः सप्तम्या स्युर्न ते ततः॥ १४॥

ज्योतिष्टोमे श्रूयते। आदित्यः प्रायणीयः पयसि चरुरिति। तत्र चरुपयसोरुभयोर्देवतासम्बन्धेन प्रदेयद्रव्यत्वसाम्याद्यथा चरौ निर्वापावघातादयः समन्त्रकाः प्रदेयद्रव्यधर्मा अनुष्ठीयन्ते। तथा पयसि समन्त्रका वत्सापाकरणादयः प्रदेयद्रव्यधर्म्मा अनुष्ठेया इति चेत्। मैवम्। आधारत्वाभिन्या पयसीति सप्तम्या श्रवणहेतुत्वावगमात्। ततो न ते धर्म्माः कर्त्तव्याः। किन्तु प्रणीताधर्म्मा उत्पवनादयस्तत्र कर्त्तव्याः।

एकादशाधिकरणमारचयति।

पयोदध्नोरभ्युदये न ते स्युर्वा स्युरेव ते।

प्रवृत्तत्वाद्देवयोगमात्रोक्तिः सन्ति तेऽन्यवत्॥ १५॥

अभ्युदयेष्टिरेवमाम्नायते। वि वा एतं प्रजया पशुभिरर्द्धयति वर्द्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान्विभजेद् ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्य्याद् ये स्थाविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुमिति। अयमर्थः। यस्य यजमानस्य दर्शकर्मार्थं हविर्भ्रान्त्या चतुर्दश्यां निरुप्तं भवति तत उषसि पूर्वस्यां दिशि चन्द्रमा अभ्युदेति तं यजमानमध्वर्य्युः प्रजया पशुभिश्च वियोजयति तदीयं च वैरिणं वर्धयति। ततः प्रवृत्तेऽस्मिन् दर्शकर्मनि चन्द्रोदयं निमित्तीकृत्य पूर्वदेवतापनयनेन तण्डुलानां देवतान्तरसम्बन्धः कर्त्तव्य इति। तदिदं षष्ठाध्याये निर्णीतम्। इह तु पूर्वोक्तप्रायणीयन्यायेन सप्तमीनिर्दिष्टयोर्दधिशृतयोः प्रदेयद्रव्यधर्म्मा न कर्त्तव्याः। किन्तु प्रणीताधर्म्मा इति प्राप्ते ब्रूमः। विषमो दृष्टान्तः। प्रायणीयस्य पूर्वमप्राप्ततया द्रव्यं देवता च अपणायाधारभूतं पयस्येत्येवमनेकैर्गुणैर्विशिष्टं कर्म्मैकेन वाक्येन विधातुं शक्यम्। इह तु कर्म्मणः प्रवृत्तत्वात्तस्मिन् कर्म्मणि तण्डुलानां नैमित्तिको देवतान्तरसम्बन्ध एक एव गुणो विधातुं शक्यते। न तु दधिशृतयोः प्रणीतार्थत्वं गुणान्तरम्। अनेकगुणविधौ वाक्यभेदप्रसङ्गात्। तस्मात्तण्डुलवत् प्रदेयत्वेन प्रवृत्तयोर्दधिशृतयोः प्रदेयधर्म्माः कर्त्तव्याः।

द्वादशाधिकरणमारचयति ।

स न्यायः पशुकामेष्टौ प्रायणीयनयोऽथवा ।

तुल्यश्रुतित्वात् स्यादाद्योऽपूर्वकर्मत्वतोऽन्तिमः ॥ १६ ॥

इदमाम्नायते । यः पशुकामः स्यात् सोऽमावास्याया-मिष्ट्वा वत्सानपाकुर्य्यादिति । तत्रेदमपरमाम्नातम् । ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्य्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुमिति । तत्राभ्युदयेष्ट्या समानश्रु-तित्वात्तेनैव न्यायेन दधिशृतयोः प्रदेयधर्मा इति चेत् । मैवम । पाठसाम्येऽप्यपूर्वकर्मत्वादर्थसाम्यं नास्ति । ततः प्रायणीयन्यायेन समस्या अपणाधारत्वावगमात् प्रणीता-धर्मा एवात्र कार्य्याः ।

त्रयोदशाधिकरणमारचयति ।

मिश्रणे पयआदीनां सोमधर्मा न वाग्रिमः ।

प्रदानं मेलनान्नैवं संस्कारार्थत्वतः श्रुतेः ॥ १७ ॥

ज्योतिष्टोमे पयःप्रभृतिभिर्द्रव्यैर्ग्रहपात्रनिष्ठस्य सोमस्य मिश्रणमाम्नातम् । पयसा मैत्रावरुणं श्रीणाति शुक्रं भिर्मन्थिनं धानाभिर्हारियोजनं हिरण्येन शुक्रमा-ज्येन पात्नीवतमिति । तत्र मिश्रणं सोमेन सह प्रदाना-र्थम् । ततः प्रदेयस्य सोमस्य ये धर्माः क्रयादयः । ते पयःप्रभृतिषु कर्त्तव्या इति चेत् । मैवम् । मेलनस्य सोमसंस्कारार्थत्वात् । मैत्रावरुणमित्यादिभिर्द्वितीयाश्रु-तिभिः सोमस्य प्राधान्यं गम्यते । पयसेत्यादिभिस्तृतीया-

श्रुतिभिः पयःप्रभृतीनां तादर्थ्यम्। ततः संस्कारकार्थां प्रदेयत्वाभावान्न तद्धर्माः सन्ति।

चतुर्दशाधिकरणमारचयति।

स्पर्शः परस्वदालम्भो यागो वोत्सर्गतोऽग्रिमः।
द्रव्यदेवान्वयाद्यागोऽङ्गत्वेतिविधिरुत्तरः॥ १८॥

अश्वमेधे समाम्नायते। ईशानाय परस्वत आलभते पर्य्यग्निकृतानारण्यानुत्सृजतीति। परस्वच्छब्देनारण्याः पशुविशेषा उच्यन्ते। तेषामालम्भः स्पर्शमात्रम्। कुतः। पर्य्यग्निकृतानां तेषां पशूनामुत्सर्गविधानात्। यागपक्षे तदसम्भवादिति चेत्। मैवम्। द्रव्यदेवतान्वयेन यागत्वावगमात्। ईशानायेति देवताया निर्देशः परस्वत इति द्रव्यस्य। न हि यागमन्तरेण द्रव्यदेवतयोरन्वयः सम्भवति। पर्य्यग्निकृतोत्सर्गवाक्येन कृत्स्नोपकारप्राकृतपर्य्यग्निकरणान्ताङ्गत्वेति विधीयते। तथा प्रत्यक्षविहितया निराकाङ्क्ष ईशानप्रयोगवचनो न चोदकमपेक्षते। तस्मादालम्भो यागः। इतरस्तत्र गुणविधिः।

पञ्चदशाधिकरणमारचयति।

आज्येन शेषमित्यत्रो द्रव्यप्रतिनिधिर्भवेत्।
कर्मान्यदाग्रिमस्त्यागशेषसंस्थापनोक्तिभिः॥ १९॥

अङ्गत्वेत्या समाप्तत्वाद्देवतोक्त्यनुवर्त्तनात्।
साम्याच्छेषः संस्थितिस्तु याग आलम्भनादिवत्॥ २०॥

त्वाष्ट्रं पात्नीवतमालभेतेति प्रकृत्य पर्य्यग्निकृतं पात्नीवतमुत्सृजतीति श्रुतम्। तत्र पुनः श्रूयते। आज्येन शेषं संस्थापयतीति। तदिदमाज्यं पशुद्रव्यस्य प्रतिनि-

धिर्भवेत्। कुतः। उत्सर्गशेषसंस्थापनशब्दैस्तदवगमात्। पर्य्यग्निकरणादूर्ध्वं पशुद्रव्यस्य त्यागमभिधायाज्येनेति द्रव्यान्तरं पशुस्थानीयं साधनभूतमुपदिश्य चोदकप्राप्तमुत्तरकालीनमङ्गजातं तेन द्रव्येण समापनीयमिति प्राप्ते ब्रूमः। पूर्वाधिकरणन्यायेनाङ्गरीत्या पात्नीवतः पशुः समाप्तः। यदि पात्नीवतमालभेतेति विहितस्य कर्मणः समाप्तिर्न स्यात्। स केवलं पशुद्रव्यत्यागः क्रियते। तदा विहितो द्रव्यदेवतासम्बन्धरूपो यागो नानुष्ठितः स्यात्। ततो देवतामुद्दिश्य त्यागोऽवश्यं कर्त्तव्यः। तथा सति पशुसाधनके यागे मुख्येन पशुनैव साधिते कुतः प्रतिनिधिः। देवतोद्देशत्यागस्य चोत्पत्तिवाक्येनैव सिद्धत्वात् पर्य्यग्निकरणोत्सर्गवाक्येनाङ्गरीतिविधाने संस्थापनीयः शेषो न कोऽप्यस्ति। तस्मादाज्यवाक्येन कर्मान्तरं विधीयते। देवता तु पात्नीवतशब्दस्यानुवृत्त्या लभ्यते। कर्मान्तरत्वेऽपि शेषत्वमुपचर्य्यते। पश्वाज्यद्रव्यकयोः पूर्वोत्तरकर्मणोः पत्नीवदाख्याया देवताया एकत्वेनाव्यवहितानुष्ठानेन चोपक्रमोपसंहारसदृशत्वात् संस्थितिक्रियया चालम्भनिर्वापादिवद्यागो विवक्ष्यते। लिङ्प्रत्ययो वैदिकः। संस्थापयतीति लड़पि प्रत्ययस्यापूर्वभावनामभिधत्ते। तस्मादाज्यद्रव्यकं पत्नीवद्देवताकं शेषवत् पशुयागसमनन्तरभाविकर्मान्तरमेवात्र विधीयते।

इति माधवीये जैमिनीयन्यायमालाविस्तरे
नवमस्याध्यायस्य चतुर्थः पादः।
समाप्तश्चायं नवमोऽध्यायः।

# दशमोऽध्यायः।



रूपान्तरत्वादासन्नं नवमे स्थितमूहनम्।
निवृत्तित्वाद्विप्रकृष्टो दशमे बाध उच्यते॥

अतिदिष्टपदार्थस्वरूपान्तरमूहनम्। ततः सन्निकृष्यते। बाधस्तु पदार्थनिवृत्तिः। ततो विप्रकृष्यते। तस्मान्नवमदशमयोरध्याययोः पूर्वोत्तरभाव उपपन्नः।

दशमाध्यायस्य प्रथमपादे प्रथमाधिकरणे प्रथमवर्णकमारचयति।

वेदिः स्वयंकृतेत्यादौ प्राकृतं सर्वमाचरेत्।
लुप्तार्थं बाध्यतां वाद्यश्चोदकप्रापितत्वतः॥ १॥
अपेक्षासत्तियोग्यत्वहानेस्तन्ननादिकम्।
बाध्यतेऽपेक्षितं सर्वं चोदकेनातिदिश्यताम्॥ २॥

रत्नीनामेतानि हवींषि भवन्तीति वाक्येन राजसूये रत्निनामकानां देवानां सम्बन्धीनि कानिचिद्धवींषि दर्शपूर्णमासेष्टिविकृतिरूपाणि विहितानि। तेषु मैत्राबार्हस्पत्ये हविषि श्रूयते। स्वयंकृता वेदिर्भवति स्वयंदितं बर्हिः स्वयंकृत इध्म इति। दृष्टावुद्धननखननपरिलेखनादिभिः क्रियाविशेषैर्वेदिर्निष्पाद्यते। स्फ्येनोत्तमां त्वचमुद्धन्ति। देवस्य सवितुः सव इति खनति। स्फ्येन वेदिं

परिलिखन् परिगृह्णातीति तद्विधानात्। यन्नस्य घोषदसीत्यस्मिन्ननुवाके प्रोक्तैर्मन्त्रैर्दात्रच्छिन्नं बर्हिः सम्पाद्यते। त्रीन्परिधीनित्यादिमन्त्रोपेताभिः क्रियाभिरिध्मः सिध्यति। विकृतिरूपे तु हविष्युद्धननाद्यपेक्षां वरियेनं स्वयमित्युक्तम। यथावस्थित एव भूप्रदेशो वेदित्वेन स्वीकर्त्तव्यः। इध्माबर्हिषी अपि स्वत एव छिन्ने शास्त्रीयच्छेदननिरपेक्षे ग्राह्ये इत्यर्थः। तत्र प्रकृतौ सप्रयोजनानामुद्धननादीनां विकृतौ प्रयोजनं लुप्यते। उद्धननादिकृतस्य वेद्युपकारस्य स्वयंशब्देन निवारितत्वात्। बर्हिःस्तरणहविरासादनादिधर्मा विकृतावप्यलुप्तार्थाः। तत्र संशयः। किं लुप्तार्थमलुप्तार्थं च सर्वमङ्गजातं विकृतावप्यनुष्ठेयमुत लुप्तार्थं वर्जनीयमिति। चोदकस्य साधारणत्वात सर्वमनुष्ठेयमित्याद्यपक्षे प्राप्ते सिद्धान्तं ब्रूमः अङ्गी ह्यङ्गैरुपकृतः फलं साधयति। तथा च सत्यङ्गिनोऽङ्गकृत उपकारे साक्षादपेक्षा। उपकारद्वारा त्वङ्गेषु। प्रत्यासन्नश्चाङ्गिनं प्रत्युङ्गभ्य उपकार। योग्यतापि साक्षादपेक्षां पूरयितुमुपकारस्यैवास्ति। न त्वङ्गानाम्। वेदिनिष्पादनलक्षणदृष्टोपकारयुक्तानि प्रकृतावुद्धननादीन्यङ्गानि। विकृतौ तु वेद्याः स्वतःसिद्धत्वेन निष्पादनोपकारो लुप्यते। तत उपकारद्वारकाण्याकाङ्क्षासन्निधियोग्यत्वान्युद्धननाद्यङ्गेषु हीयन्ते। तस्मादुद्धननादीनि नानुष्ठेयानि। सोऽयं चोदकप्रापितस्योद्धननाद्यनुष्ठेयत्वप्रत्ययस्य भ्रान्तित्वेन निश्चयो बाध इत्युच्यते। चोदकस्य त्वलुप्तोपकारैरुपकारद्वारेणाकाङ्क्षासन्निधियोग्यत्वयुक्तैर्हविरासादनाद्यङ्गैश्चरितार्थता सम्पद्यते।

द्वितीयवर्णकमारचयति।

अवघातः कृष्णलानामस्ति नो वाऽस्ति पाकवत्।

प्रत्यक्षोक्त्या चरेत् पाकमवघाते तु नास्ति सा ॥ ३ ॥

विकृतिरूपाणां काम्येष्टीनां काण्डे पठ्यते। प्राजापत्यं घृते चरुं निर्वपेच्छत कृष्णलमायुष्काम इति। कृष्णलशब्दः सुवर्णशकलवाची। प्रकृतौ व्रीहीनवहन्तीति पुरोडाशहेतूनां व्रीहीणामवघातो विहितः। सोऽत्र चरुहेतूनां कृष्णलानां चोदकवशादस्ति नो वेति सन्देहः। अस्तीति पूर्वपक्षप्रतिज्ञा। वितुषीकरणं प्राकृत उपकारः। लुप्तेऽप्युपकारे तत्सत्तायां पाकवदिति निदर्शनम्। लुप्तेऽपि विक्लेदनोपकारे पाकः प्रतिवादिनोऽभिमतः। तद्वदवघातोऽप्यस्तु। घृते श्रपयतीति प्रत्यक्षोक्त्या पाकोऽभ्युपगतः। अवघाते तु सोक्तिर्नास्तीति वैषम्यादवघातो नास्ति।

तृतीयवर्णकमारचयति।

वैश्वदेवस्य तन्त्रे यः पत्नी विष्णुः स किं पुरा।

आवाह्यो वा न वावाह्य आग्नेयाङ्गातिदेशनात् ॥ ४ ॥

वैश्वदेवावाहनस्य काले स्फ्यास्त्रेषवर्जनात्।

विष्णुयागस्य सन्देहाद्विष्णोरावाहनं न हि ॥ ५ ॥

काम्येष्टिष्वेवं श्रूयते। वैश्वदेवं चरुं निर्वपेद् भ्रातृव्यवांस्तं बर्हिषदं कृत्वा शम्यया स्फ्येन व्यूहेदिदमहममुं च व्यूहामीति यं द्विष्यात्तं ध्यायन्दर्भोऽवमृज्येत यत्र स्फ्य आश्लिष्येत्तद्विष्णव उरुक्रमायावद्यतीति। अस्यायमर्थः। अयं शत्रुजयार्थश्चरुः। तस्य प्रकृतिभूतादाग्नेयपुरोडाशादिशेष उच्यते। पुरोडाशशेषं यागोत्तरकाले

बर्हिष्यवस्थाप्य चतुर्णामृत्विजां भक्षविभागाय हस्तेन चतुर्धा कुर्य्यात्। तत इदं ब्रह्मण इदं होतुरिदमध्वर्य्यो-रिदमग्नीध इति तत्तद्भागान् पृथगुपदिशेत्। अक्षोग्र-कर्मत्वान्न हस्तेन विभागः। किन्तु तीक्ष्णाग्रेण अस्या-स्फ्रनामकेन यज्ञायुधद्वयेन। मन्त्रे चेदमिदमहं ब्रह्मभागं व्यूहामीत्येवमादिरूपं पठेदित्येतावान् विशेषः। ततो यदि कदाचिच्चरुलेशो व्यूहनकाले भूमौ पतेद्यज्ञायुधेन वा लिप्येत। तदा तं पतितं लिप्तं चरुलेशं तीव्रपरा-क्रमाय अवत्तयसमर्थाय विष्णवेऽवद्येत। व्यूहनकाले-ऽवदानकाले च अवतुं चौर्णं ध्यायेदिति। तत्र वैश्वदेविक-तन्त्रमध्ये चरुलेशस्याधःपातास्मिन्नपक्षे वैष्णवयागो विहितः। अतो वैश्वदेविकेऽनुष्ठितान्याघारप्रयाजाज्य-भागादीन्यङ्गानि वैष्णवेऽपि प्रसङ्गादुपकुर्वन्तीति न पृथक् क्रियन्ते। आवाहनं त्वनुष्ठानवैषम्येण न प्रसङ्गात् सिध्यति। विश्वान् देवानावहेति तत्रावाहनम्। अत्र तु विष्णुमावहेति वैषम्यम्। सामिधेनीप्रयाजयोर्मध्यकाले होता देवतावाहनार्थो निगदः पठ्यते। सोऽयं वैश्वदेवा-वाहनस्य कालः। न खलु तदानीं विष्णुः प्रसक्तः। प्रयाजा-ज्यभागप्रधानयागनारिष्टहोमचतुर्धाकरणेष्वनुष्ठितेष्वाश्लेषण-पक्षे वैष्णवयागस्य प्राप्स्यमानत्वात्। अतोऽप्रसक्तोऽपि विष्णुर्भविष्यद्यागसिद्धये पूर्वस्मिन् काल आवाह्यो न वेति सन्देहः। आवाह्यः। चोदकवशादिति प्राप्तम्। न च वैष्णवस्य वैश्वदेवप्रकृतित्वाभावान्नास्ति चोदक इति शङ्क्यम्। तयोरुभयोरप्याग्नेयविकृतित्वेनोभयत्राप्याग्नेयाङ्गानामति-

देशात्। तस्मात्तस्यान्यानां विप्रादीनामनिमन्त्रणे भोजनार्थागमनादर्शनात्तस्यान्यतमाया देवताया अनावाहने हविःस्वीकारस्य दूरापेतत्वादप्रसक्तोऽपि विष्णुर्भविष्यद्याग-सिद्ध्यर्थमावाह्य इति प्राप्ते ब्रूमः। किं चतुर्धाकरणा-दूर्ध्वमावाह्यते। किंवा प्रयाजेभ्यः पुरा। नाद्यः। अकाले कृतमकृतं स्यादिति न्यायेनावाहनस्य निरर्थकत्वात्। न द्वितीयः। विष्णुयागनिमित्तस्य भविष्यदाश्लेषस्य पाक्षिकत्वेन नैमित्तिकस्य विष्णुयागस्यापि पाक्षिकत्वात्। तथा सत्ययागपक्षे कृतमावाहनमनर्थायैव स्यात्। न हि निमन्त्रितो विप्रादिरभोजितः सन्तुष्यति। प्रत्युत शपत्येव। एतदेवाभिप्रेत्योच्यते। देवताभ्यो वा एष आवृश्च्यते यो यक्ष्य इत्युक्त्वा न यजत इति। यागपक्षे तु विनाप्यावाहनं याग उपपद्यते। कदाचिदनिमन्त्रितानामपि पूज्यानां स्नेहातिशयेन स्वयमेव भोक्तुमागच्छतां लोके दृष्टत्वात्। तस्मान्नास्ति विष्णोरावाहनम्।

द्वितीयाधिकरणमारचयति।

आरम्भणीया सोमाङ्गदीक्षणीयादिगा न वा।

अलोपादादिमोऽन्त्यः स्यादारम्भवारलोपनात्॥ ६॥

दर्शपूर्णमासयोरारप्स्यमानपुरुषसंस्कारार्थमारम्भणीये-ष्टिर्विधीयते। अग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्ण-मासावारप्स्यमान इति। सेयं सोमयागाङ्गभूतासु दीक्ष-णीयादिषु दर्शपूर्णमासेष्टिविकृतिषु कार्या न वेति सन्देहः। दर्शपूर्णमासेष्ट्यङ्गभूताया आरम्भणीयायास्तासु प्रयाजादिवच्चोदकप्राप्ताया लोपकारणाभावात् कार्यत्वाद्यः

पक्षः। किमारम्भणीयात्र क्रियमाणा सती सोमयागमारप्स्यमानस्य संस्कारः स्यात्। किंवा दीक्षणीयामारप्स्यमानस्य। नाद्यः। सोमयागस्य दर्शपूर्णमासविकृतित्वाभावेन सोमयागमारप्स्यमानस्य चोदकेनारम्भणीयाया अप्राप्तत्वात्। न द्वितीयः। अङ्गानां दीक्षणीयादीनां पृथगारम्भासम्भवात्। ननु दीक्षणीयायास्तन्त्रं प्रक्रमयतीति कल्पसूत्रकारैः पृथगारम्भो विहितः। नैवम्। अस्यारम्भस्य पुरुषसंस्कारेष्टिं प्रत्यप्रयोजकत्वात्। अन्यथा ततः प्रागनुष्ठितानामृत्विग्वरणादीनामसंस्कृतपुरुषानुष्ठानं प्रसज्येत। तस्मादारम्भाख्यद्वारलोपादारम्भणीया लुप्यत इत्यन्तिमः पक्षोऽभ्युपेयः।

तृतीयाधिकरणमारचयति।

सा किमस्त्यनुमत्यादौ न वाङ्गित्वस्य्युपक्रमात्।
संघस्योपक्रमो नेष्टेर्द्वारलोपान्न सा भवेत्॥ ७॥

अनुमत्यै पुरोडाशमष्टाकपालं निर्वपतीत्यादिना राजसूये दर्शपूर्णमासेष्टिविकृतयो विहिताः। तासु सारम्भणीयास्ति न वेति संशयः। दीक्षणीयादिवदनुमत्यादीनामन्याङ्गत्वाभावात् सोमयागवत् सर्वासामङ्गित्वेनोपक्रमसम्भवात्तद्द्वारेणारम्भणीयास्तीति पूर्वपक्षः। यद्यप्यङ्गिभूता अनुमत्यादयस्तथाप्येकैकस्या इष्टेः पृथगारम्भो नास्ति। अन्यथा प्रधानेष्वाग्नेयादिष्वारम्भणीयायाः षट्कृत्वोऽनुष्ठानं प्रसज्येत। अथोच्येत। प्रधानानां षण्णामाग्नेयादीनां संघस्य दर्शपूर्णमासेष्टित्वात्तस्यैक आरम्भ इति। तर्हि त्वापौष्टिपशुसोमदर्विहोमरूपाणामनेकेषां प्रधानानां संघस्य

वाजसूयत्वात् संघस्यैवोपक्रमोऽस्तु । न चासौ संघो दर्शपूर्णमासविकृतिर्येन तत्रारम्भणीया शङ्क्येत । अस्ति चात्रापरः सर्वारम्भार्थो यागः । अग्निष्टोममग्रे ज्योतिष्टोममाहरतीति ज्योतिष्टोमावान्तरसंस्थाभेदरूपस्याग्निष्टोमस्याम्नानात् । तस्मादंशुमत्यादिष्विष्टिष्वारम्भद्वारस्य लोपात् सारम्भणीया न भवेत् ।

चतुर्थाधिकरणमारचयति ।

तस्यां साऽस्ति न वाङ्गत्वेऽप्यस्य पृथगुपक्रमात् ।
अस्ति मैवं वचोऽशक्तेर्विधाने चातिदेशने ॥ ८ ॥

येयमारम्भणीया सापीष्टित्वाद्दर्शपूर्णमासविकृतिः । अतस्तस्यामपि दर्शपूर्णमासयोरिवारप्स्यमानपुरुषसंस्काराय सानुष्ठेया न वेति संशयः । चोदकप्राप्तत्वादनुष्ठेया । ननु सोमाङ्गदीक्षणीयादिवदस्या दर्शपूर्णमासाङ्गत्वेनारम्भद्वारं लुप्यते । न । वैषम्यात् । ऋत्विग्वरणादिना प्रयोगमारभ्यानुतिष्ठतः पुरुषस्यानुष्ठानमध्ये दीक्षणीया प्रवर्त्तते । दर्शपूर्णमासारम्भस्त्वारम्भणीयायामनुष्ठितायां पश्चात् सम्पद्यते । ततो दर्शपूर्णमासोपक्रमादन्य आरम्भणीयोपक्रम इति द्वारसद्भावादारम्भणीयामारप्स्यमानः स्वसंस्कारार्थमारम्भणीयां कुर्यात् । अनवस्था तु लोकसिद्धबीजाङ्कुरादिदृष्टान्तेन समाधेयेति प्राप्ते ब्रूमः । आरम्भणीयायामारम्भणीयान्तरं न कार्य्यम् । कुतः । अङ्गान्तरवदतिदेष्टुमशक्यत्वात् । तथाहि । प्रकृतौ समिधो यजतीत्यादिवाक्यैः प्रयाजाद्यङ्गानां स्वरूपमुपदिश्यते । प्रकरणेन चाङ्गाङ्गिभावो

वोध्यते। ततः सौर्य्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम इत्यादिकायां विकृतौ निर्वापलिङ्गानुमितं चोदकवाक्यमेवं प्रवर्त्तते। इष्टिवच्चरौ प्रयाजाद्यङ्गान्यनुष्ठेयानीति। एवं च सत्यारम्भणीयायामिदं वाच्यम्। किमाग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमान इत्येतद्वाक्यं समिदादिवाक्यवदङ्गभूतामारम्भणीयां विदधातु। किंवा यथा सौर्य्यादिवाक्यमङ्गातिदेशमनुमापयति। तथा दर्शपूर्णमासाङ्गभूतायामारम्भणीयायामन्यस्या आरम्भणीयाया अङ्गातिदेशमनुमापयतु। उतोभयं करोत्विति। नाद्यः। अङ्गविधावुपक्षीणत्वेनातिदेशानुमाने शक्त्यभावात्। न द्वितीयः। अविहितत्वेनातिदेष्टुमयोग्यस्याङ्गस्यातिदेशे शक्त्यभावात्। न तृतीयः। वाक्यभेदापत्तेः। नन्वनेन न्यायेन सौर्य्यवाक्येऽपि वाक्यभेदः स्यात्। एकस्यैव वाक्यस्य यागविध्यङ्गातिदेशयोः प्रवृत्तत्वात्। नैवम्। वाक्यद्वयसद्भावात्। प्रत्यक्षं वाक्यं यागविधायकम्। अनुमितं वाक्यमङ्गातिदेशकम्। तर्ह्यत्रापि तादृशं वाक्यद्वयं भवत्विति चेत्। बाढम्। अत एवारम्भणीयायां प्रयाजाद्यङ्गान्यनुष्ठीयन्ते। तद्वदारम्भणीयान्तररूपमप्यङ्गमनुष्ठीयतामिति चेत्। न। दर्शपूर्णमासप्रकरणे प्रयाजाद्यङ्गविधायकसमिदादिवाक्यवदारम्भणीयान्तररूपाङ्गविधायिनः कस्यचिद्वाक्यस्याभावात्। न हि प्रकृतावविद्यमानमङ्गं विकृतावतिदेशमर्हति। तस्मात् सम्प्रतिपन्नस्यैवारम्भणीयाविधायिनो वाक्यस्येष्ट्यङ्गस्वरूपविधानाय समिदादिवाक्यस्थानीयत्वमतिदेशाय सौर्य्यवाक्यस्थानीयत्वं चेत्याकारद्वयं वर्णनीयम्। तथा सत्या-

वृत्तिलक्षणो वाक्यभेदः केन वार्य्येत। तस्मादारभ्यणीयाया-मारभ्यमानपुरुषसंस्कारायारभ्यणीयान्तरं न कार्य्यम्।

पञ्चमाधिकरणमारचयति।

यूपाहुतिः खलेवाल्यां कार्य्या नो वातिदेशतः।
कार्य्या होमश्छेदनार्थो नाच्छेद्यायां स युज्यते॥ ८॥

अस्ति साद्यस्क्रनामकः कश्चिद्यागः। सद्यस्क्रियान् क्रिया परिक्रिया वा स्वर्गकाम इति तद्विधानात्। सन्ति साद्यस्क्राः पशवः सह पशूनालभत इति श्रुतेः। तेषु पशुषु वेद्युत्तरवेदियूपाः शास्त्रीयसंस्कारनिरपेक्षा एव गृह्यन्ते। अत एवाहाश्वलायनः। साद्यस्क्रे पूर्वरा वेदिः खलेवाली यूप इति। खले बलीवर्द्दबन्धनाय निखातो मेठिः खले-वाली। तेषां च पशूनामग्नीषोमीयपशुविकृतित्वात्तदीय-यूपकार्य्याः पशुनियोजनादयः खलेवाल्यां क्रियन्ते। तथा प्रकृतौ यूपमाशु गमिष्यतः पुरुषस्याहुतिर्विहिता। यूप-माच्छेत्स्यता होतव्यमिति। तां चाहुतिमापस्तम्बो दर्शयति। उरु विष्णो विक्रमस्वेति स्रुवेणाहवनीये यूपा-हुतिं जुहोतीति। सेयमाहुतिः खलेवाल्यां कार्य्या न वेति संशयः। तद्धर्मातिदेशात् पशुनियोजनवत् कार्य्येति पूर्वः पक्षः। यूपमाच्छेत्स्यतेति वाक्यस्यायमर्थः। अयूपं खादिरादिकाष्ठविशेषं शास्त्रीयच्छेदनादिसंस्कारैर्यूपी-कर्त्तुं काष्ठस्य शास्त्रीयच्छेदनयोग्यतायै होमः कर्त्तव्य इति। न हि खलेवाल्याः शास्त्रीयं छेदनमस्ति। पूर्वमेव छिन्नस्य काष्ठस्य कृषीवलैः खले निखातत्वात्। तस्माच्छे-दनद्वारलोपादाहुतिर्न विद्यते।

षष्ठाधिकरणमारचयति ।

तस्यां स्थाण्वाहुतिः कार्य्या न वा स्थाणौ विधानतः ।
कर्त्तव्योपकरोत्यारात् पशौ सा प्रकृताविव ॥ १० ॥
यूपीयाव्रश्चनस्थाणुद्वारासौ यूपसंस्कृतिः ।
स्रग्वत्तत्सम्भवात् सेयमयूपादिनिवर्त्तते ॥ ११ ॥

अग्नीषोमीययूपप्रकरणे स्थाण्वाहुतिं जुहोतीति श्रूयते। यूपे छिन्ने सत्यवशिष्टं वृक्षमूलं काष्ठरूपत्वेन स्थाणुरित्युच्यते। तत्राहुतिविशेष एवं श्रूयते। वनस्पते शतवल्शो विरोहेत्याव्रश्चने जुहोतीति। सेयमाहुतिस्तस्यां खलेवाल्यां कार्य्या न वेति संशयः। स्थाणुमुपजीव्याहुतिविधानात् खलेवाल्यामपि स्थाणुत्वात् सा कार्य्या। न च खलेवाल्याः शास्त्रीयसंस्काराभावेनाहुतिर्व्यर्थेति शङ्कनम्। पशावारादुपकारकत्वात्। यथा प्रकृतौ यूपाद्वियोजितस्याव्रश्चनस्थाणोरसंस्कार्य्यत्वेन पशावुपकारस्तद्वदिति प्राप्ते ब्रूमः। आव्रश्चनेऽस्मादित्याव्रश्चनमवशिष्टं वृक्षमूलम्। न खलु स्थाणुमात्रमाव्रश्चनमात्रं वोपजीव्येयमाहुतिः प्रवृत्ता। किं तर्हि यूपप्रकरणबलेन यूपीयाव्रश्चनस्थाणुत्वमुपजीव्य प्रवृत्ता। ततस्तद्द्वारेणासावाहुतिर्यूपसंस्कृतिः स्यात्। तथा च दृष्टसंस्कारे सम्भवत्यदृष्टमारादुपकारकत्वं कल्पयितुमयुक्तम्। न च यूपवियोजितस्थाणुगतातिशयेन यूपसंस्कारो न सम्भवति। यूपसम्बन्धित्वेन तत्सम्भवात्। यथाचार्य्यस्य देवदत्तस्य शिरसोऽवतारिताया अपि स्रजः शिष्येण शुचिदेशेऽवस्थापनम्। तत्सम्बन्धादाचार्य्यस्यैव संस्कारोऽव-

कल्पते तद्वत्। अतो यूपसंस्कारार्थेयमाहुतिरयूपाङ्गि-
कायाः खलेवाल्या निवर्त्तते।

सप्तमाधिकरणमारचयति।

अन्त्यः प्रयाजः आरात् किमुपकार्य्यथ संस्कृतिः।
स्वाहाकारेति देवोक्तेर्मात्रवन्मन्त्रवर्णनात्॥ १२॥
आद्यो मैवं चतुर्थ्यादेरभावाद्यागमात्रके।
विधिस्तयात्र सौर्य्यादावर्थोऽग्न्यादिनिवर्त्तनम्॥ १३॥

दर्शपूर्णमासेष्टौ पञ्चमः प्रयाज एवमाम्नायते। स्वाहा-
कारं यजतीति। स किमिष्टेरारादुपकारक उताज्य-
भागादिषु यक्ष्यमाणानामग्न्यादिदेवतानां संस्कारक इति
संशयः। तत्र स्वाहाकारं यजतीति देवताविधिरिति
पूर्वपक्षाभिप्रायः। स्वाहाकारशब्देन देवतोच्यते। यागस्य
तदाकाङ्क्षणात्। न च प्रत्यक्षवचनमुपेक्ष्य मन्त्रवर्णाद्देवता-
कल्पनमुचितम्। नन्वेवं सति विधिमन्त्रयोर्वैयधिकरण्यं
प्रसज्येत। विधिना हि स्वाहाकाराख्यदेवता विहिता।
मन्त्रे तु यक्ष्यमाणा आज्यभागादिदेवता अग्न्यादिदेवताः
प्रतीयन्ते। स्वाहाग्निं स्वाहा सोमं स्वाहा प्रजापतिं
स्वाहाग्नीषोमावित्यादिको हि तन्मन्त्रः। नैष दोषः।
मातृशब्दवन्मान्त्रवर्णिकाग्न्यादिशब्दानामनेकार्थत्वसम्भवात्।
यथा मातृशब्दः प्रस्थादिना धान्यस्य मातारं जननीं चाचष्टे।
तथाग्न्यादिशब्दाः स्वाहाकाराख्यदेवतामाचक्षताम्।
न च स्वाहाकाराख्यदेवतैव संस्क्रियतामिति वाच्यम्।
संस्कृतायास्तस्या अन्यत्रोपयोगाभावात्। तस्मादिष्टेरा-
रादुपकारक इत्याद्यः पक्षोऽभ्युपेयः। मैवम्। चतुर्थ्या

तद्धितेन वा सर्वत्र देवता विधीयते। न चात्र तौ विद्येते। किं चायं विधिर्देवतायागावुभौ विधत्ते। देवताविशिष्ट-यागं वा। देवतामात्रं वा। यागमात्रं वा। नाद्यः। वाक्यभेदापत्तेः। न द्वितीयः। गौरवप्रसङ्गात्। न तृतीयः। अप्राप्तस्य यागस्याननुवाद्यत्वे सति तदनुवादेन देवताविध्ययोगात्। तस्माच्चतुर्थः परिशिष्यते। तत्र च द्वितीयान्तः स्वाहाकारशब्दः पौर्णमासीं यजत इत्यादाविव कर्मनामधेयं भविष्यति। तस्मादाज्यभागादि-देवतासंस्कार उत्तमः प्रयाजः। एवं च सति सौर्यादि-विकृतिषूत्तमप्रयाजमन्त्रे प्रधानदेवतावाच्यग्न्यादिपदपरि-त्यागो बाधविचारान्तर्गतस्याधिकरणस्य फलं भविष्यति।

अष्टमाधिकरणमारचयति।

आज्यभागो य आग्नेयः किं मुख्याग्नेः स संस्कृतिः।
आरादुतोपकारी स्यात् पूर्वन्यायेन संस्कृतिः॥ १४॥
निगदेऽग्नेर्द्विरुक्तत्वाद्विधाविकपदोक्तितः।
उपकारी ततः सोऽग्निः सौर्यादौ न निवर्त्तते॥ १५॥

दर्शपूर्णमासयोराम्नायते। आज्यभागावग्नीषोमाभ्यां यजतीति। तयोः प्रथम आग्नेयः। द्वितीयः सौम्यः। तत्र सौम्यस्य नास्ति सन्देहः। प्रधानदेवतासु केवलस्य सोमस्याभावात्। अस्मिंश्च केवल आग्नेयपुरोडाशो विद्यते। तस्मादाग्नेय आज्यभागः पुरोडाशदेवताया अग्नेः किं संस्कार उतेष्टेराराादुपकार इति संदिह्यते। तत्र यथोत्तमप्रयाजो मन्त्रोक्तानां यक्ष्यमाणदेवतानां संस्कारः। तथा प्रथम आज्यभागोऽप्यग्निमग्न आवहेति

निगदोक्तस्य प्रधानयागदेवतारूपस्याग्नेः संस्कार इति पूर्वपक्षः । अत्रोच्यते । निगदस्तावदेवं पठ्यते । अग्निमग्न आवह । सोममावह । अग्निमावहेति । अस्यायमर्थः । भो आहुत्यधिकरणभूताग्ने हविर्ग्राहिण आज्यभागद्वयाष्टाकपालपुरोडाशदेवतारूपानग्निः सोमोऽग्निरित्येतांस्त्रीनिहेष्टावावहेति । तत्र पुरोडाशदेवतारूपादग्नेः प्रथमाज्यभागदेवतारूपोऽग्निरन्य इति गम्यते । अन्यथावाह्यस्याग्नेरेकस्य द्विरुक्तिवैयर्थ्यात् । ततः प्रथमाज्यभाग इज्यमानस्याग्नेः पुरोडाशदेवतात्वाभात् तत्संस्कारकत्वमयुक्तम् । किं चाज्यभागविधावग्नीषोमाभ्यां यजतीति देवताद्वयं समस्तेनैकेन पदेनोच्यते । तत्र यथा सोमस्य यागं प्रति गुणत्वं भवताभ्युपगतम् । तथाग्नेरप्यभ्युपगन्तव्यम् । तच्च संस्कारपक्षे विरुद्धम् । संस्कारत्वे प्राधान्यावश्यम्भावात् । तस्मात् संस्कारपक्षासम्भवात् प्रथमाज्यभागो द्वितीयाज्यभागवददृष्टेरारादुपकारकः । एवं च सति सौर्य्ययागेऽपि प्रथमाज्यभागेऽग्निर्न निवर्त्तत इति बाधापवादो विचारफलं भविष्यति ।

नवमाधिकरणमारचयति ।

उपकारी संस्कृतिर्वा पुरोडाशः पशूदितः ।
तद्वितीत्या द्वयोर्दैवभेदादुपकृतिर्मता ॥ १६ ॥
संदंशान्निश्चितेऽङ्गत्वे दृष्टार्थः स्मृतिसंस्कृतिः ।
देवान्तरं चेद्विकृतावग्नीषोमनिवर्त्तनम् ॥ १७ ॥

ज्योतिष्टोमाङ्गभूताग्नीषोमीयपशौ श्रूयते । अग्नीषोमीयस्य वपया प्रचर्य्याग्नीषोमीयं पशुपुरोडाशमेकादश-

कपालं निर्वपतीति। तत्र पश्वाद्युक्तः पुरोडाशः स किं पशोरारादुपकारक उत पशुदेवतासंस्कार इति सन्देहः। तत्राग्नीषोमीयं पशुमालभेतेति पशुविधौ तद्धितोक्त्याग्नीषोमदेवता यथा गुणत्वेन पशौ विधीयते। तथा पशुपुरोडाशे। तथा सति विधिभेदेन विधेयदेवताभेदात् संस्कारो न युक्तः। गुणत्वं च संस्कार्यत्वविरोधीति पूर्वोक्तम्। तस्मात् पशोरारादुपकारक इति प्राप्ते ब्रूमः। देवताभेदवादिना तावदिदं वक्तव्यम्। पशुः पुरोडाशश्चेत्युभौ किं स्वतन्त्रौ यागौ। किंवाङ्गाङ्गिरूपौ। तत्रापि किमङ्गम्। किंवाङ्गीति। तत्र पशुधर्मैरुभयतः संदष्टस्य पुरोडाशस्य स्वतन्त्राङ्गित्वे प्रकरणपाठो बाध्येत। तद्दभिमतमुपकारकत्वं च न सिध्येत्। अङ्गत्वेऽपि दृष्टसम्भवाददृष्टकल्पनमन्याय्यम्। सम्भवति चात्र दृष्टम्। पुरोडाशवाक्यगतेन तद्धितान्तपदेन पशुवाक्यविहिताया देवताया अनुवादे सति तदीयस्मरणपूर्वकनिर्वापेण पशुदेवतायाः संस्क्रियमाणत्वात्। एवं च सति पशुवाक्ये गुणत्वेन प्रतीयमानाया अपि देवतायाः पुरोडाशवाक्ये प्राधान्यावगमात् संस्कार्यत्वमविरुद्धम्। तस्मात् पशुदेवतासंस्कारः पुरोडाशः। एवं च सत्यग्नीषोमीयपशुविकृतौ वायव्यपशावग्नीषोमीयदेवतायां निवृत्तायां तदीयपशुपुरोडाशेऽपि सा निवर्त्तत इति बाधः फलिष्यति।

दशमाधिकरणमारचयति।

सौर्ये चरौ चरुः स्थाली किंवान्नं लौकिकोक्तितः।
स्थाल्यसौ अपचं सौर्यं कपालविकृतित्वतः॥ १८॥

विद्वत्कृतिप्रसिद्धान्नं देवतातद्धितोक्तितः।
योग्यत्वेन प्रदेयं तत् पुरोडाशहविर्यथा ॥ १८ ॥

सौर्य्यं चरुं निर्वपेदित्यादिवाक्ये चरुशब्दः किं स्थालीं ब्रूते उतौदनमिति सन्देहः। तत्र लौकिका आ हिमवत आ च कुमारीभ्यः सर्वेऽपि स्वस्वदेशीयभाषाप्रसिद्ध्या यत् किञ्चिद् गकारवकाराद्यक्षरमुपरि प्रक्षिप्य चरुशब्दमल्पे पात्रे पाकाधिकरणे ताम्रादिमये प्रयुञ्जते। निघण्टुकारा-श्चोखा स्थाली चरुरित्येताञ्छब्दान् पर्य्यायत्वेनोप-दिशन्ति। तस्माच्चरुशब्दः स्थालीं व्यक्तिः। यदि तस्या अदनीयत्वाभावेन पुरोडाशवत् प्रधानयोग्यता न स्यात्। तर्हि मा भूत् पुरोडाशविजातित्वम्। कपालविजातित्वं तु भविष्यति। श्रपणयोग्यतायाः सद्भावात्। यथा कपा-लेषु हविः श्रप्यते। तथा स्थाल्यामपि श्रपयितुं शक्यते। तस्माच्चरुः स्थालीति प्राप्ते ब्रूमः। अन्नमेव चरुशब्देनोच्यते। कुतः। श्रुतिप्रसिद्धेः। आदित्यः प्रायणीयश्चरुरिति विधाय तद्वाक्यशेषे ह्यदितिमोदनेनेत्योदनशब्देन चरुरनूद्यते। यदि भोज्यान्ने चरुशब्दः क्वापि न प्रयुज्यते तर्ह्योदनविशेषवाची चरुशब्दोऽस्तु। तत्र विद्वत्प्रसिद्धेः। विद्वांसो याज्ञिकाः शब्दैक-गम्यधर्माधर्मव्यवहारिणः शब्दार्थविप्लवे तात्पर्य्यवन्तो नव-स्रावितान्तरूष्मपक्वे जीवतण्डुले विशदसिद्ध ओदने चरुशब्दं प्रयुञ्जते। सत्योदनवाचित्वे सौर्य्यमिति तद्धितोऽप्युपपद्यते। यथाग्नेय इति देवतातद्धितसंयुक्तपुरोडाशः प्रदेयद्रव्यम्। तथा चरुरपि। अन्ये च निघण्टुकारा हव्यपाके चरुः पुमानिति पठन्ति। तस्माच्चरुशब्दोऽन्नवाची।

एकादशाधिकरणमारचयति ।

चरुः कपाले पक्तव्यः क्वापि वा उचितेऽथवा ।

कपाले चोदकप्राप्तेरनपूपत्वतः क्वचित् ॥ २० ॥

स्थाल्यां चरुत्वयोग्यत्वात् कटाहे योग्यता न हि ।

चिन्ताद्वयफलं त्वत्र पेषणादिनिवर्त्तनम् ॥ २१ ॥

विषयसंशयनिर्देशकं पूर्वार्द्धं स्पष्टार्थम् । यथा प्रकृतौ पुरोडाशस्य कपाले पाकः । तथा विकृतौ चरोरित्याद्यः पूर्वं पक्षः । पुरोडाशस्यापूपत्वात् कपालगतोष्मणा पाकः सम्भवति । चरुस्त्वोदनत्वादुदकगतोष्मणा पक्तव्यः । अतोऽप्राकृतकार्य्यत्वाच्चोदकप्राप्तिर्नास्तीति यदुच्यते । तर्ह्योदनरूपस्य चरोरुदकधारणयोग्ये कटाहघटादौ यत्र क्वापि पाक इति द्वितीयः पक्षः । निरुप्तानां मुष्टिचतुष्टयपरिमितानां तण्डुलानामल्पेनैव पात्रेण पक्तुं योग्यत्वाच्चरोः स्थाल्यामेव पाक इति राद्धान्तः । पूर्वत्र चरुरोदन इति विवक्षितम् । न ह्योदने पेषणादिरस्ति । अतः पेषणादिनिवृत्तिः पूर्वचिन्तायाः साक्षात्फलम् । तद्द्वारेण चरुमिष्यादकस्थालीचिन्ताया अपि फलमित्युपचर्य्यते । पेषणादीन्यनुक्रामति ।

पेषणं यवनं वापस्तापश्चोपहितिः प्रथा ।

मार्जनाभ्यूहनज्वालास्तथा व्युद्धलसादनम् ॥ २२ ॥

पेषणं चूर्णनम् । यवनं पिष्टस्योदकमिश्रणम् । वाप उदकमिश्रणाय पिष्टस्य पात्रे प्रक्षेपः । तापः कपालानामङ्गारैः प्रतापनम् । उपहितिरङ्गारेषु कपालस्थापनम् । प्रथा कपालेष्ववस्थापितस्य पुरोडाशस्य हस्तसंघट्टनेन

सर्वेषु कपालेषु प्रसारणम्। मार्जनं श्लक्ष्णीकरणम्। अभ्यूहनं भस्मनाङ्गारैश्चोपर्य्याच्छादनम्। ज्वाला दर्भपिञ्जूलैः प्रज्वालनम्। व्युद्धृत्यसादनं कपालेभ्यः पुरोडाशं पृथक्कृत्यान्तर्वेद्यवस्थापनम्। ननु पेषणादिनिवृत्तिः पूर्वाधिकरणद्वयफलत्वे किमिति सूत्रकारः प्रत्येकं सूत्रैर्विचारितवानित्याशङ्क्य मन्दमतिव्युदासायेत्याह।

एतानि मन्दप्रज्ञस्य कर्त्तव्यानीति विभ्रमः।
अपूपस्यैव योग्यानीत्येतत् सूत्रैर्निरूपितम्॥ २३॥

इति माधवीये जैमिनीयन्यायमालाविस्तरे दशमस्याध्यायस्य प्रथमः पादः।

---

द्वितीयपादस्य प्रथमाधिकरणमारचयति।

नास्त्यस्ति वा कपालेषु पाकः श्रौतोऽप्यसम्भवी।
अदृष्टार्थतया स स्याद्गौणत्वे तु सुतरां भवेत्॥ १॥

घृतं श्रपयतीति प्रत्यक्षश्रुतिविहितोऽपि पाको विक्लेदनायोग्येषु न कर्त्तव्य इति पूर्वपक्षः। दृष्टार्थस्य विक्लेदनस्यासम्भवेऽप्यदृष्टार्थं कर्त्तव्यः। अन्यथा विधिवैयर्थ्यापत्तेः। यदा तु पाकशब्दः गौणवाची तदा न कोऽपि विवादः।

द्वितीयाधिकरणमारचयति।

उपस्तराभिघारौ स्तस्तेषु नो वा द्वयं भवेत्।
अदृष्टार्थमसंसक्तिदृष्टार्थो नेति लुप्यते॥ २॥

तेषु कपालेषूपस्तरणमभिघारणम्। चेत्युभयं पाकवद्दृष्टार्थं कार्य्यमिति पूर्वपक्षः। न तावत् पाकवदत्र प्रत्यक्षविधिरस्ति। चोदकस्तु दृष्टं द्वारमपेक्षते। प्रकृता·

वुपस्तरणाभिघारणयोर्दृष्टार्थत्वात् सूच्माणां पुरोडाशा वयवानां स्रुचि संसक्तिं निवारयितुं तदुभयं क्रियते। कपालानां तु संसक्तिप्रसङ्ग एव नास्ति। अतस्तन्निवारण लक्षणं द्वारं नास्तीत्युपस्तरणाभिघारणद्वयं लुप्यते।

तृतीयाधिकरणमारचयति।

भक्षो नास्त्यस्ति वा तेषु नास्ति प्रीतेरभावतः।

चुरुषाकारनिर्धीतवचनात् स्यात् प्रदानवत्॥ ३॥

यथा पुरोडाशे प्राशित्रादिभागो भक्ष्यते। न तथा तेषु कपालेषु भक्षोऽस्ति। प्रीतिरूपस्य दृष्टद्वारस्यासम्भवादिति पूर्वपक्षः। चुरुषाकारं भक्षयन्ति निर्धयन्तो भक्षयन्तीति प्रत्यक्षवचनमाम्नायते। द्रुतद्रवभक्षणे तद्रसस्वीकारे च यः शब्दविशेषस्तस्यानुकरणं चुरुषेति। घृते निकसेषु कपालेषु यल्लिप्तमाज्यं तदन्तर्नेतुमिव वालाचुरुषां कृत्वा तदाज्यं निःशेषेण पिबन्तो भक्षयेयुरित्यर्थः। अनदनीय-द्रव्याणामपि कपालानां यथा वचनात् प्रदानम्। तद्वद्-भक्ष्याणामपि भक्षणं भवेत्।

चतुर्थाधिकरणमारचयति।

सकृत्सहत्वयोरेकमेकधेत्यन्यमेव वा।

एकं नियामकाभावाद्बाधादन्यमेव हि॥ ४॥

तत्रैव कपालभक्षणे श्रूयते। एकधा ब्रह्मण उपहतीति। तत्रैकधेत्ययं धाप्रत्ययः प्रकारवाची सर्वेकवार-मित्यमुमर्थं वा बहूनां सहभावं वा ब्रूते। उपहारो भक्षणाय समर्पणम्। एकधेत्यनेन शब्देन सकृत्त्वसहत्वयोरन्य-तरद्विवक्षितमुत सहत्वमेवेति संशयः। नियामकाभावा-

दुभयोर्मध्ये यत् किञ्चिदन्यतरदिति पूर्वपक्षः। अबाधोऽत्र नियामकः। प्रकृताविडाप्राशित्रचतुर्धाकरणसंयुवाककालेषु चतुर्धाभिक्षणसिद्धये चत्वार उपहारा उपदिष्टाः। अत्रापि चोदकप्राप्ताः। तत्र सकृत्त्वपक्ष उपरितनास्त्रय उपहारास्तत्तत्कालविशेषाश्च बाध्येरन्। सहत्वपक्षे कालविशेषा एव बाध्यन्ते। न तु त्रय उपहाराः। तस्मादन्यपक्षरूपं सहत्वमेवैकधेत्यस्य शब्दस्यार्थः।

पञ्चमाधिकरणमारचयति।

सर्वं ब्रह्मण इत्यत्र ब्रह्मभागमुतैव वा।
अन्यभागस्यापि वाद्यो भागान्तरमबाधितुम् ॥ ५ ॥
सर्वत्वमन्यभागीयं ब्रह्मणेऽत्र विधीयते।
स्वभागीयं चोदकाप्तं बाध्यत्वामन्यभक्षणम् ॥ ६ ॥

आग्रयणभक्षणे एवेदमपरं श्रूयते। सर्वं ब्रह्मणे परिहरतीति परिहारः समर्पणम्। ब्रह्मोद्गातृहोत्रध्वर्यूणामेकैकस्य चतुर्षु कालेषु चत्वारो भक्षभागाश्चोदकप्राप्ताः। तत्र सर्वता किं ब्रह्मसम्बन्धिचतुर्भागविषयोतरसम्बन्धिभागचतुष्टयेऽपीति सन्देहः। अध्वर्य्युद्गातृहोत्रीणां ये ये चत्वारो भागास्तेषां बहूनामबाधनायाद्य पक्षोऽङ्गीकार्य्यः। तत्रैषा वचनव्यक्तिः। ब्रह्मसम्बन्धमनूद्य सर्वत्वपरिहारयोरेकमनुवादेऽन्तर्भाव्येतरद्विधेयम्। यद्ब्रह्मणे सर्वं तत् परिहरतीति। यद् ब्रह्मणे परिहरति तत् सर्वमिति। उभयथापि विधेर्ब्रह्मभागमात्रे पर्य्यवसानाच्चोदकप्राप्ता अन्यभागा अबाधिता भविष्यन्तीति पूर्वपक्षः। सर्वत्वपरिहारावनूद्य ब्रह्मसम्बन्धोऽत्र विधीयते यत् परिहर्त्तव्यं सर्वं तद्

ब्राह्मण इति वचनव्यक्तिः। तत्र ब्रह्मभागानामितरभागानां च यत् सर्वत्वं तस्य ब्रह्मसम्बन्धे सति ब्रह्मभागानां ब्रह्मसम्बन्धस्य चोदकादेव प्राप्तत्वात्तत्रानर्थको विधिरन्यभागानां ब्रह्मसम्बन्धविधाने पर्य्यवस्यति। तस्मादन्येषां भक्षणं बाध्यते।

षष्ठाधिकरणमारचयति।

युगपत् स्वस्वकाले वा तत् सर्वं भक्षयेदयम्।
अविलम्बादाद्यिमोऽन्यस्तत्तत्कालमबाधितुम्॥ ७॥

अतीताधिकरणद्वयेन युगपत् सर्वं ब्रह्मणे समर्पयेदित्युक्तम्। तत्र भक्षयितुं युगपत् समर्पितस्य सर्वस्य मध्ये कियदपि भक्षयित्वावशेषितस्य विलम्बे कारणाभावाद्युगपदित्याद्यः पक्षः प्राप्नोति। चोदकप्राप्तस्य तत्तत्कालस्याबाधो विलम्बे हेतुः। तस्मात् स्वस्वकाल इत्यन्यः पक्षोऽभ्युपेयः।

सप्तमाधिकरणमारचयति।

चतुर्धाकृतिनिर्देशौ तद्भक्षे स्तो न वाग्रिमः।
चोदकात्तौ तु बह्वर्थव्यवस्थार्थत्वतोऽत्र न॥ ८॥

प्रकृतौ पुरोडाशं चतुर्धा कृत्वा पश्चादिदं ब्रह्मण इत्यादिना तत्तद्भागान्निर्दिशेत्। तौ चतुर्धाकरणनिर्देशौ पूर्वोक्ते ब्रह्मभक्षे चोदकप्राप्तावित्यग्रिमः पक्षः प्राप्नोति। तत्र चतुर्धाकरणं बह्वनामृत्विजां विभागार्थम्। निर्देशो भागानामसाङ्कर्य्यार्थः। अत्र तु ब्रह्मण एकत्वात्तावुभौ न विद्येते।

अष्टमाधिकरणमारचयति।

ऋत्विग्दानमदृष्टार्थमानत्यै वाग्रिमः श्रुतेः ।
वैरूप्यान्नियमाच्चैवं दृष्टत्वाद्दानतः श्रुतिः ॥ ९ ॥
भृतौ च नियमादेतददृष्टं स्याद्विरूपता ।
वचनात्तेन सत्रेषु स्वामिनां न भृतिः क्वचित् ॥ १० ॥

ऋत्विग्भ्यो दक्षिणां ददातीति प्रकृतौ श्रूयते । तत् किमदृष्टार्थमानत्यर्थं वेति संशयः । भृत्यान् परिक्रीय वशीकारश्चानतिः । अदृष्टार्थं तत् स्यात् । अवहिरथ्यादीनामदृष्टार्थत्यागे दानशब्दस्य प्रसिद्धत्वात् । यद्यत्र दानं भृतिः स्यात् । तदानीमल्पाधिककर्मानुरूपेण द्रव्यं देयं स्यात् । वैरूप्यं त्वत्र दृश्यते । स्वल्पकर्मणि त्रैधातवीये सहस्रं देयम् । अधिककर्मण्यूतपेये स्वल्पां सोमचमसदानं प्रदीयते । तथा द्वादशशतादिपरिमाणनियमो मन्त्रवत्त्वनियमश्च भृतौ नोपपद्यते । कर्मकारानुमत्या न्यूनाधिकभावसम्भवात् । तक्षरजकादिभृतौ मन्त्रादर्शनाच्च । तस्माददृष्टार्थमित्यग्रिमः पक्षः प्राप्नोति । मैवम् । आनतेर्दृष्टप्रयोजनत्वात् । दानश्रुतिस्तु दृष्टार्थायां भृतावप्यस्ति । भृतिर्देयेति प्रयोगात् । परिमाणमन्त्रवत्त्वनियमाददृष्टमस्तु । दृष्टस्याभावात् । वैरूप्यं तु वचनबलादभ्युपगम्यते । दक्षिणाया भृतिरूपत्वं प्रत्यक्षवेदवाक्यादप्यवगम्यते । दीक्षितमदीक्षिता दक्षिणापरिक्रीता ऋत्विजो याजयेयुरिति । तस्मादृत्विग्दानमानत्यर्थम् । एवं च सति सत्रेष्वृत्विजां यजमानत्वाद्भृतिरूपा दक्षिणा न कापि देयेत्येतद्विचारफलं द्रष्टव्यम् ।

नवमाधिकरणमारचयति ।

क्रयाय प्रतिपत्त्यै वा चमसेडादिभक्षणम् ।
क्रयाय पूर्वपक्षोऽस्मिन् याग्यौ खत्ववर्जनात् ॥ ११ ॥
अक्रीतयजमानस्य भक्षसत्त्वाच्च तेन सा ।
प्रतिपत्तिः संस्कृतित्वात् सत्रेषु न निवर्त्तते ॥ १२ ॥

अस्ति सोमे चमसभक्षः । अस्ति चेष्टाविडाप्राशित्रादिभक्षः । तत्र भक्षेण प्रीतानामृत्विजामानतिसम्भवाद् दक्षिणान्यायेन क्रयार्थं भक्षणमिति पूर्वपक्षः । यागदेवतायै सङ्कल्पिते द्रव्ये स्वत्वमलभमानो यजमानो न क्रेतुं शक्नोति । किञ्च यजमानपञ्चमाः सम्भूयेडां भक्षयन्तीत्यक्रीतस्यापि यजमानस्य भक्षः श्रूयते । तत्साहचर्यादृत्विजामपि भक्षणं न क्रयार्थमिति गम्यते । तस्मात् प्रतिपत्त्यर्थो भक्षः । तेन क्रयार्थत्वाभावेन परिशिष्यमाणा सा प्रतिपत्तिर्यागोपयुक्तद्रव्यसंस्कारत्वेन सत्रेषु न बाध्यते ।

दशमाधिकरणमारचयति ।

ऋत्विजां वरणं सत्रे कार्य्यं नो वात्र सोमवत् ।
कार्य्यं मैवं स्वकर्मत्वात् क्रयार्था प्रकृतौ वृतिः ॥ १३ ॥

अग्निर्मे होतेत्यादिमन्त्रैः सोमे वरणमाम्नातम् सोमवत् सत्रेऽपि तत् कार्य्यम् । अन्यथा वरणरहितानामृत्विजामभावात् सत्रं न सिध्येत् । अत एव तत्सिद्धये सत्रप्रकरणे ये यजमानास्त ऋत्विज इति स्वतः प्रवृत्तानपि यजमानाननूद्य वरणसाध्यमृत्विक्त्वं तेष्वाधातव्यमिति विदधाति । तस्मादृत्विग्वरणं सत्रे कार्य्यम् । मैवम् । सत्र अनुष्ठातृणां सर्वेषां स्वकर्म । न हि स्वकर्मणि क्रयार्थं वरणमपेक्ष्यते । क्रयार्थं हि प्रकृतौ वरणम् । दानमेव

क्रयार्थम्। वरणं त्वदृष्टार्थमिति चेत्। नैवम्। वरणस्य भविष्यद्दानसूचनेनोत्साहजननार्थत्वात्। अन्यथा वरणकाले क्वचित् कल्याणी दक्षिणा इत्यृत्विजां प्रश्नः कथं सगच्छेत। न च सत्रासिद्धिः शङ्कनीया। तत्र वक्तव्यम्। ऋत्विक्त्वं नाम किं कर्मकरत्वमुत यागकर्तृत्वमिति। आद्ये कर्मकराणां स्वामित्वाभावेन ये यजमानास्त ऋत्विज इति विरुध्येत। द्वितीये तु स्वत एव याग कर्तृत्वाद्वरणमन्तरेणाप्यृत्विक्त्वं सिध्यतीति। ईदृशमेवार्त्विज्यं वचनेन विवक्षितं। तस्माद्दानवद्वरणं सत्रे लुप्यते।

एकादशाधिकरणमारचयति।

क्रयः कार्यो न वा सत्रे निषेधात् कौतिकल्पनम्।
नित्यानुवादेनात्मत्वे न क्रयो वरणं यथा॥ १४॥

सत्कारपुरःसरमग्निहोत्रादिप्रार्थना वरणम्। तस्य चिकीर्षुर्यजमानो वरणीयेभ्यो ब्राह्मणेभ्यः सोमं ब्रूयात। तेभ्यः सोमं प्राहेत्यापस्तम्बवचनात्। सोमाभिधानप्रकारश्चान्त कल्पे दर्शितः। ज्योतिष्टोमेनाग्निष्टोमसंस्थेन रथन्तरपृष्ठेन गवां द्वादशशतदक्षिणेनाहं यक्ष्ये। तत्र त्वमुद्गाता भवेति। तत्र देयदक्षिणाद्रव्यनिश्चयेन ब्राह्मणाः स्वकीयाः कर्मविशेषे नियोक्तुं योग्या भवन्ति। सोऽयं क्रयः। स च प्रकृताविव सत्रे कार्यः। न च दक्षिणादानस्य निराकृतत्वेन देयद्रव्यनिश्चये लुप्ते सति तत्साध्यः क्रयो लुप्येतेति शङ्क्यम्। निषेधमुपजीव्य क्रयाऽनुष्ठानस्य कल्पयितुं शक्यत्वात्। तथा हि। न ह्यत योऽदीयते न

वासो न हिरण्यमिति सत्त्रे गवादिदानं निषिध्यते। स च निषेधः सत्यां प्रसक्तौ सम्भवति। ततः सोमे देयद्रव्याणां सत्त्रे दानप्रसक्तिरभ्युपेया। सोमे च देयद्रव्याण्येवं श्रूयन्ते। गौश्चाश्वश्चाश्वतरश्च गर्दभाश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणेति। तत्र गोवासोहिरण्यानां विशेषतो निषेधेन द्रव्यान्तराणां चोदकप्राप्तानामभ्यनुज्ञा प्रतीयते। ततो देयद्रव्यसद्भावात् क्रयः कार्य्य इति पूर्वपक्षः। न ह्यत्र गौर्दीयत इत्यनेन निषेधो न विधीयते। किंतु पूर्वोक्तेन निर्णयेन प्राप्त एव दानाभावोऽनूद्यते। अदक्षिणानि सत्त्राणीत्याहुर्न ह्यत्र गौर्दीयत इति श्रुतौ परोक्षप्रत्ययस्य प्रसिद्धिवाचकहिशब्दस्य च प्राप्तिगमकत्वात्। तस्मान्नित्यानुवादस्य कल्पकत्वाभावाद्धरणवत्तद्विनाभूतः क्रयोऽपि न कार्य्यः।

द्वादशाधिकरणमारचयति।

सत्त्राङ्गं स्यान्न वा पृष्ठशमनीयेऽप्यथाङ्गता।
सौत्रामण्यादिवन्मैवं त्यागादूर्ध्वं विधानतः॥ १५॥
श्रूयमाणा दक्षिणेयं पूर्वपक्षेऽत्र धर्मकृत्।
परिक्रयार्था सिद्धान्ते निमित्तं स्यात् समापनम्॥ १६॥

अस्ति सोमविकृतिः पृष्ठशमनीयनामको यागः। सत्त्रादुदवसाय पृष्ठशमनीयेन ज्योतिष्टोमेन सहस्रदक्षिणेन यजेरन्निति। उदवसायेत्यनेन ल्यप्प्रत्ययेन सत्त्रसमाप्तिपूर्वकालत्वं सत्त्रपृष्ठशमनीययोरेककर्त्तृकत्वं च प्रतीयते। यथा सत्यग्निं चित्वा सौत्रामण्या यजेत। वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत। संस्थाप्य पौर्णमासीमिन्द्राय वैमृधाय

पुरोडाशमेकादशकपालं निर्वपतीत्यत्र सौत्रामण्यादीनां यथा चयनाद्यङ्गत्वम्। तथा पृष्ठशमनीयस्य सत्त्राङ्गता भविष्यति। अङ्गत्वे सति श्रूयमाणा सहस्रदक्षिणा सत्त्रेष्विव परिक्रयणार्था न भवतीत्यदृष्टार्थताभ्युपगम्यते। फलं च न कल्प्यम्। सत्त्रफलेनैव फलवत्त्वसिद्धेरिति पूर्वपक्षः। उदवसानशब्दस्य त्यागवाचित्वात् सत्त्रत्यागादूर्ध्वं विधीयमानः कथं सत्त्राङ्गं भवेत्। अग्निं चित्वेत्यादौ त्यागशब्दाभावात्तास्ति वैषम्यम्। एककर्तृकत्वपूर्वकालत्वे तु निमित्तविवक्षयाप्युपपद्येते। सत्त्रसमापनं निमित्तीकृत्य विधाने गृहदाहेष्टिवत् फलनैरपेक्ष्याद्विश्वजिन्न्यायेन फलं न कल्प्यम्। सत्येवमनङ्गत्वे सोमवद्दक्षिणा परिक्रयार्था। दक्षिणायाः श्रौतत्वेनालोपः पूर्वोत्तरपक्षयोः समानः। न्यायेनाप्यलोपः सिद्धान्ते विशिष्यते।

त्रयोदशाधिकरणमारचयति।

तत्रर्त्विजः सत्त्रिणः किमन्ये वा स्युर्न्व्युत्थिताः।
त एव यष्टृभेदेऽपि क्रीतत्वादृत्विजः परे॥ १७॥

यस्मिन् पृष्ठशमनीये सत्त्रिणामेवार्त्विज्यम्। उदवसायेति ल्यबन्तशब्देन कर्त्रैक्यप्रतीतेरिति पूर्वपक्षः। उदवसाय यजेरन्निति समभिव्याहारात् सत्त्रिभिः कर्तृत्वं यष्टॄणां प्रतीयते न चर्त्विजो यष्टारः। यजमानेन तेषां दक्षिणया क्रीतत्वात्। तस्मादृत्विजः सत्त्रिभ्योऽन्ये।

चतुर्दशाधिकरणमारचयति।

सकृद्ग्वैकेकशो वात्र यष्टॄणां वाह्नं कृतः।
द्विदागवद् बहुत्वस्य प्राप्तिरन्त्योऽस्तु सोमवत्॥ १८॥

अस्मिन् पुलग्रमनीये सत्रिणां सम्भूय यजमानत्वमुत प्रत्येकमिति संशयः। सम्भूयेत्याद्यः पक्षः प्राप्नोति। कुतः। यजेरन्निति बहुवचननिर्देशात्। एतेन राजपुरोहितौ सायुज्यकामौ यजेयातामित्यत्रोपादेयगतद्वित्वस्य विवक्षितत्वादुभौ सम्भूय यष्टारौ। तद्वत्रापि। स्यात् मैवम्। उदवसायेत्यत्रोदवसातॄणां यद् बहुत्वं प्राप्तं तदेव तत्समानाधिकृतेन यजेरन्नित्यनेनानूद्याप्राप्तो यागो विधीयते। द्वियागे तु द्वित्वमप्यप्राप्तत्वेन विधीयत इति वैषम्यम्। ततो ग्रहं संमार्ष्टीत्यत्र ग्रहैकत्वमिवोद्देश्यगतत्वाद्यजेरन्निति बहुत्वमविवक्षितम्। एवमपीच्छया द्वाभ्यां बहुभ्यो वा यष्टुं शक्यत्वादेकैकशो न नियम इति चेत्। न। चोदकेन तन्नियमसिद्धेः। सोमे तद्दर्शनात्। तस्मात्सत्रिणः प्रत्येकं यजेरन्नित्यन्तः पक्षोऽस्तु।

पञ्चदशाधिकरणमारचयति।

अश्वौ पुरुषौ वानत्ये धर्म्मार्थे वानतिर्यतः।
इष्टिर्न सत्त्रं धर्म्मार्थे सत्त्राङ्गं वाहिर्न हि ॥ १८ ॥

सारस्वतसत्त्रे कामिष्टावश्वौ पुरुषौ धेनुके दत्त्वेति तुरगमनुष्यगोजातीयानां स्त्रीणां दक्षिणात्वेन दानं श्रुतम्। तच्चानत्यर्थम्। कुतः। इष्टेरसत्त्रत्वात्। सत्त्रत्वे तु यजमानानामेवार्त्विज्याद्दानसाध्यक्रयाभावेन तत्साध्यमानमसत्त्वि स्यात्। इष्टिस्तु न सत्त्रम्। तल्लक्षणाभावात्। आसीरन् पेयुरित्यनयोरन्यतरचोदना तल्लक्षणम्। इह त्विष्टिलक्षणभूता निर्वपतिचोदना पठ्यते। अग्नये कामायाष्टाकपालं निर्वपति। इष्टौ च यजमानादृत्विजां पृथक्त्वाद्दा-

नत्यर्थं दानमिति पूर्वपक्षः। धर्मार्थं दानम्। कुतः। दृष्टेः स्वरूपेणासत्त्वेऽपि सत्राङ्गत्वेनेतराङ्गेष्विवेष्टाव-प्यस्यां यजमानानामेवार्त्विज्यात्। ननु द्वादशाहः सत्राणां प्रकृतिः। न च तत्र कामेष्टिरस्ति। अतो न सत्रे चोदके-नेष्टौ यजमानार्त्विज्यप्राप्तिः। इष्टिचोदकेन त्वन्य एवर्त्विजः प्राप्नुवन्ति। मैवम्। सत्रप्रयोगान्तःपातित्वेन प्रसङ्गाद्य-जमानकर्तृकत्वसिद्धेः। तस्मादत्र दानमदृष्टार्थम्।

षोडशाधिकरणमारचयति।

क्रीत्यै धर्माय वा द्वेष्ये दानं स्याद्दक्षिणोक्तितः।
क्रयाय मैवं द्वेष्यत्वं नर्त्विजो धर्मकृत्ततः॥ २०॥

दर्शपूर्णमासयोः श्रूयते। यदि पशोः संज्ञपयन् कपा-लमभि जुहुयाद्वैश्वानरं द्वादशकपालं निर्वपेत्तस्यैकहायनी गौर्दक्षिणा तां द्वेष्याय दद्यादिति। अत्र। यजमानेन द्वेषणीये पुरुषे यद्दानं तत् क्रयार्थम्। दक्षिणाशब्देन व्यव-हृतानां प्रकृतौ क्रयार्थत्वदर्शनादिति पूर्वपक्षः। न तावदृत्विजो द्वेष्यत्वं युक्तम्। ऋत्विगाचार्यौ नाभिचरितव्या-विति शास्त्रात्। यस्तु द्वेष्यः पुरुषः। नासावृत्विक्त्वाभावेन यागे कर्मकरत्वाभावात् क्रयमर्हति। तस्मादिदं दानम-दृष्टार्थम्।

सप्तदशाधिकरणमारचयति।

अस्थियागः किमस्थ्नां स्याज्जीवतां वाऽस्थिशब्दतः।
अस्थ्नां मैवमनर्हत्वाद्यजन्ते जीविनोऽस्थितः॥ २१॥

इदं श्रूयते। यदि सत्राय संदीक्षितानां यजमानः प्रमीयेताथ तं दग्ध्वा कृष्णाजिनेऽस्थीन्युपनह्य योऽस्य

नेदिष्ठः स्यात्तं तस्य स्थाने दीक्षयित्वा तेन सह यजेरंस्ततः संवत्सरेऽस्थीनि याजयेयुरिति। अत्र संवत्सरेऽतीते यो यागः श्रुतस्तत्रास्थीन्येव कर्तृणि। कुतः। "अस्थिशब्दस्य तत्र मुख्यत्वात्। मैवम्। अचेतनानामस्थ्नां यष्टुमनर्हत्वात्। जीवतामप्यश्रुतत्वादयुक्तोऽयं याग इति चेत्। न। अस्थिशब्दस्य तल्लक्षकत्वात्। एतदस्थिमता सह पुरुषेण पूर्वं यष्टुं प्रक्रान्तत्वेन लक्ष्यलक्षकयोरस्ति सम्बन्धः। जीवतां यष्टृत्वाद्याजयेयुरित्युक्ता णिजर्थभूताः स्युः। न खल्वन्ये सम्भवन्ति। अस्य यागस्य सत्राङ्गत्वादिति चेत्। तर्हि परस्परं याजकाः सन्तु। तस्माज्जीवतामयं यागः।

अष्टादशाधिकरणमारचयति।

अस्थिकर्तृमते चिन्तापञ्चकं स्याज्जपादिकम्।

न वा तच्चोदकात् कुर्युर्न कुर्युरसम्भवात्॥ २२॥

अस्थीनि कर्तृणीति पूर्वाधिकरणे पूर्वपक्षिणो मतम्। तदनुसारेणाधिकरणपञ्चकं क्त्वाचिन्तारूपेण प्रवर्तते। प्रकृतौ यजमानस्य मन्त्रजपः केशश्मश्रुवपनं दीक्षानियमा इत्येवमादयः कर्तव्याः सन्ति। तत् सर्वं चोदकप्राप्तमस्थीनि कुर्युरिति पूर्वपक्षः। अचेतनानां तदसम्भवान्न कुर्युरिति राद्धान्तः।

एकोनविंशाधिकरणमारचयति।

औडुम्बरीमानशुक्रस्पर्शो नातास्ति तद्द्वयम्।

पूर्ववन्नेति चेन्नैवमचैतन्येऽपि सम्भवात्॥ २३॥

प्रकृतावौडुम्बर्याः शाखाया यजमानप्रमाणत्वम्। तथा शुक्रग्रहस्य यजमानस्पर्शः। तावभावचेतनानामस्थ्नां

जपादिवच विद्येते इति पूर्वपक्षः । अचेतनेऽपि दण्डे नैव मातुं स्प्रष्टुं च शक्यत्वाद्विद्येते इति राद्धान्तः ।

विंशाधिकरणमारचयति ।

वृष्टिकामः सद्यो नीचैरिति कामोऽस्ति वा न वा ।
विद्यते स्वर्गवत्कामश्चेतनस्यस्ततो न हि ॥ २४ ॥

यदि कामयेत वर्षुकः पर्जन्यः स्यादिति नीचैः सदो मिनुयादित्यत्र सदोनामकस्य मण्डपस्य नीचमानेन गुणेन वृष्टिः फलतीत्युक्तम् । तस्यां वृष्टौ कामः स्वर्गवदस्यां विद्यत इति मन्दप्रज्ञस्य पक्षः । कामस्य चेतनधर्मत्वान्नास्तीति राद्धान्तः ।

एकविंशाधिकरणमारचयति ।

सूक्तवाकाशासनं स्यान्न वा नित्यप्रवृत्तितः ।
स्यान्नैवं फलनिर्देशात् फलेच्छास्यां न युज्यते ॥ २५ ॥

इदं द्यावापृथिवी भद्रमभूदित्यादिः सूक्तवाको होत्रा पठ्यते तत्रैवं श्रूयते । आशास्तेऽयं यजमानोऽसौ । आयुराशास्ते सुप्रजास्त्वमाशास्त इत्यादिः । तत्र सूक्तवाकगतोऽयं यजमानाशासनप्रतिपादको मन्त्रभागः । तमस्मिन्यस्मिन् होता पठेन्न वेति संशयः । अस्मिन्नङ्गतायाः प्रायणीयादेरिष्टेः प्रस्तरप्रहरणमङ्गम् । तस्य नित्यत्वात्तस्मिन् विनियुक्तस्य सूक्तवाकमन्त्रस्य नित्यप्रवृत्तस्य तद्भागपाठोऽपि स्यादिति पूर्वपक्षः । यथा स्वर्गकाम इत्यत्र कर्मियोगेन साध्यताप्रतीतेः स्वर्गशब्देन फलनिर्देशः । एवमासाशासयोगादायुरादिशब्दैः फलं निर्दिश्यते । फलेच्छा चास्यां न युक्ता । तस्मात्तद्भागपाठो बाध्यते ।

द्वाविंशाधिकरणमारचयति।

होतृकामो भवेन्नो वा होतुर्जीवनतो भवेत्।
यजमानेष्टमेवासौ कामयेत्तेन नास्त्यसौ॥२६॥

प्रकृतावस्ति होतृकामः। यं कामयेत वसीयान् स्यादित्युच्चैस्तरां तस्य वषट् कुर्य्यादित्यादिः। सोऽस्मिन्यज्ञेऽपि निर्दिश्यताम्। कामयितुर्होतुर्जीवतस्तत्सम्भवादिति पूर्वपक्षः। यां वै काञ्चन यज्ञ ऋत्विज आशिषमाशासते यजमानायैव तामाशिषमाशासत इति श्रुतेर्यजमानेष्टमेव होत्रा कामयितव्यम्। अस्थीनि त्वचेतनान्यिष्टुं न शक्नुवन्ति। तस्मादत्र नास्ति होतृकामः।

तदेतदधिकरणपञ्चकं जीवतामयं याग इत्यस्मिन्सिद्धान्तपक्षे विरुद्धम्। अचेतनत्वमुपजीव्य प्रवृत्तत्वात् तस्मात्तत्पक्षे चोदकप्राप्तानां यथोक्तधर्माणां नास्ति बाधः।

त्रयोविंशाधिकरणमारचयति।

सर्वस्वारो मृतेरूर्ध्वं त्यज्यतां वा समाप्यताम्।
त्यज्यतां स्वाम्यभावेन प्रैषादन्यैः समाप्यताम्॥२७॥

सर्वस्वाराख्यः क्रतुरेवं श्रूयते। मरणकामो ह्येतेन यजेत यः कामयेतानामयः स्वर्गं लोकमियामिति। तस्य क्रतोस्तृतीयसवने यजमानस्याग्निप्रवेश आम्नायते आर्भवे स्तूयमान औदुम्बरीं दक्षिणेन देशेनाहतेन वाससा परिवेष्ट्य ब्राह्मणाः समापयत मे यज्ञमिति संप्रेष्य संविशतीति। तत्र संशयपूर्वोत्तरपक्षा विस्पष्टाः।

चतुर्विंशाधिकरणमारचयति।

किं कार्य्यमत्र किं बाध्यमिति प्रश्ने तदुत्तरम्।

कृत्वर्थमस्थिवत् कार्य्यं बाध्यते मृतकर्त्तृकम् ॥ २८ ॥

मरणादूर्ध्वं समापनायः सर्वस्वारशेषो विषयः। तत्र बाध्याबाध्यानध्यवसाय. संशय.। अनध्यवसायस्य संशयत्वं न्यायविद्भिर्दर्शितम्। अनवधारणत्वाविशेषादज्ञानाध्यवसाययोर्न संशयादर्थान्तरभाव इति विप्रतिपत्त्यभावादस्यत्र पूर्वपक्षः। यद्वा नियामकाभावादिच्छया किमपि कार्य्यं किमपि बाध्यमिति पूर्वपक्षः। अस्थिकर्त्तृत्वपक्षे शुक्रस्पर्शादिकं कृत्वर्थं योग्यत्वात् कार्य्यम्। मृतयजमानकर्त्तृकं मन्त्रजपादिकमयोग्यत्वात् बाध्यमिति निर्णीतम्। एवमत्रापि यद्योग्यं कृत्वर्थं तत् कार्य्यम्। यदयोग्यं यजमानकर्त्तृकं तद् बाध्यम्।

पञ्चविंशाधिकरणमारचयति।

मृतः प्रागायुराशीर्वा स्याद्वा नो तिकामनात्।

प्रागार्भवाजीवनार्थमायुराशासनं भवेत् ॥ २९ ॥

होत्रा पठितव्ये सूक्तवाके योग्यमायुराशास्त इति भागो यजमानविषयः। स किं सर्वस्वारे यजमानमरणात् पूर्वं वर्जनीयः पठितव्यो वेति संशयः: मुमूर्षोर्यजमानस्यायुर्निरपेक्षत्वेनार्थलोपाद्वर्जनीय इति पूर्वः पक्षः। आर्भवाख्यस्य पवमानस्य स्तूयमानत्वं यजमानस्य मरणकालः। ततः पूर्वं जिजीविषुत्वात् पठितव्यः।

षड्विंशाधिकरणमारचयति।

आत्रेयदानतूं याज्याहर्त्तासवेषु नाचरेत्।

कुर्य्याद्दानतिलोपाद्वो धर्मार्थं क्रियतां द्वयम् ॥ ३० ॥

प्रकृतौ हिरण्यमात्रेयाय ददातीति श्रुतं ऋत्विगान्या वरणं चास्ति तदुभयं सत्रेषु न कार्य्यं द्वारभूताया आनतेर्लुप्तत्वात् यद्यप्यात्रेयः कर्मकरेभ्यो बहिर्भूतस्तथापि तद्दानेन यजमानस्योदार्य्यं पश्यन्तः ऋत्विजो धनकामा आनता भवन्ति वरणस्य चानत्यर्थत्वं ऋत्विग्वरणे प्रारम्भ कालीने प्रसिद्धं तस्माद्दानत्वार्थमुभयं नाचरेदिति पूर्वः पक्षः। प्रथमवरणेनैवानतिसिद्धिः कालान्तरे वरणमदृष्टार्थं धनकामानामपि कर्मकराणां प्रारम्भकाले स्वयमङ्गीकृताया भृतेरधिकं धनं न लभ्यत इत्यात्रेय दानदर्शनं नानतिकरं तस्माददृष्टार्थमुभयं कर्त्तव्यम्।

सप्तविंशाधिकरणमारचयति।

लुप्यते पवमानेष्टौ निर्वापः क्रियतेऽथवा।
लुप्यते साधनाभावात्तेन मुख्ये न लुप्यते॥ २१॥

आधानप्रकरणगतायां पवमानेष्टौ निर्वापसाधनं नास्ति। अग्निहोत्रहवणी हि प्रकृतौ निर्वापसाधनं सा चाधानकालेन सम्भवति। अग्निहोत्रस्याधानोत्तरकालीनत्वेन तद्धोमसाधनभूतायास्तस्या अपि तथात्वादिति प्राप्ते ऽभिमः। मुख्यो निर्वापस्तं प्रति गुणभूताग्निहोत्रहवणी न हि गुणलोपेन मुख्यो लोपमर्हति किं चाधनकाले स्वरूपेणैवा विद्यमानाया अग्निहोत्रहवण्याः साधनत्वं दूरापेतं ततः साधनाभावादित्यनुपन्यासः तस्मान्न निर्वापो लुप्यते।

अष्टाविंशाधिकरणमारचयति।

सत्रे सप्तदशाभिर्यैश्चरुस्तत्र मुष्टयः।

चत्वारः सतिर्नोवीतः स्यादेकं मुष्टिसंख्ययोः ॥ ३१ ॥
तत्किमाद्यश्चोदितत्वाच्छरावापूरणान्नमः ।
द्वितीयोऽस्तीति चेन्नैवं द्वित्वेऽपि बाधगौरवात् ॥ ३२ ॥
तृतीयोऽस्त्वेककर्तार्थोऽत्र धर्मः संख्यैव लभ्यताम् ।
क्रियायोगात्र तद्धर्मः प्राथम्यात्मानुग्रहात्ताम् ॥ ३४ ॥

प्रकृतौ चतुरो मुष्टीन्निर्वपतीति मुष्टिगतसंख्या श्रुता तथा वाजपेये विकृतिरूपः सप्तदशशरावश्चरुः श्रुतः; तत्र चरौ मुष्टिसंख्ये द्वे अपि विद्यते किं वापि न विद्येते इतौ अथैकमस्त्यन्यन्नास्ति यदेकं तदापि किं मुष्टिरेव किं संख्यैवेति संशयः चोदकप्राप्तेरुभयमस्तीत्याद्यः पक्षः । प्राप्नोति चतुर्भिर्मुष्टिभिः सप्तदशशरावपूरणसमर्थस्य चरोर्निष्पत्तिः सम्पन्ना न युक्तस्ताहि मुष्टिसंख्ये द्वे अपि बाध्ये इति द्वितीयः पक्षोऽस्त्विति चेत् नैवम् । एकतरबाधेन पूरणाभावपरिहारे सिद्धे सति द्वयोर्बाधे गौरवप्रसङ्गात् । नन्वतिदिष्टेन शरावद्वयेनातिदिष्टं मुष्टिद्वयं बाध्यते तथा सप्तदशसंख्यया चतुःसंख्या बाध्यत इत्युभयबाधोऽवश्यम्भावी नैवम भिन्नविषयत्वेन बाधासम्भवात् शराव-सप्तदशसंख्ये यागसंबद्धे मुष्टिचतुःसंख्ये तु निर्वापसंबद्धे इति विषयभेदः । कथं तर्हि तत्र बाधप्रसङ्गः अन्यथानुपपत्त्येवेति वदामः अनुपपत्तिश्च पूरणासम्भवे दर्शिता पूरणं चैकबाधेनाप्युपपद्यते मुष्टिबाधे यथोचितं चतुःसंख्यापितैः कुडवादिभिः पूर्त्तिः स्याच्चतुःसंख्याबाधे यथोचितसंख्यापितैर्मुष्टिभिः पूर्त्तिर्भविष्यति । एवं तर्ह्येकतरो बाध्य इति तृतीयः पक्षोऽस्तु तत्र संख्याधर्मो मुष्टिधर्मः तदा

सति मुष्टौ लुप्ते सति निराश्रयस्य धर्मस्यासिद्धेः संख्यालोपोऽप्यवश्यम्भावी संख्यायां तु लुप्तायां मुष्टिः शक्योत्थवस्थात् तस्मात् संख्यैव लुप्यतामिति प्राप्ते ब्रूमः। चतुःसंख्या तावन्न मुष्टिनान्वेति। कर्मकारकवाचि द्वितीयाविभक्त्यन्तस्य चतुरशब्दस्य सकर्मकेण निर्वपति धातुना साक्षादन्वयात् अतश्चतुःसंख्या न मुष्टिधर्मः। पाक्षिकान्वयेन तु मुष्टिविशेषणं भविष्यति। संख्यामुष्ट्योः क्रियासम्बन्धे समाने सत्यपि प्रथमश्रुतत्वात् मानुगृह्यते। चरमश्रुतत्वेन दुर्बलो मुष्टिर्बाध्यत इति राद्धान्तः।

एकोनत्रिंशाधिकरणमारचयति।

धेनुवत्सर्षभाश्छागे गवि वा गुणकीर्त्तनात्।

अजेऽतिदिष्टेष्वेवं गां जात्यैकगुणोक्तितः॥ २५॥

पशुविकृतिषु श्रूयते द्यावापृथिव्यां धेनु मालभेत मारुतं वत्समैन्द्रमृषभमिति तत्र धेनुशब्दो नवसूतिकामाचष्टे वत्सशब्दो बालं वृषभशब्दः पुमांसं तथा सति गुणवाचिन एते शब्दा अतिदिष्टमजद्रव्यमबाधित्वा तदेव द्रव्यं यथोक्तगुणविशिष्टं वदन्ति गोस्तु न प्रत्यक्षमिह श्रूयते नाप्यतिदिश्यते प्रकृतावनुपदिष्टत्वात्। अतो गां न विशिंषन्तीति पूर्वः पक्षः। न खल्वेते यथोक्तगुणसामान्यवाचिनः किं तर्हि गोगतानेव तान् गुणानाहुरतस्ते शब्दा अजेऽनुपपन्नाः सन्तोऽनुपदिष्टमनतिदिष्टमपि गां मुख्यवृत्त्या विशिंषन्तश्छागं बाधन्त इति राद्धान्तः।

त्रिंशाधिकरणमारचयति।

वायव्यं श्वेतमित्यत्र यः कोऽपि छाग एव वा।

विनश्येत्तस्तासामविनाशाय नास्त्यवघात इति पूर्वः पक्षः धाना अवहन्त्व्या इति ह्यव चोदकवाक्यं तस्मिंश्च वाक्ये भर्जनसम्पादितं धानात्वं पूर्वभावि पश्चाद्वाविलवघात इति क्रमः प्रतीयते तं क्रमं बाधित्वा प्रथमतोऽवघाते सति नास्ति धानात्वनाशः अवघातस्य पदार्थस्य बाधाद्वरं तद्धर्मस्य क्रममात्रस्य बाधनं तस्मादवघातः कार्य्यः।

तत्रैवाधिकरणं वार्तिककारमतेनारचयति।

पेषणं नूतनं मन्थे प्राकृतं वा क्रमान्तरात्।

नूतनं प्राकृतं धर्ममात्रबाधस्य लाघवात्॥ ४३॥

महापितृयज्ञे एवं श्रूयते पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थमिति सूनवत्सा धेनुरभिवान्या इत्र दुग्धे प्रक्षिप्य मथिताः सक्तवो मन्थास्तत्र यत् पेषणं तत्र प्राकृतम्। कुतः क्रमव्यत्यासात् प्रकृतौ हि प्रथमतः पेषणं पश्चात् पुरोडाशश्रपणम् अत्र तु प्रथमतः श्रपणेन धानाः सम्पाद्य पश्चात् सक्तुभावाय पेषणं तस्मान्नूतनमिति प्राप्ते ब्रूमः चोदकप्राप्तप्राकृतपेषण तत् क्रमयोरुभयोर्बाधे गौरवात् क्रममात्रं बाध्यं पेषणपदार्थस्तु स एवेति तद्धर्मा इषदादिवन्मन्थ इत्यादयोऽत्र कर्त्तव्याः।

इति माधवीये जैमिनीयन्यायमालाविस्तरे दशमाध्यायस्य द्वितीयः पादः समाप्तः।

---

तृतीयपादे प्रथमाधिकरणमारचयति।

प्रयाजैकादशत्वादिविशेषविधिभिर्युते

विशेषानुक्तितः कोऽपि छाग एवास्त्वबाधनात् ॥ २६ ॥

वायव्यं श्वेतमालभेत भूतिकाम इति अत्र श्वेतशब्दस्य धेन्वादिशब्दवज्जातिविशेषवाचित्वाभावात् कश्चिदपि पशुं श्वेतगुणकं समर्पयतीति पूर्वः पक्षः। चोदकप्राप्तस्याजस्य बाधकारणाभावात्तमेवं समर्पयतीति राद्धान्तः।

एकत्रिंशाधिकरणमारचयति।

खले वाली तण्डुलार्थाः खादिरत्वे कृता न वा।

यूपोऽस्मिन् व्युत्पत्त्यर्थमुद्देशात् खादिरोऽस्ति सा ॥ २७ ॥

अवघाताद्यबाधार्थं नैव ता तण्डुलेष्वपि।

प्रत्यक्षवचनत्वाच्च कार्यं यूपेन लक्ष्यताम् ॥ २८ ॥

अन्तरेण हविर्द्रव्ययोगाभावादितीरितम्।

न नियन्तुं शक्यतेऽतः खादिरत्वे कृतान्यथा ॥ २९ ॥

खले वाली यूपो भवतीति सायक्की श्रूयते तथा दधिघृतमापो धानास्तण्डुलास्तत्संसृष्टं प्राजापत्यमित्येते चित्याग्नौ याग श्रुतं तत्र प्रकृतौ यूपस्य खादिरत्वं दश तण्डुलाः व्रीहिसम्बन्धित्वं तदुभयमनयोर्विकृत्योरस्ति न वेति संशयः। तत्र या खले वाली सा यूपो भवतीत्येवमुद्देश्यविधेयभावे यूपशब्दस्य मुख्या वृत्तिर्न सिध्येत यूपादृतेः शास्त्रीयतक्षणादिरहितायाः खले वाल्याः यूपशब्दवाच्यत्वासम्भवात् ततो यूपशब्देन यूपकार्यं पशुनियोजनादिकं लक्षणीयं स्यात् यो यूपः सा खले वालीत्येवमुद्देश्यविधेयभावे तु संस्कृतस्य खादिरयूपस्य खले मेढित्वेन स्थापयितुं अशक्यत्वान्न कस्यापि शब्दस्य लक्षणावृत्तिः तस्मादस्ति खले वाल्याः खादिरत्वं तथा चोदकप्राप्तावघाताद्यबाधार्थं

च तण्डुलेष्वपि व्रैहित्वमस्तीति पूर्वः पक्षः। यूपमुद्दिश्य खले वालीत्वविधाने यूपशब्दस्य वर्हितयोः खले वाली भवति शब्दयोरश्रुतस्य नैरन्तर्य्याध्याहृतस्य कल्पनेन वाक्यं परोक्षं स्यात् ततः प्रत्यक्षवाक्यपरित्यागादरं यूपशब्दस्य मुख्यवृत्तिमात्रहानं तथा सति खले वाल्यां पशुनियोजनादिकं कार्य्यमिति वाक्यार्थः सम्पद्यते तत्र कुतो यूपः कुतस्तरान्तदीयं खादिरत्वं तथा तण्डुलानां पेषणसंवपनादिरहितानामेव प्रजापति देवतासम्बन्धोऽत्र श्रूयते प्रकृतौ तु पेषणादिपरम्परया निष्पन्नस्य तण्डुल कार्य्यस्य पुरोडाशस्य हविषो देवतासम्बन्धः। अतो न्मानत्वान्नात्र चोदकातिदेशः। तथा सति खादिरत्व-व्रैहित्वनियमाभावाद्या काचित खले वाली तण्डुलाश्च यैः केश्चित सन्त्विति राद्धान्तः।

द्वात्रिंशाधिकरणमारचयति।

खले वाल्यां जोषणञ्च छेदनं तक्षणादि यो।
स्युर्वानो चोदकात्स्युर्नो वैयर्थ्याच्च विरोधतः॥ ४०॥

जोषणं प्रीतिपूर्वको यूपीयवृक्षस्य लक्षणलक्षिततया सेव्यत्व निश्चयः तल्लक्षणानि चापस्तम्बेनोक्तानि समञ्जातम-शाखं तत्र्वङ्गुपर्णशाखमनतिशुष्काग्रमसुषिरमित्यादीनि खले वाल्यां चोदकप्राप्ता अपि जोषणादयो नो कर्त्तव्याः। कुतो, वैयर्थ्यात् पूर्वसिद्धाया एव खले वाल्या यूपकार्य्यो विनियोगमात्रेण शास्त्रार्थस्य कृतत्वादन्यज्जोषणादिकं क्रियमाणमप्यनर्थकम्। अपि च तक्षणादीनि यूपत्वसम्पादकानि खले वाली तु न यूपः किन्त्वयूपि केवलं यूपकार्य्यमति-

पश्वादौ सामिधेन्यादिविध्यन्तो नास्त्युतास्त्यसौ ॥ १ ॥
विशिष्टाङ्गविधौ नासौ चोदकस्याप्रवृत्तितः ।
लाघवाद्गुणमात्रस्य विधिः सोऽस्त्यतिदेशतः ॥ २ ॥

अग्नीषोमीयपशावेकादशप्रयाजाः श्रुताः । चातुर्मास्येषु नव प्रयाजाः वायव्यपशौ हिरण्यगर्भ इत्याघारमन्त्र इत्यादिभिर्युतेषु पश्वादिषु प्राकृतेति कर्त्तव्यता सामिधेन्यादिर्नास्ति कुतः संख्या मन्त्रादिगुणविशिष्टस्य प्रयाजाघाराद्यङ्गस्य प्रत्यक्षविधौ सत्युपदिष्टेनैवाङ्गेन निराकाङ्क्षे पश्वादौ चोदकस्याप्रवृत्तेरिति पूर्वः पक्षः । पश्वादिविधिस्तावदितिकर्त्तव्यतामाकाङ्क्षति । तत्र प्राकृताङ्गान्यतिदिश्य वा तदाकाङ्क्षा पूर्य्यतां विधास्यमानान्यङ्गान्तराणि उपदिश्य वेति वीक्षायां क्लृप्तोपकारतया प्राकृताङ्गातिदेश एव न्याय्यः ततश्चातिदेशतः प्राप्तप्रयाजाद्यङ्गमनूद्य गुणमात्रविधौ लाघवं भवति गुणविशिष्टाङ्गविधौ तु गौरवं स्यात् तस्मात् तत्र संख्यान्तरमन्त्रान्तराभ्यां पूर्वयोः संख्यामन्त्रयोर्बाधेऽपि प्रयाजाघारसामिधेन्यादीति कर्त्तव्यताप्राप्त्यैवातिदेशादिति राद्धान्तः ।

द्वितीयाधिकरणमारचयति ।

हिरण्यगर्भ आघारे पूर्वस्मिन्नुत्तरेऽथवा ।
लिङ्गादाद्ये समं लिङ्गं क्लृप्तकार्य्यत्वतोऽन्तिमे ॥ ३ ॥

वायव्यपशौ हिरण्यगर्भः समवर्त्तताग्र इत्याघारमाघारयतीति श्रुतो मन्त्रः पूर्वस्मिन्नाघारे स्यात् कुतः मन्त्रलिङ्गात् प्रकृतौ प्राजापत्यः पूर्व आघारः अस्मिन्नपि मन्त्रे हिरण्यगर्भशब्देन प्रजापतिरभिधीयते प्रजापतिर्वै हिरण्य

गर्भ इति वाक्यशेषादिति प्राप्ते ब्रूमः। अन्तिम आघारे मन्त्रः कुतः लिङ्गप्रकाश्यत्वात् प्रकृतावमन्त्रकः प्रथमाघारः प्रजापतिं मनसा ध्यायन्नाघारयति इति ध्यानमात्रस्याभिधानात्‌ उत्तरमाघारयतीत्य मन्त्रकत्वं साक्षादेव श्रुतं द्वितीये आघारे ऊर्ध्वोऽध्वर इत्यादिरैन्द्रो मन्त्रो विहितः अतो मन्त्रकार्य्यं तत्र लिङ्गं तस्माद् द्वितीये आघारे हिरण्यगर्भमन्त्रविधिः यत्तु प्रजापतिर्देवता मन्त्रलिङ्गं तदिन्द्रेऽपि समानम्। इन्द्रोऽपि हि प्रजानां पतिः तस्मादूर्ध्वोऽध्वर इति मन्त्रं बाधित्वा हिरण्यादिमन्त्रस्तत्र विधीयते।

तृतीयाधिकरणमारचयति।

किमुत्करासादनञ्च परिधौ च नियोजनम्।
कर्मान्तरं प्राकृतयोर्गुणो वार्थोऽस्त्वसम्भवात्‌ ॥ ४ ॥
पृथुतामुत्करांशस्य परिधेश्च स्थविष्ठताम्।
आश्रित्य सम्भवात्‌ कर्त्तुं गुणौ तौ लाघवान्मतौ ॥ ५॥

स पशुकेषु चातुर्मास्येषु श्रूयते। उत्करे वाजिनमासादयति परिधौ पशुं नियुञ्जीतेति एते आसादननियोजने प्राकृताभ्यामन्ये कर्मणी विधीयते। इत्याद्यः पक्षो युक्तः। कुतः प्राकृतयोरत्यन्तमसम्भवात्। वेदेरुद्धृतानां पांशूनां तीक्ष्णाग्रो राशिरुत्करः न हि तत्र वाजिनाख्यनीरस्यासादनं सम्भवति। नाप्यङ्गुली वद्घणीयसि परिधौ पशुर्नियोक्तुं शक्यते ततः प्राकृतस्य दृष्टप्रयोजनस्यासम्भवाददृष्टार्थत्वं तदेतत्सदृशे आसादननियोजने कर्मान्तरे विधीयेते इति प्राप्ते ब्रूमः। प्रयाजेकादशत्वादिवल्लाघवात्

प्राकृतयोरिव वाजिना सादनपशुनियोजनयोरुत्करपरिधि-
गुणौ विधीयेते। न च तौ ध्वात्वेऽपि मुख्यवद्‌योग्यत्वं
रुद्राश्वयस्य पृथक्त्वेन स्वल्पपात्रासादनयोग्यत्वात् परिधि-
श्चैष्टिकवेद्यामिव नाम्नायात् किन्तु उत्तरवेद्यां स्थविष्ठस्त-
स्माद् गुणविधिः।

चतुर्थाधिकरणमारचयति।

षड्भिर्दीक्षयतीत्यग्निगतं प्राकृतबाधकम्।
समुच्चितं वा बाधःस्यात् कार्य्यैक्यात्तस्य वाक्यतः॥ ६॥
अग्नौ होमाङ्गता क्लृप्ता रातिदिष्टेन तुल्यता।
विना वृत्तिं द्वादशत्वसिद्धये स्यात् समुच्चयः॥ ७॥

अग्निचयने दीक्षाहुतयः श्रूयन्ते षड्भिर्दीक्षयतीति
प्रकृतावपि स्रुवेण चतस्रो जुहोति दीक्षितत्वाये-
त्यादि दीक्षाहुतयः षड्विहिताः। तत्र मन्त्रा भिन्नाः
आकूत्यै प्रयुजेऽग्नये स्वाहेत्यादयः प्राकृता मन्त्राः आकूति-
मग्निं प्रयुजं स्वाहा इत्यादयो वैकृताः तत्र वैकृतमाहुति-
मन्त्रषट्कं किं प्राकृतस्य बाधकं किं वा प्राकृतेन समुच्चितं
इति संशये बाधकमिति तावत् प्राप्तं कुतः कार्य्यैक्यात्
दीक्षणीयेष्ट्यङ्गभूताहुत्युपकारलक्षणं यत् कार्य्यं प्राकृतानां
मन्त्राणां तदेव वैकृतानामपि न च विकृतौ तत्र प्रतीयते
इति शङ्क्यं स्वाहान्ततारूपेण लिङ्गेन मन्त्राणामाहुत्युप-
कारकत्व प्रतीतेः आहुतीनाञ्च षड्भिर्दीक्षयतीति वाक्येन
दीक्षणीयाङ्गत्व प्रतीतेः तस्माच्छ्रूयमाणैर्मन्त्रैरतिदिष्टानां
बाध इति पूर्वः पक्षः। अग्नौ मन्त्राणां स्वरूपं यद्यपि
प्रत्यक्षश्रुतिसिद्धं तथापि होमाङ्गत्वं लिङ्गेन कल्प्यं तथा

चातिदेशकल्पैर्मन्त्रैर्मुख्यबलत्वान्न बाध्यबाधकता एव मपि न समुच्चये प्रमाणमस्तीति चेत्। अस्त्येव द्वादश जुहोतीति संख्याविधानेन तत् सिद्धेः न च वैकृतानामेक स्यामावृत्त्या संख्या सिध्यतीति वाच्यम्। आवृत्तेरश्रुतत्वा न च सा कल्पयितुं शक्यते। अन्यथापि संख्योपपत्तेः तस्मा समुच्चय इति राद्धान्तः।

पञ्चमाधिकरणमारचयति।

एकादिना समुच्चेयं पुनर्निष्कृत इत्यदः।

बाधकं वा समुच्चेयमुभयोरित्युदीरणात्॥ ८॥

आधान दक्षिणापितमुभयोरित्यनूद्यते।

ददातीत्य विधायित्वात् कार्यैक्याद् बाधकं भवेत्॥ ९

आधाने विकल्पिता गोद्रव्यदक्षिणाद्रव्यान्तरदक्षि णाश्च बहवः श्रूयन्ते एका देया षट्देया द्वादश देया इत्य दिना पुनराधाने तु पुनर्निष्कृतो रथो दक्षिणेत्यादि श्रु भग्नः सन् पुनः समाहितः पुनर्निष्कृतः सेयं पुनर्नि ष्कृतादिदक्षिणा किमितिदिष्टयैकादिसंख्यया दक्षिणय समुच्चीयत उत तां बाधत इति संशयः। उभयोर्ददात्य धेयिकौ पौनराधेयिकौ चेत्युक्तत्वात् समुच्चय इति पूर्व पक्षः। ददातीति वर्त्तमाननिर्देशस्य विधित्वाभावादाधान काले पूर्वं दत्तं पुनराधानकाले दीयमानञ्च मिलित्वोभय रित्यनूद्यते। दक्षिणा स्वरूपस्य तत्कार्य्यस्यैकत्वादुपदिष्ट मतिदिष्टस्य बाधकम्।

षष्ठाधिकरणमारचयति।

वासोवत्सं समुच्चेय मन्वाहार्यैर्वा न वा।

अविरोधात् समुच्चयं न कार्य्यैक्यादिरोधतः॥ १०॥

आग्रयणे श्रूयते वासो दक्षिणावत्सः प्रथजो दक्षिणेति तदेतत् प्राकृतेऽन्वाहार्य्येण सह विरोधाभावात समुच्चयत इति मन्दः पूर्वपक्षः। एककार्य्यत्वेन विरोधित्वान्न समुच्चयः किन्तु बाध इति राद्धान्तः।

सप्तमाधिकरणमारचयति।

अन्वाहार्य्यस्य धर्मोऽत्र न कार्य्यः क्रियतेऽथवा।

न तद्धर्मत्वतोऽमैवं साधनत्व प्रयुक्तितः॥ ११॥

सन्त्यन्वाहार्य्यधर्माः तत्कल्पप्रतकारं उदाजहार दक्षिणसद्भ उपहर्त वा इति संप्रेष्यति। ये ब्राह्मणा ऋत्विजस्तान्यजमान आह दक्षिणात एतेति तेभ्योऽन्वाहार्य्यं ददाति। ब्राह्मणा अयं व ओदन इति प्रतिगृह्णीत ऋत्विजः परीतेति संप्रेष्यतीति सोऽयं धर्मो वासो वत्सयेन कार्य्यः। तस्यान्वाहार्य्यनिमित्तत्वात् नैवम्। अन्वाहार्य्यस्य दक्षिणारूपेणाऽनतिसाधनत्व प्रयुक्तास्ते धर्माः क्रियन्ते तत्साधनत्वं वासो वत्सेऽपि समानं तस्मादत्रापि सन्तीति धर्माः।

अष्टमाधिकरणमारचयति।

पाकोऽस्ति नो वा वत्से स्यादन्वाहार्य्यस्य दर्शनात्।

न वत्सनाशाद्भ्रौणी दक्षिणा मांसदानतः॥ १२॥

अन्वाहार्य्ये पाकोऽस्ति पूर्वन्यायेन तद्धर्मातिदेशात् वत्सेऽपि पाकः स्यादिति चेन्न वत्सनाशप्रसङ्गात् अस्त्विति चेन्न तथा सति मांसदानेन श्रुतहाना श्रुतकल्पने प्रसज्येयातां [illegible]ऽस्ति वत्से पाकः।

नवमाधिकरणमारचयति।

वाससि न वा पाको विनाशाभावतोऽस्त्यसौ।
वैयर्थ्यादप्यशक्यत्वात्पाको वाससि नोचितः॥ १३॥

वाससः उष्णोदकभाण्डप्रक्षेपेण वत्सस्येव विनाशो नास्ति तस्मादन्वाहार्य्यवत्पाकोऽस्तीति चेन्न ओदनत्वार्थो हि पाकः न हि वाससः सहस्रधा पच्यमानस्याप्योदनता सम्भवति न च पाकः कर्त्तुं शक्यते न ह्युष्णोदकसंयोगः पाकशब्दस्यार्थः किं तर्हि तण्डुलानां विक्लित्तिं जनयितुं कृतः पुरुषप्रयत्नः न च वाससस्तिविक्लित्तिः तस्मादतिदिष्टः पाको बाध्यते।

दशमाधिकरणमारचयति।

आवारोऽत्रास्ति नो वात्र शक्यत्वादत्समवासमोः।
अस्त्यन्वाहार्य्यवन्नैवं स्वादुताया असम्भवात्॥ १४॥

स्पष्टोऽर्थः।

एकादशाधिकरणमारचयति।

दक्षिणाद्दशशतं तस्येत्येतद्गवादिषु।
सर्वेषु केषुचिद्दाद्ये प्रत्येकं मिलितेषु वा॥ १५॥
संख्यागुणस्य प्रत्येकं गवाद्यन्वयतोऽग्रिमः।
वाक्यभेदान्न तत्किन्तु मिलितेषु समुच्चयात्॥ १६॥
संख्यानौचित्यतो धान्ये सर्वेषां न समुच्चयः।
असर्वेष्विति पक्षेऽपि पशवो वैकमेव वा॥ १७॥
संख्यौचित्येन पशवो नैतत्तस्येत्यनन्वयात्।
एकत्वेऽप्यत्र यत्किञ्चिन्नापावागाव एव वा॥ १८॥
यत्किञ्चिन्नियमाभावान्नाद्यः सन्निहितत्वतः।

माषानिराकृता गावः प्रायश्चाचोपकारतः ॥ १८ ॥
तस्येति वाक्याद्‌गोद्रव्यं न युक्तः प्रकृतः क्रतुः ।
संख्यान्तरं चेद्धिकृतौ स्याद्‌गवां बाध्यतामियम् ॥२०॥

ज्योतिष्टोमे देयद्रव्याख्यमुक्तस्य संख्याविशिष्टा दक्षिणा विधीयते । गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्च वयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणेति द्वादशाधिकं शतं तत्र संशयः सेयं संख्या किं गवादि सर्वद्रव्यविषया किं वा कतिपयविषया सर्वत्र पक्षेऽपि प्रतिद्रव्यमेयं संख्या उत मिलितानां तत्र गवादिद्रव्याणि प्रधानानि संख्यां तद्‌गतो गुणः प्रतिप्रधानञ्च गुणावृत्तिन्यांय्या तस्माद्‌गवादिद्रव्येषु प्रत्येकमियं संख्येति प्रथमपक्षगते प्रथमे संख्याविकल्पे प्राप्ते ब्रूमः । नैतद्युक्तं वाक्यभेदप्रसङ्गात् । अतो मिलितानामियं संख्येति द्वितीयसंख्याविकल्पोऽभ्युपेयः । तथा च सति समुच्चयवाचिनश्च शब्दा अनुगृह्यन्ते । एतदप्ययुक्तं अनौचित्यात् न हि व्रीहियवादिधान्येषु द्वादशाधिकशतान्तर्गतद्वित्र्यादिसंख्योचितापरिक्रीतस्यर्त्विजो द्वित्रैर्वा बीजैः प्रयोजनाभावात् प्रत्याधिकसार्यादिसंख्या तत्रोचिता नचेयमत्र श्रुता तस्मान्मिलितानां सर्वेषां समुच्चय इत्ययं पक्षो न युक्तः । कतिपयविषया संख्येत्यस्मिन्नपि पक्षे किमाद्याः पञ्चविधाः पशवः किं वा गवादिद्रव्येष्वेकं द्रव्यं तत्र पशुषु सूत्रमाणायाः संख्याया उचितत्वात् पशव इति प्राप्ते ब्रूमः । नैतद्युक्तं तस्य द्वादशशतं दक्षिणेत्यत्र तस्येत्येकवचनान्तेऽश्वानां गवादिपशूनामन्वेतु मयोग्यत्वादेकत्वपक्षे किं यत

किञ्चिदेकं किं वा माषद्रव्यं किं वा गोद्रव्यं तत्र नियामकाभावाद्यत्किञ्चिदिति प्राप्तं तत्र सन्निधेर्नियामकत्वात् माषाश्च तस्य द्वादशशतं दक्षिणेति माषाः सन्निहिताः।

तर्ह्यस्तु माषद्रव्यमिति चेत् न। प्रस्थादिपरिमाणसंख्यौचित्येन निराकृतत्वात् तस्माद्गोद्रव्यमितिपक्षः परिशिष्यते प्रथमस्तुतत्त्वोपकारौ तत्र नियामकौ अस्ति हि महानुपकारः। ऋत्विजः प्रतिग्रहीतुर्गव्ये नाज्यक्षीरादिनाग्निहोत्रदर्शपूर्णमासादिसिद्धेः। ननु प्रकृतस्य क्रतोर्द्वादशशतं दक्षिणेत्यन्वयाद्गोद्रव्यं न प्रतीयत इति चेत्। न यद्गोद्रव्यं तस्य द्वादशशतमितिवाक्येन तत्प्रतीतेः। वाक्यं हि प्रकरणाद्बलीयः तस्माद्गवां द्वादशशतमिति राद्धान्तः। विकृतिषु यत्र गोदक्षिणायाः संख्यान्तरं श्रुतं तत्रास्याः संख्याया बाधो विचारफलम्।

द्वादशाधिकरणमारचयति।

गोदाने विहिते स्वेच्छानियतिर्वान्त्विमेऽपि किम्।
अविभागो विभागो वा नियमानुक्तितोऽग्रिमः॥ २१॥
अविभागो बहुत्वोक्तेर्बहुत्वं न विवक्षितम्।
विभागो स्वामिभिः स्वत्वरिक्तैर्लिङ्गञ्च दृश्यते॥ २२॥

पूर्वोक्त एव गवां दाने संशयः। ऋत्विग्भ्यो देयानामुक्तसंख्यानां विभागाविभागयोर्यजमानेच्छैव प्रयोजिका उतास्त्यन्यतरनियतिः। यदापिनियतिस्तदाप्य विभागोविभागो वा। विभागनियामकस्यानुक्तत्वादिच्छेति तावत्प्राप्तं ऋत्विग्भ्यो दक्षिणां ददातीति बहुवचनश्रवणेन समूहस्य प्रतिग्रहीतृत्वादविभाग इति पक्षान्तरं यद्वै-

कत्वबहुत्वं न विवक्षितमिति एकैकः प्रतिगृहीता तदा सति विभागावश्यम्भावात् समुदाय इत्ते सत्येकैकस्य स्वामित्वाभावे परत्वापादनलक्षणो दानशब्दार्थो न सिध्येत्। किं चतुर्थीविभक्तिवेदा विभजन्तीति मन्त्रे विभागलिङ्गं दृश्यते। तस्माद्विभागनियमो राद्धान्तः।

त्रयोदशाधिकरणमारचयति।

सविभागः समो नो वा विशेषाश्रवणात् समः।

वैषम्यं स्यादायासमेवं तत् स्यात् समाख्यया ॥ २३॥

पूर्वोक्तः सविभागः समः स्यात् कुतो वैषम्यहेतो विशेषस्याश्रवणात्। साम्यहेतुस्तु लौकिकोन्यायः। लोके हि पुत्राणां पितृधने समविभागो दृष्टः तस्मात् सम इत्येकः पक्षः। कर्तृकर्म्मसु प्रयासानुरूपेण भृतितारतम्यं दृष्टं तद्वदत्रापीति द्वितीयः पक्षः। द्वादशाहे दीक्षायामेव समाख्यायते। अध्वर्य्युर्दीक्षयति पादिनो दीक्षयतीति। अर्धं येषां ऋत्विजां तेऽर्धिनः एवं पादिनो ज्ञेयाः तद्विशेषा याज्ञिकमुखादवगन्तव्याः। ततः प्रयासमस्यानुरूपेण केषाञ्चिदर्धं केषाञ्चित्पाद इत्यादिर्विषमो विभाग इति राद्धान्तः।

चतुर्दशाधिकरणमारचयति।

भूनाम्निकेनुबन्धेत गां किं वा क्रतुदक्षिणाम्।

प्रेत्वाविशेषितत्वाद्गां दक्षिणैकत्वतोऽखिलम् ॥ २४॥

अतीताभ्यामधिकरणाभ्यां बाधापवादत्वेन प्रकृतौ दक्षिणा निरूपिता। अथ विकृतौ बाधो निरूप्यते।

अस्ति भूरिति भूनामकः कश्चिदेकाहविशेषस्तु धेनु-

दक्षिणेति श्रूयते। सेयं धेनुर्गोमात्रं बाधते। कुतः या गौः सा धेनुरिति विशेषयितुं योग्यत्वात् न हि योऽश्वः सा धेनुरिति विशेषणं युज्यते तस्माद् गोविशेषरूपया धेन्वा प्राकृतस्य गोसामान्यस्यैव बाधो नेतरस्येति प्राप्ते ब्रूमः। इयं धेनुरखिलां दक्षिणां बाधते कुतो गवादीनां माषान्तानां सर्वेषामेव दक्षिणारूपत्वाद् दक्षिणेत्येकवचनमिह प्रयुज्यते। गौश्चेत्यादयः समुच्चयवाचिनश्च शब्दा एकत्व एवोपपद्यन्ते। आनतिश्चैवं सति अत्यन्तसुलभा यदि दक्षिणाभिधेरंस्तदानीमेकयैवानतिसिद्धेरितरासां वैयर्थ्यं दुर्वारम्। तस्मान्निखिलदक्षिणा बाध्यः।

पञ्चदशाधिकरणमारचयति।

एकां पञ्चेति कृत्स्नां वा गोसंख्यां वा निवर्त्तयेत।
स्यादाद्यो दक्षिणायोगान्नैवं व्यवहितत्वतः॥ २१॥

इदं श्रूयते। यस्य सोममपहरेयुरेकां गां दक्षिणां दद्यादभिदधे पञ्च गा इति। तदिदं संख्याविशिष्टं द्रव्यं विधायमानं गवादिदक्षिणां कृत्स्नां निवर्त्तयेत तस्य दक्षिणाशब्दयोगेन कार्य्यकत्वात्। मैवम्। विशिष्टविधौ गौरवात् गवां प्राप्तत्वाच्च संख्यामात्रं विधेयं तस्य च गोशब्देन व्यवधानान्न दक्षिणा योगोऽस्ति। यो तु गोगतां स्वविरोधिनीं पूर्वप्राप्तसंख्यामेव निवर्त्तयेत्तु अन्यत् किञ्चिदिति राद्धान्तः।

षोडशाधिकरणमारचयति।

क्रिवत्मैनर्षभो बाध्यः कृत्स्नं वा क्रयसाधनम्।
ऋषभः पुंस्त्वलाभ्न क्रयो देशविधानतः। २६॥

साद्यस्के वर्षवर्षीयसी गौ श्रूयते । त्रिवत्सः साण्डः सोमक्रयण इति । प्रकृतावजया क्रीणाति हिरण्येन क्रीणाति ऋषभेण क्रीणातीत्यादिना क्रयसाधनानि आम्नातानि तत्र पुंवत्वसामान्येन बाध्यऋषभमात्रमिति पूर्वः पक्षः । नैतद्युक्तं कृत्स्नं क्रयमुद्दिश्य त्रिवत्सविधानात् साण्डत्वोद्देशेन तद्विधानस्य पाशीयादावपि त्रिवत्सः प्रसज्येत । तस्मात् क्रयसाधनं कृत्स्नं बाध्यम् ।

सप्तदशाधिकरणमारचयति ।

किं प्राकाशौ बाधकौ स्तः कृत्स्नस्याध्वर्य्यवस्य वा ।
ददाति योगात् कृत्स्नस्य न विशिष्टेन योगतः ॥ २१ ॥

अश्वमेधे श्रूयते हिरण्मयौ प्राकाशावध्वर्य्यवे ददातीति प्राकाशौ दीपस्तम्भाविव्येके दर्पणाविव्यपरे तौ किं प्राकृतस्य दक्षिणाद्रव्यस्य कृत्स्नस्य बाधकौ उताध्वर्युभागस्यैव तत्र प्राकाशौ ददातीति कर्मकारकवाचि द्वितीया श्रुतिः तेन दानसम्बन्धेन प्राकाशावध्वर्य्यव इति वाक्यकृतं पुरुषसम्बन्धं बाधितं सति देयद्रव्यतानिर्देशात् [illegible] कृत्स्नस्य बाध इति प्राप्ते ब्रूमः अध्वर्य्यवे ददातीति सम्प्रदानवाचि चतुर्थीश्रुतिकृतस्य दानक्रियासम्बन्धस्यापवदितुमसमर्थत्वात् सम्प्रदानविशिष्टदानक्रियया सम्बन्धोऽस्य द्वितीया श्रुतेरविरोधादध्वर्युभागस्यैव बाध इति राद्धान्तः ।

अष्टादशाधिकरणमारचयति ।

श्लावाणौ ब्रह्मभागस्य बाधकौ निखिलस्य वा ।

आद्यः प्राकाशवन्नैवं धेनुवत् सोऽपि नान्यगः ॥ २८ ॥

अस्त्युपहव्यनामक एकाहविशेषस्तत्र श्रूयते। अश्व श्यावो रुक्मललाटो दक्षिणा स ब्रह्मणे देय इति प्राकाश-न्यायेनायं ब्रह्मभागस्यैव बाधक इति पूर्वः पक्षः। दक्षिणा-शब्दसंयोगात् धेनुन्यायेन कृत्स्नस्य बाधकः उपरितनेन तु ब्रह्मणे देय इति वाक्यान्तरेण तस्याश्वस्य ब्रह्मव्यति-रिक्तपुरुषान्तरसम्बन्धो बाध्यते। तथा सति पुरुषान्तर-स्यातिदिष्टोपदिष्टदक्षिणाद्यय बाधाल्लौकिकदानादिना केनचिदुपायेनार्तिः सिध्यति।

एकोनविंशाधिकरणमारचयति।

किं सोमचमसो ब्रह्मभागहार्य्युत कृत्स्ननुत्।

पशूनां निन्दया सर्वं प्रसक्तेर्ब्रह्मभागहृत् ॥ २९ ॥

निन्देयं न निषेधाय चमसस्तु तथेत्यसौ।

श्यावाश्ववत् सर्वदेय पुरुषान्तरबाधकः ॥ ३० ॥

वाजपेये श्रूयते। औदुम्बरः सोमचमसो दक्षिणा स प्रियाय सगोत्राय ब्रह्मणे देय इति सोऽयं चमसो ब्रह्म-भागमेव बाधते कुतः यत् पशून् दद्यात् सोऽनृतं कुर्या-दिति पशुदाननिन्दाया सर्वदानप्राप्तेः तस्मान्न सर्वं बाध इति प्राप्ते ब्रूमः। नात्र निषेधाय पशुनिन्दोच्यते किन्तु विधित्सितसोमचमसस्तुत्यर्थोऽयमर्थवादस्तेन निन्दायाः सर्वप्रसञ्जकत्वं नास्ति तस्मात् सर्वप्रसक्तिरूपाया अभ्य-धिकाशङ्काया निराकृतत्वात् पूर्वाधिकरणन्यायेनात्र निर्णयो द्रष्टव्यः। तस्मिन्नेवाधिकरणे कृत्वा चिन्ताक्र-

विचारं बुद्धिव्युत्पादनाय रचयति। पूर्वोक्तं निर्णयं पूर्वपक्षयित्वैकवाक्यतां भ्रान्त्या कृत्वा दक्षिणांशं ब्रह्मभागं निवर्त्तयेत्। श्यावाश्वाधिकरणे रुक्मललाटौ दक्षिणत्वस्य स ब्रह्मणे देय इत्यस्य चान्तराले सत्त्व निरुक्त इति वाक्यान्तरं पठितं तेन व्यवधानाद् विस्पष्टो वाक्यभेदः। इह त्वव्यवधानादेकं वाक्यमिति भ्रान्तिः। एकवाक्यतायां तु चमसशब्दस्य दक्षिणा शब्देन ब्रह्मशब्देन च सम्बन्धे सति कृत्स्नदक्षिणायाः पुरुषान्तरस्य च निवृत्तिः। तथा सति पूर्वोक्तसिद्धान्त एवात्र पूर्वपक्षो भवति। दक्षिणामुद्दिश्य चमस एको विधेयस्तस्य ब्रह्मसम्बन्धोऽपरो विधेयस्ततोऽर्थभेदाद् वाक्यभेदो दुर्वारः तस्माद् दक्षिणाशब्दं न तदंशं लक्षयित्वा ब्रह्मसम्बन्धे दक्षिणांशमनूद्य चमसमात्रविधानात्तद्भागस्यैव निवृत्तिः कृत्वा चिन्तामुद्घाटयति।

विंशाधिकरणमारचयति।

दक्षिणोक्तिः क्रतौ दृष्टा सर्वबाधो नपुंसि नु।

वाक्यभेदश्च दुर्वारो युक्त्योक्तः पूर्वनिर्णयः॥२०॥

प्रायेण वैदिकव्यवहारेष्टदक्षिणाशब्दः क्रतुविषय एव दृष्टो न तु पुरुषविषयोऽतः क्रतुदक्षिणारूपचमसः सर्वां क्रतुदक्षिणां निवर्त्तयेद्वाक्यभेदस्तु विस्पष्टभासमानः। काशकुश अवलम्बन्य न्यायविदा न निवारयितुं युक्तः। तस्मात् कृत्स्न दक्षिणापुरुषान्तरयोर्बाधः इत्ययमेव राद्धान्तो युक्तः।

एकविंशाधिकरणमारचयति।

यजुर्युक्तोऽध्वर्युभागं बाधतेऽथवान्युत।

बाधः प्रकाश्यवन्नैवं पक्षे प्राप्तं नियम्यते ॥ २१ ॥

वाजपेये श्रूयते । यजुर्युक्तं रथमध्वर्यवे ददातीति अस्यायमर्थः । रथशकटदासीनिष्कादीनि सप्तदशद्रव्याणि प्राकृतगवाश्वादिदक्षिणाद्रव्यबाधकान्यत्र विहितानि तेषु प्रतिद्रव्यं सप्तदशसङ्ख्या विहिता ततो रथाः सप्तदश तेषु मुख्यं रथं यजमानारोहणायेन्द्रस्य वज्रोऽसीत्यादिभि र्यजुर्वेदोक्तैर्मन्त्रैः सज्जीकरोति सोऽयं यजुर्युक्तो रथस्तं दक्षिणाकालेऽध्वर्यवे दद्यादिति प्राकाशावध्वर्यवे ददातीत्यत्र यथा चोदकप्राप्तस्याध्वर्युभागस्य बाधः । एवमत्रापि ननु रथस्य द्रव्यविधानेनैव प्राकृतद्रव्यबाधविधिः । बाढं तथाप्यविशेषाद्दिन इत्यादिसत्राख्यायापिता विषमभागविशेषक्लृप्तिर्हि सा यजुर्युक्तरथरूपभागविशेषविधिना बाध्यते । तस्मादध्वर्योर्न रथान्तरभागोऽस्ति नापि शकटदास्यादिष्विति पूर्वः पक्षः । नैतद्युक्तम् । प्राकाशदृष्टान्तवैषम्यात् अत्यन्तमप्राप्तौ हि प्राकाशौ तत्र विधेयौ यजुर्युक्तरथस्तु पक्षे प्राप्तः । तथा हि सप्तदशरथान् ददातीत्युक्ते कस्मै रथ इति चिन्तायां यजमानेच्छाया नियामकत्वाद्यदाध्वर्यवे तं दातुमिच्छति तदा प्राप्नोति यदा नेच्छति तदा न प्राप्नोतीति पक्षे प्राप्तस्तयोर्यजुर्युक्तो रथः सोऽध्वर्यवे देय इति नियम्यते ततो न कस्याप्यनेन बाधः ।

इति माधवीये जैमिनिन्यायमालाविस्तरे
दशमाध्यायस्य तृतीयः पादः ।

---

अथ दशमाध्यायस्य चतुर्थः पादः।

चतुर्थपादे प्रथमाधिकरणमारचयति।

न चाचेष्ट्युपहोमादिर्नारिष्टादेर्निवर्तकः।
समुच्चितो वा कार्य्यैक्याद्वाधोऽन्योऽपूर्वभेदतः। १

सन्ति न चाचेष्टावस्तये स्वाहाकृत्तिकाभ्यः। स्वाहा वा ये स्वाहादुलाये स्वाहेत्यादय उपहोममन्त्राः प्रकृतौ प्रधानहोमादूर्ध्वं नारिष्टहोमो विहितः नारिष्टान् होमान् जुहोतीत्युक्तत्वात् दश ते तन्वो यज्ञयज्ञिया इत्यादयस्तत्र मन्त्राः। अयमेको विषयः तथा श्येने श्रूयते लोहितोष्णीषा लोहितवसना निवीता ऋत्विजः प्रचरन्तीति प्रकृतौ उपवीतं विहितं उपव्ययत इत्ययं द्वितीयो विषयः। तथा पृष्ठे पडहे श्रूयते मध्वाशयेत् घृत वेति। प्रकृतौ श्रुतं पयोव्रतं ब्राह्मणस्य यवागूराजन्यस्यामिक्षा वैश्यस्येत्ययं तृतीयो विषयस्तत्रोपहोमनीवीतमध्वशनानि क्रमेण नारिष्टहोमोपवीतपयोव्रतानां निवर्त्तकानि कुतः कार्य्यैक्यात् उपहोमनारिष्टहोमयोस्तावत्कर्माङ्गसंस्कारात्मकत्वेन कार्य्यैक्यं प्रतीयते। अयनव्रतयोः शब्दभेदेऽपि अर्थभेदो नास्ति नीवीतोपवीतयोः शब्दार्थभेदेऽपि वीतशब्दसमानं कार्य्यमेकं स्यात्तस्माद्बाध इति पूर्वः पक्षः। भवतु नाम दृष्टार्थेषु कार्य्यैक्यं दृष्ट्वा बाधः। अदृष्टानि पूर्वाणि अपूर्वं च विध्येकसमाप्यतया विधिभेदेन भिद्यते। तस्मात् कार्य्यभेदात् समुच्चयोऽभ्युपेयः न च निवीतोपवीतयोर्विरोधः शङ्कनीयः वासोभ्यां तदुभयोपपत्तेः नापि

पयोव्रतस्य दृष्टार्थत्वं अल्पेन पयसा तृप्तिपुष्ट्यसम्भवात्।
उदाहरणद्वयं कृत्वा चिन्ता वास्तु।

द्वितीयाधिकरणमारचयति।

समुच्चेयं शरमयं कौशिनीतास्य बाधकम्।
प्राचुर्य्यस्य विशेषाद्धो मैवं प्रतिपदोक्तितः॥ २॥

सोमा रौद्रञ्चरुन्निर्वपेत् कृष्णानां व्रीहीणामभिचरन्नित्यत्र शरमयं बर्हिर्भवतीति श्रुतं तदिदं प्राकृतेन कुशबर्हिषा सह समुच्चीयते कुतः मयट्शब्देन शरप्राचुर्यविधानादवाधेऽपि तदुपपत्तेरिति पूर्वः पक्षः। नित्यं वृद्धशरादिभ्य इति सूत्रेण शरशब्दादिकारार्थो मयट्प्रत्ययः। प्रतिपदोक्तः अतस्तं परित्यज्य प्राचुर्य्यार्थो न ग्रहीतुं शक्यः किञ्च प्राचुर्य्यार्थकार्य्यान्तरं कल्पनीयं स्यात्तस्मात् कुशबर्हिषो बाध इति राद्धान्तः।

द्वितीयवर्णकमारचयति।

रथदुन्दुभि तद्घोषौ किं बर्हिर्मन्त्रयोः क्रमात्।
बाधकावुत तद्घोष एक एव हि बाधकः ३॥
रथघोषेत्ययं द्वन्द्वस्तेनोभौ बाधकौ न तत्।
घोषाभ्यामिति वा घोषे लक्षणा वा प्रसज्यते॥ ४॥
पूर्वपक्षेऽन्यदीयोऽपि शब्दोऽत्रास्तु रथे सति।
राद्धान्ते रथदुन्दुभ्योरेव घोषः प्रयोजकः॥ ५॥

वाजपेये श्रूयते रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति। दुन्दुभिघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति प्रकृतौ त्वेवं श्रूयते। उपावृत्य उपावर्त्तध्वमिति मन्त्रबर्हिर्भ्यां मुपाकरोति

उपाकरणं नाम स्तोत्रं प्रतिप्रेरणं तत्र रथदृन्दं दुन्दुभि-
द्वयञ्च इयं बहिर्द्रव्यस्य बाधकं घोषो मन्त्रस्य बाधक इति
तावत् प्राप्तम्। रथश्च घोषश्चेति द्वन्द्वसमासेनोभयोः प्राधा-
न्यात् नैतद्युक्तम्। इतरेतरयोगद्वन्द्वे रथघोषाभ्यामिति
द्विवचनप्रसङ्गात्। समाहारद्वन्द्वे तु घोषशब्दस्य समाहा-
रलक्षकतया मुख्यवृत्तिर्हीयेत किञ्च द्वन्द्वे अन्यदीय घोषोऽत्र
प्रसज्येत रथस्य घोष इति तत्पुरुषसमासे मुख्यवृत्तिर्न
हीयते। तत्रापि रथप्राधान्यं हीयत इति चेत् तत् समा-
हारेऽपि समानं तस्माद् घोषो द्रव्यमन्त्रयोर्बाधकः। तत्र
यद्युभयं बाधकं यदि चैकं सर्वथा द्रव्यमन्त्रौ बाध्येते।

तृतीयाधिकरणमारचयति।

बार्हस्पत्यादयः किं स्युः प्राकृतग्रहबाधकाः।
समुचिता उतायोऽस्तु कार्य्यैक्याद् ग्रहलिङ्गतः॥ ६॥

समुच्चयः प्रमाणाभ्यां ग्रहाणां प्रकृतौ यथाविधेयोक्ते न
लिङ्गं तच्चोक्तं लिङ्गं सुराग्रहे बृहस्पति सवं श्रूयते।
बार्हस्पत्यं ग्रहं गृह्णातीति विषुवत्यर्कं गृह्णातीति महा-
व्रते शुक्रं गृह्णातीति। अश्वमेधे श्रूयते। सौवर्णराज
ताभ्यां महिमानौ गृह्णातीति तत्र बार्हस्पत्यादयो ग्रहाः
प्राकृतानामैन्द्रवायवादिग्रहाणां बाधकाः। कुतो याग-
निष्पादनलक्षणस्य कार्य्यस्यैकत्वात् ग्रहशब्दसंयोगः कार्य्य-
क्यगमकस्तस्माद् बाध इति प्राप्ते ब्रूमः। यथा प्रकृतौ
प्रथमचोदितस्यैन्द्रवायवादिग्रहस्य पश्चाच्चोदितानां मैत्रा-
वरुणादिग्रहाणाञ्च समुच्चयस्तथात्रोपदिष्टानामतिदिष्टा-
नाञ्च समुच्चयः स्यात्। यद्योच्येत प्राकृतानां परस्परमेक-

कार्य्यत्वे मानाभावात् प्रत्युत प्रयोगवचनेन सम्भूयकारित्वावगमाद्युक्तः समुच्चय इति। तन्नत्रापि समानं यागनिष्पादकत्वं तु प्रयोगवचनप्रापितानामिव न त्वेकैकस्य अर्केण यजेत शुक्रेण यजेतेत्येवं पृथक् पृथक् यागसम्बन्धाभावाद् ग्रहशब्दो पूर्वां विधेयग्रहणक्रियां ब्रूते न तु प्रकृतौ क्लृप्तकार्य्यं पदार्थमनुवदति येन लिङ्गं। स्यात् किञ्च वाजपेये सोमग्रहाश्च सुराग्रहाश्चेत्यतिदिष्टानामुपदिष्टानाञ्च समुच्चयार्थमुच्चनाजश्च शब्दः सर्वत्र समुच्चयं गमयतीति न बाधः।

चतुर्थाधिकरणमारचयति।

प्राजापत्यैः पशूनां किं बाधो यद्वा समुच्चयः।
अक्रियार्था पशूक्तिः स्याल्लिङ्गं तत्रास्ति बाधकम् ॥७॥
पशूनुद्दिश्य संख्याया देवस्य च विधौ भिदा।
कर्मान्यत्वे ग्रहन्यायाद्रोधनाच्च समुच्चयः ॥ ८ ॥

वाजपेये श्रूयते। सप्तदशप्राजापत्यान् पशूनालभेत इति तैत्तिरीयाः। प्राकृतपशूनामाग्नेयादीनां बाधः स्यात् कुतः पशुत्वलिङ्गात्। न हि पशुशब्दो ग्रहशब्दवदपूर्वां विधेयां क्रियां ब्रूते येन लिङ्गत्वं हीयेतेति प्राप्ते ब्रूमः। किमत्र प्राकृतपश्वनुवादेन सप्तदशसंख्या प्रजापतिदेवता चेति गुणद्वयं विधीयते उत विशिष्टमन्यत् कर्म। नाद्यो वाक्यभेदापत्तेः। द्वितीये तु न पशुशब्दो लिङ्गं ततो ग्रहन्यायो योजनीयः किञ्च रोधनमेवमाम्नायते ब्रह्मवादिनो वदन्ति नाग्निष्टोमो नोक्थ्यः न षोडशी नातिरात्रः। अथ कस्माद् वाजपेये सर्वे यज्ञक्रतवोऽवरुध्यन्त इति पशुभिरिति ब्रूयात्

टाग्नेयं पशुमालभतेऽग्निष्टोममेव तेनावरुन्धे ऐन्द्राग्नो लोकय ऐन्द्रेण षोडशिनः स्तोत्रं सारस्वत्यातिरात्रं मारुत्या बृहतः स्तोत्रम् एतावन्तो वै यज्ञक्रतवस्तान् पशुभिरेवावरुन्ध इति । अग्निनवरात्रनामाम्नाते चोदकप्राप्ताग्नेयादिपशुमङ्गविस्य सिद्धवदनुवादात् समुच्चयोऽवगम्यते ।

पञ्चमाधिकरणमारचयति ।

आमनाहुतिभिर्बाध्या अनुयाजा न वाग्रिमः ।

त्रित्वलिङ्गाद् विशिष्टोक्तेर्भेदो मध्योक्तितोऽन्तिमः ॥५॥

साद्यस्क्रोष्टौ श्रूयते । आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोतीति एताभिस्तिसृभिराहुतिभिः प्राकृतास्त्रयोऽनुयाजा बाध्याः कुतः त्रित्वलिङ्गात पूर्वाधिकरणे सप्तदशसंख्याविशिष्टप्राकृतपशुभावेन माभूद बाध्यत्वम इह तु त्रित्वविशिष्टत्वादनुयाजा बाध्यन्ता यद्वा तदनुवादे न मन्त्रगुणविधानात प्राकृतमन्त्र इति पूर्वः पक्षः किं त्रित्वमात्रमनूद्य सन्त्रसहिता आहुतयो विधीयन्ते उत त्रित्वविशिष्टा आहुतीरनूद्य मन्त्रविधिः आद्ये त्रित्वस्य गार्हपत्यादिष्वपि सत्त्वेनान्वयात्र निक्रम । द्वितीये विशेषणविशेष्यद्वयोर्भेदेन वाक्यं भिद्येत तस्मात कर्मान्तरविधानान्न बाधः । किं तर्हि समुच्चयः तत्र मध्योक्तिलिङ्गं तथा चाम्नायते पुरस्ताद् वोपरिष्टाद् वा जुहुयाद् बहिरात्मनः सजातीयान् दध्यात यन्मध्यतो जुहोति मध्यत एव सजातीयान्मनुत इति तस्मादामनहोमानामनुयाजैः सह समुच्चयः ।

षष्ठाधिकरणमारचयति ।

पत्नय उपगायन्तीत्यृत्विजो विनिवर्त्तकाः ।

न चाद्यः सामगानोपचयः काण्डादिजस्ततः ॥ १० ॥

नन्दनं दुन्दुभीनां हि चित्ते विपरिवर्त्तते ।

उपगानं भवेत्तेन योग्यं वीणादिजन्ततः ॥ ११ ॥

गवामयने माहाव्रतं नामैकाहस्तत्र श्रूयते । पत्नय उपगायन्तीति तत्र पत्नय उपगायन्त्यः । प्राकृतानामृत्विजामुपगातॄणां निवर्त्तिकाः शारीरसामगानोपचयहेतुकाण्डवीणादिजोपगानकर्तृत्वादिति चेत् । न । दिक्षु दुन्दुभयो नदन्तीति दुन्दुभिगानानामनन्तरविहितानां विपरिवर्त्तमानानामिदमुपगानं कर्मान्तरं न च शारीरमेव गानन्तस्येदमुपगानम् । दुन्दुभिनादस्याशरीरजत्वात्र पत्नीभिः क्रियमाणमुपगानमिति तन्त्रीगानप्रयोगात् किञ्च काण्डवीणादिभिः क्रियमाणमुपगानं दुन्दुभिगानसजातीयं तस्मात् पत्नीभिर्नर्त्विङ्निवर्त्तकाः ।

सप्तमाधिकरणमारचयति ।

अभ्यङ्गो नावनीतः किं बाध्यो गौग्गुलवादिभिः ।

न बाध्यो लेपनैकत्वान्न शैत्यस्नेहभेदतः ॥ १२ ॥

अस्त्यञ्जनाभ्यञ्जनसंज्ञक एकोनपञ्चाशद्रात्रः सत्रविशेषः तत्र श्रूयते । गौग्गुलवेन प्रातःसवनेऽभ्यञ्जनं पैलुदारवेण माध्यन्दिने सवने सौगन्धिकेन तृतीयसवन इति प्रकृतौ नवनीतेनाभ्यङ्क्त इति श्रुतं सोऽयमभ्यङ्गो बाध्यः । लेपजन्यस्य शरीरगतस्नेहकार्य्यस्योभयत्रैकत्वादिति पूर्वः पक्षः । नैतद्युक्तं कुतः कार्य्यभेदात् गौग्गुलवादि लेपजन्य

कार्य्यं चन्दनादिवच्चैक्यं तत्र नावनीतस्यैवाधिक्यं किञ्च नावनीतो दीक्षाकालीनः इतरः सुत्याकालीनः तस्माद् बाध्याभावात् समुच्चयः ।

अष्टमाधिकरणमारचयति ।

तार्प्याहतवस्त्रस्य बाधकं स्यान्न वाग्रिमः ।

गुह्याच्छादनकार्य्यैक्यादयोग्यत्वात् समुच्चयः ॥ १३ ॥

महाव्रते श्रूयते । तार्प्यं यजमानः परिधत्ते दर्भमयं पत्नीति प्रकृतावहतं वासः परिधत्त इति घृताक्तः कम्बल-स्तार्प्यमित्युच्यते । ताभ्यां तार्प्यदर्भमयाभ्यां दम्पत्योरहतं वस्त्रं बाध्यते कुतः । परिधत्त इत्यनेन प्रकृतिलिङ्गेन गुह्या-च्छादनस्य लक्षणस्य कार्य्यस्यैकत्वावगमात् मैवम् । तार्प्य-दर्भमययोर्गुह्यमाच्छादयितुमयोग्यत्वात् परिधानं तदुप-रितनं प्रावरणं तस्मात्कार्य्यभेदात् समुच्चयः ।

नवमाधिकरणमारचयति ।

बाध्यं श्लोकादिनाज्यादि नवाद्यःश्रुतिलिङ्गतः ।

देशसाम्नोर्विधौ भेदोवैशिष्ट्यात्तु समुच्चयः ॥ १४ ॥

महाव्रते श्लोकेन पुरस्तात् सदसस्तुवतेऽनुश्लोकेन पश्चादित्यादि श्रूयते । तत्र श्लोकानुश्लोकादिनामकैः सामभिःप्राकृतान्याज्यपृष्ठादिस्तोत्रगतानि रथन्तरवाम-देव्यादिनामकानि सामानि बाध्यानि कुतः । स्तुवत इति प्रकृतिलिङ्गदर्शनात् प्रकृतावाज्यैः स्तुवते पृष्ठैः स्तुवत इति श्रुतं नैतत्सारं किमत्र श्रुतिमनूद्य देशसामगुणौ विधीयेते । किं वा गुणद्वयविशिष्टा श्रुतिः नाद्यः वाक्य-

भेदापत्तेः द्वितीये तु कार्य्यभेदेन बाध्याभावात् समुच्चयः स्यादिति ।

दशमाधिकरणमारचयति ।

समुच्चीयेत कौत्सादि यद्वा प्रकृतिबाधकम् ।

श्रुत्यभावादादिमोऽन्त्यो लिङ्गप्रकरणद्वयात् ॥ १५ ॥

विकृतिविशेषे श्रूयते । कौत्सं भवति काण्वं भवतीति तदेतत् कौत्सादिनामकं सामप्राकृतेन साम्ना समुच्चीयते कुतः । प्राकृतस्य श्रुतिलिङ्गस्याभावेन कार्य्यैक्याभावात् । नैवम् । प्रकरणात् क्रत्वङ्गत्वे सति ऋगक्षराभिव्यक्तिसामर्थ्यलक्षणप्राकृतलिङ्गेन कार्य्यैक्यावगमात् तस्माद् बाधकम् ।

एकादशाधिकरणमारचयति ।

तत्सर्वबाधकं सर्वमेकद्व्याद्युक्तितोऽथवा ।

अविशेषादादिमोऽन्त्य एकाद्युक्तिविशेषतः ॥ १६ ॥

तत्पूर्वोक्तकौत्सादिसामविषयस्तत्र किं कौत्सं सामप्रकृतसर्वसामनिवर्तकं काण्वमपि तथेत्येकैकस्य सर्वनिवर्त्तकत्वमुच्यते । आहोस्विदेकवचनान्तनिर्दिष्टं एकस्य निवर्तकं द्विवचनान्तनिर्दिष्टं द्वयोर्बहुवचनान्तनिर्दिष्टानि बहूनां तत्र नियामकाभावादाद्यः पक्षः । प्राप्नोति एकादिवचनरूपाणां श्रुतीनां नियामकत्वादन्त्यः पक्षोऽभ्युपेयः । तथा हि कौत्सं भवति वसिष्ठस्य जनित्रे भवतः । क्रौञ्चानि भवन्तीति निवर्त्तकेषु श्रूयमाणानि एकद्विबहुवचनानि निवर्त्त्यानान्तत् संख्यावत्त्वं प्रत्यासत्त्या बोधयन्ति । किं चैवं सत्यबाधितसामविषयश्चोदकोऽनुगृहीतो भवति कृत्स्नबाधे तु सर्वश्चोदको निरुध्यते तस्मान्न सर्वबाधकः ।

द्वादशाधिकरणमारचयति।

स्तोमस्थयोर्वृध्यवृध्यो प्राकृतः किं निवर्त्तते।

अवृद्धावेव वाद्यः स्यात् सामोत्पत्त्युपयोगतः ॥ १७॥

अवृद्धावुपयोगाय प्राकृतस्य निवर्त्तकम्।

वृद्धौ पूर्वापयोगित्वाद् वृद्धौ तु न निवर्त्तकम् ॥ १८॥

सन्ति वृद्धिस्तोमका अविवृद्धस्तोमकाश्च विकृतिरूपाः क्रतवः तत्रोभयत्रापि यानि सामान्युपदिष्टानि तैरतिदिष्टानां साम्नां निवृत्तिः स्यात् अन्यथा सामोत्पत्तिवैयर्थ्यादिति पूर्वः पक्षः। सिद्धान्तः स्पष्टार्थः।

त्रयोदशाधिकरणमारचयति।

क्वापिस्तोत्रे क्वचित्क्वापि स्यादावापस्तथोद्धृतिः।

पवमानेषु गायत्र्यादिष्वेवोतावितिशेषतः ॥ १९ ॥

आद्यौ नोपरिसंख्यानादत्र क्षेवेति तद्विधेः। विध्यन्तराशेषरूपमपूर्वं तद्विधीयते। अवृद्धस्तोमकेषु प्राकृतस्यातिदिष्टस्य साम्न उद्वापः। प्रत्यक्षोपदिष्टा नामा वापः वृद्धस्तोमकेष्वावाप एवेति स्थितं पूर्वाधिकरणे तावेतावावापोद्वापौ यस्मिन् कस्मिंश्चित् स्तोत्रे यस्यां कस्याञ्चिदृचि स्यातां कुतो नियामकाभावादिति पूर्वः पक्षः नो खल्वेतदुक्तम्। एवकारेण प्रकृतपवमानव्यतिरिक्तेष्वाज्यादिस्तोत्रेषु गायत्री बृहत्यनुष्टुप् व्यतिरिक्तास्वृक्षु आवापोद्वापयोः परिसंख्यातत्वादेवकारश्चैव माम्नायते। त्रीणिह वै यज्ञस्योदराणि यद्गायत्री बृहत्यनुष्टुप अत्र ह्येवावापेत्यत एवोद्वपन्तीति। ननु माभूतामन्यत्रा वापोद्वापौ विवक्षितदेशेषु कथं प्राप्नुत इति चेत्। अनेन वाक्येन तद्विधानादिति ब्रूमः। न

चायमर्थवादः। अनन्यशेषत्वात् नाप्यनुवादः अपूर्वार्थत्वात् तस्मात् पवमानेष्वेव गायत्र्यादिषु आवापोद्वापौ।

चतुर्दशाधिकरणमारचयति।

पर्य्यायेणापि देवोक्तिर्वैधेनैव पदेन वा।

अर्थाभेदादादिमोऽन्त्यः शब्दपूर्वान्वयित्वतः॥ २०॥

दर्शपूर्णमासयोर्ये निगमास्तेष्वग्न्यादिदेवताः किं पावकशुच्यादिना येन केनापि पर्य्यायेणाभिधातव्याः। किं वा तद्विध्युद्देशगतेनाग्न्यादिपदेनैवेति संशयः। तत्र शब्दोऽर्थप्रत्यायनार्थस्तत्पर्य्यायाणां स्वरूपभेदेऽपि अर्थाभेदाद्येन केनापि अभिधानमिति पूर्वः पक्षः। यत्र ह्यर्थे कार्य्यमामायते तत्र शब्दोऽर्थं प्रत्यायनार्थो भवति। यत्र पुनः शब्द एव कार्य्यं तत्र कार्य्यमत्त्वन्वयी शब्द एव प्रत्यायितव्यः। तद्यथा देवदत्ते गौरवातिशयमुत्पादयितुं राजसभायामाचार्य्योपाध्यायादिशब्दैस्तं व्यवहरन्ति पितृमातृमातुलादयश्च तत्तत्सम्बन्धवाचकशब्देन यथा तुष्यन्ति न तथा स्वनामग्रहणेन प्रत्युत कुप्यन्त एव तद्वदत्रापि अग्न्यादिवैधशब्द एव कार्य्यमासक्तं विधिं विना यागदेवतयोः सम्बन्धाभावात् विधिकृते तु तत्सम्बन्धे शब्दस्य प्रयोजकत्वं दुर्वारं अत एवायाट् स्वाहाकारोज्जित्यादिनिगमेषु नियमेन वैधा एवाग्न्यादिशब्दाः प्रयुज्यन्ते। यथा अग्नेः प्रियाधामानि अयाट् सोमस्य प्रियाधामानि स्वाहाग्निं स्वाहा सोमं अग्नेरहमुज्जितिमनूज्जेषं सोमस्याहमुज्जितिमनूज्जेषमित्यादिना तस्माद्विधिपदैरेव तत्तद्देवताभिधानम्।

पञ्चदशाधिकरणमारचयति ।

सौर्य्यादिनिगमे कोऽपि शब्दः स्यादेष एव वा ।

चरौ सूर्य्यान्वयादाद्यः प्रयोगान्वयतोऽन्तिमः ॥ २१ ॥

सौर्य्यं चरुं निर्वपेदित्यादिविकृतिषु चोदकातिदिष्टाये निगमास्तेष्वग्न्यादिशब्दस्थाने सूर्य्यार्थप्रत्यायकः । शब्द ऊहितव्यः स चादित्यादिनामपर्य्यायेणापि प्रत्याययितुं शक्यते वेधस्तु सूर्य्यशब्दस्यकृत्याग एवान्वितः न त्वग्न्यादिशब्दवन्निगमेषु पठितस्तस्माद्यः कोऽपीति प्राप्ते ब्रूमः । अत्र सौर्य्यं निर्वपेदिति प्रयोगवचनेन सूर्य्यान्वयो भवति । ननु सौर्य्यश्चरुरिति चरुणा कारकविभक्तिर्द्वितीया सा चाख्यातेन सम्बध्यते न नाम्ना सति च प्रयोगान्वये याज्या पुरोनुवाक्ययोर्निगमे वा यत्र प्रयोगोऽपेक्षितस्तत्र सर्वत्र सूर्य्यशब्द एव युक्तः प्रकृतावपि निगमेषु नार्थमात्रविवक्षयाग्निशब्दः प्रयुज्यते किं तर्हि वेदविवक्षयापि तथा सत्यतिदेशोऽपि वेधशब्दविषय एव भविष्यति । तस्मात् सूर्य्यशब्द एव प्रयोक्तव्यः ।

षोडशाधिकरणमारचयति ।

निगमे पावकाग्न्योः किमग्नि स्यादुभयोभयम ।

अग्नियोदकतो मैवं वेधोऽग्निः सगुणो यतः ॥ २२ ॥

प्राधाने श्रूयते । अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेदग्नये पावकायाग्नये शुचय इति तत्र गुणगुणिनोः पावकाग्न्योर्मध्येऽग्निशब्द एव निगमे प्रयोक्तव्यः कुतः । तस्यैव चोदकप्राप्तमन्त्रपठितत्वात् मैवम् । पावक-

गुणयुक्तस्याग्नेर्वैधत्वेन सर्वप्रयोगेषु तथैव प्राप्तत्वात् तस्माच्छब्दद्वयं पठनीयम्।

सप्तदशाधिकरणमारचयति।

वृधन्वन्तादिगुणको देवो वाच्योऽथ केवलः।

आद्यो देवगुणत्वेन मैवं मन्त्रगुणत्वतः॥ २३॥

आधाने पवमानेष्टौ वाज्यभागौ प्रकृत्य श्रूयते। वृधन्वानाग्नेयः कार्यः पावकवान् सौम्य इति तत्र निगमेषु वृधन्वन्तमग्निमावहपावकवन्तं सोममावहेत्येवं सगुणो देवो वक्तव्यः कुतः। वृधन्वन्तादेर्देवगुणत्वात्। तथाहि श्रूयते। वृधन्वानाग्नेयः कार्यः पावकवान् सौम्य इति न खल्वाज्यभागस्य देवताद्वारेण विना साक्षाद् वृधन्वच्छब्दः संभवति। तस्माद्देवगुणत्वात सगुणो देवो वक्तव्यः मैवम्। वृधन्वत्ताया मन्त्रगुणत्वात् न ह्यत्राग्नेयशब्दो यागपरः किं तर्हि मन्त्रपरः संभवति हि मन्त्रस्य साक्षाद् वृधन्वच्छब्दप्रयोगः। अग्निं स्तोमेन वर्धयेत्यस्मिन् मन्त्रे वृधिधातोः प्रयुक्तत्वात् वृधन्वता विधिना चाग्नेयमन्त्रान्तरन्निवर्त्यते न च तद्धितान्त आग्नेयपद उपसर्जनीभूतो देवतावाचकोऽग्निशब्दो वृधन्वच्छब्देन विशिष्टुमर्हति तस्मात् केवलोऽग्निशब्दो निगमे पठितव्यः।

अष्टादशाधिकरणमारचयति।

किं गो वनस्पतीकेनाप्युतोऽस्त्वा विधिशब्दतः।

वक्तव्यो निगमाद्वैदो विशेष्टुष्टस्तथाऽग्रिमः॥ २४॥

समेद प्रार्थिकस्तन्तु प्रापयेच्चोदको न हि।

उस्राग्रकरणाम्नानाद्वैधत्वे न वनस्पतिः॥ २५॥

ज्योतिष्टोमे पशुः श्रूयते। गौरनुबन्ध्य इति तथा पशौ स्विष्टकृद्विकारः पठितः। पृषदाज्येन वनतिं यजतीति तावेतौ गो वनस्पती निगमेषु येन केनापि पर्यायशब्देन वक्तव्यौ। कुतः प्रकृतौ विधिनिगमयोर्भेददर्शनेन वैधशब्द-नियमाभावात् तथा ह्यग्नीषोमीयपशुरनुबन्ध्यायाः प्रकृति-स्तत्र पशुशब्दो वैधः। अग्नीषोमीयं पशुमालभेतेति तद्विधानान्निगमेषु छागशब्दः। छागस्य वपाया मेदसोऽ-नुब्रूहीति तथा वनस्पतियागस्य स्विष्टकृच्छागः प्रकृतिः तत्र स्विष्टकृच्छब्द सहितोऽग्निशब्दो वैधः। अग्निं स्विष्ट-कृतं यजतीति विधानात् निगमेषु केवलोऽग्निशब्दः पठितः ये देव्या ऋत्विजस्तेऽभिरग्ने इति मत्वैवं विधि-निगमभेदे वैधशब्दनियमस्य प्रकृतावभावात् विकृतावपि तदभावे सति येन केनाप्यभिधानमिति पूर्व. पक्षः प्रकृता योऽयं विधि प्रयुक्तः निगमभेदः स आर्थिकः इह न प्रयो-क्तव्यस्तस्यार्थिकत्वेन चोदकप्रतिदेशानर्हत्वात् न चार्थिक-श्चोदकः प्रतिदिशति तस्माद् वैध एव निगमेषु प्रयोक्तव्यः न चैव मनुबन्ध्य निगमे वैधो गोशब्दः प्राप्नुयादिति शङ्कां तत्रोस्राशब्दस्य साक्षादाम्नातत्वादुस्राया वपाया मेदसोऽनु ब्रूहीति ह्याम्नायते तस्मादुस्रावनस्पतिशब्दौ वक्तव्याविति राद्धान्तः।

एकोनविंशाधिकरणमारचयति।

किमग्निवरुणौ स्विष्टकृच्छब्देन विवर्जितौ।

वक्तव्यौ सहितौ वाच्यौ रूढत्वाद्गुणोक्तितः॥ २६॥

कदाचित् कृतवान् स्विष्टमिति योगाद्‌ गुणे सति।
पावकाग्निनये नात्र वक्तव्यौ सगुणाविमौ ॥ २७ ॥

अवभृथे श्रूयते। अग्नीवरुणौ स्विष्टकृतौ यजतीति तत्र निगमेषु स्विष्टकृच्छब्दवर्जितौ अग्नीवरुणौ वक्तव्यौ कुतः स्विष्टकृच्छब्दस्य योगासम्भवेन वह्नौ रूढस्य गुणवाचित्वाभावात् स्विष्टं कृतवानित्येवं भूतार्थे क्विप्प्रत्ययविधानात् तादृशो योगो वक्तव्यः न चासावत्र सम्भवति स्विष्टस्य करिष्यमाणत्वात् रूढौ तु कार्य्यलक्षणया स्विष्टकृत् कार्य्येऽग्नीवरुणाविति वचनव्यक्तिः सम्पद्यते। तस्मात् स्विष्टकृच्छब्देन वर्जिताविति प्राप्ते ब्रूमः। तेन सहितौ वक्तव्यौ कुतोऽस्मिन् प्रयोगे स्विष्टस्य करिष्यमाणत्वेऽप्यतीतप्रयोगे कृतत्वेन योगसम्भवे क्लृप्तप्रयोगं परित्यज्य कल्प्य रूढ्याश्रयणायोगात् ततः पावकत्वगुणयुक्ताग्निवत् स्विष्टकृत्वगुणयुक्तौ वक्तव्यौ।

विंशाधिकरणमारचयति।

स्विष्टकृत्वगुणो लोप्यो याग एवाखिलेषु वा।
यज्यन्वयाद्याग एव प्रयोगाच्चयुतोऽन्तिमः ॥ १८ ॥

पशुपुरोडाशे स्विष्टकृतिगुणरहितः केवलोऽग्निः श्रूयते। अग्निं यजतीति तत्र गुणरहितस्याग्नेर्यजिश्रवणा तु नान्वयाद्याग एव स्विष्टकृत्वगुणो लोप्यः नैवं यजिशब्दस्य प्रयोगवचनत्वादखिलेषु निगमप्रयोगेषु असौ लोप्यः।

एकविंशाधिकरणमारचयति।

अनुयाजेऽन्तिमो योऽसौ किमारादुपकारकः।

स्विष्टकृत् संस्कृतिर्वाथोऽनुयाजान्तरसाम्यतः।

स्विष्टकृत्त्वगुणस्याग्नेः प्रत्यभिज्ञाथवस्त्वतः॥ २९॥

दृष्टार्थत्वाच्च संस्कारो भवेदन्यप्रयाजवत् दर्शपूर्णमासयो स्त्रयोऽनुयाजाः समाम्नाताः। तत्र प्रथमद्वितीयानुयाजवत् तृतीयोऽप्यारादुपकारक इति पूर्वः पक्षः। अस्ति प्रधान होमनारिष्टहोमान्तरभावी प्राशित्रादिभक्षणात् प्राचीनः पुरोडाशादिद्रव्यकः स्विष्टकृद्धोमः सर्वेषां हविषामुत्तरा र्धात् सकृत् सकृत् स्विष्टकृतेऽवद्यतीत्यादिना तदभिधानात प्राशित्रादिभक्षणोत्तरकालीनेष्वाज्यद्रव्यकेष्वनुयाजेषु तृतीये स्विष्टकृत्त्वगुणेन प्रत्यभिज्ञास्ति देवो अग्निः स्विष्टकृदिति मन्त्रपाठात् सा च पूर्वस्विष्टकृद्देवतास्मरणसंस्कारे सत्यर्थ वती स्यात्। प्रथमद्वितीययोस्तु नास्ति सेति वैषम्य किञ्च संस्कारपक्षे दृष्टार्थस्तृतीयः स्यादन्यप्रयाजवदन्योऽनु याजः स्यात्।

द्वाविंशाधिकरणमारचयति।

अन्वाहेत्यर्थकर्म स्यात् संस्कारो वार्थकर्मता।

शुक्लवत् कार्य्यताज्ञानाद् दृष्टार्थत्वेन संस्कृतिः॥ ३०॥

तिस्रन्त्याज्यामन्वाहासीनः पुरोऽनुवाक्यामिति दर्शपूर्ण मासयोः श्रुतं तदेतच्छुक्लादिवदर्थकर्म स्यात् यथा स्तौति शंसन्तीत्यत्र कर्त्तव्यताप्रतीतेः स्तोत्रशस्त्रयोरर्थकर्मत्व तथानुवचनस्यापि मैवं चोदितदेवतास्मरणसंस्कारस्य दृष्ट प्रयोजनत्वात् तस्मिन् सत्यदृष्टस्य कल्पयितुमशक्यत्वात् ननु मन्त्रसामर्थ्यादेव देवतास्मरणसिद्धे नन्वाहेति तद्विधानं

र्थ्यम्। एवं तर्हि प्रागनुवचनमनूद्य तिष्ठन्नासीन इति स्थानासनगुणौ विधीयेयाताम्।

त्रयोविंशाधिकरणमारचयति।

मनोता मन्त्र ऊहोऽस्ति वायव्ये नास्ति वास्त्यसौ।
आग्नेय्येवेति वचनं प्रकृतौ सार्थकं यतः ॥ २१ ॥
अग्नीषोमावग्निनैव लक्ष्येतां वचनं विना।
अनर्थकात्ततो वाक्याद्विकृता वूहवारणम् ॥ २२ ॥

त्वं ह्यग्ने प्रथमो मनोतेत्ययं मनोता मन्त्रोऽग्नीषोमीय पशौ पठितः वायव्यपशावप्ययं चोदकप्राप्तः तत्र त्वं हि वायो प्रथम इत्येव मूहोऽस्ति यत्तु वचनं यद्यप्यन्यदेवत्यः पशुराग्नेय्येव मनोता कार्य्येति तत् प्रकृतौ पठितं तत्रैव च सार्थकं द्विदेवत्यपशावेकदेवत्यमन्त्रस्य प्रकरणपठितस्यायोग्यत्वशङ्कायां पुनर्विधानार्थत्वात् नैवं छविर्गच्छन्तीत्यादिवन्मन्त्रात् तस्याग्निशब्दस्याग्नीषोमलक्षकत्वे नायोग्यत्वशङ्काया अनुदेयात् प्रकृतावनर्थकं तद्वाक्यं विकृतवूहनिवारणेन चरितार्थं भवति तस्मादूहो नास्ति।

चतुर्विंशाधिकरणमारचयति।

बृहद्रथन्तरे स्वीय योनौ कण्वरथन्तरम्।
रथन्तरस्यैव योनौ किं स्वयोनावुताग्रिमः ॥ २३ ॥
चोदकस्याविशेषेण द्वितीयो नामसाम्यतः।
अनङ्गत्वान्नातिदेशः स्वयोनौ पठितत्वतः ॥ २४ ॥

वैश्यस्तोमे पृष्ठस्तोत्रे सामविशेषो विहितः कण्वरथन्तरं पृष्ठं भवतीति प्रकृतौ पृष्ठस्तोत्रे बृहद्रथन्तरसाम विकल्पिते त्वामिद्धि हवामह इतीयं ऋक् बृहतो यो

अभित्वा शूरेति रथन्तरस्य पुनानः सोमेति कण्वरथन्तरस्य तत्र बृहद्रथन्तरयोरन्यतरस्य साम्नो योनौ कण्वरथन्तरं गेयं कुतः चोदकप्राप्तयोर्विशेषनियामकाभावात् अथवा रथन्तरस्यैव योनौ गेयं कुतः रथन्तरस्येति नामसाम्यस्य धर्मातिदेशार्थत्वेन नियामकत्वात्। नैतद्युक्तं बृहद्रथन्तरसाम्नोरिव प्रकृतावङ्गत्वे न विधानं न तु तद्योन्योः। अतो नास्ति तयोरतिदेशतः प्राप्तिः तस्मात् स्वयोनौ गेयमिति परिशिष्यते प्राप्तिश्च सामगानामुत्तराग्रन्थपाठाद्वगन्तव्या एवं सति श्रुतहान्यश्रुतकल्पने भविष्यतः।

पञ्चविंशाधिकरणमारचयति।

सन्देहनिर्णयौ पूर्ववद्योनेस्तरयोर्ऋचोः।

योनित्यागः समर्थत्र ऋचगस्त्वेन बाधनात्॥ २५॥

एकं सामात्र्यचे क्रियत इति श्रुतिः। कण्वरथन्तरसाम्नस्त्र्यचं व्रयमाम्नातः। तत्रैका स्वयोनिरितरे स्वयोन्युत्तरे एवं बृहद्रथन्तरसाम्नोऽपि तत्र बृहदुत्तरयो रथन्तरोत्तरयोर्वातिदेशप्राप्तयोर्विशेषेण स्वर्च्छया गेयमित्याद्यः पक्षः। नामसाम्याद्रथन्तरोत्तरयोरेव गेयमिति द्वितीयः पक्षः। प्रकृतावृचः साक्षादङ्गत्वाभावेऽपि सामद्वारकमङ्गत्वमङ्गीकृत्य चोदकप्राप्त्या पक्षद्वयोपन्यासः। योनिवदुत्तरयोरप्युत्तराग्रन्थपठितत्वात् स्वयोन्युत्तरयोर्गेयमिति तृतीयः पक्षो राद्धान्तः। बृहद्रथन्तरोत्तरयोः स्वयोन्युत्तरयोर्वा गेयत्वं सर्वथापि स्वयोन्युक्त्यागऋगन्तरपरिग्रहश्च समानस्तथा सति चोदकोऽत्र प्रापक इति पूर्वपक्षिणोऽभ्यधिका शङ्का

दचशब्दः समानच्छन्दस्कानामेकदेवत्यानामृचामन्वये प्रसि-
द्धोऽस्तृच श्रुत्याप्रत्यचतया चोदकप्राप्तस्य बाध इति राद्धा-
न्ताशयः ।

षड्विंशाधिकरणमारचयति ।

आग्नेयेष् ग्रहेषूहो नास्ति वा स्तुतशस्त्रयोः ।
संस्कारत्वादस्तिमैवमर्थकर्मत्व निश्चयात् ॥ २६ ॥

अग्निष्टुदाख्ये एकाहे श्रूयते । आग्नेया ग्रहा भव-
न्तीति तेष् चोदकप्राप्तयोर्नानादेवयोः स्तुतशब्दयोः संस्कार-
कर्मत्व भ्रमेणास्त्यूह इति वदन्तः प्रत्येतदुत्तरद्वितीयाध्याये
तयोरर्थकर्मत्वस्य निर्णीतत्वात् नास्त्यूह इति ।

सप्तविंशाधिकरणमारचयति ।

चातुर्मास्यातिदिष्टेष् निगमेष्वाज्यपानिति ।
विक्रियेत न वायेऽपि किं स्याद्दध्या अपानिति ॥ २७ ॥
दधिपानितिवा यद्वेत्येवं स्यात् पृषदाज्यपान् ।
द्रव्यद्वयोक्तेराद्यः स्याद्दधिमात्र हविष्टतः ॥ २८ ॥
द्वितीयः स्यात् तृतीयोऽस्तु द्रव्यान्तर विधानतः ।
गुणो दध्ना चित्ततान्ये ततो विक्रियते न हि ॥ २९ ॥

चातुर्मास्येष् चोदके नावाहनस्वाहाकारायाट् जोष-
र्णिगमा अतिदिष्टास्तत्राज्यपशब्दः प्रयुक्तः । देवाना-
ज्यपानावहस्वाहादेवानाज्यपानयाट् देवानाज्यपानां प्रि-
याधामानि देवा आज्यपा आज्यमजुषन्तेति सोऽय-
माज्यपशब्दो विक्रियते न वेति संशयः । विकारोऽपि
त्रिविधस्तत्र दध्याज्यपानित्याद्यस्तावत् प्राप्नोति कुतः ।
अथ पृषदाज्यं गृह्णाति इयं वा इदं सर्पिश्च दधि चेति

द्रव्यद्वयस्योक्तत्वात् आज्यस्योपस्तरणाभिघारार्थत्वेन हविः-शेषत्वाद्धविष्ट्वं नास्तीति दध्येव हविस्ततो दधिपानिति द्वितीयः पक्षः। पृषदाज्यशब्देन द्रव्यान्तरमुच्यते पृषदाज्येनानूयाज्यान् यजतीति तस्य हविष्ट्वं ततः। पृषदाज्यपानिति द्वितीयः पक्षः। पृषत्त्वनामचित्रतासाचाज्यगतो गुणः स च दधिमेलनेन निष्पद्यते। तस्मादस्यैव द्रव्यत्वादाज्यपशब्दोऽपेता एव निगमाः पठितव्याः।

इति जैमिनीयन्यायमालाविस्तरे दशमाध्यायस्य चतुर्थः पादः।

—०—

अथ दशमाध्यायस्य पञ्चमः पादः।

प्रथमाधिकरणमारचयति।

प्राकृतानामेकदेशो कोऽपि स्यादाद्य एव वा।
अविशेषात् कोऽप्याद्यः पूर्वमस्यैव बोधनात्॥१॥

प्रकृतावाग्नेयमष्टाकपालमित्यष्टसंख्याकानि कपालानि विहितानि विकृतिषु यावा पृथिव्यमेककपालमाश्विनं द्विकपालं वैष्णवं त्रिकपालमित्यादिष्वष्टानामेकदेशस्तत्राद्यो मध्यमोऽन्त्यो वा यः कोऽप्येकदेश इच्छया स्वीकार्य उताद्य एवैकदेशः नियामकाभावाद्यः कोऽपीति प्राप्ते ब्रूमः। आचतुर्थात् कर्मणोऽभिसमीक्षेतेदं करिष्यामीत्युक्तत्वादनुक्रमेण स्मृत्वानुष्ठेयानि तत्र प्राकृतोऽनुक्रम एवंविध उपवेषनामकेन काष्ठविशेषेण प्रथमसङ्गारविशेष

सम्यगवस्थाप्य ध्रुवमसीति मन्त्रेण तस्मिन्नङ्गारे पुरोडाश- कपालमुपदधातीति सोऽयमनुक्रमश्रौतक्रमाप्रास्तथैव स्मर्यते तत्राङ्गारावस्थापनेन पूर्वपदार्थेनानन्तरभाविप्रथमकपा- लोपधानमेव बद्धावुपस्थाप्यते । न च द्वितीयं न च प्रथम- द्वितीययोर्विशेषाभावः द्वितीयस्य हि धर्वमसीति मन्त्रः प्राचीनदेशस्य च विशिष्यते सत्येवं क्रमनियमे प्रतीतपरि- त्यागाप्रतीतस्वीकारयोरयुक्तत्वादाद्य एवैकदेशः स्वीकार्यः । अविशिष्टस्तु प्रयोजनाभावाल्लुप्यते एकां सामिधेनीमन्वाहे- त्यस्मिन् पञ्चदशसामिधेन्येकदेशे द्विरात्रत्रिरात्रादिषु द्वाद- शाहैकदेशेषु चायमेवन्यायो योज्यः ।

द्वितीयाधिकरणमारचयति ।

तृचाद्यासु तृचे वाद्ये तिसृष्वित्युच्यतेऽग्रिमः ।
त्रिछन्दस्त्वात् प्राकृतं तत्क्रमादत्र तृचोऽखिलः ॥ २ ॥

एकसंख्यायास्त्रिसङ्ख्यायाश्च व्यतिषङ्गविधानादेकत्रिक- नामकः कश्चित् क्रतुर्भवति स चैवं श्रूयते । अथैष एक- त्रिकस्तस्यैकस्यां बहिष्पवमानस्तिसृषु होतुराज्यमेकस्यां मैत्रावरुणस्य तिसृषु ब्राह्मणाच्छंसिन एकस्यामच्छावा- कस्य तिसृषु माध्यन्दिनः पवमान इति सन्ति प्रकृतौ माध्यन्दिन पवमानस्य त्रयस्तृचा उच्चाते जातमित्ययं प्रथमो गायत्रीच्छन्दस्कः पुनानः सोमेत्ययं द्वितीयो बृहतीच्छन्दस्कः । अनुद्रवेत्ययं तृतीयस्त्रिष्टुप्छन्दस्कः । एतदेवाभिप्रेत्य श्रुतं त्रिच्छन्द आवापो माध्यन्दिनः पव- मान इति एवं सत्येकत्रिकस्य माध्यन्दिन पवमाने तिसृष्विति यदुक्तं तत्र त्रयाणां तृचानामाद्यास्तिस्र ऋचो

ग्राह्याः । किं वा प्रथमतृचस्थाः क्रमपठितास्तिस्र इति संशयः । तत्र त्रिछन्दस्त्वश्रुत्या प्रबलया दुर्बलं पाठक्रमं बाधित्वा प्रथमपञ्चौ ग्राह्य इति प्राप्तेऽभिधीयते । यदेतत् त्रिच्छन्दस्त्वं तदेतत् प्राकृते तत्र छन्दस्त्रयोपेतस्य तृचत्रयस्योपदिष्टत्वात् । विकृतावपि तत् सर्वमतिदिष्टमिति चेत् बाढम् । अतएव पाठक्रमोऽतिदिष्टः तथा सति क्रमात्तु गायत्रीच्छन्दस्कस्य तृचस्य समाप्तौ सत्यां पश्चाद् बृहतीच्छन्दस्के तृचे प्रथमाया ऋचः प्रारम्भावसरः स चारम्भोऽस्तु-स्तृप इति विशेषविधानेन बाध्यते । तस्मादाद्यस्तृचो निखिलो ग्राह्यः ।

तृतीयाधिकरणमारचयति ।

तृचे स्याद्दृचिवैकस्यां धुर्गानं प्रकृताविव ।
तृचे भवेदिहैकस्यां श्रुत्या ह्यावृत्तिविधानतः ॥ ३ ॥

एकत्रिके क्रतौ व्यतिषक्तीष्वेकस्यां तिसृषु च स्तोत्रेषु सम्पाद्यमानेषु यद्धुर्गानं तत् किं तृचे स्यादुतैकस्यामृचीति संशयः तत्र चोदकेन तृचे भवेदिति प्राप्ते ब्रूमः । इहैक-त्रिकक्रतावेकस्यामृचि धुर्गानं भवेत् । कुतः आहृतं धुर्यं त्वत इत्यावृत्तिविधानात नतु तृचे गानेऽपि साम्नाम्निरावृत्ति-र्भवेत् आवृत्तिश्रुतिविशेषणत्वाद् गुणसङ्कीर्त्तनपरः पदसमूह-श्रुतिः तत्रगावृत्तिं विना तिसृष्वृत् न सिध्यति तस्मादेकस्यां धुर्गानम् ।

चतुर्थाधिकरणमारचयति ।

द्विरात्रादौ द्वादशाहप्रायणीयादिकः क्रमः ।
आद्यन्तौ वर्जयित्वा वा विशेषाभावतोऽग्रिमः ॥ ४ ॥

द्वादशाहे द्वितीयस्य द्विरात्रे प्रथमत्वत: ।
जागतस्यान्तरायाच्च विध्यन्तो दशरात्रग: ॥ ५ ॥

अहीनरूपस्य द्वादशाहस्य विकृतयो द्विरात्रत्रिरात्रा-दय: तेषु किं द्वादशाहस्य प्रथममह: प्रायणीयसंज्ञमारभ्य क्रमेण विध्यन्त: प्रवर्त्तते किं वा प्रायणीयो दयनीयावाद्यन्तौ वर्जयित्वा तन्मध्यगस्य दशरात्रस्य विध्यन्त: प्रवर्त्तत इति संशय: ईदृश मह्नरूपादेयमीदृशं वर्जनीयमिति विशेषनियामकाभावादादित आरभ्य प्रवर्त्तत इति पूर्व: पक्ष: । द्विरात्रप्रकरण एव माम्नायते यत् प्रथमं तद्द्वितीयं यद्द्वितीयं तत्तृतीयं इति अयमर्थ: । यद्द्विरात्रस्य प्रथम-महरनुष्ठेयं तद्द्वादशाहस्य द्वितीयमिति एवमुत्तरत्रापि योज्यं तदेतत् प्रायणीयवर्जने लिङ्गं तथा जगतीमन्त्यं-मयतीति जागतस्याङ्गोऽन्तराय आम्नायते। तच्च उदय-नीय वर्जने लिङ्गमेवमादिभिर्लिङ्गैरुभयं वर्जयित्वा वशि-ष्टस्य विध्यन्तो यत्र यावानपेक्षित: तत्र तावान् प्रवर्त्तत इत्यवगन्तव्यम् ।

पञ्चमाधिकरणमारचयति ।

धूनने वपने चाग्नौ सप्त चोक्ताश्चतुर्दश ।
किमाद्यारम्भ नियम: किं वा रम्भो निजेच्छया ॥ ६ ॥
कपालवत्क्रम: प्राप्त: केचित् प्रकरणोदिता: ।
व्यर्था:स्युस्तेन मन्त्राणामारम्भोऽत्र विकल्पित: ॥ ७ ॥

अग्निचयने मन्त्रा आधूननार्था वपनार्थाश्च बहव: पठिता: प्रयोगेषु तदेकदेशसंख्याविहिता सप्तभिराधूनोति चतुर्दशभिर्वपति तत्र प्रथमाधिकरणात् कपालसामिधेन्या-

दिन्यायेन प्रथमपठितस्यैव मन्त्रस्योपक्रमः प्राप्नोति। तदयुक्तं कुतः यथोक्तसंख्यातिरिक्तानां प्रकरणपठितमन्त्राणां वैयर्थ्यप्रसङ्गात् प्रकरणेन क्रमं बाधित्वा निजेच्छया प्रथमतो मध्यतोऽन्ततो वोपक्रम्य विहितसंख्या पूरणीया।

षष्ठाधिकरणमारचयति।

स्तोमवृद्धिः किमभ्यासादागमाद्वाद्यिमो यतः।
न कल्प्यमश्रुतं नैवं संख्या वा पाठलिङ्गतः॥ ७॥

त्रिवृत्स्तोमः क्रतौ सामान्यते। एकविंशेनातिरात्रेण प्रजाकामं याजयेत। त्रिणवेनौजस्कामं त्रयस्त्रिंशेन प्रतिष्ठाकाममिति प्रकृतिगतेभ्यस्त्रिवृत्पञ्चदशादिस्तोमेभ्यो विवृद्धा एकविंशत्रिणवत्रयस्त्रिंशस्तोमास्तेषु किं प्राकृतानां साम्नामभ्यासाद्वृद्धिर्भवति किं वा सामान्तरागमादिति संशयः। अश्रुतस्य सामागमस्य कल्पयितुमशक्यत्वादभ्यासाद्वृद्धिरिति प्राप्ते ब्रूमः। अभ्यासोऽपि न साक्षाच्छ्रुतः किं त्वेकविंशादिसंख्यापूरणाय कल्प्यते संख्या च द्रव्यगताभिन्नद्रव्यैरेव पूर्यते न त्वेकद्रव्यावृत्त्या न ह्यष्टकृत्व एकं घटमानीय मद्गृहे सन्त्यष्टौ घटा इति व्यवहरन्ति ततः स्तोमावयवद्रव्यगता संख्या तदवयवभूतानां साम्नां पदार्थानां भेदं गमयति स च भेदः सामान्तरागमलिङ्गमत एवा वपन्तीत्यावापोद्देशेन दशविधे विधिपरं लिङ्गं सामान्तरोत्पत्त्यर्थत्वमन्यलिङ्गं तस्मादागमेन वृद्धिः।

सप्तमाधिकरणमारचयति।

किं बहिष्पवमानर्चां सामर्चां वाभिपूरणम्।

साम्ना पूर्वोक्तितो मैवं साम्नैकत्व परात्कृत: ॥ ८ ॥

प्रकृतौ प्राप्त: सवने बहिष्पवमानस्याविद्धद:। स्तोम-स्तोम्य विकृतिषु वृद्धौ सत्यां पूर्वोक्तरीत्या सामान्तरागमे प्राप्ते ब्रूम:। एकं हि तत्र सामेति बहिष्पवमानं प्रकृत्य सामैकत्व माम्नायते। अतो न सामान्तरागम: सम्भवति एवं तर्ह्यभ्यासेन संख्यापूर्णमस्त्विति न वाच्यं पराग-बहिष्पवमानेन स्तुवन्तीति पराक्शब्देनाभ्यासप्रतिषेधात् तस्मादृगागम:।

अष्टमाधिकरणमारचयति।

सामिधेनी विवृद्धौ किमागमोऽभ्यस्यतामुत।

आगम: पूर्ववन्मैवमभ्यास: प्रकृतित्वत: ॥ ९ ॥

तत्राप्याद्यन्तयोर्यावत्पूर्त्यभ्यासो यथोक्ति वा।

अभ्यस्यागमत: पूर्त्ति: पूरणार्थत्वतोऽग्रिम: ॥ १० ॥

त्रित्वं न पूरणार्थोक्तमन्यथा यत्र पूरणात्।

विवक्षितमबाधित्वा भवेत्पूरणमागमात् ॥ ११ ॥

दर्शपूर्णमासयो: पञ्चदशसामिधेनीर्विधाय काम्यासु तदा वृत्तिर्विधीयते। एकविंशतिमनुब्रूयात् प्रतिष्ठाकाम-स्येत्यादिना यथा बष्पिवमाने ऋगागम: तथात्रापीति प्राप्ते ब्रूम:। एकादशभि: पठिताभि: पञ्चदशसंख्याया अपूर्त्ता ऋगन्तरागमनेन तत्पूरणं न कृतं किं तु तत्पूर-णायाभ्यासो विहित:। त्रि:प्रथमामन्वाह त्रिरुत्तमामि-त्यत: काम्यानामप्यभ्यासे न पूर्णं युक्तम्। अभ्यासपक्षेऽपि यावत् कृत्वोभ्यासे सत्येकविंशतिसंख्या पूर्य्यते तावत्कृत्व:। प्रथमोत्तमे अभ्यसनीये कुत: विहितस्य त्रिरभ्यासस्य

पूरणार्थत्वदर्शनात् । मैवम् । न हि त्रित्वं पूरणार्थं विहितं प्रथमाया हिरभ्यासेनोत्तमायाश्चतुरभ्यासेनापि पञ्चदश-संख्याः पूरणात् । अतो विवक्षितं त्रित्वं तथा सति तद्-बाधाय प्रथमोत्तमे त्रिरभ्यस्य पञ्चा ऋचामागमेन एक-विंशतिसंख्या पूरणीया ।

नवमाधिकरणमारचयति ।

विकृतौ प्रकृतौ वा स्यात् षोडश्युत्कर्षतोऽग्रिमः ।
अविरुद्धेन वाक्येनानुत्कर्षात् प्रकृतावतौ ॥ ११ ॥

ज्योतिष्टोमप्रकरणे श्रूयते । य एवं विद्वान् षोडशिनं गृह्णातीति सोऽयं षोडशीग्रहो विकृतौ निविशते कुतः प्रबलेन वाक्येन तस्य ग्रहस्य प्रकरणादुत्कृष्टमानत्वात् उत्तरोऽहं हिरात्रस्य गृह्यते मध्यमेऽहं त्रिरात्रस्येति हि वाक्यं हिरात्रादीनाञ्च विकृतित्वं प्रसिद्धं अतः प्रकरणं बाधित्वा विकृतौ निवेश इति प्राप्ते ब्रूमः । अग्निष्टोमे राजन्यस्य गृह्णीयादित्यन्यद्वाक्यमस्ति तेन प्रकृतिभूतेऽग्नि-ष्टोमे निविशते न चात्र प्रकरणबाधः । अग्निष्टोमस्य ज्योतिष्टोमावान्तरसंस्थारूपत्वेन ततोऽनन्यत्वात् न चैवं सति चोदकेनैव हिरात्रादिषु प्राप्तत्वात् पुनर्विधिवाक्यं व्यर्थमिति शङ्क्यम् । अहर्विशेषसम्बन्धाय राजन्यादि-निमित्तनैरपेक्ष्याय वा वाक्योपपत्तेः तस्मात् प्रकृतौ निवेशः ।

दशमाधिकरणमारचयति ।

उक्थ्याग्रयणतः स स्यात् केवलाग्रयणादुत ।
आद्य उभिहयाद्न्त्य उक्थ्योक्तत्वविधित्वतः ॥ १२ ॥

सपूर्वोक्तः षोडशीवचनद्वयबलेनोक्थ्यपात्रादाग्रयण पात्राच्च ग्रहीतव्यः उक्थ्यां निर्गृह्णाति षोडशिनमित्येकं वाक्यमाग्रयणाद् गृह्णाति षोडशिनमिति द्वितीयं वाक्यम्। अतोच्यते आग्रयणपात्रादेव ग्रहीतव्यः कुतः। उकथ्यवाक्यस्योत्तरकालविधिपरत्वात् तं पराञ्च मुक्ता निर्गृह्णातीत्यूर्ध्वकालवाचिनः पराक्शब्दस्य प्रयोगादतोनोभयस्माद् ग्रहणम्।

एकादशाधिकरणमारचयति।

सवनेषु तृतीये वा स त्रयोक्त्या भवेत्त्रिषु।

द्वे निन्दित्वा तृतीयस्य विधेस्तत्रैव गृह्यताम्॥ १४॥

स पूर्वोक्तः षोडशिग्रहस्त्रिषु सवनेषु भवेत् कुतः सवनत्रयस्योक्तत्वात् षोडशिनं प्रकृत्याम्नायते प्रातः सवने ग्राह्यः माध्यन्दिन सवने ग्राह्यस्तृतीय सवने ग्राह्य इति नैतत् सवनद्वयस्यार्थवादत्वेन तृतीय सवनस्योक्तत्वादत एव वाक्यशेषे सवनद्वये निन्दित्वा तृतीय सवनं विधीयते यत्प्रातः सवन इत्यादिना सवनद्वये वज्रपातदोषोऽभिहितस्तृतीय सवने ग्राह्यो न सर्वेषु सवनेषु गृह्णातीति प्रशंसापूर्वकं विहितं तस्मात्तृतीय सवन एव षोडशि ग्रहः।

द्वादशाधिकरणमारचयति।

अग्निष्टोमोक्थ्यसम्बन्धी षोडश्यस्तुतशस्त्रयः।

तद्युक्तोऽवाग्निमः प्राप्तस्तत्तत् संस्थामबाधितुम्॥ १५।

स्तोत्रं भवेत्येकविंशं हरिवच्छस्यते ततः।

दृश्यतेऽन्यसंस्थात्वं स्तुतशस्त्रयुतस्ततः॥ १६॥

षोडशिनं प्रकृत्याम्नायते अप्यग्निष्टोमे राजन्यस्य गृह्णी-

मान्युक्थ्ये ग्राह्य इति सोऽयमग्निष्टोमोक्थ्यासंस्थयोर्वि-हितः । षोड़शिग्रहः स्तुतशस्त्रवर्जितो भवितुमर्हति अन्यथा तदीयाभ्यां स्तुतशस्त्राभ्यां क्रतुसमाप्तौ षोड़शिसंस्थात्वं प्रसज्येत अग्निष्टोमसंस्थात्वञ्च बाध्येत तत्सम्बन्धिसमाप्त्य-भावादिति प्राप्ते ब्रूमः । एकविंशस्तोत्रं भवति प्रतिष्ठित्यै हरिवच्छस्यत इति षोड़शिनि प्रत्यक्षविधिना स्तुतशस्त्रे विहिते किञ्च ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपा-करोतीति ग्रहणचमसोन्नयनयोस्तत्र निमित्तत्वं श्रुतं न हि सति निमित्ते नैमित्तिकं त्यक्तुं शक्यं तस्मात् पूर्वं संस्थात्वबाध्यपि स्तुतशस्त्रयुक्तत्वं द्रष्टव्यम् ।

त्र्योदशाधिकरणमारचयति ।

द्विरात्रेऽङ्गिरसां षोडश्यप्राप्तः किं विधीयते ।

परिसंख्यायते वाद्यो नोदकाच्चोत्तरश्रुतेः ॥ १७ ॥

अनारभ्य विधेः प्राप्तेः परिसंख्यातिदेशतः ।

विकल्पोऽङ्गो द्विरात्रेषु प्रोक्तं वृत्तिकृतो मतम् ॥ १८ ॥

सन्ति बहवो द्विरात्रास्तेष्वङ्गिरसां द्विरात्रे श्रूयते । वैखानसं पूर्वेऽहः साम भवति षोडश्युत्तर इति सोऽयं षोडशी प्राप्तः सन् विधीयते न चोदकात् प्राप्तिः । अङ्गा प्रत्यक्षवचनस्य शीघ्रप्रवृत्तेश्चोदको ह्यानुमानिकत्वेन विलम्बित इति प्राप्ते ब्रूमः । माभूच्चोदकः अस्ति ह्यना-रभ्याधीतं प्रत्यक्षं विध्यन्तरमुत्तरेऽहः द्विरात्रस्य गृह्यते इति तेन सर्वेषु प्राप्तः सन्नङ्गिरसां द्विरात्र एव नान्येषु द्विरात्रेष्विति परिसंख्यायते । ततोऽङ्गिरसां द्विरात्रेषु नियमेन षोडशी गृह्यते । तदितरेष्विति रात्रविकृतत्वेना-

तिदेशादिकमप्यरते तदेतद् वृत्तिकारमतं तदेवाधिकरणं भास्करमतेनारचयति।

परिसंख्यापूर्वपक्षो न सायुक्ता त्रिदोषतः।
प्राप्तस्यैवानुवादेन विधेयः स न गम्यते ॥ १९ ॥

वृत्तिकारस्य सिद्धान्तरूपाया परिसंख्या सैव भाष्यकारमते पूर्व पक्षः। सिद्धान्तस्तु षाड्स्युत्तर इत्ययं विधिरेव न भवति विधित्सितवैखानससामवाक्यशेषत्वेनार्थवादत्वादतः परिसंख्यात्वं दोषत्रयोपेतं नात्र कल्प्यं प्राप्तविध्यर्थस्य परित्यागः। अप्राप्तस्य निषेधार्थस्य स्वीकारः अन्यत्र प्राप्तस्य बाध इति दोषत्रयम्।

चतुर्दशाधिकरणमारचयति।

किं चतुर्थेष्वहीनस्य ग्रहो नानागतेषु वा।
वीप्सैकवचनाभ्यां स्यादेकस्मिन्नेव संग्रहः ॥ २० ॥
चतुर्थाष्टमतापत्तेर्नानाहीनेषु संग्रहः।
जात्यैकवचनं वीप्सान्याय प्राप्तानुवादिनी ॥ २१ ॥

षोड़शिनं प्रत्यामनन्ति चतुर्थे चतुर्थेऽहन्यहीनस्य गृह्णात इति सोऽयमेकस्मिन्नेवाहीने प्रथममारभ्य गणिते चतुर्थेऽहनि ग्राह्यः पुनरपि पञ्चममारभ्य गणिते चतुर्थेऽहनि ग्राह्यः एव सति वीप्सा चरितार्था भविष्यति नानाहीनगतचतुर्थदिवसविवक्षायां चतुर्थेऽहनीत्येतावतैव तत् सिद्धे वीप्सानर्थिका अहीनस्येत्येकवचनं बहुषु नोपपन्नमिति प्राप्ते ब्रूमः एकाहीन पक्षे चतुर्थे चाष्टमे चेत्येव मुच्येत। एकवचनं नानाहीन पक्षे जात्यभिप्रायं वीप्सा बहुप्रदेशगत चतु

दिनस्य न्यायप्राप्तं बहुत्वमनुवदति तस्मान्नानाहीनेषु चतुर्थी संग्रहः ।

षोडशाधिकरणमारचयति ।

प्रकृतौ विकृतौ वा स्याद्ग्रहेष्वाग्रयणाग्रता ।

आद्यः प्रकरणादन्त्यो जगत् सामत्वसम्भवात् ॥ २२ ॥

ज्योतिष्टोमप्रकरणे श्रूयते । यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् यदि बृहत्सामा शुक्राग्रान् यदि जगत्सामाग्रयणाग्रानिति अयमर्थः । माध्यन्दिने सवने पृष्ठस्तोत्रे रथन्तरनामकं साम यस्य सोमयागस्य स सोमो रथन्तरसाम एवमितरत्रापि तत्र जगत्सामसोमे ग्रहाणामाग्रयणादित्वं प्रकरणपाठात् प्रकृतौ निविशत इत्याद्यः पक्षः । जगन्नाम्नः साम्नः साप्तमावाज्जगत्यामुत्पन्नस्य तु साम्नो विकृतिषु विषुवन्नामके मुख्येऽहनि सद्भावाद्विकृतौ निविशते ।

द्वितीयवर्णकमारचयति ।

बृहद्रथन्तरैकं किं द्वयं वोत रथन्तरम् ।

यद्वा जगत्यामुत्पन्नं जगत सामाग्रिमो भवेत् ॥ २३ ॥

ज्योतिष्टोमस्य ताद्रूप्यादविकल्पाय नु द्वयम् ।

जगत्त्वं सर्वसाम्नोऽस्ति तदुक्तिव्यर्थता तदा ॥ २४ ॥

रथन्तरं जगच्छन्दोद्विप्रकृष्टात्र लक्षणा ।

जगत्यृचि स्थितं सामेत्येतत् स्यात् सन्निकर्षतः ॥ २५ ॥

पूर्वोदाहृतवाक्ये जगन्नामकं साम यस्य सोमयागस्यासौ जगत्सामेत्यत्र जगद्विशेषणेन विशेष्यमाणे साम्नि चतुर्धा संशयः । तत्र बृहद्रथन्तरयोरन्यतरः स्यात् कुतः ।

बृहता रथन्तरसाम्ना वेति ज्योतिष्टोमस्यान्यतरसामसाध्यत्वावगमात् जगच्छब्दस्य गच्छति प्रवर्त्तते ज्योतिष्टोमोऽनेनेति व्युत्पत्त्या तत्र सम्भवन्तीति प्रथमः पक्षः। नैतद्युक्तं विकल्पप्रसङ्गात् स चाष्टदोषग्रस्तस्तस्मात् सामद्वय समुच्चयोऽस्त्विपि वेयः। उदाहृतो वा शब्दोऽपि चकारार्थो ज्ञेयः। जगच्छब्दस्य कृत्स्नवाची कृत्स्नत्वं चात्रास्ति एकस्यापि साम्नो परित्यक्तत्वादिति द्वितीयः पक्षः। एतदप्ययुक्तं यदि जगत् सामित्यस्य वैयर्थ्यप्रसङ्गादन्यतरपक्षस्यैन्द्रवायवाग्रत्व शुक्राग्रत्वाभ्यामवरुद्धत्वेन परिशेषेण समुच्चयपक्षस्यैवाश्रयणीयत्वात् पुनस्तदुक्तिर्व्यर्था वाशब्दस्य विकल्पे मुख्योऽत्र बाध्यते। तस्माद्रथन्तरमेवात्र स्यात्तयोनावौशानमस्य जगत इति जगच्छब्दश्रवणेन जगत्समत्वसम्भवादिति तृतीयः पक्षः। तदप्ययुक्तं तत्र ह्यर्थपरं जगत्पदं शब्दपरत्वेनोपलक्ष्यते तेन शब्देन च शब्दोपितामृचमुपलक्ष्यतया च तन्निष्ठं सामोपलक्षणीयमिति विप्रकर्षः। तस्माज्जगत्यामुत्पन्नं सामिति चतुर्थः पक्षोऽस्त्विपि वेयः। यद्यपि छन्दो वाचिना जगतीशब्देन तद्युक्तामृचमुपलक्ष्य सामोपलक्षणीयं तथापि सन्निकृष्यते यतो वैदिको जगच्छब्दो जगती पर्यायः तस्माच्चतुर्थः पक्षो राद्धान्तः।

षोडशाधिकरणमारचयति।

उपवत्यशवत्योस्तो गोसवे यदि वा न हि।
आद्ये विकल्प आहोस्विदुपवत्येव केवला॥ २६॥
विकल्पो द्विनिमित्तत्वाद्राघात; स्यात् समुच्चये।

रथन्तरस्य मुख्यत्वादुपवत्यैव युज्यते ॥ २७ ॥
एकैकस्य निमित्तत्वं प्रकृतावत्र तु द्वये ।
मिलिते पृष्ठता तस्मिन्निर्निमित्ते उभे न हि ॥ २८ ॥

गोसवादिषु क्रतुषु रथन्तर बृहत्पृष्ठयोः समुच्चयो विहितः गोसव उभे कुर्य्यादित्यादिना प्रकृतौ त्विदमाम्नातं उपवतीं रथन्तरपृष्ठस्य प्रतिपदं कुर्य्यादश्ववन्तीं बृहत्पृष्ठस्येति ते इमे उपवत्यश्ववत्यौ ऋचौ पृष्ठद्वयस्यादिमे गोसवादिष्वतिदेशतः प्राप्ते विकल्प्येते कुतस्तन्निमित्तयोः पृष्ठयोर्द्विविधत्वात् न चात्र समुच्चयः शक्यः। ऋचोर्द्वयोः प्राथम्यस्य व्याहतत्वात् तस्माद्विकल्प इत्येकः पूर्वपक्षः। प्रथमश्रुतत्वेन रथन्तरस्य मुख्यत्वादुपवतीमेव प्रतिपदं कुर्य्यादिति द्वितीयः पक्षः। प्रकृतावेकैकं पृष्ठमितरनिरपेक्षमेव निमित्तम्। अत्र तु मिलितस्यैव पृष्ठत्वं तथा सति प्राकृतस्य निमित्तस्यात्राभावेन नैमित्तिके प्रतिपदावपि न स्तः।

अष्टादशाधिकरणमारचयति।

पुरो पाग्रोक्त ग्रहस्य स्थाने स्यादैन्द्रवायव ।
आद्याग्रत्व विधेर्नैवं धारायुक्ताग्रतोदितः ॥ २९ ॥

ज्योतिष्टोमे श्रूयते ऐन्द्रवायवाग्रा ग्रहा गृह्यन्त इति मन्त्रकाण्डविधिकाण्डयोर्ग्रहाणामयं पाठक्रमः उपांशुग्रहः प्रथमः अन्तर्यामग्रहो द्वितीयः ऐन्द्रवायवो ग्रहस्तृतीयः मैत्रावरुणग्रहश्चतुर्थ इत्यादिः। तत्रैन्द्रवायवस्याग्रत्वविधानादुपांशुतः पूर्वमेव ग्रहणमिति पूर्वः पक्षः। नैतद्युक्तं धाराग्रहापेक्षत्वादैन्द्रवायवादयो धाराग्रहास्तद्वाक्ये धारया

गृह्णातीति श्रुतत्वात्। एवं सति पाठक्रमो न बाध्येत तस्मादैन्द्रवायवः स्वस्यैव स्थाने ग्रहीतव्यः।

अष्टदशाधिकरणमारचयति।

सर्वादौ स्वस्य वा स्थाने काम्यः स्यादैन्द्रवायवः।
पुनर्विधेरादिमोऽन्यः कामायैतद्विधानतः॥ ३०॥

ज्योतिष्टोमे एवं श्रूयते ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयाद्यः कामयेत यथा पूर्वं प्रजाः कल्पेरन्निति सोऽयं काम्य ऐन्द्रवायवः सर्वेषामुपांशुप्रभृतीनां ग्रहाणामादौ स्यात्। कुतः धाराग्रहादित्यस्य पूर्वमेव सिद्धौ सत्यां पुनरप्यग्रता विधानादिति पूर्वः पक्षः नात्र सर्वाग्रत्वं विधातुं शक्यं धाराग्रहाणां प्रकृतत्वात्। अतो यथा प्राप्ता-ग्रत्वोपेतानां धाराग्रहाणां कामसंयोगोऽत्र विधीयत इति स्वस्थान एवायं ग्रहः।

एकोनविंशाधिकरणमारचयति।

स्वस्थाने प्रतिकर्षो वा शुक्रादेः पूर्ववत् भवेत्।
स्थाने नैवं तदग्रत्वात् प्राप्तिः सम्प्रति कृष्यताम्॥ ३१॥

तत्रैव श्रूयते शुक्राग्रान् गृह्णीयादभिचरतो मन्थ्यग्रान् गृह्णीयादभिचर्य्यमाणस्येत्यादि पूर्वन्यायेन शुक्रादीनां स्वस्थाने ग्रहणमिति प्राप्ते ब्रूमः। ऐन्द्रवायवस्य धाराग्रहाग्रत्वं स्वस्थाने पाठादेव प्राप्तं शुक्रादीनान्तु तन्नेति वैषम्यं तथा सति विधीयमानाग्रत्वं पाठक्रमबाधमन्तरे-णानुपपन्नत्वात् प्रतिकृष्यते।

विंशाधिकरणमारचयति।

स सर्वादावैन्द्रवाय वादौ वाताविशेषतः।

सर्वादावाश्रयादैन्द्रवायवादौ श्रुतेरपि॥ २२॥

स पूर्वोक्तः प्रतिकर्षः सर्वेषामुपांश्वादीनां ग्रहाणामादौ युक्तः कुतः विशेषाश्रवणात् सामान्यतः श्रुतमग्रत्वमनपेक्षितत्वात् सर्वमुख्यं नैतदेवं प्राकृतान् धाराग्रहानाश्रित्य फलाय शुक्राग्रत्वविधानात् किञ्च धारयेयुस्तं यं कामय गृह्णीयुरैन्द्रवायवं गृहीत्वा सादयेदिति श्रूयते। तत्र काम्यस्य शुक्रादेर्धारणादनन्तरमैन्द्रवायवस्य ग्रहणं विवक्षितार्थं लिङ्गं तस्मादैन्द्रवाय्वादौ प्रतिकर्षः।

एकविंशाधिकरणमारचयति।

नापकर्षोपकर्षो वा सादनस्या श्रुतत्वतः।

न मैवं ग्रहशेषत्वात्तत्रागतेर्ग्रहान्तरम॥ २३॥

सर्वत्र ग्रहा गृहीत्वा साद्यन्ते तथा सति यथा काम्यग्रहणस्यापकर्षस्तत्र सादनस्यापकर्षो न शङ्क्यः. कुतः अश्रुतत्वात् शुक्राग्रानित्यग्रशब्देन यथा ग्रहणस्यापकर्षः श्रूयते न तथा सादनापकर्षप्रतिपादकः कश्चिच्छब्दोऽस्ति तस्मान्नापकर्षः। नैतद्युक्तं सादनस्य ग्रहशेषत्वमशक्यं त्वत्र-शस्यते न तु पूर्वग्रहमसादयित्वा ग्रहान्तरं शक्यं गृहीतुम। अतो ग्रहापकर्षे तच्छेषभूतं सादनमपि अपकृष्यते।

द्वाविंशाधिकरणमारचयति।

प्रदानस्यापकर्षोऽस्ति न वा सादनवद्भवेत्।

प्रदानस्य तु मुख्यत्वान्नापकर्षोऽत्र युज्यते॥ २४॥

पूर्वोक्तकाम्यानां ग्रहाणां ग्रहणापकर्षानुसारेण सादनस्य यथापकर्षस्तद्वत् प्रधानस्यापीति चेत् मैवम्. वैषम्यात् सादनं

हि ग्रहणक्रमेषः प्रदानं तु न तथा प्रत्युत ग्रहणमेव प्रदानस्य शेषः अतएव शेषानुसारेण न शेषिणोऽपकर्षो युक्तः।

त्रयोविंशाधिकरणमारचयति।

त्र्यनीकायावैन्द्रवायव शुक्राग्रानुवादता।

परिसंख्यार्थवादो वा विधिर्वा न हि त्रयम्॥ २३॥

वैयर्थ्येन त्रिदोषत्वाल्लक्षणा पतितस्तथा विधिराग्रयणाग्रत्व इवा नैमित्तिको हि सः। अस्ति द्वादशाहे त्र्यनीका ऐन्द्रवायवाग्री प्रायणीयोदयनीयौ दशमं चाहः। अथेतरेषां नवानामह्नामैन्द्रवायवाग्रं प्रथममहरथ शुक्राग्रमथाग्रयणाग्रमथैन्द्रवायवाग्रमथ शुक्राग्रमथाग्रयणामथैन्द्रवायवाग्रमथ शुक्राग्रमथाग्रयणाग्रमिति तत्र द्वादशाह गतेषु द्वितीयादिषु त्रिष्वहःसु क्रमेणैन्द्रवायवाग्रत्वं शुक्राग्रत्वाग्रयणाग्रत्वानि विहितानि तेष्वाद्यं रथन्तरनिमित्तं द्वितीयं बृहन्निमित्तमेतच्च प्रकृतौ व्यवस्थितमुभयमत्र चोदकेन प्राप्तं तत्र चतुर्धा संशयः। अनुवादो वा परिसंख्यावार्थवादो वा विधिर्वेति तत्र प्राप्तत्वादनुवाद इति चेत् न। वैयर्थ्यापत्तेः। तर्हि गुणान्तरपरिसंख्यास्त्विति चेत् न। दोषत्रयापत्तेः। तृतीयेऽहन्यप्राप्तस्याग्रयणाग्रत्वस्य प्रशंसार्थोऽयमर्थवाद इति चेत् न लक्षणावृत्तिप्रसङ्गात् तस्मादाग्रयणाग्रत्वे यथा विधिस्तथेतरयोरपि द्रष्टव्यः न च प्राप्तत्वादविधिरिति वाच्यम्। अस्य विधेर्नैमित्तिकत्वाभ्युपगमाद्रथन्तरादिनिमित्तकयोरेव हि चोदकेन प्राप्तिः प्रयोजनं द्वादशाह विकृतिषु यत्र क्वापि रथन्तरादिनिमित्ताभावेऽपि ऐन्द्रवायवाग्रत्वसिद्धिः।

चतुर्विंशाधिकरणमारचयति।

व्यूढोऽपि प्रकृतिः किं वा विकृतिः स्यादिपूर्ववत्।
विधिसाम्यादादिमोऽन्त्यो लिङ्गात् कामे विधेरपि ॥२६॥

द्विविधो द्वादशाहः समूढो व्यूढश्च तत्र समूढः पर्वमुदाहृतः। अथ व्यूढ उदाह्रियते ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ अथेतरेषां दशानामह्नामैन्द्रवायवाग्रं प्रथममहरथ शुक्राग्रमथ द्वे आग्रयणाग्रे अथैन्द्रवायवाग्रमथ द्वे शुक्राग्रे अथाग्रयणाग्रमथ द्वे ऐन्द्रवायवाग्रे इति तत्र समूढस्य तावत् प्रकृतित्वमविवादं तद्वत् व्यूढोऽपि किं प्रकृतिः किं वा समूढस्य विकृतिरिति प्राप्ते कुतः। विधिसामान्यात् यथा समूढप्रकारः। क्रत्वर्थो विहितस्तथा व्यूढप्रकारोऽपि न चात्र कश्चिद्विशेषोऽस्ति येन तयोः प्रकृतिविकृतिभावो निर्धार्येत। न च प्रकारद्वयस्य प्रकृतित्वमदृष्टचरं रथन्तरबृहत्पृष्ठयोर्ज्योतिष्टोमप्रकारयोस्तद्दर्शनादिति पूर्वः पक्षः। व्यूढः समूढस्य विकृतिः कुतः लिङ्गदर्शनात् ऐन्द्रवायवस्य वा एतदायतनं यच्चतुर्थमहरिति श्रूयते। एतच्च विकृतित्वे सति भवति नान्यथा तथा हि व्यूढे प्रायणीयोदयनीयव्यतिरिक्तेषु दशस्वहःसु यच्चतुर्थं तदाग्रयणाग्रत्वादैन्द्रवायवस्यायतनं समूढे तु तद्दर्शनवानातह्नां मध्ये तिकादित्वादैन्द्रवायवाग्रम्। तच्च व्यूढस्य विकृतितायां चोदकेन प्राप्यमाणं विधिसिद्धाग्रयणाग्रमुतयेऽनूद्यत इति युक्तं किञ्च यः कामयेत बहुः स्यां प्रजायेयेति कामय व्यूढो विधीयते तथा सति समूढवत् क्रत्वर्थं विध्यभावाद्रथन्तरबृहत्पृष्ठवैषम्येण विकल्पितप्रकृतित्वं नास्ति।

ततः समूढस्य द्वादशाहस्य विकृतिष्वहर्गणेषु तयोरन्यतरस्यातिदेशः पूर्वपक्षिणः समूढस्यैवातिदेश इति सिद्धान्ते।

पञ्चविंशाधिकरणमारचयति।

दण्डाकलितवत्सूक्ते त्र्यनीकावृत्तिरिष्यते।

स्वस्थानवृद्धिरथवा स्यादाद्योऽह्नर्विवक्षया॥ ३७॥

न विवक्षावाक्यभेदान्न वानीकैस्तु पूरणम्।

एकैकवृद्ध्या नविना तेनैकैकं विवर्धते॥ ३८॥

अस्ति समूढस्य द्वादशाहस्य विकृतिर्गवामयनं संवत्सरसत्रं तत्र त्र्यनीका चोदकेन प्राप्ता त्रीण्यनीकानि अग्राण्यैन्द्रवायवशुक्राग्रयणरूपाणि यस्यां क्रियायां सा त्र्यनीका। तया च त्रिःपरिवृत्तया द्वादशाहाद्यन्तयोः प्रायणीयोदयनीययोरह्नोर्मध्ये वर्त्तमानेषु दशस्वहःसु दशमव्यतिरिक्तानि नवसंख्याकान्यहानि पूरितानि। अतः संवत्सरसत्रेऽपि प्रायणीयोदयनीयमध्यवर्त्तीनि पूरयितव्यानि। तत्पूरणञ्च यथोक्तायास्त्रिःपरिवृत्तायाः नवदिवसयुक्तायाः त्र्यनीकायाः समूहावृत्तिमन्तरेण न सिध्यतीत्यावृत्तिः प्राप्ता तस्यां च द्वैविध्यं विद्यते यथा दण्डस्यावृत्त्या भूमावाकलितव्यायामादिमध्यावसानभागैः सहितं कृत्स्नं दण्डं पुनः पुनरावर्त्तयति नत्वेकैकं भागम्। तथा नवदिवसानामावृत्तिरित्येकः प्रकारः यथाध्येतारः प्रपाठकमावर्त्तयितुं कामामृकैकं भागमसकृत् पठन्ति। तथा नवदिवससमूहवर्त्त्येकैकस्याह्नोऽसकृदनुष्ठानमित्यपरः। तत्राद्यस्तावत् प्राप्नोति। कुतः अह्नः शब्दस्य विवक्षितत्वात् ऐन्द्रवायवाग्रं प्रथममहरित्यत्रोऽहःशब्दोऽथ शुक्राग्रमथाग्र-

ग्रहाग्रमित्यादिष्वष्टसु वाक्येषु अनुवर्त्यते ग्रहाग्रत्वविशिष्टा-नामङ्गानां क्रमविशेषवाचकशब्दैर्नियम्यते। तथा सति यदैन्द्र-वायवाग्रमित्याहुर्नैरन्तर्य्येणासकृदावर्त्यते तदानीमथ शुक्राग्र-महरित्यादिकं बाध्येत। तस्मात् क्रमयुक्तानामग्रत्वविशेषो-पेतानामङ्गानां नवानां चोदकप्राप्तानां तथैवानुष्ठाने सति पुनःपुनश्चोदकेन तथैव प्राप्ते दण्डकलितवदावृत्तिरिति पूर्वः पक्षः। अहःशब्दो न विवक्षितः वाक्यभेदप्रसङ्गात्। ऐन्द्रवायवाग्रं प्रथमं भवति तच्चाहरिति। अहःसङ्घात-निवृत्तये वाक्यं भेतव्यं प्रसज्येत। अहःशब्दे त्वविवक्षिते सत्यष्टभिरग्रशब्दैर्ग्रहाग्रत्वानामङ्गानामानन्तर्य्यं नियम्यते। तथा सति द्वितीयपर्य्याये विहितस्याग्रयणाग्रत्वस्योपरि ऐन्द्रवायवाग्रत्वं नानुष्ठातुं शक्यम्। तदनुष्ठानाभावे च स्वस्था-नविवृद्ध्यैव प्रायणीयोदयनीयान्तरालपूर्त्तिर्भवति पूरयितव्य-मन्तरालं नवधा विभज्य प्रथमभागगतेष्वहःसु ऐन्द्रवायवा-ग्रत्वं द्वितीयभागेषु शुक्राग्रत्वमित्यनेन क्रमेणानुष्ठातव्यम्। सेयं स्वस्थानविवृद्धिः स्वस्यैन्द्रवायवाग्रत्वस्य स्थानं शुक्रा-ग्रात् पूर्वभावित्वरूपं तदेवैकस्मिन्नह्नि भवति। इह तु बहुषु अहःसु इति तत्र वृद्धिर्न वाचनिकी चोदकप्राप्ता प्रत्यक्ष-विहिता तु सा तस्मात् युक्तो विचारः स्यादिति वार्त्तिके ईरितम्।

षड्विंशाधिकरणमारचयति।

व्यूढे भक्षादिमन्त्राणामर्थानाञ्च व्यतिक्रमः।
मन्त्राणामेव बाधः स्यादविशेषेण कीर्त्तनात्॥ २८॥
छन्दसा व्यत्ययः प्रोक्तो नार्थानां तत्र मन्त्रगाः।

गायत्र्याद्या विपर्य्यास्या अर्थैषूक्ति: प्रशस्यते ॥ ४ ।

व्यूढे द्वादशाहे भत्तपवमान तदुभयमन्त्रपरिधि-कपालानि चोदकप्राप्तानि तत्र भत्तमन्त्रेषु सवनत्रयगतेषु गायत्रीछन्दसस्त्रिष्टुप् छन्दसो जगती छन्दस इति श्रुतं तथा पवमानत्रयविषयेष्वन्वारोहमन्त्रेषु गायत्री छन्दास्त्रिष्टुप् छन्दा जगती छन्दा इति श्रुतं तथा परिधिस्तावकेऽर्थवादे पठ्यते गायत्रो मध्यम: परिधिस्त्रैष्टुभो दक्षिणो जागत उत्तर इति तथा कपालविषयं वाक्यं पठ्यते अष्टाकपाल: प्रात:सवनीय एकादशकपालो माध्यन्दिनीयो द्वादशकपालस्तृतीयसवनीय इति अत्राष्टत्वादिभिस्तिसृभि: संख्याभिर्गायत्र्यादिछन्दांसि तत्तदक्षरसंख्याद्वारेणोपस्थाप्यन्ते। एवं स्थिते सति व्यूढप्रकरणे छन्दो व्यतिक्रम: पठ्यते। छन्दांसि वा अन्योऽन्यस्य लोकमभिध्यायन् गायत्री त्रिष्टुभस्त्रिष्टुप् जगत्या जगती गायत्र्या इति तत्र संशय: सोऽयं छन्दो व्यतिक्रमो भत्तपवमानपरिधिकपालरूपिणामर्थानामुभयविधमन्त्रगतछन्दो वाचिशब्दानाञ्च कार्य्य: किं वा तेषां शब्दानामेवेति मन्त्रगतानामेवेति विशेषा श्रवणात् सर्वत्र व्यतिक्रम इत्याद्य: पक्ष:। तेन गायत्रशब्दनिर्दिष्ट: प्रात: सवनीयो भत्तस्त्रैष्टुभशब्दितस्य माध्यन्दिनीयभत्तस्य स्थाने माध्यन्दिनीया जागतस्य स्थाने जागतो गायत्रस्य प्रात:सवनिकस्य स्थाने तथा बहिष्पवमानो माध्यन्दिनसवने माध्यन्दिनपवमानस्तृतीयसवने आर्भवपवमान: प्रात: सवने तथा मध्यम: स्थविष्ठ: परिधिर्दक्षिणतोऽणीयान् द्राघीयानुत्तर: अणिष्ठो ऋसिष्ठो म-

-श्रमः तथाष्टाकपालो माध्यन्दिने सवने एकादशकपाल-
स्तृतीयसवने द्वादशकपालः प्रातःसवने सोऽयमयं व्यतिक्रमः
मन्त्रवद्यदन्येष्वप्येवं योज्य इति प्राप्ते ब्रूमः । कुर्वाणा
वा इति वाक्येऽर्थानां व्यतिक्रमो नोक्तः अतो मन्त्रगतानां
गायत्र्यादिशब्दानामेव व्यतिक्रमः यस्त्वन्येषु गायत्र्यादि-
शब्दप्रयोगः स प्रशंसार्थः तद्यार्थानां मुख्यच्छन्दस्त्वाभावा-
दिति राद्धान्तः ।

इति माधवीये जैमिनीयन्यायमालाविस्तरे दश
माध्यायस्य पञ्चमः पादः समाप्तः

— —

दशमाध्यायस्य षष्ठपादे प्रथमाधिकरणमारचयति ।

सामैकस्यां ऋचि वाभ्यासाद्यथ स्वाध्यायवद्भवेत् ।
वचनाल्लिङ्गसंयुक्तात् स्तोत्रे सामऋचि भवेत ॥ १ ॥

पवमानाख्य एकादिस्तोत्रेषु यद्विहितं रथन्तरबृह-
द्वैरूपादिसामाध्येतार एकस्यामध्यधीयते तत् किं स्तोत्रप्र-
योगकालेऽप्येकस्यामृचि गेयं किं वा ऋचि गेयमिति संशय ।
अध्ययनस्यानुष्ठानार्थत्वादध्ययनमेकस्यामृचि साम कृतं
तथैकस्यामेव साम गेयमिति पूर्वः पक्षः । अष्टाक्षरेण प्रथ-
मायां ऋच प्रस्तौति पञ्चेनोत्तरयोरिति लिङ्गेः प्र
स्तोता गातव्यो भागो निरूप्यते । तदिदं वचनं लिङ्ग-
त्रक सामैवावमिथुनीसम्भवावेत्यादावृग्देवता सामदेव-
तयोः संवादरूपेऽर्थवादे सामदेवतैकामृचं द्वे ऋचौ च

प्रत्याख्यायति स ऋचोऽङ्गीचकार तदिदमपरं लिङ्गं ताभ्यां लिङ्गाभ्यामुपलक्षितादिकं सामऋचि क्रियते स्तोत्रीयमिति वचनात् ऋचि गातव्यम् ।

द्वितीयाधिकरणमारचयति ।

खट्कुशब्दे वीक्षणे च किं स्यादङ्गाङ्गिताथवा ।
मीलनावधिताथोऽस्तु भिन्नवाक्येन तद्विधेः ॥ २ ॥
प्रतिशब्देनावधिर्हि थोत्यो वाक्यं न भिद्यते ।
सत्येवं मीलनस्यापि विधिर्नोत्तरयोर्भवेत् ॥ ३ ॥

अस्ति रथन्तरसाम्नो योनावभित्वा शूरेत्येतस्यामृचि खट्कुशब्दः ईशानमस्य जगतः स्वर्दृशमित्याम्नातः । अस्ति चोद्गातुः कर्तव्यतायां रथन्तरे प्रस्तूयमाने संमीलयेत् खट्कुशब्दे प्रतिवीक्षेतेति श्रुतिः । तत्र संशयः किं खट्कुशब्दोच्चारणवीक्षणयोरङ्गाङ्गिभावोऽत्र विधीयते किं वा विधीयमानसंमीलनविधित्वेन खट्कुशब्दोच्चारणं निर्दिश्यते इति तत्र संमीलनवाक्याद्वीक्षणवाक्यं भिन्नं ततो मीलनावधित्वे नान्वयः सम्भवतीति । किञ्च वीक्षेतेति लिङ्प्रत्ययोऽत्र विधायकः श्रूयते । ततः खट्कुशब्दोच्चारणं वीक्षणाङ्गं वीक्षणं वा तदङ्गमित्यङ्गाङ्गिभावोऽभ्युपेयस्तथा सति खट्कुशब्दरहितयोर्ऋचोर्गीयमाने रथन्तरेऽपि विहितसंमीलनानुवृत्तिः फलिष्यतीति पूर्वः पक्षः । खट्कुशं प्रत्यनेन कर्मप्रवचनीयेन प्रतिशब्देन खट्कुशब्दोच्चारणमीलनकालावधित्वं द्योत्यते नचात्र भिन्नवाक्यत्वम् एकवाक्यत्वसम्भवात् । तथाहि विरोधपरिहाराय स्वतः प्राप्तत्वाद्वीक्षणं न विधेयं तथा सत्यां खट्कुशब्दोच्चा

स्यात् संमीलयेदित्येकं वाक्यं सम्पद्यते एवं सत्यवगो-र्ण्योर्मीलनविध्यभावः फलिष्यतीति राद्धान्तः ।

तृतीयाधिकरणमारचयति ।

गावामयनिके पृष्ठ्यः षडहे प्रत्यहं द्वयम् ।

बृहद्रथन्तरयोर्न भवेत् किंस्वित् क्वचिद्दिने ॥ ४ ॥

द्वन्द्वगर्भे बहुव्रीहेरर्थोऽन्त्येऽपि समौ साम्नौ ।

अन्योऽन्यनिरपेक्षस्य चोदकादन्तिमो भवेत् ॥ ५ ॥

द्वादशाहे पृष्ठ्यषडहे तु [illegible] षण्णामप्यह्नां क्रमेण रथन्तरबृहद्वैरूपवैराजशाक्वररैवतानि सामानि विहितानि। गवामयने तु विकृतिरूपो यः पृष्ठ्यषडहस्तत्र श्रूयते। पृष्ठ्यः षडहो बृहद्रथन्तरसामेति चोदकप्राप्तयोर्बृहद्रथन्तरयोः पुनर्विधानाद्वैरूपादिनिवृत्तिः। तत्र शिष्यमाणं बृहद्रथन्तरं सामद्वयं किं प्रत्यहं कर्तव्यं किं वा केषुचिदहःसु बृहत् केषुचिद्रथन्तरमिति संशयः। बृहद्रथन्तरश्च बृहद्रथन्तरं ते च सामनी यस्येति द्वन्द्वगर्भिते बहुव्रीहावितरेतरयोगद्वन्द्वेन साम्नोः साहित्यं प्रतीयते। ततः प्रत्यहं सामद्वयमिति पूर्वः पक्षः। ते सामनी यस्याह्न इत्यह्नो बहुव्रीह्यन्यपदार्थत्वं तदा भवदुक्तमेव स्यादिह तु षडहोऽन्यपदार्थस्तथा सति षडहे द्वयोः साम्नोः साहित्यं सिद्धान्तेऽपि समानं प्रकृतौ साम्नोरन्योऽन्यनिरपेक्षत्वादिहापि निरपेक्षत्वमेव साम्नोश्चोदकेनातिदिश्यते तस्मात् केषुचिदहःसु किञ्चित् सामेति राद्धान्तः।

चतुर्थाधिकरणमारचयति ।

स्युरेकाद्यशनात् किं प्रायणीयोदयनीययोः

प्रत्येकमखिलाः किं वा विभक्ताः स्युस्तयोरपि ॥ ६ ॥
उद्देश्ययोः प्रधानत्वात् प्रत्येकं पशवोऽखिलाः ।
नोद्देश्यौ शतवद्भागः शिष्टस्त्वासत्तितोऽन्तिमे ॥ ७ ॥

द्वादशाहे श्रूयते । एकादशिनान् प्रायणीयोदयनीययोरतिरात्रयोरालभेरन्निति तत्र पशव एकादशापि प्रायणीयेऽहनि कर्त्तव्यास्तथोदयनीयेऽपि सर्वे कर्त्तव्याः । कुतः प्रायणीयोदयनीययोरुद्देश्यत्वेन प्राधान्यात् प्रतिप्रधानं चाङ्गावृत्तेर्युक्तत्वादिति पूर्वः पक्षः । वचनान्तरेण विहितानामेकादशानां प्रकरणेन द्वादशाहाङ्गत्वे सिद्धे देशाकाङ्क्षायां तान् पशूनुद्दिश्य प्रायणीयोदयनीयौ देशत्वेन विधीयेते । तत्र कुत उद्देश्यत्वं कुतस्तरां प्राधान्यं कुतस्तमां पश्वावृत्तिः । एवं सति यथा शतं देवदत्तयज्ञदत्तयोर्विधीयतामित्यत्र देवदत्ते पञ्चाशत् विधीयते यज्ञदत्ते पञ्चाशदिति विभागस्तथा प्रायणीये पञ्चपशव उदयनीये पञ्चेति विभागो युक्तः यस्त्वत्र शिष्ट एकः पशुरन्तिमः स प्रत्यासन्नत्वादन्तिमेऽहन्युदयनीये कर्त्तव्यः ।

पञ्चमाधिकरणमारचयति ।

किं सर्वपृष्ठे सर्वाणि पृष्ठदेशे यथोक्तया ।
पृष्ठशब्दात् पृष्ठदेशे वचनात्तु व्यवस्थितिः ॥ ८ ॥

इदमाम्नायते । विश्वजित् सर्वपृष्ठ इति षडहे षट्स्वहःसु क्रमेण रथन्तरं बृहद्वैरूपमित्यादिभिः षड्भिः सामभिः पृष्ठस्तोत्रं निष्पादितं तानि सर्वाणि पृष्ठसामानि यस्मिन् विश्वजिति सोऽयं सर्वपृष्ठः तत्र माध्यन्दिनपवमानमैत्रावरुणसाम्नोरन्तरालरूपे पृष्ठस्तोत्रदेशे किं सर्वाणि

पृष्ठस्थानानि कार्य्याणि किं वा यथा वचनं देशव्यवस्थेति संशयः। पृष्ठकार्य्यशमकेन पृष्ठशब्देन पृष्ठदेशे प्राप्ते वचनेन देशविशेषो व्यवस्थाप्यते। वचनञ्चैवमाम्नायते पवमाने रथन्तरं करोत्यार्भवे बृहत्सध्य इतराणि वैरूपं होतुः पृष्ठं वैराजं ब्रह्मसामसाकमश्वं मैत्रावरुणस्य रैवतमच्छावाकस्येति वचनं हि न्यायाद्बलीयः तस्माद्देशविशेषो व्यवस्थितः।

षष्ठाधिकरणमारचयति।

कात्स्न्याद्वैरूपवैराजे उक्थ्यषोडशिनो क्रतौ।

पृष्ठं स्यात् क्रतुसंयोगादाद्योऽन्यः पृष्ठलिङ्गतः ॥ ९ ॥

इदमाम्नायते उक्थ्यो वैरूपसामैकविंशः षोडशी वैराजसामेति। तत्र कृत्स्ने उक्थ्ये वैरूपं साम कृत्स्ने षोडशिनि वैराजं वैरूपसाम यस्मिन्नुक्थ्ये क्रतौ वैराज-साम यस्मिन् षोडशिनि क्रताविल्येवं क्रतुसम्बन्धप्रतीतेः। मैवं प्रकृतौ रथन्तरसाम बृहत्सामेत्येवंविधस्य निर्देशस्य पृष्ठस्तोत्रविषयत्वदर्शनादत्रापि तन्निर्देशेन पृष्ठलिङ्गेन पृष्ठ-कार्य्यं वैरूपवैराजयोर्भवितुमर्हति क्रतुसम्बन्धस्तु पृष्ठद्वारेणोपपद्यते।

सप्तमाधिकरणमारचयति।

त्रिवृदग्निष्टुदित्यत्र सर्वत्र स्तोम एव वा।

आद्यस्तु गुणवाचित्वादन्त्यः स्तोमेऽस्य रूढितः ॥ १० ॥

एवं श्रूयते त्रिवृदग्निष्टुदग्निष्टोम इति किं त्रिवृत्त्व-मग्निष्टुति क्रतौ सर्वेषु साधनेषु सम्बध्यते किं वा स्तोम-मात्रसम्बन्धि तत्र त्रिवृद्रज्ज्वादौ त्रिवृच्छब्दस्य त्रैगुण्य-वाचित्वदर्शनादत्रापि क्रतुसाधनेषु या संख्या श्रूयते सा

मर्वं त्रिवृत्त्वेन विक्रियत इति प्राप्ते ब्रूमः। यद्यपि त्रिवृ-च्छब्दोऽवयवप्रसिध्या लोके त्रैगुण्यं ब्रूते तथापि वेदे रूढ्या स्तोमवाचि त्रिवृद् बहिष्पवमान इत्यत्रयाणां तोतीयानां नवानां ऋचाम् अनुक्रमेण स्तोमविषयमेव त्रिवृत्वम्।

अष्टमाधिकरणमारचयति।

मंसवादौ द्वयोरेकं पृष्ठं यद्वा समुच्चितम्।
एकं प्रकृतिवद् विश्वजिद्वदन्यत्र वेतरत्॥ ११॥
वचनाद् विश्वजित्येतत् साम्नो द्वे स्तोत्रयोर्द्वयोः।
नेहास्ति तत् पृष्ठ एव साहित्यं स्यात् पुनर्विधेः॥ १२॥

इदमाम्नायते। सत्रव उभे कुर्य्यादभिजिता वैकाह उभेऽष्टहन्नुथन्तरे कुर्य्यादिति किमत्र बृहद्रथन्तरयोरेकं पृष्ठस्तोत्रावितरदन्यत्र तो स्यात्। किं वा समुच्चितमुभयं पृष्ठस्तोत्रामिति संशयः प्रकृतौ द्वयोर्विकल्पितत्वादेकस्मिन् प्रयोग एकस्य पृष्ठत्वादन्यत्रापि तथात्वं युक्तम्। तथा सत्य-वशिष्टं साम सर्वपृष्ठविश्वजित् न्यायेन स्तोत्रान्तरे प्रयो-क्तव्यमिति पूर्वः पक्षः। तादृश वचनाभावेनात्र विश्वजिद्वै-षम्यात् प्रकृतिवदिकल्पे सति पुनर्विधानवैयर्थ्यात् समुच्चय इति राद्धान्तः।

नवमाधिकरणमारचयति।

वयस्त्रिंशारम्भणे किं तदन्ते मधुभोजनम्।
षडहान्तेऽथवाद्यः स्यात् साविध्यात् वाक्यतोऽन्तिमः॥ १३॥

पृष्ठः षडहो द्विविधः त्रयस्त्रिंशान्तः त्रयस्त्रिंशादि-रिति। द्वादशाहे त्रिवृत्पञ्चदशसप्तदश एकविंशत्रिणव-त्रयस्त्रिंश इत्येतैः स्तोमैर्युक्तान्यहानि षड्विहितानि।

मोऽयं वयस्त्रिंशान्तः। क्वचिद्विकृतौ व्यत्यासेन यस्त्रिं-शादिविवृद्धस्तः पृष्ठः षडहस्त्रयस्त्रिंशारम्भयस्त्रिवृदुत्तमः कार्य्य इति तत्र मधुभोजनचोदकप्राप्तं तत्र प्रकृतौ विहितं वयस्त्रिंशेऽहन्यनुष्ठितेऽनन्तरं कृतमित्यत्रापि सान्निध्यात वयस्त्रिंशान्ते कर्त्तव्यमिति प्राप्ते ब्रूमः संस्थिते पृष्ठे षडहे मध्वाशयेदित्युक्तं वेति वाक्येन प्रकृतौ षडहप्रयोग-स्यान्ते मधुभोजनं विहितं वयस्त्रिंशसन्निधिस्तु नात्र नायकः। अतोऽत्रापि षडहावसाने कर्त्तव्यात् वा विवृत् सन्निधौ तदनुष्ठानम।

दशमाधिकरणमारचयति।

अभ्यस्ते षडहे भुक्तिमभ्यसेत् किं न वाऽग्रिमः।

स्तोत्रशस्त्रादिवन्नैवं संस्थितं तद्विधानतः॥ १४॥

आवृत्तं पृष्ठमुपयतीति श्रूयते तत्र षडहावृत्तौ यथा स्तोत्रादीन्यावर्तन्ते तथा मधुभोजनमपीति प्राप्ते ब्रूमः। संस्थिते षडहे भोजनं विधीयते संस्थानामपुनः षडह विशेषव्यापाराभावः। अतः षडहावृत्तेरन्ते मधुभोजनं सकृदेव कार्य्यम्।

एकादशाधिकरणमारचयति।

सर्वान्ते प्रतिमासं वा पृष्ठान्ते मधुभोजनम्।

सर्वान्ते पूर्ववन्नैवं संस्थितानां पृथक्त्वतः॥ १५॥

गवामयने श्रूयते चत्वारोऽभिप्लवाः षडहाः पृष्ठः षडहः समासः सद्वितीयः सतृतीयः सचतुर्थः सपञ्चम इति। तत्र षडह पञ्चकरूपे मासेऽभ्यस्यमाने पृष्ठोऽप्यावर्तते तथा सति पूर्वन्यायेनावृत्तेषु पृष्ठेषु सर्वेषु समाप्तेष्वन्ते भोजन-

मिति प्राप्ते ब्रूमः। प्रतिमासं संस्थितानां इष्टानां पृथक्त्वाद्दोजनमपि प्रतिमासमावर्त्तनीयम्।

द्वादशाधिकरणमारचयति।

मध्वभक्ष्यं भक्ष्यतं वा सत्रिभिर्ब्रह्मचारिभिः।
निषिद्धत्वाद्दीक्षितोऽभक्ष्यः पुंक्रत्वर्थौ विभेदतः॥ १६॥

सत्रात्मके द्वादशाहे पृष्ठषड्हे संस्थिते मध्वभक्ष्यं कुतः सत्रिणां दीक्षितत्वेन ब्रह्मचारित्वाद् ब्रह्मचारिणाञ्च मधुमांसप्रतिषेधादिति चेन्मैवं तन्निषेधस्य पुमर्थत्वेन भक्षणविधेः क्रत्वर्थेन विषयभेदात् तस्मात् सत्रिभिर्भक्ष्यम्।

त्रयोदशाधिकरणमारचयति।

मानसं किमहर्भिन्नमङ्गं वा दशमेऽहनि।
भिन्न सत्यादिनाङ्गं तद्दिशमर्गोक्त्यादिभिर्भवेत्॥ १७॥

द्वादशाहे मानस ग्रहणं श्रूयते। अनया त्वा पृथिव्या पात्रेण समुद्रस्य प्रजापतये जुष्टं गृह्णामीति मानस प्राजापत्यं गृह्णातीत्ययमर्थः पृथिवीपात्रं समुद्रः सोमः समुद्रः प्रजापतिर्देवता एव विधिरिष्टस्य ग्रहस्य ग्रहणे मनः साधनं तदिदं मानसमिति एतच्च द्वादशेभ्यो भिन्नमहः स्यादशमेऽहनि कर्त्तव्यो यागविशेषः। कुतः सत्यादिभ्यः मानसेन द्वादशाहस्य सुतिरेव मान्नायते द्वादशाहस्य छन्दांसि छन्दांसि तानि मानसेनाप्याययन्तीति सुतिसाधनञ्च मानसं स्तोत्रवद् भिन्नं भवितुं युक्तं तथा व्यपदेशो भेदोऽपि श्रूयते वाग् वै द्वादशाहो मनो मानसमिति एव मात्र्युपपत्तिभिर्भिन्नमहरिति प्राप्ते ब्रूमः। दशमस्याह्नोऽङ्गं तत् स्यादिसर्गोक्त्यादिभ्यः एष वै दशम

स्याज्जो विसर्गो यस्यासमसिति विसर्गोक्तिः । इयञ्च दश माहाङ्गत्वं गमयति । अहर्गणत्वे द्वादशाहसमाख्या च विरुध्यते अङ्गभूतेनापि मानसेन स्तुतिव्यपदेशादिकमुपपद्यते तस्मादङ्गम् ।

चतुर्दशाधिकरणमारचयति ।

सत्रमेकः करोत्याहो बहवः प्रकृताविव ।

एकः कुर्यादिहासीरन्नित्युक्त्या बहवो मताः ॥ १८ ॥

द्वादशाहादिसत्रस्य ज्योतिष्टोमः प्रकृतिस्तत्र कर्तृत्वाचोदकेन सत्रेऽपि कर्त्रैक्ये प्राप्ते प्रत्यक्षवचनाद् बहवोऽभ्युपेयाः ।

पञ्चदशाधिकरणमारचयति ।

ऋत्विजोऽन्येऽत्र यष्टृभ्यः स्युस्त एवोत चोदकात् ।

अन्ये यष्टार एव स्युः प्रत्यक्षवचनादिभिः ॥ १८ ॥

अत्र सत्रे किं यजमानेभ्यो व्यतिरिक्ता ऋत्विजः कर्त्तव्याः किं वा यजमाना एवर्त्विजः । ज्योतिष्टोमे यजमानादन्येषामृत्विक्त्वादन्ये स्युरिति प्राप्ते ब्रूमः । ये यजमानास्ते ऋत्विज इति प्रत्यक्षवचनाद्दक्षिणानि सत्राणीत्याहुरिति दक्षिणाराहित्यश्रवणादध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति ततउद्गातारमित्यादिना ब्रह्मोद्रात्रादिसमाख्या संयोगदीक्षा संयोगयोरार्त्विज्य याजमानयोतकयोः प्रतिमानाच्च यजमाना एवर्त्विजः ।

षोडशाधिकरणमारचयति ।

अहीनसत्रयोर्लक्ष्मभेदो नास्त्यस्ति वा नहि ।

आहस्सिसाम्यादाद्यः स्यादिष्यासिद्धं तयोर्भिदा ॥१९॥

अस्ति द्वादशाहस्याहीनत्वं सत्रत्वञ्च । तत्रैवं चिन्त्यते किमहीनसत्रयोर्लक्षणभेदो नास्त्युतास्तीति तावत् प्राप्तं कुतः ज्योतिष्टोमाद् वृत्तिरूपस्य समानत्वात् यथा द्विरात्रादीनामेकादशरात्रान्तानामहीनानामावृत्तौ ज्योतिष्टोमस्वरूपं तथा त्रयोदशरात्रादीनां सत्राणामिति प्राप्ते ब्रूमः । आसीरन्नुपेयुरिति चोदनाद्वयं यजमानबहुत्वञ्च सत्रलक्षणं यजति चोदनाया यजमानबहुत्वनियमाभावश्चाहीनलक्षणं वैदिकप्रयोगेषु तयोरव्यभिचारात् इति राद्धान्तः ।

सप्तदशाधिकरणमारचयति ।

अयुताद्विप्रत्यहं स्यात् सकृद्वाप्यनुसारतः ।

आद्यो भवेत् प्रयोगोऽङ्गी तदैक्येन सकृद् भवेत् ।२०॥

अस्ति पौण्डरीकः पौण्डरीकेणैकादशरात्रेण स्वाराज्यकामो यजेतेति तद्विधानात् तत्र श्रूयते । अयुतं पुण्डरीके दद्यादश्वसहस्रं चैकादशमिति तत्र गवायुताश्वसहस्रे प्रत्यहं दातव्ये कुतः दक्षिणाया अहरङ्गत्वेन प्रतिप्रधानमावर्त्तनीयत्वादिति प्राप्ते ब्रूमः । अहर्गणरूपस्य पौण्डरीकस्य प्रयोगो दक्षिणाङ्गं प्रत्यङ्गी स चैकः सकृदेव दानम् ।

अष्टदशाधिकरणमारचयति ।

सकृत् किं प्रत्यहं वास्य सवनं तत्र चोत्तमे ।

सर्वस्य वाविभक्तस्य सकृत् संस्कारसिद्धितः ।

प्रतिमाध्यन्दिनं चोदकप्राप्तेः प्रत्यहं तदा सर्वं नेय

तद्देवत्वादिमन्त्य द्वादशाहवत् । पौण्डरीके सकृदेव दातव्यं

गवायुताश्वसहस्ररूपं दक्षिणाद्रव्यं यदस्ति तस्य नयनादिसंस्कारयोदकप्राप्तः प्रकृतौ माध्यन्दिने सवने दक्षिणा नीयन्त इति तद्विकृतिष्वपि नयनमिह सकृत्कार्य्यं किं वा प्रत्यहमित्येकः संशयः। तथोक्तस्मिन् पक्षे प्रत्यहं किं दक्षिणाद्रव्यस्य सर्वस्य नयनं किं वा दशसहस्रेषु गवामेकैकं सहस्रमेकादशेऽह्नि अश्वस्य सहस्रमिति द्वितीयः संशयः। तत्र सकृन्नयनमिति तावत् प्राप्तं कुतः। तावतैव चिकीर्षितसंस्कारस्य सिद्धत्वात्। अथवा प्रतिमाध्यन्दिनं सवनं चोदकप्राप्तेः समानत्वात् प्रत्यहं नयनं कार्य्यं तदापि गवायुताश्वसहस्ररूपस्य द्रव्यस्यैक दक्षिणारूपत्वात् सर्वं नेयमिति पूर्वः पक्षः। विभज्य नेयं कुतः द्वादशाहविकृतित्वात् द्वादशाहे चान्वहं विभज्य नीतत्वादिति राद्धान्तः।

एकोनविंशाधिकरणमारचयति।

मनोता च साम्निधेन्यः सर्वाः पञ्चदशैव वा।

अविशेषेण सर्वाः स्युःकार्य्याः पञ्चदशैव ताः॥ २२॥

काचिद्विकृतिविशेषे श्रूयते मनोता च साम्निधेन्यो भवन्तीति तत्र विशेषाश्रवणाद्ये यावत्यो मनुसम्बन्धिन्य ऋक्संहितायां आम्नातास्ताः सर्वाः साम्निधेन्य इति प्राप्ते ब्रूमः। अग्निसमिन्धनसामर्थ्यं कार्य्यं तच्च प्रकृतौ पञ्चदशभिः सिद्धमित्यत्रापि चोदकवशात् पञ्चदशैवानुष्ठेयाः।

विंशाधिकरणमारचयति।

उपावहरणं मानमपि क्षाप्यतवाससि।

कापि स्यात् प्रांशुतामावादचमाद्वाससोभयम्॥ २३॥

ज्योतिष्टोमे सोमस्योपावहरणं मानञ्च श्रुतं तदुभयं सम्पादनप्रयत्नेन विना स्वतएव लब्धेन केनापि साधनेन कार्य्यं सेवम। वाससि मिनोति वाससा चोपावहरतीति वचनेन वाससो विहितत्वात्।

एकविंशाधिकरणमारचयति।

नान्यद्वासोऽहर्गणे स्यात् स्याद्वा न स्यादनुक्तितः।
चोदकात् प्रत्यहं प्राप्तं कार्य्याद्वासोऽन्तरं भवेत्॥ २४॥

द्वादशाहादावहर्गणे चोदकप्राप्तादेकस्मात्मानोपावहरणहेतोर्वाससोऽन्यद्वासोऽनुक्तत्वान्न सम्पाद्यमिति प्राप्ते ब्रूमः। प्रत्यहं सोमस्योपावहरणं चोदकेन प्राप्तं तच्चोपावहरणरूपं कार्य्यं वासो भेदं विना न सिध्यति। हविर्धाने शकटेऽवस्थिताद्वासोपनीतसोमात् कियन्तमपि सोममारनैकैकस्याह्नः पयाप्तं पृथक्कृत्योपावहर्तुं वासोऽन्तरं सम्पाद्यम्।

द्वाविंशाधिकरणमारचयति।

तत् किं माने कृतौ वाद्यः प्रकृताविकृतं क्षणात्।
पर्य्यन्तद्वैक्यं तत्रोक्त्या कृतौ स्यात् सार्थकत्वतः॥ २५॥

यदेतद्वासोऽन्तरमहर्गणे सम्पाद्यं तत् किं मानकाले उतोपावहरणकाल इति संशयः। प्रकृतौ मानोपावहरणयोर्वस्त्रैकत्वदर्शनादिहापि तदैक्यसिद्धये मानकाले वासोऽन्तरं सम्पाद्यमिति पूर्वः पक्षः। प्रकृतौ येन सोमो मितस्तेनोपावहरणमर्थसिद्ध कियानेव सोमः। शकटेऽवस्थापनीयः कियानेवोपाहर्तव्य इति सोमद्वयाभावादर्थसिद्धस्य चैकवाससो वाचानकत्वाभावान्नचोदकेनातिदेशोऽस्ति।

अतो बहुर्गवे मानहेतोर्वाचकः प्रकटेऽवस्थितत्वादुपाकरणे आमोऽन्तरस्य सार्थकत्वात् तत् समये सम्पाद्यम् ।

इति माधवीये जैमिनीयन्यायमालाविस्तरे दशमाध्यायस्य षष्ठः पादः ।

---

सप्तमपादस्य प्रथमाधिकरणमारचयति ।

पशुः कृत्स्नो हविः किं वा प्रत्यङ्गं हविरन्यता ।
आद्यचोदनया मैवमवदान पृथक्त्वतः ॥ १ ॥

अग्नीषोमीयं पशुमालभेतेत्यत्र कृत्स्नस्य पशोरेक हविष्ट्वं युक्तं कुतः । अग्नीषोमदेवतां प्रति द्रव्यत्वेन पशो-श्चोदितत्वात् न हि हृदयाद्यङ्गं साक्षात् पशुर्भवतीति प्राप्ते ब्रूमः । हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसोऽवद्यति पार्श्वयोरवद्यतीत्यादिना हृदयाद्यङ्गानामवदानानि पृथ-गाम्नायन्ते । अवदानञ्च हविष्प्रयोजकः संस्कारः पुरो-डाशादौ होतुमवदीयमानत्वे दर्शनात् हविःशब्दश्च कर्म-व्युत्पत्त्या होमयोग्यं द्रव्यं ब्रूते । पश्वाकृतिनोदना तु हृदयाद्यङ्गद्वारेण देवतासम्बन्धादुपपद्यते । तस्मात् प्रत्यङ्गं हविर्भेदः ।

द्वितीयाधिकरणमारचयति ।

पञ्चेडाङ्गे न सर्वेषां यद्वैकादशभिर्यजिः ।
एकेन याग संसिद्धेर्द्विवा भेदतोऽखिलैः ॥ २ ॥
एकादशभिरन्येषां परिसंख्या भवेद्यतः ।
न त्रिदोषा गत्यभावादस्तुतोऽत्र सोचिता ॥ ३ ॥

पश्वङ्गं हविर्भेदे स्थिते सति केषां यागे संशयः तत्रानि-र्दिष्टविशेषेण येन केनाप्यङ्गेन यागः कार्य्यः तावतैव यागस्य सिद्धत्वात् इत्येकः पक्षः। चोदितं पश्वङ्गत्वं परिगणितेषु हृदयादिष्वन्येषु चांसशिरःप्रभृतिषु समानं ततो हृदया-दिवदंसादीनां हविर्भेदत्वाद्यागमन्तरेण हूयमानत्वलक्षण-हविष्ट्वापर्य्यवसानात् सर्वैरङ्गैर्याग इति द्वितीयः पक्षः। हृदयादिभिरेकादशभिरेवाङ्गैर्यागः कर्त्तव्यः। कुतोऽन्येषा-मंसादीनां परिसंख्यातत्वात् चोदकेन सर्वेषामङ्गानामव-दाने प्राप्ते हृदयादिवाक्येनांसादयः परिसंख्यायन्ते। ननु परिसंख्यायां विधिः स्वार्थं जह्यात् परार्थं कल्प्येत प्राप्तं बाधेतेति दोषत्रयं प्रसज्येत। प्रसज्यतां नाम सति हि गत्यन्तरे एषां दोषत्वं परिसंख्यायास्तु ते त्रयः स्वरूपमिति कृत्वा न दोषतां भजन्ते। किञ्च द्वयानि मांसान्यभिनयन्ति शृतान्यशृतानीति केषाञ्चिन्मांसानामपक्वत्वमुच्यते। पाकस्तु हविषो मांसस्य प्रतिनियतस्तस्मात् शृतत्वोक्तिरंसादिपरि-संख्यां गमयति। एतदेवाभिप्रेत्यांसादिप्रतिषेधः स्मृत्या वर्णितः। नांसयोरवद्यति न शिरस इत्यादिना तस्मादेका-दशभिरेव यागः।

चतुर्थाधिकरणमारचयति।

इज्याभेदं नापेक्षेत वा तदङ्गैः स्विष्टकृतो हुतिः।

आद्यः प्रकृतिवच्चैवं पूर्वोक्त्युक्तिभेदतः॥ ४॥

पशोः शृणुत मङ्गैः स्विष्टकृतं यजतीति तत्रेज्यायेन हृदयाद्येकादशाङ्गानां यैः कैश्चिदङ्गैरिज्याशेषभूतैः स्विष्ट-कृदीतव्यः कुतः प्रकृताविज्याशेषेण पुरोडाशेन स्विष्टकृत

हेतुत्वात् यद्यपि चोदकेन तद्यात्वादिति प्राप्ते ब्रूमः। होत्रा पूर्वार्धादवद्यति गुदस्य मध्यतः श्रोण्या जघनत इति वाक्यशेषेण छदयादिभ्य एकादशभ्योऽन्यानि त्रीणि अङ्गानि स्विष्टकृते समाम्नायन्ते न च छदयादिष्वपि गुदादीश्च मातानीति शङ्का तद्विशेषस्य कल्पसूत्रकारेण दर्शितत्वात्। छदयं जिह्वा वक्षो यकृद्वृक्कौ सव्यं दोषमे पार्श्वं दक्षिणा श्रोणिर्गुदं तृतीयमिति देवतावदानानि दक्षिणोऽसः। सव्या श्रोणिगुदं तृतीयमिति सौविष्टकृतानीति तस्माद्गनिरन्याशेषैरङ्गैः स्विष्टकृद्धोमः।

चतुर्थाधिकरणमारचयति।

होतुर्नियम्यतेऽध्यूघ्नी कि वेडां विकरोति सा।
अनारभ्योर्विरिति प्राप्ता होतुः पच्चे नियम्यते ॥ ५ ॥
अनुवादोऽनारभ्यवाक्य प्रापिका परिशिष्टगीः।
नाध्यूघ्नी तत्र ते नेडा होतुर्विक्रियते तया ॥ ६ ॥

पशाविव श्रूयते अध्यूघ्नीं होत्रे हरन्तीति अध्यूघ्नी छदयादिभ्योऽन्यदङ्गं तदेवं होतुरेव नान्यस्येति नियम्यते। कुतः पच्चे प्राप्तत्वात् तथा हि छदयादीनिज्याशेषान् भक्षणार्थं पात्रे निक्षिप्यानिज्याशेषानपि तत्र निक्षिपेत्। अनारभ्य भिरेडां वर्धयन्तीति यदवदानं भक्षणे प्रत्यक्षमृत्विजां विभज्यमाने सेयमध्यूघ्नी होतुः कदाचित् प्राप्नोति कदाचिदन्यस्य ततो नियम्यत इति प्राप्ते ब्रूमः। वर्धयन्तीति वर्तमानोपदेशेनानारभ्यवाक्यमनुवादः। प्रापकन्तु परिशिष्टवाक्यं तच्चैव मान्नायते। अथ यद्यत्परिशिष्यते तत्तत्समवत्तधान्यामानयति छदयं जिह्वां वक्ष इत्यारभ्य

वनिष्टुमित्येतदुक्तं न च तस्मिन् वाक्येऽध्यूघ्नी पठिता ततोऽप्राप्तत्वात् छिनीयमानतया होतुविडाभागोऽन्यो बाध्यते । तर्ह्येवं वचनव्यक्तिः यद्धोत्रे हरन्ती तदध्यूघ्नीमिति तस्मात् विकारः ।

पञ्चमाधिकरणमारचयति ।

वनिष्टुरपि तद्वत् स्यात् प्राप्तिः सादनतो यदि ।
इडासंस्कार एवायं भक्षो विक्रियते ततः ॥ ७ ॥

पञ्चाविव श्रूयते वनिष्टुमस्यौष इति अध्यूघ्नीवद्वनिष्टुरपि हृदयादिव्यतिरिक्तमङ्गं ततः संशयपूर्वोत्तरपक्षास्तद्योज्याः । अधिकाशङ्का त्वेषा इडा पात्रे हृदयादिप्रासनवाक्ये वनिष्टुरपि पठितः । ततः पक्षे प्राप्त एव नियम्यत इति उपस्तरणादिवत्प्रासनाभिडायाः संस्कार एव न त्वेतावता वनिष्टोः पक्षे प्राप्तिरित्यप्राप्तविधेः पूर्ववद्विकार इत्युक्तशङ्कायामुत्तरम् ।

षष्ठाधिकरणमारचयति ।

मैत्रावरुणनाम्नोऽत्र भक्षो नास्त्यस्ति वा न हि ।
अप्राकृतत्वादध्वर्युहोत्रन्तर्भावतो हि सः ॥ ८ ॥

तत्र पशौ मैत्रावरुणनाम्न इडाभक्षो नास्ति कुतः प्रकृतौ मैत्रावरुणस्याभावेन चोदकप्राप्त्यभावात् नैवम् मैत्रावरुणः प्रेष्यति चान्वाहेति प्रैषानुवचने तस्य विधीयते । तत्र प्रैषानुकार्य्येणाध्वर्य्यावन्तर्भावः अनुवचनकार्य्येण च होतरि तस्मादस्ति भक्षः ।

सप्तमाधिकरणमारचयति ।

द्विभाग एकभागो वा द्विभागस्य द्विकर्मतः ।

एकः पुमेकवती नो चेद्वैषम्यं प्रकृतावपि ॥ ८ ॥

स मैत्रावरुणः कर्मद्वयोपाधिना द्विभाग इति। चेन्न पुरुषैक्योपाधिना भागस्याप्येकत्वात् अन्यथा प्रकृतावपि कर्मतारतम्यानुसारेण भागतारतम्यं प्रसज्येत।

अष्टमाधिकरणमारचयति।

प्रतिप्रस्थातुरत्रास्ति भक्षो नो वा वपाससौ।

पचत्यतोऽस्ति नो पक्षावपासर्वाहुता यतः ॥ ९ ॥

अत्र पशौ प्रतिप्रस्थातुरिडा भक्षोऽस्ति कुतः। अध्वर्यु कर्मणो वपापाकस्य तेन कृतत्वात् मैवं भक्षयितुं वपाशेषस्याभावात्।

नवमाधिकरणमारचयति।

गृहमेधीयके त्वाज्य भागावित्यनुवादगीः।

स चोदकविधिर्वानुवादो वाधिककर्म वा ॥ १० ॥

परिसंख्यात सङ्कोचश्चोदकोऽन्यत्र वात्र वा।

अपूर्वं गृहमेधीयं स्याद्दातो लुप्तचोदकम् ॥ ११ ॥

अनुवादः पुनः श्रुत्या द्वितीयः सार्थतावशात्।

निर्वापवच्चोदकस्य लिङ्गत्वेन सहायकृत्। १२ ॥

चोदनेनैव तत् सिद्धे वैष्टिकस्य प्रशंसनम्।

विध्येकवाक्यता नास्ति तेनावाङ्गान्तरे विधिः ॥ १३ ॥

प्रत्यभिज्ञानतोऽङ्गस्य परिसंख्येतरस्य हि।

चोदकस्य स सङ्कोचो ह्यङ्गान्तरपरो मतः ॥ १४ ॥

व्यापारैक्याच्चोदकस्य स्वार्थसंग्रहणं भवेत्।

वैरूप्याच्च निरर्थत्वादपूर्वकर्म युज्यते ॥ १५ ॥

आज्यभागेति नाम्नोपकारकाम्मिस्मृतेरिह नाम नादि-

समं तस्मात् प्यते तेन चोदकतन्त्रो गृहमेधीयः सर्वांगो पूर्णे माग्नमोदकमिति विहिते गृहमेधीये श्रूयते आज्य-भागौ यजतीति तत्राष्टधा संशयः। चोदकप्राप्तयोराज्य-भागयोरिह पुनः श्रवणाद्नुवादोऽयमित्याद्यः पक्षः तथा सति वैयर्थ्यप्रसङ्गात् ततः सार्थकत्वाय चोदकेतद्वाक्ययो-र्मिलितयोराज्यभागविधायकत्वमभ्युपेतव्यम् औषधिद्रव्य-निर्वापादयो यथा प्रकृतिजाताः सन्तो विकृतावपि श्रूय-माणाश्चोदकस्य लिङ्गं तथाज्यभागावपि लिङ्गत्वेन सहायतां नतो मिलितयोर्विधायकत्वमिति द्वितीयः पक्षः। गृहमेधीयविधिवाक्ये श्रुतस्यौदनस्यैवौषधिद्रव्यतया लिङ्गत्वमिह नास्ति लिङ्गान्तरापेक्षा तस्मात् प्रकृतावेष्टौ श्रुतत्वादाज्यभागकर्मणा इह पुनः श्रवणमर्थवादत्वेन तत् प्रशंसार्थमिति तृतीयः पक्षः। भिन्नप्रकरणे श्रुतस्य विध्येकवाक्यत्वायोगादर्थवादत्वमयुक्तं ततश्चोदकप्राप्ता-दाज्यभागादिकर्मणोऽधिकमाज्यभागरूपमङ्गान्तरं विधी-यत इति चतुर्थः पक्षः। ऐष्टिकयोराज्यभागयोरिह प्रत्यभि-ज्ञानादङ्गान्तरं युक्तम्। तस्मादाज्यभागव्यतिरिक्तस्य प्रया-जाद्यङ्गस्य परिसंख्यार्थमिदमाज्यभागवचनमिति पञ्चमः पक्षः। आज्यभागवाक्येन तद्विधिरूपस्वार्थस्त्यज्येत प्रया-जादिनिषेधरूपोऽस्वार्थः परिगृह्येत चोदकप्राप्तश्च प्रया-जाद्यनुष्ठानं बाध्येतेति दोषत्रयप्रसङ्गान्न परिसंख्या युक्ता तेन प्रत्यक्षरूपादस्मादाज्यभागवाक्यादानुमानिकश्चोदक-वाक्यमाज्यभागव्यतिरिक्तप्रयाजाद्यङ्गेषु सङ्कोचनीयमिति षष्ठः पक्षः। यदि चोदकप्राप्तस्य प्रत्यक्षं पृथग्व्यापारा स

स्ता प्रयाजाद्यङ्गगोचरैर्व्यापारैस्तेषामतिदेशः मिथ्यासि-
आज्यभागगोचरस्यानेन प्रत्यक्षविधिना बाधितत्वात्। न चो-
दकेनाज्यभागादिदेश इत्येवं सङ्कोचो वर्णयितुं शक्यते इह
तु शब्दबाधकर्मणां विरम्य व्यापाराभावादिति न्यायेनैक एव
चोदकस्य व्यापारः। तथा सति युगपदतिदेशोऽनतिदेशश्च
विरुद्धधर्मः प्रसज्येत तस्मात् प्रयाजाद्यङ्गेषु सङ्कोचो न
युक्तः। तेन चोदकोऽत्राज्यभागकर्मणि सङ्कोचनीयः। न चो-
पसंहरति, यस्य सङ्कोचस्योपसंहारकत्वात् आज्यभाग-
योरिव शक्तस्य चोदकस्य स्थानं शक्तिज्ञानमुपसंहारः। तथा
सत्याज्यभागातिदेशे व्यापृतस्य चोदकस्य को नामाति-
देशनिवृत्तिरूपविरुद्धधर्मप्रसङ्गः। तदाज्यभागकर्मणि चोद-
कावस्थानमिति सप्तमः पक्षः। पूर्वं दर्शपूर्णां करोत्याग्नेयं च-
तुर्धा करोतीत्यनयोरुभयोरपि प्रत्यक्षवचनत्वेन सरूपत्वा-
दुपसंहारः। इह तु प्रत्यक्षवचनचोदकयोर्वि-
रूपत्वान्नासौ युक्तः। किञ्च प्रत्यक्षवचनेनाज्यभागविधि-
सिद्धेश्चोदककल्पना निरर्थिका तस्मादुपसंहारो न युक्तः।
तस्मादपूर्वो गृहमेधीयो न चोदकेनाज्याङ्गानि गृह्णातीति
कर्त्तव्यताकाङ्क्षा तु प्रत्यक्षवचनेनैव छिन्नेति। एवं सति उक्त-
दोषद्वयाभावादष्टमः पक्षोऽभ्युपेयः। ननु साङ्ग्रहण्यामिष्टौ
प्रत्यक्षवचनविहितैरामनहोमैः सह चोदकातिदिष्टाना-
मनुयाजानां समुच्चयोऽङ्गीकृतस्तद्वदत्रापि विधीयमानयो-
राज्यभागयोश्चोदकप्राप्तप्रयाजाद्यङ्गैः सह समुच्चयोऽस्तु
न वैषम्यात्। प्रकृतावाज्यभागनीतोपकारः क्लृप्तः सोऽत्र
नाम साम्येन कार्य्येण तत्र क्लृप्तोपकारैरनुयाजाद्यङ्गैर्यो-

दर्शेन सह मातिदिष्टे: संपूर्येते ततो विधिवैयर्थ्यपरिहारायामनहोमेषु उपकारे क्रमे सति पश्चात प्रवर्त्तमान: प्रयोगवचन: समुच्चित्यानुष्ठापयति। ततो वैषम्यात् क्रमोपकाराज्यभागविधायकेनानेन प्रत्यक्षवचनेन गृहमेधीये चोदको लुप्यते तस्मादविकृतरूपं साङ्गम् अपूर्वं कर्मान्तरमत्र विधीयत इति राद्धान्त:।

दशमाधिकरणमारचयति।

तत्राज्यङ्गं नो कार्य्यं कार्य्यं वाऽन्यानपेक्षणात्।
न कार्य्यं विहितत्वेन कार्य्यं स्विष्टकृतादिकम्॥१६॥

तत्र गृहमेधीये आज्यभागाभ्यामेव निराकाङ्क्षत्वादिडास्विष्टकृदादिकं न कार्य्यमिति चेत् न। आज्यभागवद्विहितत्वादग्नये स्विष्टकृते समवद्यतीति इडामुपह्वयत इति विहितं तस्माद्यावदुक्तं कार्य्यम्।

एकादशाधिकरणमारचयति।

तत्रैव परिसंख्यात्वे प्राशित्राद्यस्ति वा न वा।
अस्तीडादर्शनान्मैवं तदुक्त्यात्वात्तु नेतरत्॥ १७॥

गृहमेधीये स्विष्टकृदाज्यभागवदष्टधा संशयं हृदि निधाय परिसंख्यायें पञ्चमं पक्षमभ्युपेत्येयं कृत्वा चिन्ता तत्र प्राशित्रादिभक्षणं न परिसंख्यातं तदस्ति कुत: भक्षणार्थस्येडोपाह्वानस्य तत्र दर्शनादिति प्राप्ते ब्रूम:। अत्र गृहमेधीये तदिडाभक्षणं वचनबलेनास्तु स्विष्टकृदात्मप्रापितस्य परिसंख्यातस्य वचनेन निवारितत्वादितरत् प्राशित्रादिभक्षणं परिसंख्यातत्वान्नास्ति।

द्वादशाधिकरणमारचयति ।

प्रायणीयातिथ्ययोः किं विकल्पः शंय्विडान्तयोः ।
नियमो वा विकल्पः स्यान्निषेधपरिसंख्यया ॥ १८ ॥
शंय्विडान्तत्ववाक्याच्च नियमो विधिमात्रतः ।
नित्यानुवादो वै वाक्यं दोषबाहुल्यमन्यथा ॥ १९ ॥

ज्योतिष्टोमे श्रूयते शंय्वन्ता प्रायणीया सन्तिष्ठते न पत्नीः संयाजयन्ति इडान्ताऽऽतिथ्या सन्तिष्ठते नानूयाजान् यजन्तीति प्रकृतौ यदा होता तच्छंयोरिति मन्त्रं जपति तदानीमध्वर्युः परिधीनग्नौ प्रक्षिपति तदाह सूत्रकारः । अनूच्यमाने शंयुवाके आहवनीये परिधीन् प्रहरतीति ततो हविःशेषेषु भक्षितेषु पत्नीः संयाजयन्तीति क्रमस्तथा प्रधानयागमारिष्टहोमप्राशित्रादिभक्षणेडाभक्षणानुयाजसूक्तवाकशंयुवाका इत्यवसानः प्रयोगक्रमः पत्नीसंयाजानां परिफलीकरणहोमप्रायश्चित्तहोमकपालोद्वासनैरिष्टिः समाप्यते । एवं स्थिते विकृतिरूपायाः प्रायणीयेष्टेः शंयुवाकान्तत्वमातिथ्येष्टेरिडाभक्षणान्तत्वञ्च विकल्पितं स्यात् । कुतः निषेधवाक्यविधिवाक्याभ्यां प्रकारद्वयप्रतीतेः तथाहि शंय्वन्तत्वेडान्तत्वविधिमेवोपरितनपत्नीसंयाजानुयाजनिषेधे पुनर्निषेधश्रवणं परिसंख्यार्थं पत्नीसंयाजानुयाजव्यतिरिक्ते नास्ति निषेध इति परिसंख्यातेन प्रकृतिवद्यथाप्राप्तं कपालोद्वासनान्तत्वमनयोरिष्ट्योः प्रतीयते विधिवाक्येन च शंय्विडान्तत्वं तेन व्रीहियववद्विकल्प इति प्राप्ते ब्रूमः । विधिमात्रस्यात्र प्रवृत्तेः शंय्वन्तत्वमिडान्तत्वञ्च तयोः प्रतिनियतं पत्नीसंयाजाद्यभावस्वरूपविवक्षातो

मन्त्रपदप्रयुक्तमुपरितनं प्रतिषेधवाक्यं नित्यानुवादः पत्नीसंयाजाद्यकरणाल्लाघवं भवतीति । अन्यथा बहवो दोषाः प्रसज्येरन् विकल्पे तावदष्टौ दोषाः प्रसिद्धाः । परिसंख्यायान्तु त्रयो दोषाः विधिपरिसंख्याभ्यां वाक्यभेदोऽपरो दोषस्ततः शंय्विडान्तत्वं नियतम् ।

त्रयोदशाधिकरणमारचयति ।

तत्रैव शंय्विडे पूर्वेऽपरे वा स्वेच्छयाऽथवा ।
परे एवाथ वा पूर्वे एवाद्यो द्विविधश्रुतेः ॥ २० ॥
निषेधस्यार्थवत्त्वाय परे एवानुवादगीः ।
पूर्वोक्तवाक्यतां याति पूर्वे एवाविरोधतः ॥ २१ ॥

प्रायणीयातिथ्ययोरिडान्तत्वेन निर्णीते शंय्विडे पुनः सन्दिह्यते प्रकृतौ द्विविधे शंय्विडे पत्नीसंयाजेभ्यः पुरस्तादुपरिष्टाच्च विहिते ते चात्र चोदकप्राप्ते तत्र द्विविधश्रुतेरर्थे चोदनातिदिष्टे सति विशेषनियामकाभावादिच्छया स्वीकार्ये इत्येकः पक्षः । यदि प्रायणीया पूर्वशंय्वन्तातिथ्या च पूर्वेडान्ता तदानीमन्तत्वविधिनैव ताभ्यां शंय्विडाभ्यामूर्ध्वं प्राप्तानां पत्नीसंयाजानामनूयाजानाञ्च वारितत्वान्निषेधोऽव्यर्थः स्यात् परयोरन्तत्वे ताभ्यां शंय्विडाभ्यां पूर्वभावानां तेषामनिवारणात्तन्निवारणाय सार्थको निषेधः । तस्मात् परे एव शंय्विडे ग्राह्ये इति द्वितीयः पक्षः । निषेधोऽयं नित्यानुवाद इत्युक्तं स च पूर्वयोः शंय्विडान्तत्वेऽप्येकवाक्यतामापाद्यार्थवादत्वेनोपपद्यते । अत्यन्ताविरोधिन्यौ हि पूर्वे शंय्विडे तस्मात्ते एव ग्राह्ये इति राद्धान्तः ।

चतुर्दशाधिकरणमारचयति ।

उपसत्सु निषिद्धेभ्यः शिष्टं सर्वं किमाचरेत् ।
यावदुक्तमुपाद्योऽस्तु चोदकस्यानिवारणात् ॥ २२ ॥
स्रौवाघारे पुनः श्रुत्या शिष्टस्य परिसंख्यया ।
अपूर्वार्थत्वतो वान्योऽनुवादोऽत्र निषेधगीः ॥ २३ ॥

ज्योतिष्टोमे विहितासु उपसत्सु पठ्यते प्रयाजास्ता अननूयाजा इति तत्र निषेधात् प्रयाजानुयाजान् वर्जयित्वा वशिष्टं चोदकप्राप्तमङ्गजातं सर्वमाचरणीयमिति प्राप्ते ब्रूमः । प्रकृतौ विहित एवाघारः पुनरिह विधीयते । स च चोदकप्राप्तमन्यत्सर्वमङ्गजातं परिसङ्ख्टे अन्यथा पुनर्विधान वैयर्थ्यात् । ननु पुनर्विधानं प्रतिप्रसवार्थं अत एव श्रुतिस्तत्र स्रौवाघारस्याभावशङ्कानिराकरणपूर्वकं विदधाति नान्यामाहुतिं पुरस्ताज्जुहुयाद्यदन्यामाहुतिं पुरस्तात् जुहुयादन्यन्मुखं कुर्यात् स्रुवेणाघारयतीति अयमर्थः । स्रौवाघारः सर्वत्र यज्ञमुखं तथा सति यदि कश्चिदत्र उपसत्प्रयोगादौ स्रौवाघारमकृत्वा तस्य स्थाने काञ्चिदन्यामाहुतिं जुहुयात्तदा मुख्यव्यत्यासेन प्रत्यवायं प्राप्नुयात् स्रौवाघार आदौ कर्त्तव्य इति नैतद्युक्तं चोदकप्राप्तस्याघारस्य कारणमन्तरेणाकस्मादभावशङ्काया अयुक्तत्वात् तस्मात् परिसंख्यार्थ एव पुनर्विधिः । आहुत्यन्तरनिन्दा तु तच्छेषभूतोऽर्थवादः । यदि परिसंख्या त्रिदोषेत्युच्येत तर्हि नवमेधीयपदपूर्वं कर्मास्तु प्रयाजादिनिषेधो नित्यानुवादः सर्वथा यावदुक्तमेवानुष्ठेयम् ।

पञ्चदशाधिकरणमारचयति ।

किं स्यादवभृथे बर्हिर्वर्ज्यं सर्वमुताचरेत् ।
यावदुक्तं प्रयाजानुयाज बर्हिर्निषेधतः ॥ २४ ॥
आद्याऽप्सुमन्तावित्याज्यभागोक्त्या परिसंख्यया ।
अन्यतोऽत्र गुणा प्राप्तेरपूर्वत्वेन वाऽन्तिमः ॥ २५ ॥

ज्योतिष्टोमगतेऽवभृथे चतुर्थप्रयाजप्रथमानुयाजरूपौ बर्हिर्यागौ वर्जयित्वा शिष्टं चोदकप्राप्तं सर्वमनुष्ठेयं कुतः । अपबर्हिषः प्रयाजान्यजति अपबर्हिषावनूयाजौ यजतीति बर्हिर्यागद्वयमात्रवर्जनावगमादिति प्राप्ते ब्रूमः । अप्सु-मन्तावाज्यभागौ यजतीति परिसंख्यानादुक्तमेवानुष्ठेयं अथोच्येत चोदकप्राप्तावाज्यभागावनूद्याप्सु मन्त्रोपेत-मन्त्रद्वयरूपस्य गुणस्याविधानान्न परिसंख्येति नैवम् । लिङ्गक्रमाभ्यामेव मन्त्रयोः प्राप्तत्वात् अतः परिसंख्यया गृहमेधीयवदुपसद्वदपूर्वकर्मत्वेन वा यावदुक्तमेवानुष्ठेयम् ।

षोडशाधिकरणमारचयति ।

बृहद्यव: खादिरश्च विकल्प्या नियता उत ।
विकल्प्याश्चोदकप्राप्तेर्नियताः स्युः पुनर्विधेः ॥ २६ ॥

कस्यांचिद्विकृतौ श्रूयते बृहत्पृष्ठं भवतीति त्रैधातवीये श्रूयते यवमयो मध्यम इति वाजपेये श्रूयते खादिरो यूपो भवतीति तत्र बृहद्रथन्तरयोर्व्रीहियवयोः खादिरवैकल्प्यादीनाञ्च प्रकृतौ विकल्पितत्वादत्रापि चोदकेन विकल्पिता इति चेन्न पुनर्विधानवैयर्थ्यात् परिसंख्या तु दुष्टत्वान्न ग्राह्या तस्मान्नियताः कोट्यन्तरव्यावृत्तिर्वर्त्तते ।

सप्तदशाधिकरणमारचयति।

काम्येष्टिषु द्रव्यदेवं प्राकृतं न निवर्त्तते।
निवर्त्तेत वा न प्राप्ते विकल्पो वा समुच्चयः॥ २७॥
उत्पत्तिशिष्टेनैवात्र निराकाङ्क्षत्वतः कुतः।
चोदकःशिष्ट एवास्य विषयोऽर्थान्निवर्त्तते॥ २८॥

ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकाम इत्यादिषु प्राकृतयोरग्निदेवताष्टाकपालद्रव्ययोर्नास्ति निवृत्तिः। कुतः चोदकेन प्राप्तत्वाच्छ्रुतयोरितिदिष्टयोश्च द्रव्यदेवतयोर्विकल्पः समुच्चयो वा स्वेच्छया कार्य्य इति प्राप्ते ब्रूमः। उत्पन्नस्य यागस्येति कर्त्तव्यताकाङ्क्षायां पश्चाच्चोदकस्यावतारः इह तूत्पत्तिशिष्टाभ्यां द्रव्यदेवताभ्यां यागस्य तद्विषया काङ्क्षा निवृत्तेर्न तत्र चोदकस्यावकाशोऽस्ति। ननु सकृद्व्यापृतश्चोदकः क्वचित् प्रवर्तते क्वचिन्निवर्त्तत इत्येतन्न सम्भवतीति चेत् माभूत् सम्भवः। न वयं तन्निवृत्तिं ब्रूमः। किन्तु श्रुताभ्यां द्रव्यदेवताभ्यामन्य एवाङ्गकलापश्चोदकस्य विषयस्ततः प्राकृतयोर्द्रव्यदेवतयोरप्राप्तत्वादेव फलतो निवृत्तिरिति ब्रूमः। तस्माद्दूरापेतौ विकल्पसमुच्चयौ।

अष्टादशाधिकरणमारचयति।

औदुम्बरः खादिरेण समुच्चेयोऽथ बाधकः।
द्वयोर्नियोजनाद्याद्यो निरपेक्षत्वतोऽन्तिमः॥ २९॥

पशुकामेनानुष्ठेये सोमा पौष्णा पशौ श्रूयते। औदुम्बरो यूपो भवतीति तत्र चोदकेन प्राप्तेन खादिरेण सह श्रूयमाणस्यौदुम्बरस्य समुच्चयः कार्य्यः। कुतः द्वयोर्यूपयोः

पशुनियोजनसम्भवेन चोदकपरित्यागायोगादिति प्राप्ते ब्रूमः। खादिरौदुम्बरौ परस्परनिरपेक्षतया पशुनियोजनक्षमौ प्रमाणबलेन प्राप्तौ तयोः समुच्चयाङ्गीकारे नैरपेक्ष्यं परित्यज्येत तस्मादुपदिष्ट औदुम्बरोऽतिदिष्टस्य बाधकः।

अन्तर्विंशाधिकरणमारचयति।

किं शुक्ला व्रीहयः पक्षे चोदके याज्ञिकान् यवान्।
न बाधन्तेऽथ बाधन्ते गुणार्थोक्ति रतोऽग्रिमः॥ २०॥
वाक्यभेदो यागशुक्लगुणयोर्विधितो भवेत्।
विशिष्टस्य विधौ कार्य्यमेकं वै बाधकास्ततः॥ २१॥

सोमारौद्रञ्चरुं निर्वपेच्छुक्लानां व्रीहीणां ब्रह्मवर्चसकाम इत्यत्र चोदकप्राप्तौ व्रीहियवविकल्पौ न बाध्येते। कुतः प्रत्यक्षस्य व्रीहिवाक्यस्यातिदिष्टयाज्ञिकव्रीह्यनुवादेन शुक्लगुणविधानार्थत्वे सति बाधसन्तरेणोपपन्नत्वादिति प्राप्ते ब्रूमः। यागस्तावदप्राप्तत्वाद्विधेयः तत्र गुणोऽपि यदि पृथग् विधीयेत तदा वाक्यं भिद्येत ततः शुक्लव्रीहिविशिष्टो यागोऽत्र विधीयते। तथा सत्यतिदिष्ट व्रीहियवयोर्यत्कार्य्यं तदेवोपदिश्यमानशुक्लव्रीहीणां कार्य्यं ततस्ते व्रीहयः याज्ञिकान् यवान् बाधन्ते।

विंशाधिकरणमारचयति।

वपायामेव किं वाऽन्येष्वपि पश्ववदानता।
वपोद्देशादाद्यपक्षोऽवदानोद्देशतोऽन्तिमः॥ २१॥

पशौ श्रूयते यद्यपि चतुरवत्तौ यजमानः पञ्चावत्तैव वपाकार्य्येति यजमानविशेषस्य चतुरवत्तित्वङ्गोत्रभेदेन

स्मृतिकारैः पठ्यते । जामदग्न्यवत्सविदावार्ष्टिषेणास्तथैव च । पञ्चावत्तिन एवान्ये सर्वे चतुरवत्तिन इति । सर्वेषां यजमानानां गोत्रविशेषमपोह्य श्रूयमाणमिदं पञ्चावत्तित्वं वपामुद्दिश्य विधानाद्वपायामेवेति प्राप्ते ब्रूमः । अवदानस्य चोदकप्राप्तत्वेन विधेयत्वाभावादवदानमुद्दिश्य विधीयमाना संख्यावदानयुक्तेष्वन्येष्वपि पश्ववयवेषु भवतीति सिद्धान्तः ।

इति माधवीये जैमिनीयन्यायमालाविस्तरे दशमाध्यायस्य सप्तमः पादः समाप्तः ।

---

अष्टमपादस्य प्रथमाधिकरणमारचयति ।

नार्षेयं न च होतारं नानुयाजेष्वितीरिते ।
विकल्पः पर्युदासो वा स्यादाद्यो वचनद्वयात् ॥ १ ॥
अन्याय्यत्वाद्विकल्पस्य विध्यंशः सा निषेधगीः ।
तेनानुयाजवाक्यस्थस्तद्यं पर्युदस्यति ॥ २ ॥

महापितृयज्ञे चोदकप्राप्तवरणं प्रति श्रूयते नार्षेयं वृणीते न होतारमिति तथा नारभ्य वादे श्रूयते आश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह इति पञ्चाक्षरं द्व्यक्षरो वषट्कार एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्त इति तत्रोक्तं यजतिषु ये यजामहं करोति नानुयाजेषु ये यजामहं करोतीति तत्र वरणस्य विधिप्रतिषेधौ चोदकप्रत्यक्षवचनाभ्यां प्रतीयेते

ये यजामहे इति मन्त्रस्य तु द्वाभ्यां प्रत्यक्षवचनाभ्यां विधि- प्रतिषेधप्रतीतिस्तत्र विधायकप्रतिषेधकयोर्द्वयोः प्रमाणयो- रवैयर्थ्यार्थं विकल्प इति प्राप्ते ब्रूमः। षड्दोषग्रस्तत्वा- द्विकल्पो न न्याय्यः। ननु परस्परविरुद्धयोर्विधिप्रतिषेधयोः समुच्चयस्याप्यभावात् का गतिरिति चेत् उच्यते। निषेध- त्वेन प्रतीयमानमिदं नेत्यनेन शब्देनोपेतं वाक्यं विधि- वाक्यस्यांशो भविष्यति। तथाहि यदि नेत्ययं शब्दः करोति नासम्बध्यते तदा ये यजामहं न करोत्येवं प्रतिषेधः स्याद्यदि च वृणीत इत्यत्राख्यातप्रत्ययेन सम्बध्येत तदा वरणं न कर्त्तव्यमिति निषिध्येत नत्वेवं सम्बध्यते किं त्वनुयाजपदेनुवृञ् धातुना च सम्बध्यते। तथा सत्यनुयाज- व्यतिरिक्तेषु यागेषु ये यजामहः कर्त्तव्यः वरणव्यतिरिक्तम् अङ्गजातमनुष्ठेयमिति ये यजामहवरणपर्युदासेन विधेरेव विशेषितत्वे सति प्रतिषेधवाक्यस्य कस्यचिदभावान्न विकल्पः शङ्कितुमपि शक्यः।

द्वितीयाधिकरणमारचयति।

न सोमेऽध्वर इत्युक्तौ निषेधः पर्युदस्यते।
उतार्थवादो वाद्यः स्यादसमस्तपदोक्तितः॥ ३॥
सोमे प्रसक्तिरङ्गेष्टावविकल्पाय मध्यमः।
नैवास्त्यत्र समासस्य नियमः पाणिनेर्मते॥ ४॥
पुरे तस्मात् सोमयाग आज्यभागप्रसक्तितः।
न पर्युदासः किं त्वर्थवादो दृष्टान्तदर्शनात्॥ ५॥

दर्शपूर्णमासयोराज्यभागौ प्रकृत्य तौ न पशौ करो- तीति निषिध्य पश्चान्न सोमेऽध्वर इत्येवमाम्नायते तत्राय

प्रतिषेध: स्यात्। कुत: नञ्शब्दस्य सोमशब्देन सह समस्तत्वाभावात् अब्राह्मणमाकारयत्यधर्मं करोतीत्यादिषु पर्य्युदासप्रदेशेषु समस्तत्वदर्शनाद्‌व्यस्तोऽयं नकार: क्रियापदेन न्वित: आज्यभागानुष्ठानं प्रतिषेधति। ननु पशोरिष्टिविकृतित्वेन चोदकं आज्यभागौ प्रसञ्जयति सोमस्य त्वविकृतत्वान्नास्ति तत् प्रसक्तिरिति चेत् बाढ़म्। तथापि सोमाङ्गभूतासु दीक्षणीयादीष्टिषु या प्रसक्ति: सैवाङ्गिनि सोमे प्रसक्तिर्भविष्यति तस्मात् प्रतिषेध इत्याद्य: पक्ष: चोदकप्रतिषेधाभ्यां दीक्षणीयादावाज्यभागौ वार्य्यादित्येवं विकल्प: स्यात् स चाष्टदोषग्रस्त:। अत: पूर्वाधिकरण इव पर्य्युदासोऽस्तु तत्र कात्यायनमतेन समासनियमेऽपि पाणिनेर्मते नियम:। तस्मात् सोमव्यतिरिक्ते कर्मणि आज्यभागौ कर्त्तव्याविति मध्यत: पक्ष:। यथा वरणेषु तद्‌व्यतिरिक्ताङ्गेषु च चोदकेन प्रसक्तिसाधारण्ये सति वरणपर्य्युदासेनाङ्गान्तरविषये चोदकोऽवस्थाप्यते। तत्रापि पर्य्युदासवादिना पर्य्युदासात् पुरा पर्य्युदसनीये सोमे इतरत्र च साधारण्येनाज्यभागप्रसक्तिर्वाच्या सा किमुपदेशात् स्यादतिदेशाद्वा न प्रथम:। प्रकरणेन दर्शपूर्णमासयोरव-रुद्धस्याज्यभागोपदेशस्य सोमे प्रसञ्जकत्वाभावात् न द्वितीय:। अन्योन्याश्रयप्रसङ्गात् उपदेशवाक्यार्थे पर्य्युदासादिना निर्णीते सति पशोश्चोदकस्य प्रसक्ति: सत्याञ्च प्रसक्तौ पश्चात् पर्य्युदासनिर्णय:। तस्मान्न पर्य्युदास:। का तर्हि न सोमेऽध्वर इति वाक्यगति: उच्यते। न पशौ करोतीत्यस्य निषेधस्य शेष: सदृष्टान्तो वक्ष्यते। यथा न तौ

सोमेऽध्वरे तथा तौ न पशौ कुर्य्यादिति ततोऽर्थवाद इति राद्धान्तः ।

तृतीयाधिकरणमारचयति ।

नातिरात्रे पर्युदासो वाद्यो वाथ निषेधनम् ।
आद्योऽनुयाजवन्मैवं विध्येकविषयत्वतः ॥ ५ ॥
अतएवार्थवादोऽपि न युक्तः पशुसोमवत् ।
निषेधः स्याद्विकल्पोऽत्र व्रीह्यादाविव युज्यते ॥ ६ ॥

ज्योतिष्टोमस्य संस्थाविशेषे श्रूयते । अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णातीति तत्र यद्यनुयाजमात्रनिषेध इवानुयाजपर्युदासोऽपि विधेर्निर्विषयत्वं तर्हि न पशौ करोतीत्यत्र न सोम इति वदर्थवादोऽस्त्विति यथानुयाजेषु ये यजामहविधिनिषेधयोः समावेशपर्युदास एवमत्रापीति चेन्न । एकविषयत्वेन व्याहतिप्रसङ्गात् । अतिरात्रव्यतिरिक्तेऽतिरात्रे इत्युक्तेः कथं न व्याहन्येत दृष्टान्ते तु विधिः सर्वविषयः निषेधोऽनुयाजमात्रविषय इति । मैवं तुल्यस्तावत्तयोर्विधिनिषेधयोरेकविषयत्वेन व्याहतितादवस्थ्यात् । अपशवो वा अन्ये गोअश्वेभ्य इत्यत्र पश्वन्तरनिषेधेन गोअश्वविधिस्तुतिर्दृष्टा इह तु षोडशिनिषेधेन षोडशिन एव स्तुतौ स्पष्टो व्याघातः तस्मात् प्रतिषेध इति तृतीयः पक्षोऽस्तु । न चात्रापि व्याघातः शङ्क्यः । अनुष्ठानविकल्पाङ्गीकारेण भिन्नप्रयोगविषयत्वात् सत्स्वप्यष्टसु दोषेषु गत्यन्तराभावाद् व्रीहियववद्विकल्पोऽभ्युपेयः तस्मात् प्रतिषेध इति राद्धान्तः ।

चतुर्थाधिकरणमारचयति ।

जर्तिलोक्तौ चतुर्धा किं विकल्पोऽथ पञ्चः स्तुतिः ।
विकल्पः पूर्ववन्नैवं वाक्यैक्यात् पयसा सह ॥ ७ ॥

अग्निहोत्रे श्रूयते जर्तिलयवाग्वा जुहुयाद्गवीधुकयवाग्वा जुहुयान्न ग्राम्यान् पशून् हिनस्ति नारण्यानथो खल्वाहुः अनाहुतिर्वै जर्तिला गवीधुकाश्च पयसाग्निहोत्रं जुहुयादिति जर्तिला आरण्यास्तिला गवीधुका आरण्या गोधूमाः तयोरुभयोर्विकल्पः श्रौत एवानाहुतिरिति पूर्वयोः पचयोर्दूषितत्वाद्धोमाभावस्तृतीयः पचः । न चात्र जर्तिलगवीधुकयोरनाहुतिरित्येतेन पर्युदासः सम्भवति आहुतपदान्वितस्य नञ्पदस्य जर्तिलगवीधुकपदान्वयायोगात् पयो विधिश्चतुर्थः पचः । एतेषां परस्परविरुद्धानां चतुर्णां गत्यन्तराभावात् षोडशिग्रहणवद्विकल्प इति प्राप्ते ब्रूमः । पयो विधिना सह जर्तिलादेरेकवाक्यत्वेनार्थवादत्वं युक्तम् ग्राम्यारण्यपशुहिंसाराहित्येन प्रशस्तयोरपि जर्तिलगवीधुकयोरग्निहोत्रं प्रत्याहुतित्वं नास्ति पयसस्तु तदस्ति इत्यं महाभागं पय स्तूयते तस्मादर्थवादः ।

पञ्चमाधिकरणमारचयति ।

अभिचारनिषेधौ च होमाहोमौ विकल्पिनौ ।
विधास्यमानशेषो वा विकल्पः श्रुतिमात्रतः ॥ ८ ॥
निषेधस्य विधेश्चात्र मीमांस्यत्वेन वर्णनात् ।
स मीमांसाप्रभावार्थवादास्त्वर्थे विधित्समिते ॥ ९ ॥

चातुर्मास्येषु त्र्यम्बकमन्त्रसंयोगेन त्र्यम्बकनामका एककपालाः पुरोडाशा बहवो विहिताः । तान् प्रकृत्य

श्रूयते अभिचार्या अनभिचार्या इति मीमांसन्ते ब्रह्मवादिन इत्यादि आधाने श्रूयते होतव्यमग्निहोत्रं न होतव्यमिति मीमांसन्ते ब्रह्मवादिन इत्यादि। अस्मिनुदाहरणद्वये नञ्श्रुतिर्विचार्यानयोरुदाहरणयोर्विधिनिषेधौ वाचक-शब्दाभ्यां श्रूयमाणत्वात् समानबलौ ततः षोड़शि-ग्रहणाग्रहणवद्विकल्पः। न च जर्तिलवद्विधास्यमानस्तु-त्यर्थत्वं शङ्क्यं दृष्टान्तस्य विषमत्वात्। दृष्टान्तेस्तावका-ज्जर्तिलादेरन्यदेव विधास्यमानं पयस्तस्य स्तुतिर्युक्ता। इह तूपक्रमे विहितावेवाभिचारणहोमौ मीमांसन्तौ पुनर्विधी-येते। अभिचार्या एव तूष्णीमेव होतव्यमिति वाक्यशेषयोः पठ्यमानत्वान्न च तेनैव तस्य स्तुतिः सम्भवति पुनर्विधान-स्यानुवादत्वेन गुणार्थत्वेन चोपपद्यते निषेधस्य तु स्ताव-कत्वं दूरादपेतं नहि तस्यैव निषेधेन तदेव स्तोतुं शक्यते। तस्माद्विधिनिषेधौ विकल्पार्थाविति प्राप्ते ब्रूमः। इति शब्देन मीमांसाप्रकारवाचिना विधिनिषेधयोर्मीमांस्यत्व प्रतीयते। ततो विधिनिषेधविशिष्टा मीमांसा विधित्-सितार्थस्तुत्यै इत्थं महाभागो विधित्सितार्थो यन्मीमां-सया निर्णेतव्य इति स्तूयते तस्मादेकवाक्यत्वादर्थवादः।

षष्ठाधिकरणमारचयति।

उन्नेयो ब्रह्मगानस्य निषेधो विहितस्तुतिः।
विकल्पितो वा शून्योऽपि वपोत्खेद इव स्तुतिः ॥११॥
विध्यनन्वयतो स्तोत्रं ब्रह्मोद्गाता तथा सति।
विषयैक्याद्विकल्पोऽत्र षोड़शिग्रहवन्मतः ॥ १२ ॥

आज्यानि वामदेव्यादि साम्ना गानानि विहितानि

आधाने एवेदमपरमाम्नायते। उपवीता एतस्याग्नयो भवन्ति। यस्याग्न्याधेये ब्रह्मा सामानि गायतीति उपशब्दः सामीप्यं ब्रूते विगताः कालविलम्बमन्तरेण परेस्यता इत्यर्थः। अनया निन्दया ब्रह्मणः सामगाननिषेध उद्‌गातुर्विहितं वामदेव्यादिसामगानं स्तौति। ननु ब्रह्मणः सामगानमप्रसक्तं ततस्तं निषेधोऽत्यन्तमसम्भावितत्वाच्छशविषाणवच्छून्यः। न हि वन्ध्यापुत्रो वा तद्वधो वा सम्भावयितुं शक्यते तथा सति तादृशेन निषेधेन कथं श्रुतिरिति चेत् वपोत्खेदवदिति ब्रूमः। स आत्मनो वपामुदखिददित्यनेन नात्यन्तासम्भावितार्थेन यथा प्राजापत्यस्य तूपरस्याजस्य विधिस्तूयते तद्वदिति प्राप्ते ब्रूमः। नेदं वामदेव्यादिसामविधीनां स्तोत्रं भवितुमर्हति विधीनामनेकत्वेन स्वस्वसन्निधिपठितैरर्थवादैर्निराकाङ्क्षत्वेन च तदन्वया योगात् का तर्ह्यस्य गतिरिति चेत्। उच्यते ब्रह्मशब्दोऽत्र विप्रत्वजातिद्वारेणोद्‌गातारं ब्रूते। यस्य च गानं प्रसक्तं तस्मिन्निषेधे सति विधिनिषेधाभ्यामेकविषयाभ्यामुद्‌गातुर्गानं विकल्प्यते।

सप्तमाधिकरणमारचयति।

दीक्षितो न ददातीति प्राप्तं सर्वं निषिध्यते।
अतिदिष्टपुमर्थं वा पुमर्थं वोक्तितोऽग्रिमः॥ १३॥
उपदेशार्थवत्वाय मध्यमोऽन्त्यस्तु सन्निधेः।
एकवाक्यत्व लोभश्चेत् पुमर्थं पर्युदस्य ताम्॥ १४॥

ज्योतिष्टोमे श्रूयते दीक्षितो न ददाति न जुहोति न पचतीति तत्र यद्दानादिकं पुरुषार्थं यच्च क्रत्वर्थं तत्राप्युप-

दिष्टमतिदिष्टञ्च तत् सर्वं प्रतिषिध्यते। कुतः न ददातीत्यादिवचनस्य सामान्यरूपत्वादित्याद्यः पक्षः। उपदिष्टस्यापि प्रतिषेधे सति उपदेशोऽव्यर्थः स्यादिति। अतोऽतिदिष्टं पुरुषार्थं चेत्येतदुभयमेव प्रतिषिध्यते क्रत्वर्थत्वेनोपदिष्टं दानादिकमनुष्ठेयमिति मध्यमः पक्षः। नित्याग्निहोत्रदानादिकं पुरुषार्थत्वेन यत्प्रत्यक्षश्रुतावुपदिष्टं ज्योतिष्टोमकालेऽपि प्राप्तं यच्चातिदिष्टं दानादिकं तयोरुभयोर्मध्ये प्रत्यक्षोपदिष्टनिषेधस्योपदिष्टमेव सन्निहितमिति पुमर्थस्यैवात्र निषेधः। न च नित्याग्निहोत्रदानादौ विधिनिषेधयोः प्रसक्त्या विकल्पः शङ्क्यः भिन्नविषयत्वात् क्रत्वर्थो निषेधः क्रतुकाले तदनुष्ठानं वारयति पुरुषार्थस्तु विधिः। कालान्तरे तदनुष्ठापयति तस्मात् पुमर्थस्य निषेधः। यदि प्रतिषेधपक्षे वाक्यभेदः शङ्क्येत तर्हि पुमर्थदानादि व्यतिरिक्तं क्रतुकालेऽनुष्ठेयमिति पर्युदासोऽस्तु।

अष्टमाधिकरणमारचयति

विकल्पितो बाध्यते वा हवनीयः पदादिभिः।
सामान्यस्य विशेषेण प्रत्यक्षोक्तत्वसाम्यतः॥ १५॥
लिङ्गचोदकवद्बाधो नास्ति तेन विकल्पितः।
विशेषार्थं लक्षणा स्यादतो मुख्ये न बाध्यते॥ १६॥

अनारभ्य श्रूयते यदाहवनीये जुहोति तेन सोऽस्याभीष्टः प्रीत इति ज्योतिष्टोमे श्रूयते पदे जुहोति वर्त्मनि जुहोतीति राजसूये श्रूयते वल्मीकवपायामुत्सृज्य जुहोतीति तथान्यत्र श्रूयते गार्हपत्ये पत्नीसंयाजान् जुहोतीति तत्रानारभ्यवादे होमसामान्यमनूद्याहवनीयो विहितः

प्रकरणानियमितैः पदादिवाक्यैस्तदनुवादाविशिष्टहोमा विहिताः। गार्हपत्यवाक्येन होमविशेषमनूद्य गार्हपत्यो विहितस्तत्र पदादिहोमेषु सामान्यशास्त्रेण प्राप्त आहवनीयो विशेषशास्त्रप्राप्तैः पदादिभिः सह विकल्प्यते। कुतः उभयोः प्रत्यक्षवचनयोः क्रत्वर्थत्वेन समानबलत्वात् न चैन्द्र्या गार्हपत्यमुपतिष्ठति। इत्यत्र यथा श्रुत्या लिङ्गं बाध्यते यथा वा चोदकातिदिष्टानां कुशानामुपदिष्टैः शरैर्बाधस्तथा सामान्यस्य विशेषेण बाधोऽस्त्विति चेत् न वैषम्याल्लिङ्गं विलम्बितत्वात् दुर्बलं चोदकश्चानुमेय तया दुर्बलः। नत्वेवं सामान्यशास्त्रं विलम्बयते नाप्यनुमीयते। अतो दौर्बल्याभावाद्विकल्प इति प्राप्ते ब्रूमः। होमसामान्यस्यानुवादकं यच्छास्त्रं सामान्ये मुख्यत्वाद्धोमविशेषानुवादे लाक्षणिकतया दुर्बलं विशेषशास्त्रं तु मुख्यवृत्त्या विधायकत्वात् प्रबलं न च पदादिशास्त्रमपि होमसामान्यमेवानूद्य पदादिविधायकत्वेन समानबलः स्यादिति शङ्क्यं प्रकरणानियमितत्वेन विशिष्टविधायकस्य सामान्यानुवादायोगात् तस्मात् प्रबलेन विशेषेण सामान्यं बाध्यते।

नवमाधिकरणमारचयति।

सामिधेनी सप्तदश्यं वै मृधादावपूर्वगीः।
सङ्गतिर्वोपकारस्य क्रत्वाद्योस्त्वाज्यभागवत्॥ २०॥
सामिधेन्यः चोदकात्ताः प्राप्तदश्यस्तु वै मृधे।
पुनर्वाक्येन संहार्य्यमनारभ्योक्ति चोदितम्॥ २१॥

अनारभ्याम्नायते। सप्तदशसामिधेनीरनुब्रूयादिति तथा वै मृधेऽध्वरकल्पायां पशौ चातुर्मास्येषु मित्रविन्दा-

यामायमपेक्ष्याद्रौ च पुनः पुनः साप्तदश्यं विहितं यद्यप्य-नारभ्याधीतानां प्रकृतिगामित्वं न्याय्यं तथापि श्रुतेन पाञ्चदश्येनावरुद्धत्वात् विकृतिष्वेव निविशते, तथा सति वै मृधादिषु विकृतिष्वनारभ्य वादप्राप्ताः सप्तदश सामि-धेन्यः प्राकरणिकेन विधिना पुनर्विधीयमाना गृहमेधी याज्यभागवत् क्रतूपकारकत्वेनेति कर्त्तव्यताकाङ्क्षां पूरयन्त्यश्चोदकं लोपयन्त्या वै मृधादेरपूर्वकर्मतां गमयन्ति साप्तदश्यन्त्वनारभ्य वादप्राप्तमनूद्यत इति प्राप्ते ब्रूमः। वै मृधादिषु सामिधेन्य आज्यभागवन्न विधीयन्ते किन्तु चोदकप्राप्तास्ता अनूद्य साप्तदश्यं विधीयते तच्च साप्तदश्यं वै मृधादिप्रकरणेष्वाम्नातैर्विधिभिः कासुचिदेव विकृतिषु प्राप्तमनारभ्य वादेन तु सर्वासु विकृतिषु तत्रानारभ्य वादे विलम्बते प्रथमं विधेयस्य साप्तदश्यस्य सामिधेनी सम्बन्ध-मवबोध्यान्यथानुपपत्त्या क्रतुप्रवेशं परिकल्प्य प्रकृतौ पाञ्च-दश्यपराहतत्वेन विकृतिषु सर्वासु निवेशः क्रियत इति। विलम्बः प्राकरणिकैर्विधिभिः सामिधेनी सम्बन्धः एव बोध्यः क्रतौ तद्विशेषे च प्रवेशो न कल्पः। प्रत्यक्षप्रकरण-पाठेनैव तत् सिद्धेः ततः साप्तदश्यस्य वै मृधादिविकृति-विशेषसम्बन्धे सहसा प्रतिपन्ने सति तद्विरोधात् सम्बन्धो न कल्पयितुं शक्यः। अनारभ्य वादन्तु वै मृधादिषु प्राप्तस्य नित्यानुवादोऽस्तु यद्वा प्राकरणिकविधिर्वै मृधादिषु साप्त-दश्यप्रापकः अनारभ्य वादस्तु प्राप्तस्य पाञ्चदश्यस्य बाधकः सर्वथापि चतुर्धाकरणवदुपसंहारवचनत्वान्नाज्यभागवद् पूर्वं कर्म।

दशमाधिकरणमारचयति।

स्वाहेत्युक्तिर्दर्विहोमे संहारः स्यान्न वाग्रिमः।
पूर्वन्यायान्न तन्मन्त्रे स्वाहाकारविधित्वतः॥ २२॥
विधित्वेऽपि नियम्यः स्यान्न व्यासवषट्कृतौ।
होमान्तरे वषट्कारः स्वाहाकारविकल्पनम्॥ २३॥

अनारभ्य श्रूयते वषट्कारेण स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते इति दर्विहोमविशेषे श्रूयते। पृथिव्यै स्वाहान्तरिक्षाय स्वाहेत्यादि तत्र पूर्वाधिकरणे यथा नारभ्य विहितस्य मासदर्शनाकरणिकविधिनोपसंहारस्तथोपसंहारे सति होमान्तरेष्वस्ति स्वाहाकार इति प्राप्ते ब्रूमः। पृथिव्यै स्वाहेति पाठोऽयं नतत्र स्वाहाकारो नारभ्याधीत ब्राह्मणवाक्येनैव विधीयते। न खलु यमादित्या अंशुमाप्याययन्तीत्यादि वाक्यामन्त्रगता आदित्यादिशब्दाः कस्यचिदर्थस्य विधायकाः दृष्टाः यथा भिन्नार्थवाची आदित्यशब्दो न विधीयते यथा वा क्रियान्तरविषयेऽपि वर्त्तमानार्थ आप्याययन्तीति शब्दो न विधायकस्तथा वैदिकहविर्विषयो दत्तमित्यस्मिन्नर्थे वर्त्तमानः स्वाहाशब्दो नोच्चारणं विदधाति। तथा सत्युपसंहार्योपसंहारकयोरेकविषयत्वशङ्काया अप्यभावात् नास्त्यत्र पूर्वन्यायः। ननु प्रकरणादिना मन्त्रस्य होमे विनियुक्तत्वात् स्वाहाकारविधिरर्थाल्लभ्यते इति चेत् एवमपि ब्राह्मणवाक्येन पक्षे प्राप्तः स्वाहाकारो नियम्यते अस्मिन् दर्विहोमे स्वाहाकारेणैवान्नं प्रदेयं ततः पाक्षिको वषट्कारोऽर्थान्निवर्त्तते। किञ्च पुरस्तात् स्वाहाकारा वा अन्ये देवा उपरिष्टात्

स्वाहाकारा अन्ये इति। अपि च विधित्वेऽपि ब्राह्मणोक्त-वाक्येन स्वाहा पृथिव्या इत्यपि पाठः। पक्षे प्राप्नोति तत्र पृथिव्यै स्वाहेत्येव पठेदिति नियम्यतेऽर्थाद् व्यवस्थातो वषट्कारस्य निवर्त्तते तस्मादविधित्वयो रुपसंहाराभावेन होमान्तरेष्वनारभ्यविहितयोर्वषट्कार स्वाहाकारयोर्विकल्पः सुस्थितो भवति।

एकादशाधिकरणमारचयति।

नातिदेशोऽतिदेशो वा वन्त्यति ग्राह्ययोर्न सः।
विकृतौ पुनरुक्तत्वा देषोऽङ्गान्तरवद् भवेत्॥ २४॥
प्रकृतेर्विकृतौनाहि मास्याय स्यात् पुनर्वचः।
साम्ये च गुणकामानां प्रवृत्तिः प्रकृताविव॥ २५॥

एवं श्रूयते य एवं विद्वानग्निं चिनुत इति। उपस्थानं वा एतद्यज्ञस्य यदतिग्राह्या इति अतिग्राह्य संज्ञका ग्रहा यज्ञस्योपष्टम्भकत्वादनुष्ठेया इत्यर्थः। अत्र चीयमानस्याग्नेरतिग्राह्याणाञ्च विकृतिष्वतिदेशो नास्ति। कुतः पुनरुक्तिवैयर्थ्यप्रसङ्गात् विकृतौ ह्येवं पुनरुच्यते अथातोऽग्निमग्निष्टोमे नानुयजन्ति तमुक्थ्ये न तमतिरात्रेणेत्यादि। अयमर्थः इष्टकाचितमग्निमनु तस्मिंश्चितेऽग्नौ अग्निष्टोमाद्यनुष्ठानमिति तत्राग्निष्टोमः प्रकृतिः उक्थ्यादयो विकृतयः। यदि विकृतिषु चोदकश्चितमग्निमतिदिशेत् तदानीमुक्थ्यादिषु चोदकादेव तत् प्राप्तेः पुनर्विधानमनर्थकं स्यात् अतिग्राह्याश्च विकृतिषु विधीयन्ते पृष्ठे षड्ग्रहीयात्तत्राहिग्यानार्थं-वत्वाय विकृतावग्न्यतिग्राह्यातिदेशो नास्तीति प्राप्ते ब्रूमः।

ऐन्द्रवायवादिग्रहाणामङ्गान्तराणामुक्थ्यादिविकृतिषु च

चातिदेशोऽस्य पशनस्तथाग्निचयनस्यातिथ्याद्याणाद्यतिदेशः स्यात् । मन्त्रखण्डः सकृत् प्रवृत्तश्चोदकः कानिचिदङ्गान्यतिदिश्येतराण्युपेक्षेत इति युक्तम् । अतिदिष्टप्राप्तानामपि पुनर्वचनं प्रकृतिसाम्यार्थं यथा प्रकृतावन्यतिथ्याश्रयोः पत्नचविधिस्तथा विकृतिष्वपीति तत् साम्यं न च साम्ये प्रयोजनाभावः गुणकामप्रवृत्तेस्तत् प्रयोजनत्वात् श्येन चितिं चिन्वीत स्वर्गकाम इत्यादिना कामादिगुणफलभूतस्वर्गादिकामाः श्रुतास्ते चोपदिष्टमाश्रयमपेक्षन्ते । तस्मादयातोऽग्निमिति वाक्येन प्रकृतावग्निष्टोमे कासुचिदुकथ्यादिविकृतिषु चाग्निचयनलक्षण आश्रय उपदिश्यते । अन्यासु वाजपेयादिविकृतिषूपदिष्टस्याश्रयस्याभावादतिदिष्टस्य चानाश्रयत्वाद्गुणकाम्यानां नास्ति प्रवृत्तिस्तस्मात् पुनर्विधानवैयर्थ्याभावादस्त्यतिदेशः ।

द्वादशाधिकरणमारचयति ।

चतुर्द्विर्वा पुरोडाशेऽवदानं होमतो मतः ।

चतुर्थैव सहाज्येन सिद्धस्यात्रानुवादतः । २६ ।

दर्शपूर्णमासयोराम्नायते चतुरवत्तं जुहोतीति तत्र किं पुरोडाशद्रव्यगतस्यावदानस्य चतुःसंख्या किं वा तत्र द्विसंख्या चतुष्ट्वं तूपस्तरणाभिघारणार्थाभ्यामाज्यावदानाभ्यां सह सम्पाद्यत इति संशयः । तत्र चतुरवत्तस्य द्वितीयाविभक्त्या होमकर्मत्वमुच्यते । न चोपस्तरणाद्यर्थस्याज्यस्य होमकर्मत्वमस्ति तस्मात् पुरोडाशावदानस्यैव चतुर्धात्वमिति प्राप्ते ब्रूमः । न तावदत्र होमानुवादेन चतुरवत्तत्वं विधीयते होमस्याप्राप्तत्वात् नापि विशिष्टवि

धिर्गौरवप्रसङ्गात्। होममात्रविधानेन चतुरवत्तत्वमनुवाद्यं तच्चाज्यसहितस्यैव युक्तं द्विर्हविषोऽवद्यतीति विधिना पुरोडाशावदाने द्वित्वस्यैव प्राप्तत्वात् तस्मात् पुरोडाशे द्विरवदानम्।

त्रयोदशाधिकरणमारचयति।

उपांशुयाजे किं न स्यादवदान चतुष्टयम्।

स्यादा नास्त्युपसंहारान्नानुक्तिर्वाक्यतोऽस्ति तत् ॥२७॥

दर्शपूर्णमासयोः श्रुतं चतुरवत्तं नोपांशुयाजे। कुतः सामदश्यवदुपसंहारात् यथा सामदश्यमनारभ्याधीतं परिगणितासु मित्रविन्दादिविकृतिषु पुनः श्रूयमाणं तास्वेवोपसंहृतं एवमुपस्तरणाभिघारणोपेते हविषि श्रूयमाणं तत्रैवोपसंहर्तव्यं तथा च पुरोडाशसान्नाय्ययोस्तत्पर्यवस्यति उपांशुयाजस्य तूपस्तरणादिराहित्यान्नास्ति चतुरवत्तत्वमिति प्राप्ते ब्रूमः। योऽयमुपसंहरत्वेनोदाहृतो वत्तविधिः सोऽनुवाद इति पूर्वोक्तं अत उपसंहारो न शङ्कितुं शक्यः माभूदुपसंहारस्तथाप्युपांशुयाजे चतुरवत्तं कथं सिध्यतीति चेत् चतुरवत्तं जुहोतीति वाक्यादिति ब्रूमः। तस्मादुपांशुयाजे चतुरवत्तम्।

चतुर्दशाधिकरणमारचयति।

सप्तपद्याः पुरोडाशाभ्यामित्यधिकारिणः।

शेषः स्यात् तच्छ्रुतेर्नैवं कार्त्स्न्यनित्यत्वबाधनात् ॥२८॥

कर्मान्तरविधिर्नैवं प्रत्यभिज्ञैव कारतः।

विजयस्य विधिर्नैव माफल्यात् स्वार्थवर्जनात् ॥ २९ ॥

कामस्यास्तु विधिर्मैवं स्वचपायाः प्रसङ्गतः।

ऐन्द्राग्नैकविधिर्नैवं वैषम्याच्चैव कारतः ॥ २० ॥
कालो लाघविकोऽप्यस्तस्वार्थत्वाद्येति चेन्न तत्।
स्तुत्यादिवाक्यवाक्यत्वात् स्वार्थत्वाच्चानुवादता ॥ २१ ॥

दर्शपूर्णमासयोरिदमाम्नायते पुरोडाशाभ्यामेवा सोम-याजिनं याजयेत् यावेतावाग्नेयश्चैन्द्राग्नश्चेति। तत्र के-चिद्‌व्याख्यातृक्रमेणोपन्यासपूर्वकं निरस्य सप्तममवस्थापयन्ति। दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यत्र योऽधिकारी श्रुत-स्तस्यायं शेषः स्यात्। कुतः तत्कर्तुः पुरोडाशसाधनकस्य यागस्य यः कर्त्ताधिकारवाक्ये श्रूयते स एवात्रासोमयाजि-शब्देन विशेषितः श्रूयत इत्याद्यः पक्षः। नैष युक्तः कार्त्स्न्य-नियतत्वयोर्विधासङ्गात् तथा हि पुरोडाशाभ्यामित्येवं-कारेण सान्नाय्योपांशुयाजयोर्व्यवच्छेदः। तथा पुरोडाश-द्वयस्याग्नेयश्चैन्द्राग्नश्चेति विशेषितत्वादग्नीषोमीयस्यापि व्या-वच्छेदः ततः कार्त्स्न्यं बाध्येत। तथा सोमयाजिनमेवं-स्वत्वयस्तदानीं सोमयागादूर्ध्वं दर्शपूर्णमासव्यवच्छेदात् यावज्जीवादिवाक्यात् प्रापितनित्यत्वं बाध्येत तस्माद्दर्श-पूर्णमासाभ्यामन्यौ आग्नेयैन्द्राग्नकर्मणी विधीयेते इति द्वितीयः पक्षः। यावेताविति प्रसिद्धानुवादेन दर्शपूर्णमासा-वेव प्रत्यभिज्ञायेते पुरोडाशाभ्यामित्येवकारस्य कर्मान्तर-पक्षे व्यर्थः स्यात्। तस्मात् प्रसिद्धकर्मानुवादेन याजयेदिति णिजर्थ ऋत्विजं प्रतिविधीयते एव कारस्य प्रयोजनं साना-य्यादिनिवृत्तिरिति तृतीयः पक्षः सोऽप्यनुपपन्नः ऋत्विग्-गामी फलस्य कस्यचिदश्रवणात्। न च विश्वजिन्न्यायेन कल्पयितुं शक्यं परार्थकर्मणि प्रवृत्तस्यार्थप्राप्तिरेवास्माकं

कात्। तस्मात् कालविधिरस्तु सोमयागात् प्राचीने काले पुरोडाशाभ्यामिव याजयेच्च तु साम्नाय्येन सोऽयं चतुर्थः पक्षः। एषोऽप्ययुक्तः असोमयाजिशब्दस्य काले लक्षणापत्तिप्रसङ्गात् तस्मादैन्द्राग्नस्यैकस्य पौर्णमास्यामप्राप्तत्वेन विधिरस्तु आग्नेयस्तु पौर्णमास्याममावास्यायाञ्च नित्यप्राप्तत्वादनूद्यत इति पञ्चमः पक्षः। सोऽप्ययुक्तः सकृत् प्रयुक्तस्यैकस्य लिङ्प्रत्ययस्य विधित्वमनुवादत्वञ्चेत् वैषम्यप्रसङ्गात् एवकारश्चात्र व्यर्थः। तस्मादगत्या लाक्षणिककल्पयित्वापि कालस्य विधिरस्तु। तथाहि असोमयाजिनः साम्नाय्ये तावत् प्रतिप्रसवः श्रूयते। तदिह सन्नयेदिति यदा सोमयागो नास्ति तदापि सन्नयेदेवेत्यर्थः। तथा सति सोमयाज्यसोमयाजिनोरुभयोरप्यमावास्यायां साम्नाय्यमैन्द्राग्नपुरोडाशेन सह भिन्नविषयत्वाभावाद् विकल्पित. पुरोडाशः सोमयागात् प्रागेव पश्चात्तु साम्नाय्यमेवेत्यभिप्रेत्य कालो विधीयते। तथा सत्यतच्छास्त्रं सार्थकं भवत्विति षष्ठः पक्षः। सोऽप्ययुक्तः साम्नाय्येन तु सोमयाजिनमित्यस्य विधिश्रावकत्वे सत्येकवाक्यत्वलाभात् सार्थकत्वमेवं सति भविष्यति तस्मादनुवादोऽयमिति सप्तमः पक्षो राद्धान्तः।

षोडशाधिकरणमारचयति।

उपांशुयाजे यत् किञ्चिद् द्रव्यमाज्यमुताग्रिमः।
विशेषानुक्तितो नैवं ध्रौवाज्यस्य विधानतः॥ ३२॥

उपांशुयाजमन्तरा यजतीत्यत्र द्रव्यविशेषस्यानुक्तत्वादैच्छिकं द्रव्यमिति चेत्, नैवम्। आज्यस्य श्रुतत्वात् तास्

श्रुतावग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्निति हि श्रुतं न चैवमप्यनियतं किञ्चिद्दाज्यमिति मन्तव्यम्। ध्रौवस्य विहितत्वात् सर्वस्मै वा एतद्यज्ञाय गृह्यते यत् ध्रुवायामाज्यमिति विहितं विध्यश्रवणेऽपि ध्रौवाज्यस्य सप्रयोजनत्वाच्च विपरिणामः कर्त्तव्यः।

षोडशाधिकरणमारचयति।

तत्र यः कोऽपि देवः स्यात्तान्त्रिको वाऽग्रिमो भवेत्।
अविशेषात् प्रकरणात्तान्त्रिकोऽत्र नियम्यते ॥ १३ ॥

तत्रोपांशुयाजेऽपि काचिद्देवता स्यात् विष्णुरुपांशु यष्टव्य इत्यादेरर्थवादत्वेनाविधायकत्वात् अन्यस्य च देवताविधेरदर्शनात् यागेन देवतामात्रस्यैव कल्पनाच्च। नैवम् उपांशुयाजस्य दर्शपूर्णमासप्रकरणपठितत्वाद्दर्शपूर्णमासतन्त्रमध्यपठित एव कश्चिद्देवः प्रत्यासत्त्योपांशुयाजे नियम्यते।

सप्तदशाधिकरणमारचयति।

कोऽपि देवस्तान्त्रिकः किं नियतो वा तत्रापि किम्।
प्रजापतिरुताग्निः स्यादग्नीषोमावुताथवा ॥ १४ ॥
विष्णुर्वेन्द्राग्नी उतस्य विकल्प्यं देवतात्रयम्।
कोऽप्यत्रानियमान्नैवमुपांशुत्वादिलक्षणात् ॥ १५ ॥
प्रजापतिरुपांशुत्वान्न मूर्ध्निश्चाऽप्ययोगतः।
अग्निर्मुख्यत्वतो मैवं तद्याज्यादेरपाठतः ॥ १६ ॥
अग्नीषोमौ तदुक्तौ नो तत्र कालविधानतः।
विष्णुर्याज्यादितस्तत्र प्राजापत्योऽपि बाधनात् ॥ १७ ॥
याज्याद्वैविध्यतः प्राप्ता विकल्प्यन्तेऽत्र देवताः।
विधिशेषार्थवादेऽपि तत्र प्राप्तमनूद्यते ॥ १८ ॥

स यागो विहितः। पुरोडाशौ च पौर्णमास्यामाग्नेयाग्नीषोमीयौ अमावास्यायामाग्नेयैन्द्राग्नौ ततो द्विः पुरोडाशसन्निधेः समानत्वाद्दर्शपूर्णिमावित्युभयमुपांशुयाजस्य काल इत्याद्यः पक्षः। दर्शं प्रकृत्य याज्याकाण्डे आग्नेययाज्याया अधस्तात् वैष्णवयाज्यायाः पाठात् प्रकरणस्य सन्निधितः प्रबलत्वाद्दर्श एव काल इति मध्यमः पक्षः। तावन्न तावग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्निति पौर्णमास्यास्तत् कालत्वेन विधानाद्वाचनिकस्य विधेः प्रबलत्वात् पौर्णमास्येव कालस्तथा च वैष्णवयाज्या प्रकरणादुत्कृष्यताम्।

एकोनविंशाधिकरणमारचयति।

पुरोडाशैक्ययुक्तायां पौर्णमास्यामयं न हि।

स्याद्वानास्त्यन्तरेत्युक्तो लक्ष्ये कालेऽस्ति शब्दवत्॥ ४१ ॥

सोमात् प्रागग्नीषोमीयपुरोडाशरहिता केवलाग्नेयपुरोडाशयुक्ता पौर्णमासी भवति न सोमेनेष्ट्वाग्नीषोमीयो भवतीति वाक्येनाग्नीषोमीययोः सोमयागोत्तरकालत्वावगमात्। तस्मादुपांशुयाजो नास्ति। कुतः उपांशुयाजमन्तरा यजतीति पुरोडाशद्वयान्तरालवर्तित्वस्य गुणत्वेन विधानादिति प्राप्ते ब्रूमः। किं पुरोडाशावन्तरालकालस्य विशेषणभूतौ उतोपलक्षणभूतौ नाद्यः। अन्तरालकालवत् तद्विशेषणयोः पुरोडाशयोरुपांशुयाजगुणत्वप्रसङ्गात्। न चैतद्युक्तम्। उपांशुयाजवत्तयोरपि स्वातन्त्र्येणैव स्वफलान्वयात् द्वितीये तु शब्दन्यायेनोपलक्षकस्याग्नीषोमीयपुरोडाशस्याभावेऽप्युपलक्ष्ये काले यागोऽस्ति यथा शब्द-

अग्निवेलायां राजसेवार्थं प्रतिदिनमायन्नत्यमित्युक्ते कस्मिंश्चिद्दिने तं मङ्गं श्रमतः पुरुषस्याभावे सोपलक्षकस्य अग्नेरभावेऽप्युपलक्षिते तस्मिन् काले सेवकः समागच्छति तथात्रापि द्रष्टव्यं यदि तत्र कालोपलक्षकमन्यदेव व्यापारः स्वर्थगत्यादिकं सम्भाव्येत तर्ह्यत्रापि सम्भक-त्विवाग्नेयपुरोडाश उपलक्षकः तस्मादेक पुरोडाशायामपि पौर्णमास्यामनुपांशुयाजः ।

इति माधवीये जैमिनीयन्यायमालाविस्तरे दशमा-

ध्यायस्याष्टमः पादः अध्यायश्च समाप्तः ।

---

## अथ एकादशोऽध्यायः ।

बाधाबाधविचारेण प्रयाज्ये निश्चिते सति ।

प्रयोगस्य विचारोऽथ तन्त्ररूपो विचार्यते ॥

अनेन दशमैकादशयोरध्याययोः पूर्वोत्तरभाव उप-पादितः ।

एकादशाध्यायस्याद्ये पादे प्रथमाधिकरणमारचयति ।

अङ्गयागानां फलं स्वर्गः प्रत्येकं तत्त्वनाथवा ।

आद्यः पृथक्फलार्थित्वान्न सङ्घस्य फलोक्तितः ॥ १ ॥

दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति श्रुतं फलमा-ग्नेयादिभिः षड्भिर्यागैः प्रत्येकमभिसम्बध्यते । कुतः । एकगुणत्वतया परस्परनिरपेक्षाणां पृथगेव फलाकाङ्क्षित-त्वादिति चेत् । तत्समनूकवाक्येन दर्शपूर्णमासशब्देन

अवहन्य सङ्गस्यैव फलमस्यन्यात् । तस्मात् स्वर्गस्तेषां फलं तन्त्रेण । तन्यते विस्तार्य्यते बहूनामुपकारो येन सकृत् प्रवर्त्तितेन तदिदं तन्त्रम् । तद्यथा बहूनां ब्राह्मणानां मध्ये कृतः प्रदीपस्तेषामुपकरोति । न त्वनुलेपनभोजना- दिवत् प्रतिपुरुषमावृत्तिलक्षणमावापमपेक्षते । एवं स्वर्ग- स्तन्त्रेण फलम् ।

द्वितीयाधिकरणमारचयति ।

कार्य्यभेदो न वाङ्गानां सौर्य्यवितादिवदिष्टदा ।

करणैक्यात्तदैकत्वं द्वारभेदो बहुत्वतः ॥ २ ॥

यानि प्रयाजाज्यभागाद्यङ्गानि तेषां सर्वेषां करणे प्रत्युपकारभेदः स्यात् । कुतः कार्य्यभेददर्शनात् । यथा सौर्य्यं चरुं निर्वपेद् ब्रह्मवर्चसकामस्त्वयया यजेत पशुकाम इत्यादिषु परस्परनैरपेक्ष्येण विहितानां सौर्य्यादीनां ब्रह्म- वर्चसादिकार्य्यभेदस्तथा प्रयाजाज्यभागादीनां परस्पर- निरपेक्षाणां करणे प्रकारो भिद्यते । न चात्र पूर्वन्यायेन सर्वोपकारगतत्वं किञ्चिदस्तीति प्राप्ते ब्रूमः । करणा- काङ्क्षानुसारेण ह्यङ्गोपकारः कल्प्यः । करणञ्च स्वयमेकं सत् स्वगतत्वदर्शनलक्षणमेकमेवोपकारमङ्गजातमपेक्षते । अङ्गबहुत्वं तु द्वारकार्य्यभेदेनोपपद्यते । यथा तण्डुलकाष्ठ- स्थाल्यादीनां कारकाणां द्वारभेदे एवौदननिष्पादनलक्षणं प्रधानकार्य्यमेकमेव तद्वत् द्वारभेदेऽप्युपकार एक एव ।

तृतीयाधिकरणमारचयति ।

उपकारः स एकेन कोऽथवा निखिलैर्वत ।

आकाङ्क्षापूरणादाद्यः फलाधिक्याद मध्यमः ॥ ३ ॥

कपोतवद्यौगपद्येत्यागहेतोरभावतः ।

सम्भूयकरणाकाङ्क्षां पूरयत्युपकारतः ॥ ४ ॥

योऽयं करणं प्रत्येक उपकारः पूर्वत्र निर्णीतः । स एकेनाङ्गेन सिध्यति । करणस्याङ्गाकाङ्क्षायास्तावता पूरितत्वात् यथा ग्रामगतैः सर्वैः कर्त्तव्यं करदानमेकराजकुलसमागतः करोति । कराकाङ्क्षा च तावता निवर्त्तते । तथात्रापि द्रष्टव्यम् । यद्येतदङ्गमनुष्ठेयमिति विशेषनियामकं न स्यात् तर्हि विकल्पोऽस्त्वित्याद्यः पक्षः । यथा यावन्ति काम्यकर्माणि सौर्यचर्वादीन्यनुतिष्ठति तावत् फलमाप्नोति तथाङ्गभूयस्त्वेन फलभूयस्त्वसम्भवादिच्छया कानिचिदङ्गान्यनुष्ठेयानि । तेषामितरथवानेककरणोपकरणे जायत इति मध्यमः पक्षः । यथा जिघत्सया खले बीजभक्षणाय कपोतपंक्तिर्युगपत् पतति तथा करणाकाङ्क्षां पूरयितुं समर्थानि सर्वाण्यङ्गान्येकप्रयोगवचनपरिगृहीततया युगपत् प्राप्तानि तेषां केषाञ्चित् परित्यागे हेतुर्नास्ति । तस्मात् सर्वाण्यङ्गानि सम्भूयैकस्योपकारजनने करणाकाङ्क्षां पूरयन्तीति राद्धान्तः । वार्त्तिककारस्तु पूर्वाधिकरणस्य वैयर्थ्यं मन्यमानोऽस्मिन्नेवाधिकारेणान्तर्भावयामास ।

चतुर्थाधिकरणमारचयति ।

काम्यकर्मप्रयोगः किं सकृदेवा सकृच्च वा ।

फलसिद्ध्यादिमोऽन्त्यो भूयः स्वेच्छानुसारतः ॥ ५ ॥

चित्रादिकाम्यं कर्म सकृदेव प्रयोक्तव्यम् । तावतैव पश्वादिफलस्य सिद्धिः । यथा प्रयाजाद्यङ्गं सकृदेवानु-

क्रीयते। तद्वदिति प्राप्ते ब्रूमः। विषमो दृष्टान्तः। करणस्याङ्गेषु सकृदेवाकाङ्क्षा। इह तु पुरुषः स्वर्गपश्वादीन् भूयोभूयः कामयते। अतस्तदनुसारेण प्रयोगावृत्तिः।

पञ्चमाधिकरणमारचयति।

अवघातः सकृन्नो वाऽसकृत् स्याद्विधिसिद्धितः।
दृष्टा तण्डुलनिष्पत्तिस्तदन्तोऽभ्यसतामयम् ॥ ६ ॥

व्रीहीनवहन्तीत्यत्र सकृन्मुसलपातमात्रेण विधिप्रयुक्तस्यापूर्वस्य सिद्धेर्नास्त्यवघातावृत्तिरिति चेत् न। तण्डुलनिष्पत्तेर्दृष्टप्रयोजनत्वेन तत्पर्यन्तस्याभ्यासस्याश्रुतस्यापि कल्पनीयत्वात्। एवं तण्डुलपेषणादावपि द्रष्टव्यम्।

षष्ठाधिकरणमारचयति।

सर्वौषधावघातः किमावर्त्त्यः सकृदेव वा।
आवर्त्त्यः पूर्ववन्मैवं दृष्टार्थस्यात्र वर्जनात् ॥ ७ ॥

अग्निप्रकरणे श्रूयते। औडुम्बरमुलूखलं सर्वौषधस्य पूरयित्वा वहन्ति। यथैतदुपदधातीति। अत्रादृष्टमात्रस्य प्रयोजनत्वात् सकृदेवावघातः।

सप्तमाधिकरणमारचयति।

अङ्गेऽभ्यासो न वा भूम्नाऽभ्यासो नाङ्गे पृथक् फलम्।
अन्यावृत्त्यैव भूमातः प्रधानेऽङ्गं सकृद्भवेत् ॥ ८ ॥

एकस्मिन्यागे प्रयाजाद्यङ्गं फलभूमार्थिनाभ्यस्यम्। कारीर्यादेः काम्यस्य कर्मणोऽभ्यासेन फलभूयस्त्वदर्शनादिति चेत् न। अङ्गोपकृतप्रधानस्य यत् फलं ततोऽतिरिक्तस्य कस्यचिदभावात्। यदि फलभूमानमपेक्षेत्तदा साङ्ग

प्रधानमावर्त्तनीयम्। न त्वङ्गमात्रावृत्त्या तत् सिध्यति ननु उपकारभूयस्त्वमङ्गावृत्तिलक्षणं फलभूयस्त्वे पर्यवस्यति। यथा सत्रादिषु कर्मणामावृत्तिकृतो भूयानुपकारः फलं वर्धयति तद्वदिति चेत्। न। तत्र तु दृष्टत्वादिह त्वदृष्ट उपकारः शास्त्रादेव बोध्यः। न च शास्त्रमुपकारभूयस्त्वायाङ्गावृत्तिं क्वचित् ब्रूते। तस्मादेकस्मिन् प्रयोगे सकृदेव प्रयाजाद्यङ्गानुष्ठानम्।

अष्टमाधिकरणमारचयति।

कपिञ्जलेषु त्रित्वाद्या ऐच्छिकास्त्रित्वमेव वा।
आद्यो बहुत्वसाम्येन त्रित्वेनैव कृतत्वतः॥ ८॥

अश्वमेधे वसन्ताय कपिञ्जलानालभत इति त्रित्वचतुष्ट्वादिसंख्यानां सर्वासां बहुत्वसाम्यादिच्छया काचित् बहुत्वसंख्या स्वीकार्येति चेत्। न त्रित्वेनैव शास्त्रार्थस्य कृतत्वात्। यो हि चतुष्ट्वादिसंख्यामुपादत्ते तेन न तदन्तर्भूतं त्रित्वं वर्जयितुं शक्यते। अतोऽवश्यम्भावित्वेन प्रथमभावित्वेन लाघवेन च त्रित्वोपादाने शास्त्रार्थसिद्धौ ततः शक्यम्। त्रित्वोपादानेन त्वनन्तर्भूतं चतुष्ट्वादिकं वर्जयितुं न शक्यते। अधिकपशुहिंसायां प्रत्यवायात्। तस्मात् त्रित्वमेवोपादेयम्।

नवमाधिकरणमारचयति।

उत्तरास्तिस्र एव स्युर्यावत्स्वं वात्र पूर्ववत्।
तिस्र एव हविःकात् स्यात्पूर्वयोर्विधितोऽन्तिमः॥ ९॥

सान्नाय्यदोहं प्रकृत्य श्रूयते। वाग्यतस्तिस्रो दोहयित्वा विसृष्टवागन्वारभ्य तूष्णीमुत्तरा दोहयतीति।

यत्र तिसृभ्य उत्तरा गावो यजमानस्य यावत्यः सन्ति। तासां मध्ये कपिञ्जलन्यायेनोत्तरास्तिस्र एव गावो दोहनीया इति प्राप्ते ब्रूमः। नास्यैतां रात्रिं पयसाग्निहोत्रं जुहुयात् कुमाराश्च न पयो लभेरन्निति विद्यमानपयसो हविष्ट्वं विधीयते। न चात्र कुमाराणां पयसो निषेधः। तथा सति दृष्टार्थत्वपरित्यागेनादृष्टार्थत्वं कल्प्येत। कुमाराश्च नेत्येतस्य शब्दस्यापि शब्दार्थवाची प्रयुज्यमानस्तदा व्यर्थः स्यात्। किञ्च बहुदुग्धीन्द्राय देवेभ्यो हविरित्यस्मिन्नपि मन्त्रे हविषां बाहुल्यं प्रतीयते। तेन प्राप्तं सर्वोत्तरागोदोहनमनूद्यापूर्वमन्वारम्भणमात्रं विधीयते। तस्मादिहैव कपिञ्जलवैषम्याद्धविर्बाहुल्यार्थं सर्वा उत्तरा दोहनीयाः।

अथ दशमाधिकरणमारचयति।

प्रत्यङ्गकार्य्याण्यङ्गानि तन्त्रे प्रोताङ्गिनो यतः।
एकैकस्योपकार्य्यत्वं तस्मात् प्रत्यङ्गमनुष्ठितिः॥ १०॥
विधानवदनुष्ठानं सकृदेवोपकारकम्।
तद्देशकालकर्तॄणामेकत्वान्नर्त्तकादिवत्॥ ११॥

पौर्णमास्यां त्रीण्याग्नेयादीन्यङ्गीनि प्रयाजाज्यभागै-रुपकार्य्याणि तेष्वेकैकस्याङ्गिन उपकारापेक्षित्वात् प्रतिप्रधानमङ्गानि पृथगनुष्ठेयानीति प्राप्ते ब्रूमः। यथा समिधो यजतीत्यादिविधानं सकृदेव प्रवृत्तं नत्वाग्नेयादित्रयोद्देशेन पृथक् प्रवर्त्तते। तथानुष्ठानमपि सकृदेव प्रवर्त्तते। प्रवृत्तं सत् त्रयाणामुपकाराकाङ्क्षां पूरयति। यथा बहूनां पुरतो नृत्यन्नर्त्तकः सर्वेषां सुखं युगपन्निर्वर्त्त-

यति तद्वत् तस्मादाग्नेयादिषु देशकालकर्तृणामैकत्वा-
दङ्गानां तन्त्रेणानुष्ठानम्।

अथ एकादशाधिकरणमारचयति।

कृष्णग्रीवद्वये तन्त्रं पृथग्वा दैवतैक्यतः।

तन्त्रं सौम्यव्यवायेन कालभेदात् पृथग् भवेत् ॥ १२ ॥

काम्यपशुकाण्डे श्रूयते। आग्नेयं कृष्णग्रीवमालभेत
सौम्यं बभ्रुमाग्नेयं कृष्णग्रीवं पुरोधायां स्पर्धमान इति
अयमर्थः। ममैव यो रौहित्यमस्तु मा व्यस्येत्येवं स्पर्धो-
पेतो यथोक्तवर्णोपेतं पशुत्रयमालभेतेति। तत्राद्यन्तयोः
कृष्णग्रीवयोः पश्वोर्दैवतैक्यात् तन्त्रेणानुष्ठानम्। इति चेत्।
सौम्यपशुना व्यवधाने सति कालैक्यासम्भवेन तन्त्रासम्भ-
वात्तस्मादावापः।

इति माधवीये जैमिनीयन्यायमालाविस्तरे एका-
दशाध्यायस्य प्रथमः पादः समाप्तः।

---

द्वितीयपादस्य प्रथमाधिकरणमारचयति।

आग्नेयादिप्रधानस्य देशे काले च कर्त्तरि।

भेदः स्यादथवा तन्त्रमङ्गत्वाद् द्व्यदेववत् ॥ १ ॥

उत्पत्तिविधिभेदत्वाद् भेदः स्यादेकशब्दतः।

विधेः प्रयोगभेदत्वादभेदेन तु तन्त्रता।

दर्शपूर्णमासयोर्देशकालकर्त्तारो विहिताः।

इमे दर्शपूर्णमासाभ्यां यजेत पौर्णमास्यां पौर्णमास्या

जेतामावास्यायाममावास्यया यजेत। दर्शपूर्णमासयोश्चत्वार ऋत्विज इति। एते देशकालकर्त्तारोऽङ्गत्वात् द्रव्यदेवतावत् उत्पत्तिविधिशेषाः सन्तः प्रधानेष्वाग्नेयादिषु प्रतिप्रधानं भिद्यन्त इति प्राप्ते ब्रूमः। दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्येकेन शब्देनाग्नेयादीनां पृथगुत्पन्नानामपि परस्परसहितानामेव फलसाधनत्वेन विधानादेकः प्रयोगो गम्यते। तमेकप्रयोगापादकमेकं दर्शपूर्णमासशब्दमुपजीव्य देशादिविधानाद्देशादयोऽपि प्रयोगशेषा एव नतूत्पत्तिशेषाः। तस्मादेकस्मिन् प्रयोगे देशादीनां तन्त्रेण सम्बन्धः।

अथ द्वितीयाधिकरणमारचयति।

अङ्गे ये केऽपि देशाद्याः किं वाते दैवतादिवत्।

अनन्वयात् केऽपि नैवं प्रयोगेण परिग्रहात् ॥ ७ ॥

प्रयाजाद्यङ्गेषु ये केऽपि देशकालकर्त्तारः। प्रतीति इच्छया कर्त्तव्याः। कुतः। अनन्वयात्। यथा प्रधानान्वितयोर्द्रव्यदेवतयोरङ्गेष्वन्वयो नास्ति तथा देशादीनामपीति प्राप्ते ब्रूमः। प्रयोगशेषत्वं देशादीनां न त्वाग्नेयादिविधिशेषत्वमित्युक्तम्। प्रयोगेण च प्रधानवदङ्गान्यपि गृह्यन्ते। तस्माद्य एव देशाद्यः प्रधानानां त एवाङ्गानामपि।

अथ तृतीयाधिकरणमारचयति।

अङ्गभेदे तन्त्रमङ्गं न वा कर्मैक्यतोऽग्रिमः।

न मुख्यकालभेदोक्त्या प्रयोगस्य पृथक्त्वतः ॥ ८ ॥

इष्टौ विद्यमानानां षसां यागानां त्रयत्रयात्मकौ दर्शश्च पूर्णमासश्च । चातुर्मास्येषु चत्वारः सङ्घाः वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयाः । एतादृशे विषये सङ्घानामनेकत्वे कर्मैक्यात् प्रयोगैक्ये सत्यङ्गानां तन्त्रेणानुष्ठानं युक्तम् । न च पौर्णमास्यमावास्ययोः कालभेदेनाङ्गभेदः शङ्क्यः । पशुवद्भेदोपपत्तेः । वपया प्रातःसवने प्रचरन्ति पुरोडाशेन माध्यन्दिनेऽङ्गैस्तृतीयसवने इति वपापुरोडाशहृदयाद्यङ्गप्रचाराणां कालभेदेऽपि पश्वङ्गानां प्रयाजानां यथा नास्त्यावृत्तिस्तद्वत्रापीति प्राप्ते ब्रूमः । नानाङ्गतन्त्रं युक्तम् । कुतः । दर्शपूर्णमासकर्मण एकफलसाधनत्वे तत्स्वरूपत एकत्वेऽपि दर्शप्रयोगात् पूर्णमासप्रयोगस्य पृथक्त्वात् । तच्च पृथक्त्वं वाचनिकात् कालभेदादवगम्यते । पशुदृष्टान्तस्तु विषमः । न हि मुख्यस्य पशुयागस्य भेदोऽभिहितोऽस्ति । वपादीनान्तु प्रयाजाद्यपेक्षया मुख्यत्वेऽप्यस्ति महद्वैषम्यम् । प्रयाजादिभ्यो वपादयो मुख्यास्तेभ्यो वपाद्यवयवेभ्योऽवयवी पशुर्मुख्यः । अत्रापि प्रयाजादिभ्य आग्नेयादयस्त्रयो मुख्यास्तेभ्योऽपि तेषां सङ्घो दर्शो मुख्यस्तस्य च दर्शस्य कालभेदो विधीयते । अमावास्यायाममावास्यया यजेतेति । तत्र दर्शयागस्यान्यस्य पशुयागस्य कालभेदो विधीयते चेत् । भवेत् तदा साम्यं नत्वेवं विधीयते । किन्तु वपादिप्रचारस्यैव कालभेदो विधीयते । न हि प्रचारस्याङ्गभूतस्य मुख्ययागत्वमस्ति येन प्रयोगभेदोऽपि शङ्क्येत । तस्मात् पशुवैषम्येण मुख्यस्यैव दर्शस्य पूर्णमासयागस्य च कालभेदोऽस्य प्रयोगभेदे सति

प्रयोगशेषाणां प्रयाजादीनामावृत्तिरिति। एवं वैश्वदेवादिषु द्रष्टव्यम्।

चतुर्थाधिकरणमारचयति।

अङ्गान्यध्वरकल्पायां प्रातःकालादिवृत्तिषु।
त्रिषु सकृत् तन्त्रेण स्युर्भेदेनाथवा ग्रमः॥ ५॥
उषस्यग्नेर्निर्वापा तद्वाराङ्गापकर्षणात्।
प्रातर्निर्वापवैषम्यान् मुख्यकालाय भिन्नता॥ ६॥

काम्येष्टिष्वध्वरकल्पानाम काचिदिष्टिः। तत्र प्रातःकाले त्रयाणां यागानामाग्ना वैष्णवसारस्वत बार्हस्पत्यानां सकृत् पठितः। मध्याह्नपराह्णयोरपि तथैव पठितः। अष्टाकपालैकादशकपालद्वादशकपालैराग्ना वैष्णवी विशेषित इतरत् समानम्। तत्र त्रिषु सकृत्सु प्रयाजाद्यङ्गानां तन्त्रम्। कुतः। पुरा वाचः प्रवदितो निर्वपेदिति सकृत्स्य यागस्याग्नेर्निर्वापस्य रात्रौ सुप्तजनानां प्रबोधपूर्वकव्यापारात् प्राचीन उषःकालेऽपकर्षे सति निर्वापद्वाराङ्गानामपकर्षस्य प्रतिभानादिति प्राप्ते ब्रूमः। आग्ना वैष्णवं प्रातरष्टाकपालं निर्वपेदिति सामान्येन विहितो यः प्रातःकालीनो निर्वापः स एव सन्ति हि तत्वात् पुरा वाचः इति विशिष्यते। तस्मादुत्तरसकृन्निर्वापोऽपि मुख्यत्वलाभाय तत्तत्कालयोः कर्त्तव्यस्तद्वत् प्रयाजादीनामपि भेदेनानुष्ठानम्।

पञ्चमाधिकरणमारचयति।

प्राजापत्यवपानां किं भेदस्तन्त्रमुतोऽग्रिमः।
पशुभेदाद्देवपाककालैक्यात्तन्त्रितोऽन्तिमः॥ ७॥

वाजपेये सप्तदशसु प्रजापतिदेवताकेषु पशुषु तद्भेदानुसारेण वसा होमोभिद्यत इति चेत्। न। प्रजापतिरेक एव सप्तदशानां पशूनां देवता। तथा पाकोऽपि सहैव क्रियते प्रदानस्यापि पाक उपलक्षणं प्रदानेऽपि साहित्यमस्ति। कालश्चैको याज्यार्द्धर्चान्तस्य तत्कालत्वेन चोदकातिदेशाच्छ्रयते च सह होमस्तस्मात् तन्त्रम्।

षष्ठाधिकरणमारचयति।

ऐकादशिनगो तन्त्रं वसा होमेऽथ भिन्नता।

तन्त्रं शक्यत्वतो भेदः प्रधानार्थर्चभेदतः॥ ८॥

ऐकादशिनेष्वाग्नेय सारस्वतसौम्यादिपशुषु वसा होमस्य सह कर्त्तुं शक्यत्वात् तन्त्रमिति प्राप्ते ब्रूमः। देवताभेदेन प्रधानभेदात्। तत्र याज्यार्द्धर्चान्तकालानां भिन्नत्वेनानुष्ठाने यौगपद्या सम्भवाद्भेदः।

सप्तमाधिकरणमारचयति।

यूपैकादशिनो यूपाहुतेर्भेदोऽथ तन्त्रता।

समीपभेदादाद्योऽन्त्यः सामीप्यं दृष्टिगं यतः॥ ९॥

यूपैकादशिन्यां चोदकप्राप्ता यूपाहुतिः प्रतियूपं भिद्यते। कुतः। यूपस्यान्तिकेऽग्निं मथित्वा यूपाहुतिं जुहोतीति तद्विधानात्। सामीप्यानाञ्च भेदादिति प्राप्ते ब्रूमः। न तावदत्यन्तसामीप्यं सम्भवति यूपदाहप्रसङ्गात्। अतो यावता व्यवधानेन यूपा दृष्टिगोचरा भवन्ति तावतो देशस्य समीपत्वमभ्युपेयम्। देशैक्यसम्भवादाहुतेस्तत्र तन्त्रता।

अष्टमाधिकरणमारचयति।

किमन्नावभृथे मुख्यमात्रं साङ्गमुताग्रिमः।

मुख्यत्वं नान्वयान्नैवं प्रयोगेण सहन्वयात्॥ ८॥

इदं श्रूयते। अप्स्वावभृथेन चरन्तीति। तत्र वारुण एककपालोऽवभृथशब्दवाच्यत्वान्मुख्यं कर्म तेन मुख्येनापामन्वयः। श्रूयते। अतो द्रव्यदेवतावदपां मुख्यमन्त्राङ्गत्वात् प्रधानमात्रस्यैवाप्स्वनुष्ठानम्। आघाराज्यभागादीन्याहवनीयेऽनुष्ठेयानीति प्राप्ते ब्रूमः। स्यादप्येवम्। यद्यवभृथ इत्येतावतैव श्रूयेत। इह त्वप्स्वावभृथेन चरन्तीति श्रवणादवभृथप्रयोगेणापामन्वयात् साङ्गं प्रधानमप्सु कर्त्तव्यम्।

नवमाधिकरणमारचयति।

मारुत्याः सार्धमष्टाभिस्तन्त्रभिदाऽथवा।

प्रयोगैकत्वतस्तन्त्रभेदो देशस्य भेदतः॥ ९॥

वरुणप्रघासेष्वाग्नेयादीनि नव हवींषि विहितानि तेषु मारुतीमामिक्षां प्रतिप्रस्थाता दक्षिणे विहारेऽनुतिष्ठति। इतराणि त्वष्टावध्वर्युरुत्तरे विहारेऽनुतिष्ठति। तेषामष्टानां प्रयोगैक्यात् तन्त्रेणाङ्गान्युभयवादिसम्मतानि। तथा तान्येव मारुत्या अपीत्यक्रासि तन्त्रं प्राप्तम्। कुतः। वरुणप्रघासान्तःपातित्वेन प्रयोगैक्यात्। नन्वत्र विहारभेद आम्नातः। पृथगग्नी प्रणयतः पृथग्वेदी कुरुत इति सोऽयं पृथगनुष्ठानाभावे व्यर्थः स्यात्। नैवम्। हविरासादनमात्रे तद्दोपयोगादष्टावध्वर्युरुत्तरे विहारे हवींष्यासादयतो मारुतमेव प्रतिप्रस्थाता दक्षिणस्मिन्निति तद्व्यव-

मात्। तस्मात् तन्त्रमिति प्राप्ते ब्रूमः। देशभेदात् प्रयोग-
भेदे सर्वाङ्गानुष्ठानमपि भिद्यते। न च तद्भेदस्य हविरा-
सादनमात्रार्थता युक्ता। तदासादनस्य दृष्टहोमार्थता-
परित्यागेनादृष्टार्थत्वकल्पना प्रसङ्गात्। न च प्रयोगभेदे-
नैवासादनभेदस्यापि सिद्धौ वचनमनर्थकं स्यादिति
वाच्यम्। अव्यवस्थया प्रयोगप्राप्तौ तद्व्यवस्थार्थत्वात्।
तस्माद्भेदेनाङ्गानुष्ठानम्।

दशमाधिकरणमारचयति।

कर्तृभेदो न वा तत्र भेदः स्यादङ्गभेदवत्।
पञ्चर्त्विग्वचनान्नैवं द्वयोस्तत्र व्यवस्थितिः॥ १०॥

तत्र पूर्वोक्ते विषये प्रयोगभेदादाधाराद्यङ्गभेद इव होत्रध्वर्य्वादीनां कर्तृणामपि भेद इति चेत् नैवम्। वाचनिक पञ्चसंख्याविरोधात्। अध्वर्युप्रतिप्रस्थातृहोतृब्रह्माग्नीध्राः पञ्चर्त्विजश्चातुर्मास्येषु विहिताः। चातुर्मास्यानां यज्ञक्रतूनां पञ्चर्त्विज इति। यद्याग्नेयाद्यष्टके मारुत्यां च होत्रादिभेदः स्यात् तदा पञ्चसंख्या बाध्येत। ननु पञ्चसंख्या सिध्यर्थमाग्नेयाद्यष्टके प्रतिप्रस्थाता प्राप्नुयात्। मारुत्यां चाध्वर्युः प्राप्त इति चेत् सत्यम्। प्राप्तावेव तौ उभावुभयत्र व्यवस्था तु वचनाद्भविष्यति। तत्तु वचनं पूर्वोदाहृतम्। तस्मान्नास्ति कर्तृभेदः।

एकादशाधिकरणमारचयति।

तत्रैव पत्नीसंयाजादौ तन्त्रं भिन्नताऽथवा।
तन्त्रमान्त्यैकतो नैवं कर्तृभेदानिवारणात्॥ १२॥

तत्रैवाग्नेयाद्यष्टके मारुत्यां च गार्हपत्ये होतव्येषु पत्नी-

संख्यानादिषु तन्त्रं युक्तम्। कुतः। गार्हपत्यस्यैकत्वात् न ह्याहवनीयवदस्मिन् विहारे गार्हपत्यः पृथगस्ति। तस्मात् तन्त्रमिति प्राप्ते ब्रूमः। न तावदत्र पूर्वोक्तः कर्तृभेदो निवारयितुं शक्यते। तथा सत्यध्वर्युणा कृताः पत्नीसंयाजाः प्रतिप्रस्थातृकर्तृकार्यं सावन्तीं कथमुपकुर्युः। तस्मात् अध्वर्युः प्रतिप्रस्थाता च गार्हपत्ये पृथक्पत्नीसंयाजान् जुहुयाताम्।

द्वादशाधिकरणमारचयति।

पर्यग्निकरणे त्याग आलम्भो ब्रह्मसामनि।

कर्मैक्यनिषेधस्य कर्मान्तरविधिर्भवेत्॥ १३॥

किं चोत्कर्षो विशिष्टस्य त्यागस्योक्तिवदादिमः।

अदृष्टवाक्यभेदादिदोषाभावेन चान्तिमः॥ १४॥

वाजपेये सप्तदशप्राजापत्यान् पशून् सन्निमुत इति प्रकृत्य श्रूयते। तान् पर्यग्निकृतानुत्सृजतीति ब्रह्मसाम्ना लभत इति। सप्तदशसु पशुषु पर्यग्निकरणेऽनुष्ठिते तदुत्तरकालीनमालम्भनं उत्सर्गशब्देन निषिध्यते। अग्नीषोमीये पर्यग्निकृतानारण्यानुत्सृजतीत्यत्र कर्मैक्यनिषेधस्य प्रतिपन्नत्वात्तत्रापि तथात्वेन सप्तदश पशवः पर्यग्निकरणान्ताः समाप्ताः। आलम्भनं तु ब्रह्मसामकाले कर्मान्तरमिति प्राप्ते ब्रूमः। कर्मान्तरविधौ सप्तदशपश्वालम्भादृष्टान्तरं किञ्चिददृष्टं कल्पितं। वाक्यभेदश्च प्राप्नुयात्। किंच ब्रह्मसाम्ना लभत इत्यत्र द्व्यर्थवत्तयोरवगमात्कर्मान्तरविधिः सम्भवति। तस्मात् पर्यग्निकरणानन्तरमेव कार्यं च सप्तदशपशूनामालम्भनादिकमस्य ब्रह्मसामकाले उत्कर्षः

विधीयते। तथा सत्यर्थः प्राप्तः पर्य्यग्निकरणानन्तरभावि-कर्मव्यापारोपरम उत्सर्गशब्देनानूद्यते।

अथोद्दशाधिकरणमारचयति।

उक्तोत्सर्गः किमुत्कर्षस्त्यागो वाद्योऽत्र पूर्ववत्।

अन्यदृस्त्रित्वयोक्तमाह पञ्चत्वयोर्विधौ ॥ १५ ॥

वाक्यभेदाद्विशिष्टानामन्येषां कर्मणां विधिः।

तस्मादारण्यवच्छेषत्याग उत्सर्ग इष्यताम् ॥ १६ ॥

अस्त्यहीनेषु पञ्चशारदीयनामकः कश्चित् पञ्चाह-विशेषः स च पञ्चसु वर्षेष्वनुष्ठेयः। तत्र प्रथमे वर्षे विशाखानक्षत्रयुक्तायाममावास्यायां सप्तदश स्त्रीपशवः सप्तदशोक्षाणश्च विहितास्तेषु सर्वेषु पर्य्यग्निकृतेषु प्रोक्षितेषु च सत्सु स्त्रीपशूनामालम्भं पुंपशूनामुत्सर्गञ्चाम्नाय पुनर्द्वितीये तृतीये चतुर्थे च वत्सरे तथैवानुष्ठानमाम्नाय पश्चादाम्नायते। त्रींस्त्रीनेकैकस्मिन् अहनि आलभेरन् पञ्चोत्तमेऽहनीति तत्र वत्सरचतुष्टयगतासु चतसृष्वमावास्यासु योऽयं पशूनामुत्सर्गस्तत्र कर्मशेषत्यागो न भवति किं तूत्कर्षः। त्रींस्त्रीनिति वाक्येनालम्भस्याभिधानात्। यथापूर्वं प्राजापत्यानामालम्भोत्कर्षस्तथात्रापि युज्यत इति प्राप्ते ब्रूमः। त्रींस्त्रीन् एकैकस्मिन् अहनि आलभेरन्नित्यत्र पर्य्यग्निकरणानन्तरभाविनं प्राप्तमालम्भमनूद्यैकाहत्वत्रित्वगुणयोर्विधौ वाक्यं भिद्येत। तथा पञ्चोत्तमेऽहनि इत्यत्रोत्तमाहत्वपञ्चत्वयोर्विधौ वाक्यभेदस्तस्मात्तद्गुणद्वयविशिष्टानामन्येषां कर्मणां विधिरभ्युपेयस्तथा सत्यारण्यपशुन्यायेन सप्तदशोक्षाणः पर्य्यग्निकरणप्रोक्षणाभ्यां समापनीयाः।

चतुर्दशाधिकरणमारचयति ।

दशपेये चाभिषेचनीये तन्त्रं भिदाथवा ।

क्रयसाहित्यतस्तन्त्रं कालभेदेन भिन्नता ॥ १७ ॥

राजसूये दशपेयाभिषेचनीयसंज्ञकौ द्वौ सोमयागौ तयोरङ्गानुष्ठानं तन्त्रेण कार्य्यम् । कुतः क्रयसाहित्यात् सह सोमौ क्रीणाति अभिषेचनीय दशपेययोरिति श्रूयते । तथा सत्यभिषेचनीयस्य दशपेयस्य च सोमे क्रेतव्ये सति क्रयात् पूर्वभाविनां दशपेयाङ्गानामपकर्षात्तन्त्रं स्यादिति प्राप्ते ब्रूमः । भिन्नकालीनयोरभिषेचनीय दशपेययोरङ्गानां भेदो युक्तः संसृपाख्याभ्यो दशभ्यः इष्टिभ्य ऊर्ध्वमपराह्णे दशपेयस्योपक्रमस्ताभ्यः प्राचीनेऽत्यन्तव्यवहिते कालेऽभिषेचनीयः । न च क्रयसाहित्यमस्ति सद्यो दीक्षयन्ति सद्यः सोमं क्रीणन्तीति दशपेये क्रयस्य सद्यःकालत्वविधानात्- सह सोमाविति वचनेन क्रयार्थोपसंवादे साहित्यं विवक्षितम् । तस्मादुभयोरङ्गानां भेदः ।

पञ्चदशाधिकरणमारचयति ।

निष्कासावभृथे विप्रकर्षोऽथ प्रतिपादनम् ।

उतार्थकर्मपश्वदाद्योऽवभृथशब्दतः ॥ १८ ॥

कर्मान्तरं तदापि स्यात् प्रतिपत्तिः प्रयाजवत् ।

प्राधान्यायार्थकर्म स्यात्तत्रावभृथधर्मकम ॥ १८ ॥

चातुर्मास्ययागेषु वरुणप्रघासेषु वारुणीमामिक्षां प्रकृत्येदमाम्नायते । वारुण्या निष्कासेन तुषैश्चावभृथं यन्तीति । तत्रायं प्रयोगप्रकारः । वरुणप्रघासेषु नवहवींषि तेष्वष्टमं हविर्वारुण्यामिक्षा नवमं हविः काय एककपालः वारु

च्यामामिक्षायां यवपिष्टनिर्मितं मेषमवद्धाति तत आमिक्षासंयुक्तं मेषं सर्वमवदाय हुत्वा ततः एककपालेन प्रचर्य्य माण्डलिमेन वारुण्यामिक्षायाः निष्कासेन यवतुषैश्चावभृथमनुतिष्ठतीति। तत्र संशयः। किं वारुण्यामिक्षाया एकमंशं यवमयमेषसहितं पूर्वं प्रदाय पश्चादेककपालप्रचारादूर्ध्वं निष्कासरूपांशान्तरेण तुषैश्च प्रचरितव्यमित्येवं प्रचारस्य विप्रकर्षः। उत कर्मान्तरम्। तत्रापि किं प्रतिपत्तिकर्म आहोस्विदर्थकर्मेति। तत्र विप्रकर्ष इति तावत् प्राप्तं कुतः। पशौ तथा दृष्टत्वात्। प्रातःसवने वपया प्रचर्य्य तृतीयसवने हृदयाद्यङ्गैः प्रचार इति सवनीयपशौ यथा प्रचारविप्रकर्षस्तद्वदत्रापीत्याद्यः पक्षः। तथा सत्यवभृथशब्दवैयर्थ्यं स्यादतः कर्मान्तरमिति पक्षान्तरम्। तदाप्यामिक्षा हविः शेषस्य निष्कासस्यास्मिन् कर्मणि हविष्ट्वायोगात् प्रयाजशेषन्यायेन तत् प्रतिपत्तिः स्यात्। यथा प्रयाजशेषेण हवींष्यभिघारयतीत्यत्र शेषं संस्कर्त्तुमभिघारणं तथात्रापि निष्कासः संस्क्रियत इति प्राप्ते ब्रूमः। तस्मिन् पक्षे निष्कासस्य संस्कार्य्य द्रव्यत्वेन प्राधान्यान्निष्कासमिति विभक्तिव्यत्ययः स्यादतोऽवभृथस्य प्राधान्यायार्थकर्मत्वमिष्टव्यम्। यदि चातुर्मास्येषु नास्त्यवभृथस्तदा तद्धर्मातिदेशाय तन्नामनिर्देशोक्तिरन्यदीयद्रव्यदोषस्यापि कर्मान्तरे विनियोगो वाचनिकस्तस्मादर्थं कर्म।

षोडशाधिकरणमारचयति।

प्रायणीयस्य निष्कासे योनिर्वापोऽर्थकर्मवत्।

निष्कासप्रतिपत्तिर्वोदयनीयस्य संस्कृतिः॥ २०॥

उताद्य पूर्ववन्मैवं मुख्यस्य प्रकृतत्वतः ।
मध्योऽस्तु नोपयोक्ष्यसंस्कारस्य गुरुत्वतः ॥ २१ ॥

ज्योतिष्टोमे श्रूयते । प्रायणीयस्य निष्कासे उदयनीयमभिनिर्वपतीति । अत्र पूर्वन्यायेन निष्कासद्रव्यकम् उदयनीयस्य प्रकृतत्वाद् भिन्नप्रकरणाम्नातावभृथधर्मातिदेशवदुदयनीयधर्मातिदेशाभावादनार्थकर्मत्वम् । तर्हि निष्कासप्रतिपत्तिरिति मध्यमः पक्षोऽस्तु । सोऽपि न सम्भवति । उपयुक्तसंस्कारादुपयोक्ष्यमाणसंस्कारस्य गरीयस्त्वात् । तस्मादुदयनीयस्य संस्कारः ।

इति माधवीये जैमिनीयन्यायमालाविस्तरे एकादशाध्यायस्य द्वितीयः पादः समाप्तः ।

---

तृतीयपादस्य प्रथमाधिकरणमारचयति ।

वेद्यादिर्मुख्यकाले स्यात् स्वकाले वेतराङ्गवत् ।
मुख्यकालेन पूर्वद्युरित्याद्युक्तेः स्वकालतः ॥ १ ॥

वेदिर्वेद इध्मा बर्हिरित्यादेः सम्पादनरूपमङ्गानुष्ठानं प्रधानस्यैव काले कर्त्तव्यम् । प्रयाजाद्यङ्गेषु मुख्येन सह देशकालकर्त्तैक्यस्य निर्णीतत्वादिति चेत् । न । कालादिभेदस्य वाचनिकत्वात् । पूर्वद्युरमावास्यायां वेदिं करोतीत्यादिः कालभेदः । अन्तरावभृथेन चरन्तीत्यादिदेशभेदः । अन्यो सौत्रामण्याञ्च दक्षिणा भेदात् कर्तृभेदः । वड़वा दक्षिणेति सौत्रामण्यां श्रुतम् । तस्मात् वेद्यादीनां स्व स्व कालादयो द्रष्टव्याः ।

द्वितीयाधिकरणमारचयति ।

प्रतिकर्म पृथक्कार्य्यमाधानं यदि वा सकृत् ।

प्रयाजवत् पृथङ्मैवं स्वकालत्वसमत्वतः ॥ २ ॥

वसन्ते ब्राह्मणोऽग्निमादधीतेति विहितमाधानं प्रयाजाद्यङ्गवत् प्रतिकर्मं पृथक्कार्य्यमिति चेत् । न । आधानस्य स्वातन्त्र्येण वसन्तादिकाले विहिते तत् तत्कर्मकालेषु पृथगनुष्ठानायोगात् स्वकालेऽनुष्ठितस्य सर्वकर्मणि सम्बन्धः समानः । न च प्रकरणेन विशेषो नियन्तुं शक्यः । आधानस्यानारभ्याधीतत्वात् । आहवनीये जुहोतीत्यादिवाक्येन त्वेष्टिकपाशुकसौमिकदार्विकहोमेषु उपयोगः साधारणः प्रतिपाद्यते । तस्मात्तन्त्रेणानुष्ठानम् । यद्यप्याधानं नेष्टादिकर्मणां साक्षादङ्गं तथापि पृथक् फलाभावादाहवनीयादिद्वारा कर्मोपकारत्वाच्चाङ्गत्वमभ्युपेत्यैवं चिन्ता ।

तृतीयाधिकरणमारचयति ।

अग्नीषोमीयमुख्येषु यूपोभिन्नोऽथतन्त्रता ।

उपदेशातिदेशाभ्यां भिन्नो नो कालभेदतः ॥ ३ ॥

ज्योतिष्टोमे पशवोऽग्नीषोमीयसवनीयानुबन्ध्यास्त्रयो विहितास्तेषु यूपभेदो युक्तः । कुतः अग्नीषोमीये प्रत्यक्षवचनेन तदुपदेशादितरयोश्चोदकाभ्यामतिदेशादिति प्राप्ते ब्रूमः । न तावदियमग्नीषोमीयपशोः काले यूपस्योत्पत्तिः । किन्तु ततः प्रागेव यूपोत्पत्तिकालः । दीक्षासु यूपं छिनत्तीति क्रीते राजनीतितत्कालविधानात् । तत आधानवत्सर्वार्थत्वं सम्भवति । यथास्वकाले सम्पन्नमाधानं

तत्तद्वाक्यशेषैस्तेषु तेषु कर्मसु तथा स्वकाले छेदनादिना निष्पन्नो यूपः प्रत्यक्षचोदकोक्तिभ्यां तत्र विनियोज्यः। तस्मात्तन्त्रेण यूपः सम्पाद्यः।

चतुर्थाधिकरणमारचयति।

संस्कारास्तक्षणाद्याः किं भिन्नास्तन्त्रेण वाऽग्रिमः।
पशुकालत्वतो मैवं यूपत्वापादका यतः॥ ४॥

तक्षणपर्यूहणादयो यूपसंस्काराः पशुकालीनत्वात् नियोजनादिवत् त्रिषु पशुषु भेदेन कर्त्तव्या इति चेत्। नैवम्। छेदनवत्तक्षणादीनामपि यूपकालीनत्वात्। न खलु यूपो नाम कश्चिल्लोके प्रसिद्धः पदार्थोऽस्ति येन तस्य छेदनमात्रेण तत्तद्विधिः कृतार्थः स्यात्। किं तर्हि छेदनतक्षणादिना यूपसंज्ञामाश्रित्यैव विधीयते। यथा सति यैः छेदनतक्षणादिसंस्कारैर्यूपत्वमापद्यते ते सर्वे छेदनकाल एवानुष्ठेयाः। तस्मात् त्रिष्वपि पशुषु यूपच्छेदनवत्तक्षणपर्यूहणादयस्तन्त्रेणानुष्ठेयाः।

पञ्चमाधिकरणमारचयति।

स्वरुर्भिन्नोऽथ वैकः स्यादन्यकालत्वतो भिदा।
प्राथम्यमिकशकले तस्य स्यादविशेषतः॥ ५॥

शकलः स्वरुरित्युच्यते। स च भिन्नेषु पशुषु भिन्नः सम्पाद्यः। कुतः। अन्यकालत्वात्। न हि यूपस्येव स्वरोः कश्चित्प्रातिस्विकः कालः श्रूयते। ततः स्वरुणा स्वधितिना च पशवनुक्तोऽन्यञ्जनकालीनत्वादञ्जनवद्भेद इति प्राप्तेऽभिधीयते। यः प्रथम आपतेत् स स्वरुः कार्य्य इति श्रुतं प्राथम्यं एकस्मिन् शकले युक्तम्। स च शकलो यूपकालीनः

पशुविशेषसम्बन्धे हेतुमलभमानो यूपवत्तन्त्रेण सर्वेषु पशुषु उपकरिष्यति ।

षष्ठाधिकरणमारचयति ।

अहर्गणे विषाणायास्त्यागोऽङ्गेः किं विकल्पते ।
किं वा नियम्यतेऽन्त्येऽह्नि स्याद्द्याबाधसाम्यत: ॥ ६ ॥
कण्डूयनं न हस्तेन श्रुतमर्थात्तु तद्भवेत् ।
श्रुतबाधाद्वरन्तस्य बाधोऽतोऽन्त्ये नियम्यताम् ॥ ७ ॥

कृष्णविषाणया कण्डूयते । नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यतीति ज्योतिष्टोमे श्रुतम् । प्रासनमहर्गणयो द्विरात्रादौ चोदकप्राप्तम् । तत्र प्रथमे चरमे वाऽह्नीत्येवं विकल्पते । कुत: । उभयत्र बाधसाम्यात् । यदि प्रथमेऽहनि प्रास्येत्तदानीमुत्तरेष्वह:सु चोदकप्राप्तं दक्षिणानयनात् प्राचीनं विषाणया कण्डूयनं बाध्येत । चरमेऽह्नि तत्प्रासने पूर्वेष्वह:सु दक्षिणानयनादूर्ध्वं हस्तेन कण्डूयनं चोदकप्राप्तं बाध्येत । तस्मात् समबलत्वेन विकल्प इति प्राप्ते ब्रूम: । न हि हस्तेन कण्डूयनं किञ्चिच्छ्रुतं किन्तु विषाणायामत्यक्तायां अर्थात् प्राप्यते कथं तस्य बाधोऽस्तु । श्रुतं विषाणया कण्डूयनमबाधितुं चरमेऽह्नि प्रासनं नियम्यते ।

सप्तमाधिकरणमारचयति ।

नानाबीजेषु यागेषु वार्त्विसर्गस्य पूर्ववत् ।
शङ्कितैतद्विधौ न स्याद्विधिरत्वे तदुत्तरम् ॥ ८ ॥

राजसूये नानाबीजयुक्ता यागा: श्रुता: । अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणां

सोमाय वनस्पतये श्यामाकं चरुमित्यादिना प्रकृतौ प्रणीता प्रणयनकाले नियमिताया वाचो हविष्कृदाह्वान-काले विसर्गः श्रुतः । स चात्र चोदकप्राप्तः । तत्र प्रथमे चरमे वा हविषि हविष्कृदाह्वानकाले वाग्विसर्गो विकल्पित इति पूर्वः पक्षः । अत्रेयं पूर्वपक्षिणोऽभ्यधिका शङ्का हस्तेन कण्डूयनं न विहितं वाग्विसर्गस्तु विहित इति । तत्रेद-मुत्तरम् । विहितस्य वाङ्नियमस्यावधित्वेनायं हविष्कृ-दाह्वानकालीनो वाग्विसर्गोऽनूद्यते रागप्राप्तत्वान्नासौ विधीयत इति । तस्मात् प्राप्तनाद् विसर्गोऽपि चरमकाले नियम्यते ।

अष्टमाधिकरणमारचयति ।

पशुकाले पुरोडाशकाले वा वाग्विसर्जनम् ।
तन्त्रित्वादादिमोऽन्त्यः स्याद्वाग्यमात् कर्तृसंस्कृतिः ॥८॥

यद्यपि पशौ हविष्कृदाह्वानं नास्ति तथापि कृत्वा चिन्तेयम् । तत्र पशौ हविष्कृदाह्वानकाले वाग्विसर्ज-नीया । कुतः । पशोस्तान्त्रित्वात् । पशुपुरोडाशस्य प्रासङ्गिकत्वेन पशावनुष्ठितैरेवाङ्गैरुपकारसिद्धेरिति प्राप्ते ब्रूमः । वाग्यमोऽनादृष्टार्थः । किन्तु तत् कर्तृसंस्कारार्थः । तथा सति पुरोडाशे तदभावे सत्यसंस्कृतकर्त्रा तदनुष्ठानं प्रसज्येत । तस्मान्नियतां वाच पुरोडाशस्य हविष्कृदाह्वा-नकाले विसृजेत् ।

नवमाधिकरणमारचयति ।

किमग्निमोकः सर्वान्ते मुख्यान्ते वाग्मिनो यतः ।
योगे सर्वार्थता मैवं मुख्यार्थोऽसौ तदन्तिनः ॥ १० ॥

अग्निचयने योगविमोकौ अग्नेः श्रुतौ । अग्निं युनज्मीति मन्त्रहोमो योगः । इमंस्तनमिति मन्त्रहोमो विमोकः । स च साङ्गप्रधानविषयः । सर्वप्रयोगान्ते कर्त्तव्यः । योगस्य सर्वार्थत्वेन मध्ये तद्विमोकासम्भवादिति प्राप्ते ब्रूमः । पञ्चभिर्युनक्ति पांक्तो यज्ञो यावानेव यज्ञस्तमाप्नोति इत्यनेन मोचने यज्ञप्राप्तिवचनेन योगस्य प्रधानार्थत्वावगमात् प्रधानकर्मणोऽन्ते विमोकं कुर्य्यात् ।

तदेवाधिकरणं वार्त्तिककृन्नेनारचयति ।

व्यत्यस्तौ तावुभौ पत्ताबुत्पत्तावविशेषतः ।

सर्वार्थत्वङ्गुणो भाति सर्वान्तेऽतो विमोचनम् ॥ ११ ॥

प्रधानान्ते विमोक इति यो भाष्ये सिद्धान्तः स एवात्र पूर्वः पक्षः । अग्निं युनज्मि शवसा घृतेनेति जुहोत्यग्निमेव तद्युनक्तीति एतद्योगस्योत्पत्तिवाक्यम् । पञ्चभिर्युनक्तीति गुणविधिः । तत्र न तावदुत्पत्तौ प्रधानगामी योग इत्यस्यार्थस्य गमको विशेषोऽस्ति । गुणविधिविशेषेऽपि यज्ञशब्दो न प्रधानमाचष्टे । किन्तु साङ्गम् । तस्माद्योगस्य सर्वार्थत्वाद्विमोकोऽपि सर्वान्ते कर्त्तव्यः ।

दशमाधिकरणमारचयति ।

उपसत्कालसुब्रह्मण्या गणे भिद्यते न वा ।

प्रधानभेदाद्भेदः स्यात् कालभेदाच्च भिद्यते ॥ १२ ॥

अहर्गणे पूर्वसत्कालीनं सुब्रह्मण्याह्वानं प्रधानभेदाद्भिद्यत इति चेत् । न । पूर्वकालीनतया यूपन्यायेन तन्त्रत्वात् ।

एकादशाधिकरणमारचयति।

सुत्याकालीनमाम्नानं तन्त्रं स्यान्नियतेऽथवा।
यूपाहुतितया तन्त्रं सुत्याकालतया भिदा॥ १३॥

अहर्गणेषु प्रथमसुत्यासन्निधौ कृतमपि पुरश्चर्याम्नानं सर्वेष्वहःसूपकरोति। यथा यूपैकादशिन्यां दृष्टिगोचरे देशे क्रियमाणाज्याहुतिः सत्यप्यर्थादेक यूपसन्निधौ सर्वेषामुपकारस्तद्वदिति प्राप्ते ब्रूमः। अन्यसुत्याकालीनेनाम्नानेनात्र नास्त्युपकारः। कालविशेषस्यापि तत्प्रयोजकत्वात्। अन्यथा अहादीनामपि तन्त्रत्वापत्तेः। तस्मादाम्नानं भिद्यते।

द्वादशाधिकरणमारचयति।

देशपात्रर्त्विजोऽन्यस्मिन् प्रयोगेऽन्य उतोच्छिकाः।
भुक्त्यर्थपर्णवत्तेऽन्ये वासोवत्तेऽस्त्वरोच्छिकाः॥ १४॥

समे यजेतेत्युक्तो देशः। जुह्वादीनि पात्राणि। अध्वर्युप्रमुखा ऋत्विजः। तेचैकस्मिन् प्रयोगे उपयुक्ता निरिष्टकत्वात्र प्रयोगान्तरमर्हन्ति। इष्टान्निर्गताः निरिष्टाः कुत्सिताः। निरिष्टा निरिष्टकाः पुनःप्रयोगानर्हा इत्यर्थः। यथा भोजन उपयुक्तं कदलीपत्राशादिपर्णं प्रक्षाल्यापि न पुनस्तच्छिष्टाः स्वीकुर्वन्ति तथात्राप्यन्ये देशादयः प्रयोगान्तरे सम्पाद्या इति प्राप्ते ब्रूमः। यथा वस्त्रं प्रक्षाल्यापि पूर्वदिने प्रावरणायोपयुक्तमपि दिनान्तरे निरिष्टकं न भवति शिष्टास्तद्वासो दिनान्तरे स्वीकुर्वन्ति तद्वदत्रापि द्रष्टव्यम्। इदं निरिष्टकमिदं नेत्यत्र

शिष्टाचार एव प्रमाणम्। शिष्टाश्च देशादिनियमेन न त्यजन्ति तस्मादैच्छिकाः।

त्रयोदशाधिकरणमारचयति।

माभूदन्यत्व नियमः पात्रे तन्त्रं किमैच्छिकम्।
नियतं वाऽग्निनो देशवन्मैवं प्रतिपत्तितः॥ १५॥

देशपात्रर्त्विजां साधारण्येनान्यत्वनियमे निवारिते सति पुनः पात्रान्तरेषु नियमानियमसद्भावश्चिन्त्यते। प्रथमप्रयोगे यान्युपयुक्तानि पात्राणि तान्येव प्रयोगान्तरेष्विति नियमो नास्त्युतास्तीति संशयः। यथा देशे कर्तृषु च तएवेति नियमो नास्ति ऐच्छिकत्वोक्तत्वात्तथा पात्रेष्वपीति चेत्। मैवम्। आमरणं पात्राणां धारणीयत्वात्। आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेति प्रतिपत्तिविधानेनामरणं धारणमेवावगम्यते। ननु पात्रैरिति तृतीयया अर्थगुणभावावगमाद्दर्थकर्मेदं नतु प्रतिपत्तिः। तथा सति पात्रान्तरैरपि दाहसिद्धेर्न धारणनियम इति चेत्। मैवम्। दक्षिणे पाणौ जुहूमासादयतीति द्वितीयया प्रतिपाद्यत्वावधारणात् पूर्वेषामेव धारणम्। तस्मात् सर्वेषु प्रयोगेषु पात्राणां तन्त्रम्।

चतुर्दशाधिकरणमारचयति।

किं पौर्णमासमारभ्य यद्वाधानमिये श्रुतिः।
प्रकृत्यर्थतयाद्यः स्यान्मरणान्नियमात्परः॥ १६॥

अनारभ्याधीतानां पात्राणां प्रकृतिगामितया पौर्णमासीमारभ्य धारणमिति प्राप्ते ब्रूमः। आधानकाले पवमानेष्टिषु चोदकप्राप्तत्वात्पात्राणामाधानमारभ्य धार-

यितव्यानि । अन्यथाधान पौर्णमास्योर्मध्ये यजमानस्य कदाचिन्मरणे पात्राभावेन दाहाभावप्रसङ्गात् । तस्मा-दाधानमारभ्य धारणमित्यपरः पक्षोऽस्य पगन्तव्यः ।

पञ्चदशाधिकरणमारचयति ।

प्राजापत्यप्रचारः किमार्भवे शस्त्रसोमतः ।
ऊर्ध्वं वा विकृतौ वोत परस्तात् सर्वसोमतः ॥ १८ ॥
आर्भवे चोदकादुक्त्या सक्तिभ्यां तदनन्तरः ।
श्रुतिबाधस्तदा तस्मात् तृतीयो विकृतित्वतः ॥ १८ ॥
पशवो न हि सोमस्य विकारा अविशेषतः ।
उक्तत्वात् सर्वसोमानामुपरिष्टात् प्रचर्य्यते ॥ १९ ॥

वाजपेये सप्तदशप्राजापत्यप्रचारस्य काले चतुर्धा संशयः । तत्र तावदयं प्रयोगक्रमः । तृतीयसवने प्रथममार्भवः पवमानः । ततो वैश्वदेव ग्रहपर्य्यन्ताः ग्रहवन्तः सोमाः । ततो शस्त्रेषु अवशिष्टेषु सामग्रहेषु प्रचरितेष्वग्निष्टोमसाम्न ऊर्ध्वं उक्थ्यादयः सोमविकाराः । इत्येवं स्थिते प्राजापत्य पशूनामार्भव काले प्रचारः । कुतः । प्रकृतौ तस्य प्रचारकालत्वेन चोदकप्राप्तत्वादित्याद्यः पक्षः । उपरिष्टात् सोमानां प्राजापत्यैश्चरतीति वचने सोमग्रहप्रचारादूर्ध्वं कालो विधीयते । यदि प्रातःसवनमाध्यन्दिनसवनसोमेभ्यः ऊर्ध्वत्वमार्भवकालस्यास्तीति योज्येत तदा चोदकेनैव तत्कालप्राप्तेर्वचनमनर्थकं स्यात् । अतस्तृतीयसवनसोमानामुपरीति वक्तव्यम । यदि तत्र सर्वसोमानामुपरीति विवक्ष्येत तदा चोदकप्राप्तः कालो विप्रकृष्यते । ततः प्रत्यासत्तये शस्त्रवता वैश्वदेवग्रहान्तानां सोमानामुपरीति द्वितीयः

पक्षः। उपरिष्टात् सोमानामित्यविशेषप्रवृत्ता श्रुतिः कतिपयसोमोर्ध्वत्वविवक्षायां बाध्येत। तस्मात्स्वस्ववतां तद्विहितानाञ्च सोमानामुपरिष्टादग्निष्टोमे यज्ञायज्ञीय-साम्ना संस्थिते सति स प्रचारः कार्य्यः। तस्य विकृति-कालत्वात्। प्राजापत्यपशूनाञ्च विकृतिरूपत्वादिति तृतीयः पक्षः। सोमविकाराणामेवायं कालः। पशवस्तु न सोमविकाराः। तस्मादविशेषवचनानुसारेण प्राकृतानाञ्च वैकृतानाञ्च सर्वेषां सोमानामुपरिष्टात् प्राजापत्यपशुप्रचार इति राद्धान्तः।

षोड़शाधिकरणमारचयति।

सवनीय पुरोडाशे देवोत्कर्षो न विद्यते।

अस्ति वा पश्वनङ्गत्वात् नान्यथा भावतोऽस्ति नः ॥२०॥

ज्योतिष्टोमे सवनीय पशुस्तन्त्री। सवनीय पुरोडाशः प्रसङ्गी। तस्मिन् पुरोडाशे देवता आम्नाताः। भृञ्जनिन्द्राय हरिवते धानाः पूषण्वते करम्भमित्यादिना। तत्र देवता-वाचिनां हरिवदिन्द्रपूषण्वदिन्द्रादिपदानामुत्कर्षो विषयः। तस्य चैवं सम्भावना। सवनीय पशोस्तावदनुयाजा उत्-कृष्यन्ते। आग्निमारुतादूर्ध्वमनुयाजैश्चरन्तीत्यनुयाजाना-माग्निमारुतशस्त्रादधस्तनं स्वकालं निवार्योर्ध्वकालस्य विहितत्वादुत्कृष्टेष्वनुयाजेषु तदुत्तरकालीनः सूक्तवाकोऽ-र्थादुत्कृष्येत। तस्मिंश्च सूक्तवाके देवता वाचीनि पदानि प्रयोक्ष्यानि। प्रसङ्गिनः पुरोडाशस्य पृथक् सूक्तवाको नास्ति। ततः पशुसम्बन्धिसूक्तवाकोत्कर्षेण पुरोडाशसम्ब-न्धिदेवतावाचिपदोत्कर्षः सम्भावितः स चोत्कर्षो नास्तीति

स्तावत् प्राप्तम् । कुतः । तासां देवतानां पञ्चनङ्गत्वात् । नैवम् । सूक्तवाकमन्त्रेण पृथगुच्चारितानां देवतानां देवतापदानामन्वयाभावात् । सूक्तवाके भुज्जामिन्द्राय हरिवते धाना अग्रं यजमान इत्यस्यान्वयः । तस्मादुत्कर्षोऽस्तीति सिद्धान्तः ।

इति माधवीये जैमिनीयन्यायमालाविस्तरे
एकादशाध्यायस्य तृतीयः पादः ।

—•०—

चतुर्थपादे प्रथमाधिकरणमारचयति ।

सोमा पौष्णादिके तन्त्रमङ्गानामुत भिन्नता ।
तन्त्रं फलैक्यतो नैवं दक्षिणाकर्तृभेदतः ॥ १ ॥

राजसूये श्रूयते । सौमा पौष्ण एकादशकपाल ऐन्द्रा पौष्णश्चरुः पौष्णश्चरुःश्यामो दक्षिणेति । आग्ना वैष्णव एकादशकपाल ऐन्द्रा वैष्णवश्चरुर्वैष्णवस्त्रिकपालो वामनो दक्षिणेति । तत्र द्वयोस्त्रिकयोस्तन्त्रेणाङ्गानुष्ठानम् । कुतः । कृत्स्नस्य राजसूयस्य फलैकत्वेन तदेकदेशयोरपि फलैकत्वात् । न च दर्शपूर्णमासयोरिवात्र कालभेदोऽस्ति येनावापः प्रसज्येतेति प्राप्ते ब्रूमः । श्याम वामनयोर्दक्षिणयोर्भेदेन ताभ्यामानतानां कर्तृणां भेदादङ्गानि भिद्यन्ते ।

द्वितीयाधिकरणमारचयति ।

राजसूये प्रक्रमस्य कर्त्तारो नियता न किम् ।
नियता वा दक्षिणानां भेदादनियता अमी ॥ २ ॥

अनेक समुदायात्म राजसूयाय ते कृताः ।
आदौ तेन नियम्यन्ते विशेषे दक्षिणाभिदा ॥ २ ॥

राजसूयस्य ये कर्तारस्त एवा समाप्तेर्नियम्यन्ते। दक्षिणादि भेदेन कर्तृभेदस्य पूर्वमुक्तत्वात्। तथा च यथा दक्षिणया ये परिक्रीतास्ते तदीयकर्माणि कुर्वन्तु। इतरस्मिन् कर्मणि दक्षिणान्तरेण ते वाऽन्ये वा परिक्रीयन्तामिति प्राप्ते ब्रूमः। अनेन राजसूयसंज्ञेन कर्मसमुदायेन मां याजयेत्येवमादौ यजमानेन वृतत्वात्। आसमाप्तेस्त एव कर्तारः। इदमेव वरणं न्याय्यम्। समुदायस्यैकफलत्वात्। प्रतिकर्म पृथग्वरणे गौरवात्। कदाचिद्वरीतव्यानामलाभे विघ्नप्रसङ्गाच्च। कर्त्रैक्येऽपि कर्तृत्वधर्मविशेषे दक्षिणाभेद उपयुज्यते। पूर्वकर्तृत्वाधिष्ठानभूता एव वामनेन क्रीताः सन्त आम्नावैष्णवादिकं कुर्युः। अयुतेन क्रीताः सन्तोऽभिषेचनीयमिति कर्तृत्वधर्मविशेषः। तस्मान्नियताः।

तृतीयाधिकरणमारचयति।

अवेष्टौ बहुतन्त्रत्वं भेदो वा लिङ्गतोऽग्रिमः ।
नोत्पत्तौ दक्षिणा भेदाल्लिङ्गं बाह्यप्रयोगगम् ॥ ३ ॥

राजसूयप्रकरणे श्रूयते। दिशामवेष्टयो भवन्तीति। ताश्चावेष्टय उत्पत्तिवाक्यैरेवमाम्नायन्ते। आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा ऐन्द्रमेकादशकपालमृषभो दक्षिणा वैश्वदेवं चरुं पिशङ्गी प्रष्ठौही दक्षिणा मैत्रावरुणीमामिक्षां वशा दक्षिणा बार्हस्पत्यं चरुं शितिपृष्ठो दक्षिणेति। तास्ववेष्टिषु तन्त्रेणाङ्गानामनु-

ष्ठानम्। कुतः। तल्लिङ्गात्। यदि ब्राह्मणो यजेत् बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वा तमभिघारयेद्यदि राजन्यं ऐन्द्रं यदि वैश्यो वैश्वदेवमिति। तत्र मध्ये निधानं प्रयोगैक्ये लिङ्गम्। तदैक्याच्च तन्त्रमिति प्राप्ते ब्रूमः। उत्पत्तिगतेन दक्षिणाभेदेन प्रयोगभेदावगमादङ्गानां भेदः। लिङ्गन्तु बहिः प्रयोगविषयम्। अस्ति च प्रयोगद्वयम्। राजसूयप्रकरणपाठादन्तः प्रयोग एकः। न च प्रकरणादुत्कर्षः कर्त्तुं शक्यः। राजसूयाङ्गभूतदिग्व्यवस्थापननिमित्ताभ्यादपरिहाररूपेणार्थवादेन तत्सम्बन्धावगमात्। तथाच श्रूयते। ईश्वरो वा एव दिशोनून्मदितोः यं दिशोऽनुव्यवस्थापयति दिशामवेष्टयो भवन्ति। दिक्ष्वेव प्रतितिष्ठत्यनुन्मादायेति। राजसूयाद् बहिः प्रयोगस्त्वेतयान्नाद्यकामं याजयेदिति विहितः। न चासौ राजसूयान्तःपाती। यदि ब्राह्मण इत्यादिना इत्यादिना वर्णसंयोगावगमात्। राजसूये च ब्राह्मणवैश्ययोरनधिकारात्। तस्माद् बहिः प्रयोगेऽङ्गं तन्त्रम् अन्तः प्रयोगे भेद इति निर्णयः।

चतुर्थाधिकरणमारचयति।

पवमानेष्टि हविषां तन्त्रं भेदोऽथवाग्निमः।
साध्यदेशाद्य भेदान्नो काम्यभेदोक्तितोऽन्तिमः॥ ४॥

आधानप्रकरणे पठ्यते। अग्नये पवमानायाष्टाकपालं निर्वपेदग्नये पावकायाग्नये शुचय इति तैरेतै र्हविर्भिः साध्यस्याग्नेरेकत्वाद् देशभेदाभावाद्ङ्गानां तन्त्रमिति प्राप्ते ब्रूमः। यः कामयेतोत्तरं वरीयान् श्रेयान् स्यामिति

तस्याश्चाग्नये पवमानाय निरूप्याग्नये पावकाय शुचये चोत्तरे हविषी समानबर्हिषौ निर्वपेदिति वचनात् काम्यप्रयोगे प्रथमस्य हविषोऽङ्गभेदः उत्तरयोस्तन्त्रं नित्यप्रयोगे तु त्रयाणां तन्त्रम् ।

पञ्चमाधिकरणमारचयति ।

द्वादशाहे सदीक्षोपसदहे दिनमानकम् ।
शतत्रयं द्वादश वा षड्विंशद्वाग्रिमो यतः ॥ ५ ॥
एकैककर्मणोऽङ्गोऽस्य ज्योतिष्टोमविकारता ।
एकैकं तदनुष्ठानं दिनानां पञ्चविंशतिः ॥ ६ ॥
अङ्गां द्वादशता श्रुत्वा मध्यपक्षस्तदापि किम् ।
कार्य्या द्वादशसाधस्त्र्याश्चतुष्काणामुत त्रिकम् ॥ ७ ॥
एकैकस्यैव यागस्य विकृतित्वाद्विद्वादिमः ।
अनुष्ठकालाङ्गबाधाच्चतुष्कं भिद्यते त्रिधा ॥ ८ ॥
दीक्षा उपसदः सुत्याः प्रत्येकं द्वादश स्मृताः ।
साङ्गस्य द्वादशाहस्य षड्विंशद्दिवसा मताः ॥ ९ ॥

द्वादशाहस्यैकैकमहः पृथक्कर्म तस्मिंश्च सदीक्षस्य सोपसत्कस्य ज्योतिष्टोमस्य विध्यन्तोऽतिदिष्टः । अतिदिष्टानामुपसदां दीक्षाणाञ्च प्राकृतसंख्याबाधनाय पृथक् द्वादशत्वं श्रुतम् । ततो दीक्षोपसदशं चतुर्विंशतिदिनानि सुत्यार्थमेकं दिनमिति पञ्चविंशतिः । द्वादशस्य कर्मविशेषस्याङ्गां द्वादशाभिरावृत्तिभिः शतत्रयं स्यादित्याद्यः पक्षः । तथा सत्यङ्गां द्वादशत्वं श्रूयमाणं बाध्येत । तस्माद् द्वादशदिवसा इति मध्यमः पक्षः । तदापि दीक्षोपसद्भ्यां महाभ्यामुपेतस्यैकैकस्याङ्गः साङ्गज्योतिष्टोमः

विकारत्वात्·तत् सर्वं सद्य एव कर्त्तव्यमित्येकः पक्षः। प्रकृतौ दीक्षोपसदोर्मुख्यकालात् प्रागेवानुष्ठितत्वाद्विकृतावपि तथैवानुष्ठानं प्राप्तं तत्र मुख्यकालेऽनुष्ठाने बाध्येत। तस्मादङ्गद्वयस्य· प्रधानस्य च द्वादशदिनानि विभज्यानुष्ठानमिति पक्षान्तरम्। द्वादशाहस्य द्वादशदीक्षा द्वादशोपसद इत्यङ्गयोर्मुख्यस्य च पृथक् द्वादशत्व श्रुत्या षड्त्रिंशदिति सिद्धान्तः॥

षष्ठाधिकरणमारचयति।

सवनीयादिकं तत्र सकृत् स्याद् भिद्यतेऽथवा।
प्रयोगैक्यात् सकृन्मैवं मुख्यकाले विधानतः॥ १० ॥

तत्र द्वादशाहे सवनीय पश्वादिकमङ्गं दीक्षादिवत् सकृदेवानुष्ठेयम्। कुतः। द्वादशाहेन प्रजाकामं याजयेदिति प्रयोगैकत्वावगमादिति चेन्मैवम्। दीक्षादीनामन्यस्मिन् कालेऽनुष्ठेयत्वात्। सवनीयादिकन्तु मुख्यकालेऽनुष्ठेयम्। अतो मुख्यकालानां भेदाद् भिद्यते।

सप्तमाधिकरणमारचयति।

उपसत्काल आम्नाने द्वादशाहे विकारभाक्।
न वाद्य उपलक्ष्यत्वादन्याङ्गे प्रकृताविव॥ ६ ॥
स्तुत्या गमनमात्रस्य विवक्षा प्रकृतौ ततः।
विकारमन्तरेणात्र तत्रिमिश्चित्तेन तत्परता। ७ ॥

उपसत्काले यत्सुब्रह्मण्याह्वानं प्रकृतावस्ति तत्द्वादशाहे चोदकप्राप्तं तस्य मुख्यकालादन्यःकाल इति कृत्वा तत्त्वं पूर्वपादे पूर्वं निर्णीतम्। इदानीमन्योऽत्र ऊहकर्पो

विकारस्तन्नावाप पर्यवसायी विचार्यते। विकृतौ प्रथमोपसद्दिनमारभ्य त्रयोदशेऽह्नि प्रथमसुत्या चतुर्दशेऽह्नि द्वितीयसुत्येत्येवं क्रमेण चतुर्विंशेऽह्नि चरमसुत्या भवति। तथा च प्रकृतौ चतुरहे इति संख्याविशिष्टेनाहःशब्देन सुत्याया उपलक्षितत्वात्। अत्रापि द्वादशानां सुत्यानाम् अहःशब्देनोपलक्षणीयत्वे सति तद्विशेषणीभूतचतुःसंख्यास्थाने यथोचितं त्रयोदशचतुर्दशादिसंख्यानामूहनीयत्वेन विकारो भवति। ततो विशेषणभेदेन विशेष्यस्याहःशब्दस्यापि द्वादशकृत्व आवृत्तावर्थात् सुब्रह्मण्याह्वानस्यावापः स्यादिति प्राप्ते ब्रूमः। प्रकृताविन्द्रस्य सुत्यागमनमात्रं विवक्षितम्। चतुरहत्वमर्थप्राप्तमनूद्य तत उभयविशिष्टायां सुत्यामागच्छ चतुरहे आगच्छेति वाक्यं भिद्येत। तथात्रापि त्रयोदशाहे सुत्यामागच्छेत्येवंविधं विकारमन्तरेण चतुरहे सुत्यामागच्छेत्याह्वानेऽपि चतुरहः शब्दस्याविवक्षितार्थत्वात् सुत्याकारेण द्वादशानामेकत्वादशेष सुत्यागमनं सिध्यति। तस्मादूहरूपविकाराभावात् पूर्वोक्ततन्त्रं सुस्थितम्।

अष्टमाधिकरणमारचयति।

प्राजापत्येषु कुम्भादेर्भेदो नोवाङ्गभेदतः।
भेदो नैवं विशेषाङ्गस्यपर्णादौ प्रभुत्वतः॥ ८॥

वाजपेये समदशप्राजापत्यपशुषु कुम्भा हृदयशूलस्वधावाश्रपण्यश्च भेदः स्यात्। तत्तत् पश्वङ्गानां भिन्नत्वात्। मैवम्। पश्वङ्गानां बहुत्वेऽपि प्रौढकुम्भादेरेकार्थे स्वपर्यादौ प्रभुत्वात् तस्मात्तन्त्रम्।

नवमाधिकरणमारचयति।

किमेकादशिनेष्वस्य कुम्भ्यादेर्भिन्नता नवा।

असन्देहाय भेदो न लिङ्गादेवास्य सिद्धितः॥ ९॥

भिन्नदेवताकेष्वैकादशिनेषु पशुष्वेक कुम्भिपाके सति किमङ्गं कां देवतां प्रत्युपाकृतस्य पशोः सम्बन्धीति सन्देहे सति प्रदानं सम्कीर्य्येतम्। तस्मात् कुम्भ्यादेर्भावाप इति चेत् मैवम्। चिह्नकरणमात्रेणैव सन्देहापगमसिद्धेः लाघवात्। तस्मादत्रापि तन्त्रम्।

दशमाधिकरणमारचयति।

तत्तन्त्रं हैयमुत नो चिह्नं नास्ति वसास्वतः।

हेयं नो प्रतिपत्तित्वात् साङ्कर्य्यं ण्याप्यदोषतः॥ १०॥

एकादशिनेषु कुम्भ्यादेर्यत्तन्त्रं निर्णीतं तत्परित्याज्यं कुतः। अङ्गानामिव वसानां चिह्नकरणासम्भवेन साङ्कर्य्यप्रसङ्गात्। मैवम्। वसाहोमस्य प्रतिपत्तिकर्मत्वेन द्रव्यं प्रतिप्रयोजकत्वाभावेन द्रव्यस्वरूपार्थं कुम्भीभेदप्रयोजकत्वस्य दूरापेतत्वात्। न चात्र द्रव्यसाङ्कर्य्यं दोषाय भवति। व्यवस्थापकप्रमाणाभावात्। ननु तत्तद्देवताविषययाज्यार्द्धचान्तेषु भिन्ना होमाः पूर्वं निर्णीताः। वाढम्। तर्ह्यर्द्धर्चान्ते तद्द्यताम्। किं नाम्नातं द्रव्यसाङ्कर्य्यं। तस्मात् कुम्भ्यादेस्तन्त्रं न त्याज्यम्।

एकादशाधिकरणमारचयति।

भिन्नजातिषु कुम्भ्यादेस्तन्त्रं भेदोऽथवाग्रिमः।

पूर्ववत्पाकवैषम्ये साहित्यासम्भवाद्भिदा॥ ११॥

एकजातिषु पशुषु यथा कुम्भ्यादेस्तन्त्रं पूर्वोक्तं तथात्र

वारीति चेत् मैवम्। अवेरङ्गानि सहसा प्रच्यन्ते अजाङ्गानि विलम्बेन ततः साहित्यासम्भवात् कुम्भादेर्भेदः।

द्वादशाधिकरणमारचयति।

तन्त्रं चतुष्कपालानां भेदो वा तन्त्रहत्वतः।

कुम्भीवत्तन्त्रता मैवं भेदः स्यात् प्रकृताविव ॥ १२॥

इदं श्रूयते यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेदिति। यथा प्राजापत्येषु कुम्भ्यामहत्वेन तन्त्रं तथात्रापि तन्त्रमिति चेत् मैवम्। प्रकृतौ प्रति पुरोडाशं कपालभेदेन तद्भेदस्यैव चोदकप्राप्तेः। किं चात्यन्तविशालेषु कपालेषु चतुर्षु पुरोडाशानां सर्वेषु व्यवस्थापितेष्वेकस्यैव कपालस्यैकदेशे पुरोडाशस्यैकस्य समासेन कोऽपि पुरोडाशश्चतुष्कपालः सिध्येत्। तस्मात् प्रतिपुरोडाशं कपालचतुष्कभेदः।

त्रयोदशाधिकरणमारचयति।

अवघातार्थमन्त्रः किमसकृत् सकृदेव वा।

प्रहारभेदादावृत्तिः कर्मैक्येन सकृद्भवेत् ॥ १३॥

अवरक्षो दिवः सपत्नं वध्यासमित्यवहन्तीत्यवघाते विहितो मन्त्र आवर्त्तनीयः। अवघातस्य प्रहाररूपत्वात् प्रहाराणाञ्च भिन्नत्वादिति प्राप्ते ब्रूमः। तण्डुलनिष्पत्तिपर्यन्तत्वेनाविच्छिन्नप्रहाराभ्यासयुक्तस्यावघातस्यैककर्मत्वात् तत्र विनियुक्तस्य मन्त्रस्यावघातोपक्रमे सकृदेव पाठः।

चतुर्दशाधिकरणमारचयति।

नानाबीजेषु तन्मन्त्रः सकृद्वासकृदर्ग्रिमः।

विशेषाग्रहणात् मैवमवघातस्य भेदतः ॥ १४॥

राजसूये नानाबीजेष्टौ बीजानामवघातस्योपभुतो मन्त्रोऽयमेतदर्थं इति विशेषस्याश्रवणात् मकरादौ प्रयोज्य इति चेत् मैवम्। अवघातानां भिन्नत्वेन समन्त्रत्वाय प्रत्यवघातं मन्त्रस्यावर्त्तनीयत्वात्।

पञ्चदशाधिकरणमारचयति।

निर्वापादिषु तन्मन्त्राः सकृद्भेदेन वाग्रिमः।
द्रव्यकर्मैक्यतो मैवं संस्कारस्य पृथक्त्वतः॥ २०॥

दर्शपूर्णमासयोर्निर्वापबर्हिर्लवनवेदिपरिस्तरणाज्यग्रहणेष्वावृत्तयः श्रुताः। चतुरो मुष्टीन्निर्वपति। अयुजो मुष्टील्ँनाति त्रिधा तु पञ्चधा तु वा वेदिं स्तृणाति। चतुर्जुह्वां गृह्णातीति। तेषु निर्वापादि मन्त्रा विहिताः देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् अग्नये जुष्टं निर्वपामि। बर्हिर्देवसदनं दामि। ऊर्णाम्रदसन्त्वास्तृणामि। शुक्रन्त्वा शुक्रायां धाम्ने धाम्ने देवेभ्यो यजुषे यजुषे गृह्णामीति च तन्मन्त्राः। द्रव्यैक्यात् कर्मैक्याच्च व्राह्मावघातन्यायेन सकृत्त्याज्या इति प्राप्ते ब्रूमः। समन्त्रकप्रथममुष्टिनिर्वापेण ये संस्कृतास्तण्डुलास्तेभ्योऽन्ये मुष्ट्यन्तरनिर्वापेण संस्कार्या अतस्तत् संस्कारसिद्धये नानाबीजन्यायेन मन्त्रावृत्तिरेवं लवनादिषु योज्यम्।

षोडशाधिकरणमारचयति।

वेदिप्रोक्षणमन्त्रः किमावर्त्यः सकृदेव वा।
आद्यः स्यात् प्रोक्षणत्वात् संस्कार्यैकत्वतः सकृत्॥ २१॥

वेद्याश्च प्रोक्षणं विहितम्। तत्र मन्त्र आम्नायते। वेदिरसि बर्हिषे त्वेति। तत्र किं प्रोक्षणक्रियया आवृत्त्या

तन्मन्त्रस्याप्यावृत्तिरिति चेत्। मैवम्। संस्कार्य्यवेद्या एकत्वेन स मन्त्रकप्रथमप्रोक्षणे तत्संस्कारसिद्धौ पुनः मन्त्रवैयर्थ्यात्। प्रोक्षणावृत्तिस्तु वचनिकीति वैषम्यम्।

सप्तदशाधिकरणमारचयति।

एककालीन बह्वङ्गकण्डूमन्त्रभिदा न वा।

अङ्गभेदात् मन्त्रभेदो नित्रत्यैकत्वतो न स॥ २२॥

ज्योतिष्टोमे कृष्णविषाणया कण्डूयत इति प्रोक्तसाधनोपेतेषु कण्डूयनेषु सुपिप्पलाभ्यस्त्वौषधीभ्य इत्यादिको मन्त्रो विहितस्तत्र युगपद्बह्वङ्गेषु उत्पन्नायां कण्ड्वां प्रत्यङ्गमभ्यस्यमाने कण्डूयनेऽभ्यासः कर्त्तव्यः। कुतः। कण्डूयितव्यानामङ्गानां भिन्नत्वादिति प्राप्ते ब्रूमः। नह्यङ्गशेषो मन्त्रः। येन तद्भेदमभ्यसेत्। किन्तु कण्डूनिर्वृतये यत् प्राप्तं कण्डूयनं तदेव कृष्णविषाणादिविशिष्टत्वाकारेण विधीयते। विधीयमानस्य तस्य कण्डूयनस्य शेषोऽयं मन्त्रः। तेन च कण्डूयने नाम्नि निर्दुःखत्वलक्षणः संस्कार उत्पाद्यते। ततः संस्कार्य्यात्मन एकत्वात् सकृन्मन्त्रपाठेन तत्सिद्धेर्नावघातवन्मन्त्रस्यावृत्तिः। कण्डूयनन्तु दृष्टप्रयोजनपर्य्यन्तं प्रत्यङ्गं नानाबीजावघातवदावर्त्तताम्। तस्मात् सकृदेव कण्डूयनमन्त्रः।

अष्टादशाधिकरणमारचयति।

स्वप्नादिमन्त्र आवर्त्त्यो नो वाद्योऽस्वप्नरावृतः।

कृत्स्नो देशे प्रवृत्तत्वान्निमित्ताभेदतः सकृत्॥ २३॥

दीक्षितस्य स्वप्नवदुत्तरणवृष्टिक्लेदना मेध्यदर्शननिमित्ताः स्तत्तन्मन्त्रजपाः पठिताः। त्वमग्ने व्रतपा असीत्यादिः

स्वप्नमन्त्रः । देवीः षडुर्वीरुरु णः कृणोत इत्यादिर्नदीतरणमन्त्रः । उन्नतीर्वलन्वन्त इत्यादिर्वृष्टिच्छेदनमन्त्रः । अबद्धं मन इत्यादिरमेध्यदर्शनमन्त्रः । यदि निद्रामध्ये प्रबोधेरन्ये-ऽप्यवधीयेत । नदी च बहुस्रोतो युक्ता दीपैः । वृष्टिश्च विच्छेदैः । अमेध्यानि च देशैः । तदा ते स्वप्नादयो निमित्तेषु भिद्यमानेषु नैमित्तिका मन्त्रा आवर्त्तनीया इत्येवं प्राप्ते ब्रूमः । रात्रिगतां कृत्स्नां निद्रामुद्दिश्य मन्त्रविधा-नान्निमित्तमेकम् । एवमितरत्रापि योज्यम् । तस्मान्ना-स्त्यावृत्तिः ।

एकोनविंशाधिकरणमारचयति ।

प्रयाणे प्रत्यहं मन्त्रो भिन्नो नोवाल विश्रमैः ।
प्रयाणभेदाद्भिन्नो नो गत्यैक्यादनिवृत्तितः ॥ २४ ॥

भद्रादभिश्रेय इत्यादिः प्रयाणमन्त्रः । तस्य दीक्षितस्य विश्रमभेदेन निर्गमनभेदाद्भेद इति प्राप्ते ब्रूमः । निर्गमना-दारभ्य पुनःप्रवेशपर्यन्तं विश्रमव्यवधानेऽपि प्रयोजनैक्या-देकमेव प्रयाणं ततो न मन्त्रावृत्तिः ।

विंशाधिकरणमारचयति ।

तन्त्रेणोपरवे मन्त्रोऽभ्यस्येत वा बहूक्तितः ।
तन्त्रं बहूक्तिः पूजार्था भिन्नो नोक्षेय भेदतः ॥ २५ ॥

सन्ति ज्योतिष्टोमे पीठपादचतुष्टयाकारा बाहुमात्रा खाताः उपरवनामकाश्चत्वारो गर्त्ताः । तदीयखननमन्त्रे बहुवचनं श्रूयते । रक्षोहणो वलगहनो वैष्णवान् खना-मीति । तत्र प्रत्युपरवं मन्त्रावृत्तौ नोपपद्यते । तस्मात्तन्त्र-मिति प्राप्ते ब्रूमः । एकस्मिन्नपि बहुवचनं पूजार्थमाचा

आदिष्विव प्रयोक्तुं शक्यम्। स्वेयास्तु उपरवा भिन्नाः। अतः स्थानभेदेन तदङ्गभूतो मन्त्र आवर्त्तनीयः।

एकविंशाधिकरणमारचयति।

हविष्कृदादिमन्त्राणां सवनीयादिगामिनाम्।
तन्त्रं न वा सहत्वार्थं तन्त्रं नो कालभेदतः॥ २१॥

सवनीयेषु पशुपुरोडाशेषु हविष्कृन्मन्त्रश्चोदकप्राप्तः। प्राजापत्येषु पशुष्वध्रिगुप्रैषमन्त्रः। कृष्णग्रीवयोः पश्वोरनुवाक्या मनोतामन्त्रौ। हविष्कृदेहीति हविष्कृन्मन्त्रः। दैव्याः शमितार इत्यध्रिगुप्रैषमन्त्रः। अग्ने नय सुपथेति पुरोनुवाक्यात्वं ह्यग्ने प्रथमो मनोतेति मनोतामन्त्रः। एते चतुर्विधा मन्त्राः स्वस्वविषये तन्त्रेण पठनीयाः। तथा सति सवनीय पुरोडाशानां सहोपक्रमोऽनुगृह्यते। एवमुदाहरणान्तरेष्वपि तत्र प्राजापत्याः पशवः क्रतुपशुभिः सहोपक्रान्ताः। अतो द्विविधेष्वपि पशुषु तन्त्रम्। कृष्णग्रीवौ च सहोपक्रान्तौ अतस्तयोः पुरोऽनुवाक्यायास्तन्त्रम्। तथा मनोतामन्त्रस्यापीति प्राप्ते ब्रूमः। सवनत्रयगतानां पुरोडाशानां तावत्कालभेदस्तु प्रसिद्धः। क्रतुपशवः प्रातरालभ्यन्ते। प्राजापत्यास्तु पर्यग्निकृताश्चिरं विलम्ब्य ब्रह्मसामकाल आलभ्यन्ते। द्वयोः कृष्णग्रीवयोर्मध्ये सौम्यः पशुरालभ्यते। ततः सर्वत्र कालभेदेनानुष्ठानभेदात्तदङ्गभूतमन्त्राणामावृत्तिः।

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे
एकादशाध्यायस्य चतुर्थः पादः।

—०—

समासोऽयं तन्त्राध्याय एकादशः।
प्रमाणभेदाङ्गाङ्गित्व प्रयुक्तिक्रमयोग्यता।
अतिदेशविशेषोह बाधतन्त्रप्रसक्तता॥ २७॥
इति न्यायमालायामेकादशाध्यायः समाप्तः।

---

# अथ द्वादशोऽध्यायः।

---

तन्त्रं द्वयोद्देशकत्वादेकादश उदीरितम्।
प्रसङ्गोऽन्योद्देशकत्वात्तदन्यः सम्प्रोच्यते॥

अभ्यर्हितं पूर्वमिति न्यायमाश्रित्य तन्त्रप्रसङ्गप्रतिपादकयोरेकादशद्वादशाध्याययोः पूर्वोत्तरभाव उपपादितः। तन्त्रप्रसङ्गयोर्लक्षणभेदोऽप्यनेन सूचितो भवति। उभयोद्देशेन सकृदनुष्ठानं तन्त्रम्। अन्योद्देशेनान्यदीयस्यापि सहानुष्ठानं प्रसङ्ग इति तद्भेदः। तस्य प्रसङ्गस्य प्रतिपादके द्वादशाध्याये प्रथमाधिकरणमारचयति।

पश्वर्थानुष्ठितैर्नास्ति पुरोडाश उपक्रिया।
अस्ति वा विध्यभावान्नो ह्यर्थतस्त्वस्तु लोकवत्॥ १॥

अग्नीषोमीये पशौ यानि चोदकप्राप्तानि प्रयाजादीन्यङ्गानुष्ठितानि तैः पशुपुरोडाशे उपकारो नास्ति।

कुतः। उपकारबोधकस्य विधेरेव भावात्। चोदकम् दर्श-पूर्णमासवत् पशुरनुष्ठेय इत्येवं रूपत्वात् पशावेव तदुप-कारं बोधयति। ननु पशुपुरोडाशस्यापीष्टिविकृतित्वात् तत्रापि चोदकोऽस्तीति चेत् बाढम्। अतएव भिन्नचोदक-बलात् पुरोडाशोपकाराय प्रयाजाद्यङ्गानि पृथगनुष्ठेयानि इति प्राप्ते ब्रूमः। यद्यपि पश्वर्थैः पुरोडाशस्योपकार इत्येतादृशं शास्त्रं नास्ति तथाप्ययमुपकारोऽर्थप्राप्तो न निवारयितुं शक्यते। यथा प्रदीपस्य वेदिकार्थं निर्मित-स्यार्थसिद्धं मार्गप्रकाशकत्वमनिवार्य्यं तथा पशुतन्त्रमध्येऽ-नुष्ठीयमानस्य पुरोडाशस्य पश्वर्थैरङ्गैरुपकारः केन वार्य्येत। तस्मादन्यार्थैरप्यस्तूपकारः।

द्वितीयाधिकरणमारचयति।

आज्यभागौ पुरोडाशे नस्तः स्तोवास्य चोदकः।
लुप्तस्ततो नतौ मैवं प्रयोगांशस्य लोपनात्॥ २॥

तौ न पशौ करोतीति निषेधादाज्यभागयोः पशाव-भावे पुरोडाशे प्रसङ्गसिद्धिर्नास्ति। ततस्तौ विचार्य्येते। तत्र पुरोडाशे आज्यभागौ नस्त इति। तावत् प्राप्तम्। कुतः। पुरोडाशविषयस्य चोदकस्य लुप्तत्वात्। अन्यथा प्रयाजादीनामपि पुनरनुष्ठानापत्तेरिति प्राप्ते ब्रूमः। न तावत् पुरोडाशे चोदको लुप्यते। बाधकाभावात् पूर्वोक्त-प्रसङ्गसिद्धिस्तु प्रयोगवचनमेव बाधते। न चोदकम्। अन्यथा प्रयाजादीनां पुरोडाशाङ्गत्वाभावे न प्रसङ्गसिद्धि-रप्य वक्तव्यत्वात्। ननु प्रयोगबाधेऽप्याज्यभागौ नस्त इति चेत्। न। आज्यभागौ प्रतिबाधिकायाः प्रसङ्गसिद्धेरभा-

वात्। ततः प्रसङ्गसिद्धाङ्गविषयप्रयोगांशस्यैव बाधाद्वा धितेन प्रयोगवचनेनांशेनान्यभागावनुष्ठाप्येते। यथा देवदत्ते यज्ञदत्त यानसमारूढे देवदत्तयानं निवर्त्तते न तु वस्त्रालङ्करणादिसाधनम्।

तृतीयाधिकरणमारचयति।

सोमे वेद्यां कृतायां यदिष्टिप्रकृतिकं भवेत्।

तत्र कार्य्यैष्टिकी वेदिर्न वा वेदिस्तु सौमिका॥ ३॥

प्रचाराय हविः सादनार्थकार्य्यैष्टिकी पृथक्।

नैवं सादनमप्यत्र कर्त्तुं शक्यं ततो न सा॥ ४॥

साङ्गप्रधानहविः प्रचाराय कृतायां सौमिक्यां महावेद्यामेवेष्टिप्रकृतिकहविषां सादयितुं शक्यत्वात् पृथगैष्टिकी वेदिर्न कार्य्या।

चतुर्थाधिकरणमारचयति।

सौम्यचर्वादिहोमः किं सौमिकैरैष्टिकैरुत।

कार्य्यसिद्धौ सौमिकैः स्यादवैगुण्यादिहैष्टिकैः॥ ५॥

सोमे ग्रहचमसेषु प्रवर्त्तमाने सौम्यचरौ सवनीयपुरोडाशेषु च सौमिकैर्ग्रहचमसैर्होमः। कुतः। तैर्होतुं शक्यत्वेन कार्य्यसिद्धेरिति। नैवम्। वैगुण्यप्रसङ्गात्। जुहूस्रुवादिभिः कर्त्तव्यस्य ग्रहादिभिर्वैगुण्यं स्यात्। विद्यन्ते सोमे प्रयुक्ता ऐष्टिकास्तु वादयः तस्मादवैगुण्यार्थमैष्टिकैर्होमः।

पञ्चमाधिकरणमारचयति।

अग्न्यः पशुपुरोडाशः शामित्रेऽन्वाहार्य्यदिते।

शालामुखीय नाम्नायः पश्तन्त्रगतत्वतः॥ ६॥

श्रपणं विहितं गार्हपत्ये सोऽत्र प्रयुज्यते ।
प्राग्वंशपूर्वभागेऽत्रपाको वैगुण्यहानये ॥ ७ ॥

अग्नीषोमीयादिपशुः शामित्रेऽग्नौ श्रप्यते ततः पशुतन्त्रमध्यपाती पशुपुरोडाशोऽपि तत्रैव श्रपणीय इति चेन्मैवम् । प्रकृतौ पुरोडाशश्रपणं गार्हपत्ये विहितम् । स च गार्हपत्यः सोमे प्रयुक्तः प्राचीनवंशशालायाम् अन्तः पूर्वभागे प्रवर्त्तमानस्य शालामुखीय नाम्नाभिहितस्य पूर्वप्रसिद्धहवनीयस्योत्तरवेदिनिष्पत्तेरूर्ध्वं गार्हपत्यत्वात् । तस्मादवैगुण्याय तत्र श्रपयितव्यम् ।

षष्ठाधिकरणमारचयति ।

शालामुखीयवह्नौ किं श्रप्यतां कौण्डपायिने ।
किं वा प्राजहिते वह्नौ चोदकप्रापितोऽग्रिमः ॥ ८ ॥
प्राग्वंशे पश्चिमो वह्निर्भवेत् प्रजहितोऽत्र सः ।
अग्निहोत्रेति नाम्नासौ नामासौ लिङ्गतो बलौ ॥ ९ ॥

कुण्डपायिनामयनगतेऽग्निहोत्रे यच्छ्रपणं तच्छालामुखीये कर्त्तव्यम् । कुतः । चोदकेन प्राप्तत्वात् । तथा हि । प्रकृतिभूतेऽग्निहोत्रे गार्हपत्ये श्रपणं विहितम् । शालामुखीयश्च पूर्वमाहवनीयोऽपि सोमे गार्हपत्यः सम्पन्नः । शालामुखीय एपीत ऊर्ध्वं गार्हपत्य इति श्रुतेः । स च द्वादशाहर्गणसत्रागवामयनपरम्परया चोदकेनात्र प्राप्तः । तस्मात्तत्र श्रपणमिति प्राप्ते ब्रूमः । प्राचीनवंशे पश्चिमवह्निः पूर्वप्रसिद्धमुख्यगार्हपत्यस्य प्राजहित इति पूर्वाचार्य्यसंज्ञा । स च प्राजहितोऽग्निहोत्रनाम्ना अतिदिश्यते । नामातिदेशश्च

ओप्रबृंहितया लिङ्गातिदेशात् प्रबल इति वक्तव्यम्। तस्मात् प्राजहिते अपणम्।

सप्तमाधिकरणमारचयति।

हविर्धानोर्ध्वं काले किमौषधार्थमनोन्तरम्।

नास्त्यस्ति वा न शकत्वाद्देशभेदादिनान्तिमः॥ ८॥

ज्योतिष्टोमे हविर्धाननामकयोः शकटयोः प्रवर्त्तनादूर्ध्वं मौषधद्रव्यकानां पुरोडाशानां निर्वापाय तयोरेकशकत्वाद् शकटान्तरमन्वेष्यमिति चेत्। न। देशभेदात्। महावेद्यां मन्त्रपूर्वकं प्रवर्त्य हविर्धानमण्डपेऽवस्थापिते। निर्वापस्तु गार्हपत्यात् पश्चिमे देशे। किञ्चास्त्यत्र तृतीयं शकटम्। अनांसि प्रवर्त्तयन्तीति बहुवचनोक्तेः। तस्माच्छकटान्तरे निर्वापः।

अष्टमाधिकरणमारचयति।

दीक्षाजागरयं प्रायणीयादौ तद्भवेन्न वा।

अदृष्टार्थे ततस्तत् स्यान्न रक्षार्थत्वतोऽन्यदा॥ ९॥

दीक्षाकालादन्यकाले यद्यपि प्रायणीयादिकं तथाप्यदृष्टार्थं जागरणं प्रसङ्गात् सिध्यतीति चेत्। न। तस्य रक्षार्थत्वात्। ततः कालान्तरे पृथक् कर्त्तव्यम्।

नवमाधिकरणमारचयति।

विहारभेदे निर्वापमन्त्रादेस्तन्त्रता न वा।

तन्त्रयोः स्मृतेः सिद्धेरुत्तमोक्त्या पृथग्भवेत्॥ १०॥

वरुणप्रघासेषु अध्वर्युप्रतिप्रस्थात्रोर्विहारभेदेऽपि मन्त्रेष्वेकेनैव पठ्यमानेषूभयोरर्थात् स्मृतिसिद्धेस्तन्त्रमिति चेत्।

श्रपणं विहितं गार्हपत्येऽत्र प्रयुज्यते ।
प्राग्वंशपूर्वभागेऽत्रपाको वैगुण्यहानये ॥ ७ ॥

अग्नीषोमीयादिपशुः शामित्रेऽग्नौ श्रप्यते ततः पशुतन्त्रमध्यपाती पशुपुरोडाशोऽपि तत्रैव श्रपणीय इति चेन्मैवम् । प्रकृतौ पुरोडाशश्रपणं गार्हपत्ये विहितम् । स च गार्हपत्यः सोमे प्रयुक्तः प्राचीनवंशशालायाम् अन्तः पूर्वभागे प्रवर्त्तमानस्य शालामुखीय नाम्नाभिहितस्य पूर्वप्रसिद्धहवनीयस्योत्तरवेदिनिष्पत्तेरूर्ध्वं गार्हपत्यत्वात् । तस्माद्वैगुण्याय तत्र श्रपयितव्यम् ।

षष्ठाधिकरणमारचयति ।

शालामुखीयवह्नौ किं श्रप्यतां कौण्डपायिने ।
किं वा प्राजहिते वह्नौ चोदकप्रापितोऽग्रिमः ॥ ८ ॥
प्राग्वंशे पश्चिमो वह्निर्भवेत् प्रजहितोऽत्र सः ।
अग्निहोत्रेति नाम्नासौ नामातो लिङ्गतो बलौ ॥ ९ ॥

कुण्डपायिनामयनगतेऽग्निहोत्रे यच्छ्रपणं तच्छालामुखीये कर्त्तव्यम् । कुतः । चोदकेन प्राप्तत्वात् । तथा हि । प्रकृतिभूतेऽग्निहोत्रे गार्हपत्ये श्रपणं विहितम् । शालामुखीयश्च पूर्वमाहवनीयोऽपि सोमे गार्हपत्यः सम्पन्नः । शालामुखीय एषोत ऊर्ध्वं गार्हपत्य इति श्रुतेः । स च द्वादशाहगणसत्रागवामयनपरम्परया चोदकेनात्र प्राप्तः । तस्मात्तत्र श्रपणमिति प्राप्ते ब्रूमः । प्राचीनवंशे पश्चिमवह्निः पूर्वप्रसिद्धमुख्यगार्हपत्यस्य प्राजहित इति पूर्वाचार्य्यसंज्ञा । स च प्राजहितोऽग्निहोत्रनाम्ना अतिदिश्यते । नामातिदेशश्च

शीघ्रबुद्धितया लिङ्गातिदेशात् प्रबल इति वक्तव्यम्। तस्मात् प्राजहिते श्रपणम्।

सप्तमाधिकरणमारचयति।

हविर्धानोर्ध्वकाले किमौषधार्थमनोऽन्तरम्।

नास्त्यस्ति वा न शक्तत्वाद्देशभेदादिनाऽन्तिमः॥ ८॥

ज्योतिष्टोमे हविर्धाननामकयोः शकटयोः प्रवर्त्तनादूर्ध्वमौषधद्रव्यकानां पुरोडाशानां निर्वापाय तयोरेव शक्तत्वान्न शकटान्तरमन्वेष्यमिति चेत्। न। देशभेदात्। महावेद्यां मन्त्रपूर्वकं प्रवर्त्य हविर्धानमण्डपेऽवस्थापिते। निर्वापस्तु गार्हपत्यात् पश्चिमे देशे। किञ्चास्त्यत्र तृतीयं शकटम्। अनांसि प्रवर्त्तयन्तीति बहुवचनोक्तेः। तस्माच्छकटान्तरे निर्वापः।

अष्टमाधिकरणमारचयति।

दीक्षाजागरणं प्रायणीयादौ तद्भवेन्न वा।

अदृष्टार्थं तनस्तत् स्यान्न रक्षार्थत्वतोऽन्यदा॥ ९॥

दीक्षाकालादन्यकाले यद्यपि प्रायणीयादिकं तथाप्यदृष्टार्थं जागरणं प्रसङ्गात् सिध्यतीति चेत्। न। तस्य रक्षार्थत्वात्। ततः कालान्तरे पृथक् कर्त्तव्यम्।

नवमाधिकरणमारचयति।

विहारभेदे निर्वापमन्त्रादेस्तन्त्रता न वा।

तन्त्रद्वयोः स्मृतेः सिद्धेस्तन्त्रता पृथगभवेत॥ १०॥

वरुणप्रघासेषु अध्वर्युप्रतिप्रस्थात्रोर्विहारभेदेऽपि मन्त्रेष्वेकेनैव पठ्यमानेषूभयोरर्थात् स्मृतिसिद्धेस्तन्त्रमिति चेत्।

न। निर्वपामीत्युत्तमपुरुषार्थस्य पाठमन्तरेण स्मृत्यभावात्। तस्मादुभयोः पृथक् पाठः।

दशमाधिकरणमारचयति।

अन्वाधानं दीक्षणीयादिषु स्यान्नास्ति वास्ति तत्।
चोदकान्नास्ति सौमिक्यविहारेण धृतत्वतः॥ ११ ॥

दीक्षणीयादिष्वन्वाधानं कर्त्तव्यं चोदकप्राप्तत्वादिति चेत्। न। अग्निधारणार्थमन्वाधानं तत्धारणं दीक्षणीयादिभ्यः प्राचीनेन सौमिकेनैव विहरणेन सिद्धन्तस्मादन्वाधानं नास्ति।

एकादशाधिकरणमारचयति।

व्रतोपायनमेष्वस्ति न वा चोदकतोऽस्ति तत्।
उपेतस्या परित्यागे विरोधान्नास्ति तत् पुनः॥ १२ ॥

सत्यवचनब्रह्मचर्यादिसङ्कल्परूपं व्रतं सोमार्थं पूर्वमुपेतम्। तच्चासोमसमाप्तेर्न परित्यक्तव्यम्। तत पुनरुपायनं विरुध्यते। अग्ने व्रतपते व्रतं चरिष्यामीत्ययमुपायनमन्त्रः। न हि चर्य्यमाणव्रते चरिष्यामीति प्रयोगः सम्भवति। तस्मात् प्रसङ्गसिद्धं व्रतम्॥

द्वादशाधिकरणमारचयति।

परिग्रहाय देवानामन्वाधानं भवेन्न वा।
असिद्धत्वात् भवेत् नैवं वैश्वदेवेन सिद्धितः॥ १३ ॥

धारणार्थमन्वाधानं प्रसङ्गात् सिध्यतु नाम देवतापरिग्रहार्थन्तु सिद्धत्वात् पुनः कर्त्तव्यम्। अन्वाधानमन्त्रस्य देवतापरिग्रहार्थत्वमपि दर्शपूर्णमासयोराम्नायते। ममाग्ने वर्चोविहवेष्वस्त्वित्यग्निं गृह्णातीति। नैतद्युक्तम्। देवता-

रिग्रहस्याप्यत्र विद्यमानत्वात्। तथा च श्रूयते। आग्ना वै-
ष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणोऽग्निरवमो देवानां
विष्णुः परमो यदाग्ना वैष्णवमेकादशकपालं निर्वपति।
देवता एवोभयतः परिगृह्य दीक्षत इति प्रधानदेवताना-
मेवात्र परिग्रहो नाङ्गदेवतानामिति चेत्। एवमपि विश्व-
देवतापरिग्रहेण सर्वदेवतापरिग्रहः सिध्यति। विश्वशब्दस्य
सर्वशब्दपर्य्यायत्वात्। तस्मान्न पृथगन्वाधानम्।

त्रयोदशाधिकरणमारचयति।

पत्नीसन्नहनं कार्य्यं चोदकादिति चेन्न तत्।

बन्धवासोधारणयोर्योक्त्रबन्धेन सिद्दित ॥ १४ ॥

यद्यदृष्टार्थं बन्धः यदि वासो धारणं दृष्टप्रयोजनम्।
तदुभयमपि सौमिकेन योक्त्रबन्धनेन सिध्यति। योक्त्रेण
पत्नीं सन्नह्यतीति सोमे विधीयते तस्मात् प्रसङ्गसिद्धं पत्नी-
सन्नहनम्।

चतुर्दशाधिकरणमारचयति।

आरण्याशनमत्रास्ति चोदकप्राप्तितो यदि।

क्रत्वर्थत्वेन तत्सिद्धं सोमप्राप्तासवः व्रतात् ॥ १५ ॥

स्पष्टोऽर्थः।

पञ्चदशाधिकरणमारचयति।

यजमानगता भक्षा न सन्त्यारण्यवद् यदि।

न क्रत्वर्था इमे किन्तु कर्त्तव्याः प्रतिपत्तये ॥ १६ ॥

इडाप्राशित्रभक्षाणां प्रतिपत्त्यर्थत्वं षष्ठे निरूपितम्।

षोड़शाधिकरणमारचयति।

अन्वाहार्य्योऽत्र दातव्यो न वाद्यः सोममात्रगाः।

गवादिदक्षिणाः यज्ञाधानान्यतरवर्जनात् ॥ १७ ॥

गौश्चाश्वश्चेत्यादिदक्षिणाः प्रधानस्यैव न त्वङ्गानां दक्षिणाः सोमस्येत्यभिधानात्। अत इष्टिषु चोदकप्राप्तोऽन्वाहार्य्यो दातव्यः।

सप्तदशाधिकरणमारचयति।

ऋत्विग्भक्ता निवर्त्तेरन् यद्यन्वाहार्य्यवन्न तत्।

यजमानवदेतेषां कार्य्यत्वात् प्रतिपत्तये ॥ १८ ॥

इदञ्च प्रतिपत्त्यर्थत्वं दशमाध्याये वर्णितम्।

अष्टादशाधिकरणमारचयति।

नैतासु वरणं होतुरस्ति वा नत्यभावतः।

नास्त्यन्वाहार्य्यवद्धर्मं कृत्वाऽन्येष्टिवद्भवेत् ॥ १९ ॥

यथैतास्विष्टिषु पृथगानत्यभावादन्वाहार्य्यो नास्ति। तथा होतुर्वरणमपि नास्तीति चेत्। न। वरणस्य धर्मार्थत्वात्। दर्शपूर्णमासेऽष्टावपि धर्मार्थमेव वरणम्। वरणात् प्रागपि सामिधेनीषु होतुः प्रवृत्तत्वान्न हि प्रवृत्तस्य पुनरानतिः कर्त्तव्या। तस्मात् प्रकृताविवात्रापि धर्मार्थमेव वरणं कार्य्यम्। नत्यानत्यर्थेन सौमिकवरणेनास्य प्रसङ्गसिद्धिः।

एकोनविंशाधिकरणमारचयति।

आतिथ्यादिगते बर्हिष्युक्षणादि पृथक् न वा।

आद्योऽन्यप्रसक्तत्वान्न प्रसङ्गा निवारणात् ॥ २० ॥

यदातिथ्यायां बर्हिस्तदुपसदामग्नीषोमीयस्येति श्रुतम्। तच्च बर्हिस्त्रयाणां साधारणमिति चतुर्थे निरूपितम्। तस्मिन् साधारणे बर्हिषि प्रोक्षणादिसंस्कारः

प्रतिकर्म पृथगनुष्ठेयः। कुतः। तन्त्रप्रसङ्गयोरसम्भवात्। न तावत्तन्त्रमस्ति। दर्शयागवयवदेककालीनत्वाभावात्। नापि प्रसङ्गः। एकस्य तन्त्रमध्येऽन्ययोरपठितत्वादिति प्राप्ते ब्रूमः। बर्हिष एकत्वात् सकृत्प्रोक्षणादिभिः संस्कारे पुनः प्रोक्षणाद्यपेक्षा नास्ति। ते च प्रोक्षणादयः प्राधम्यादातिथ्यायां कर्त्तव्याः। तत उपसत्स्वग्नीषोमीये च प्रसङ्गसिद्धिं निवारयितुं शक्यते।

विंशाधिकरणमारचयति।

तन्नस्तरणमन्त्रस्य प्रसङ्गो यदि वा भिदा।

आद्यः प्रोक्षणवन्मैवं देशस्तरणभेदतः॥ २१॥

तस्मिन्नातिथ्या बर्हिषि ऊर्णाम्रदसन्त्वास्तृणामीति य आस्तरणमन्त्रस्तस्याग्नीषोमीये प्रसङ्गसिद्धिः स्यात्। प्रोक्षणादौ तद्दर्शनादिति चेत्। मैवम्। आतिथ्यायाः प्राग्वंशो देशः। अग्नीषोमीयस्योत्तरवेदिः। ततो देशभेदेन स्तरणभेदे सति तत् सन्निपातिनो मन्त्रस्याप्यावर्त्तनीयत्वात्।

एकविंशाधिकरणमारचयति।

सन्नाहे हरणे मन्त्रा वावर्त्यो किं न वाग्रिमः।

पूर्ववद्देशभेदस्तु कार्य्यं प्रकृतौ तदभावतः॥ २२॥

आतिथ्यादेशे सन्नतं बर्हिः सन्नाग्नीषोमीयदेशे यदा नीयते तदा सन्नयने हरणे चेन्द्राण्यै सन्नहनं बृहस्पतेर्मूर्ध्ना हरामीति यौ मन्त्रौ तौ स्तरणवदावर्त्तनीयाविति चेत्। मैवम्। प्रकृतौ लवनदेशादानयने कार्य्यौ तौ मन्त्रौ दृष्टौ न तु गार्हपत्यादाहवनीयं प्रत्यानयने। अतोऽ-

अत्रापि प्राग्वंशादुत्तरवेदिं प्रत्यानयने तौ मन्त्रौ न चोद-
कात् प्राप्नुतः।

इति माधवीये जैमिनीयन्यायमालाविस्तरे द्वादशा-
ध्यायस्य प्रथमः पादः समाप्तः।

---

द्वितीयपादे प्रथमाधिकरणमारचयति।

सर्वार्थो वैदिकार्थो वा विहारः शक्तिमत्त्वतः।

आद्यः प्रत्यक्षवचनैर्निराकाङ्क्षत्वतोऽन्तिमः॥ १॥

विहारो गार्हपत्यादिस्त्रिविधोऽग्निः स च शक्तत्वाल्लौ-
किकदहनपचनवैदिकाग्निहोत्रादिव्यवहारार्ह इति चेन्मै-
वम्। गार्हपत्ये हवींषि श्रपयन्ति दक्षिणाग्नावन्वाहार्यं
पचत्या हवनीये जुह्वतीत्येवं तादृशैः प्रत्यक्षवचनैर्निरा-
काङ्क्षाणां गार्हपत्यादीनां लौकिकत्वायोगात्। तस्मा-
दग्निहोत्रादिवैदिकार्थो विहारः।

द्वितीयाधिकरणमारचयति।

सवनीये पुरोडाशोऽतिदिष्टो नीत विद्यते।

अन्ये: पिधानतो न स्यादेव संस्कृतये भवेत्॥ २॥

अग्नीषोमीये पशौ विहितो यः पुरोडाशः सच्छिद्र-
पिधानार्थः। सुषिरोह वा एतर्हि पशुर्वर्हिर्वपामुत्खिद-
त्तितयद्व्रीहिमयः पुरोडाशो भवत्यपि हित्यात्स्यच्छिद्र-
ताया इति श्रुतेः। स च पुरोडाशः सवनीये पशौ चोदक-
प्राप्तोऽपि न कर्त्तव्यः। सवनीयैर्विहितैरेव पुरोडाशैस्त-

च्छिद्रपिधानादनुसवनं सवनीयाः पुरोडाशा निरूप्यन्ते- ऽपिहित्वा अच्छिद्रताया इत्युक्तत्वादिति प्राप्ते ब्रूमः। पुरोडाशस्य पशुदेवतासंस्कारार्थत्वं दशमस्य प्रथमे पादे निरूपितम्। पिधानवाक्यं त्वर्थवादः। तस्मात्सोदकप्राप्तः पुरोडाशः कर्त्तव्यः।

तृतीयाधिकरणमारचयति।

सवनीये पुरोडाशे स्यादाहृतिर्हविष्कृतः।

न वातिदेशात् स्यात् नैवं पश्वाह्वानात् प्रसक्तितः ॥३॥

पशौ कृतेन हविष्कृदाह्वानेन पुरोडाशादिष्वपि प्रसक्तत्वान्नास्याह्वानम्। यद्यप्यौषधार्थं हविष्कृदाह्वानं पशौ नास्ति तथाप्येषा कृत्वाचिन्तास्तु।

चतुर्थाधिकरणमारचयति।

अस्त्याहृतिश्चरौ सौम्ये नास्ति वा पशुपाकतः।

निवृत्तत्वादस्ति नैव सनिवृत्तेः पुरःस्थितेः ॥ ४ ॥

तृतीयसवने ये सौम्य चर्वादयस्तेषु हविष्कृदाह्वानं पुनः कर्त्तव्यम्। सकृदाहूतायास्तस्याः पशुपाके निष्पन्ने सति निवृत्तत्वादिति चेत् नैवम्। प्रकृतौ पर्य्याग्निकरणादूर्ध्वं हविष्कृतः पत्न्या उत्थानं वाक्येन विहितम्। पश्वावपि ततः पूर्वं निवृत्त्यभावात्। तस्मात् तत्कालीनेषु सौम्यचर्वादिषु नास्ति पुनराह्वानम्।

पञ्चमाधिकरणमारचयति।

निमि यक्ष्ये दर्शतन्त्रनीतास्त्येतन्न दार्शिके।

तन्त्रमध्ये विध्यभावादन्यार्थात्तद्विधानतः ॥ ५ ॥

अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेद्यो रक्षोभ्यो बिभीयादिति विधायेदमाम्नातममावास्यायां निशि इज्येतेति तस्मिन् यज्ञे दर्शयागस्याङ्गतन्त्रं न प्रसज्यते। कुतः। दर्शकर्मणस्तन्त्रमध्येऽस्य रक्षोघ्नस्य विध्यभावात्। यत्तु अत्रामावास्यायामितिपदं तत्कालपरम्। कर्मपरत्वे लक्षणापत्तेः। अतो न वाक्यात्तन्त्रमध्ये विधिः। प्रकरणात्तु भिद्यते। काम्येष्टि काण्डे एतस्य पाठादिति प्राप्ते ब्रूमः। माभूद्वाक्येन प्रकरणेन वा तन्त्रमध्ये विधिः। तथाप्यमावास्याकाले दर्शकर्मणः प्रक्रान्तत्वेन निशि क्रियमाणो यागोऽर्थवशाद्दर्शकर्म तन्त्रमध्यपाती भवति। तस्मादस्ति प्रसङ्गसिद्धिः।

षष्ठाधिकरणमारचयति।

आरम्भणीया सौर्यादौ नो तस्यान्न प्रयोगवत्।
क्रत्वर्था न प्रयोगार्था क्रत्वारम्भे ततो भवेत्॥ ६॥

दर्शपूर्णमासयोः प्रथमप्रयोगस्यैवोपक्रमे आरम्भणीया न प्रयोगान्तरस्येति नवमे निर्णीतम्। आदौ कृतस्य कर्तृसंस्कारस्य यावज्जीवपर्यासत्वात् यथा न प्रयोगान्तर आरम्भणीया तथा यावज्जीवलक्षणप्रकृतिकालमध्यपातिनीनां सौर्यादिविकृतीनां नास्ति तदपेक्षेति प्राप्ते ब्रूमः। दर्शपूर्णमासा वा रप्स्यमाना इत्युक्तत्वात् क्रत्वर्था हि सा न तु प्रयोगार्था। क्रत्वन्तराणि हि सौर्यादीनि। ततः प्रयोगान्तरे वैषम्यात् सौर्यादौ सा कर्त्तव्या। न यावज्जीवकालः प्रकृत्यङ्गं कर्तृधर्मत्वेन द्वितीये निर्णीतत्वादतो रक्षोघ्नन्यायोऽत्र प्रसरति। तस्मान्नास्त्यत्र प्रसङ्गः।

सप्तमाधिकरणमारचयति।

या पञ्चदशरात्रस्य सुब्रह्मण्याह्वकालगा।
आग्नेयी स्यात् किमैन्द्री वा प्रथमाह्वानुगुण्यतः॥ ७॥
आग्नेयी प्रथमं, चाह्नो विरोधादुदयाद्दलो।
न बह्वनुग्रहादैन्द्री कुलार्थत्यागनीतितः॥ ८॥

पञ्चदशरात्रस्याग्निष्टुत्प्रथममहस्तस्यैकाहरूपोऽग्निष्टुत्-प्रकृतिस्तत्रोपसत्कालीन सुब्रह्मण्याह्वानार्थमियमाग्नेयी विहिता। तदेतद्विकृतिरूपे प्रथमेऽहनि चोदकतः प्राप्नोति। इतरेषु चतुर्दशस्वहःसु स्वस्वप्रकृत्यनुसारेणैन्द्री-प्राप्ता। उपसत्कालीन सुब्रह्मण्या अहर्गणेषु तन्त्रं निर्णीतम्। तथा सत्युपसत्कालीन सुब्रह्मण्यायामा-ग्नेय्यैः कलहप्रामाण्यमज्ञातविरोधितया प्रबलस्य प्रथम-स्याह्न आनुगुण्येनाग्नेयी सर्वत्र कार्येति प्राप्ते ब्रूमः। बहूनामह्नामनुग्रहायैन्द्री कार्य्या। त्यजेदेकं कुलस्यार्थे इति न्यायेन बहुत्वमिति प्राबल्यकारणम्। इदमेवाधिकरणं वार्त्तिककाराभिमतेनोदाहरणेन रचयति।

सप्तयागसमहस्य इधन्वत्या इचावत।
वार्त्रघ्नावाज्यभागार्थे प्रथमत्वाद्दर्धीन्द्रयोः॥ ९॥
दर्शधर्मातिदेशेन प्राप्त आद्योऽन्तिमो यतः।
घृतमध्वाप इत्येषां बहूनां बलितो चिता॥ १०॥

काम्येष्टिकाण्डे श्रूयते। अग्नये दात्रे पुरोडाशमष्टाक-पालं निर्वपेदिन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं दधि-मधुघृतमापोधानास्तत्संसृष्टं प्राजापत्यं पशुकामं इत्येतेषाञ्च सप्तयागानां प्रयोगैक्यादाज्यभागौ तन्त्रेणानुष्ठेयौ। तयोः

न्द्रयाग ऐन्द्राग्नविकृतिः। दधियागः सान्नाय्यविकृतिः। तदुभयानुसारेण दर्शधर्मातिदेशादाज्यभागयोः पुरोऽनुवाक्ये वृधन्वत्यौ ऋचौ प्राप्नुतः। मधुघृतमापं इत्येतत् द्रव्यकास्त्रयोयागा उपांशुयाजविकृतयस्तदनुसारेण पूर्णमासधर्मातिदेशाद्वार्त्रघ्न्यौ ऋचौ प्राप्नुतः। तत्रैन्द्रयागः प्राजापत्ययागात् पूर्वं पठितः। दधिद्रव्यञ्च मधुघृतोदकद्रव्येभ्यः पूर्वं पठितम्। अतः। प्राबल्यात् वृधन्वत्याविति प्राप्ते ब्रूमः : यद्यपि धर्मो मुख्यस्य प्रथममवगम्यते। तथापि भूयसामनुग्रहाय पश्चाद्बाध्यते तस्माद्वार्त्रघ्न्यौ।

अष्टमाधिकरणमारचयति।

आग्नावैष्णवसारस्वतयोरिच्छाथ मुख्यगम्।
आद्यो नियामकाभावादन्त्यः प्राथम्यतो भवेत्॥ ११॥

आग्नावैष्णवमेकादशकपालं निर्वपेत् सरस्वतीमाज्यस्य यजेतेति श्रूयते। तत्राग्नावैष्णवस्य ऐन्द्राग्नविकृतित्वेन सारस्वताज्यस्य चोपांशुयाजविकृतित्वेन पश्चात्तेन पूर्वत्वनियामकस्य बहुत्वस्याभावादिष्टयाज्यभागमन्त्रविकल्पो नियामकाभावादिति चेत्। नैवम्। आग्नावैष्णवस्य प्रथमपठितत्वेन मुख्यत्वात् तज्जमनुष्ठानं युक्तम्।

नवमाधिकरणमारचयति।

य इष्ट्या पशुनेत्यादौ दीक्षाकालोऽथ सोमकः।
आद्यः प्राथम्यतो नैवं प्रधानस्य बलित्वतः॥ १२॥
दीक्षापर्वणि वा सुत्या दीक्षा स्यात् प्रथमत्वतः।
सुत्या प्राधान्यतोऽन्या तु शेषत्वादपकृष्यते॥ १३॥

य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां

पौर्णमास्यां वेति श्रूयते। तत्राङ्गभूताया दीक्षणीयेष्टेः प्रधानभूतायाः सुत्यायाश्चैकमेव पर्वदिनं वचनाद् भासते तच्च विरुद्धम। एका दीक्षा तिस्र उपसदः पञ्चमी प्रसुत इत्युपसद्भिस्तयोर्मध्ये व्यवधानावगमात् तत्र पूर्वोक्तान्वावेषणवन्न्यायेनेष्टिः प्रथमपठितत्वाद्दीक्षणीयेष्टिः पर्वण्यनुष्ठेया। तदनुसारेण दिनान्तरेषु सुत्याया उत्कर्ष इति प्राप्ते ब्रूमः। प्रधानत्वात् सुत्यैव दर्शेऽनुष्ठेया। तदनुसारेण शेषभूता दीक्षा दिनान्तरेऽपकृष्यते।

दशमाधिकरणमारचयति।

पश्वर्थपरिधौ स्वीयधर्मो वद्दा द्विधर्मता।
मुख्यत्वादादिमोऽस्य: स्याद्वियोजनविधानतः॥ १४॥

पशुमत्सु चातुर्मास्येषु परिधौ पशुं नियुञ्जीतेति श्रूयते। तत्र संमार्गादयः परिधेः स्वकीयधर्मास्त एव मुख्यत्वात् तस्मिन्ननुष्ठेया न तु प्रोक्षणादयो यूपधर्माः। तेषां परिधिं प्रति अमुख्यत्वादिति प्राप्ते ब्रूमः। यथाग्निपरिधानार्थत्वेन मार्जनादीनां परिधिधर्माणाम् अनुष्ठानं तथा यूपकार्ये नियोजने परिधिविधानेन यूपधर्माणां प्रोक्षणादीनामप्यनुष्ठानं युक्तम्। ततो द्विधर्मत्वम्।

एकादशाधिकरणमारचयति।

विरोधितक्षणाद्यत्र कार्यं नो वा यतो यजौ।
यूपाः सन्तिस्ततः कार्यं न तद्रूपोपमर्दनात्॥ १५॥

त्वक्सहितत्वप्रवालत्वादयः परिधिधर्माः। तेषां विरोधिनस्तक्षणोच्छ्रयणादयो यूपधर्माः। ते च यागे प्रत्यासन्नाः। यागनिष्पादकस्य पशोरङ्गे यूपे वर्त्तमानत्वात्। त्वक्सहितत्वादयस्तु न। यागनिष्पादकं हविः

हविषामाधारोऽग्निः। अग्नेरङ्गं परिधिः। परिधौ च वर्त्तमानत्वात्। तस्मात्तक्षणादयः कार्य्या इति प्राप्ते ब्रूमः। तक्षणादिना परिधिस्वरूपे नष्टे सति कुत्र पशुनियोजनं क्रियेत। तस्मान्न कार्य्याः।

द्वादशाधिकरणमारचयति।

सवनीयपुरोडाशाः प्रातः सवनगास्त्रयः।
सवनीयपशुस्तत्र तन्त्रित्वं किं विकल्पते ॥ १६ ॥
पशोरेवेति नियमो हेत्वभावाद्विकल्पनं।
पुनः प्रैषात् स्वरुप्राप्ता पशोरेव हि तन्त्रिता ॥ १७ ॥

यदीयतन्त्रमध्ये अर्थान्तरं स तन्त्री। अर्थान्तरं प्रसङ्गि। तथा सति प्रातःकालीनसवनीयपुरोडाशानां सवनीयपशोश्च मध्ये तन्त्रित्वमस्यैवेति नियमे हेतुर्नास्ति। उभयत्र प्रत्यक्षसाङ्गोपदेशाभावाच्चोदकप्राप्तेश्च समानत्वान्माध्यन्दिनतृतीयसवनगतानां पशुतन्त्रमध्ये उपक्रमात् प्रसङ्गित्वमेव न तु तन्त्रित्वमिति निश्चेतुं शक्यते। पशोः प्रातःकालीनानां पुरोडाशानां चोपक्रमे पौर्वापर्य्यं न ज्ञायते। तस्माद्विकल्पेन तन्त्रित्वमेवं प्राप्ते ब्रूमः। सवनीयपशौ चोदकप्राप्ते मैत्रावरुणप्रैषमन्त्रे पाठविकारः प्रत्यक्षमाम्नायते। अयं यजमान इति पाठस्थाने सुन्वन् यजमान इति विशेषितत्वात्। तथा सोमान्ते स्वरोः प्रतिपत्तिः प्रत्यक्षमाम्नायते। संस्थिते यज्ञे प्रस्तरं प्रहरति स्वरुं वा यज्ञवेशसायेति। तस्मात् पशुस्तन्त्री। पुरोडाशानान्तूपक्रमात् पश्चाद्भावित्वाभावेऽपि समाप्तिपूर्वभावित्वनिश्चयेन मध्यपातित्वात् प्रसङ्गित्वम्।

त्रयोदशाधिकरणमारचयति ।

प्रकृतिर्विकृतिर्वास्या तन्त्रिणी प्रकृतिर्यतः ।
नित्या सा उपरिष्टाङ्गा मैवं कामबलित्वतः ॥ १८ ॥

य इष्ट्या पशुनेत्यादिशास्त्रात् प्रकृतिविकृत्योर्नित्यकाम्ययोः पर्वण्येवानुष्ठेयतया सह प्रयोगे सति यावज्जीवकर्त्तव्यत्वाद्दर्शोपदेशयुक्तत्वाच्च प्रबला प्रकृतिर्दर्शपूर्णमासेष्टिस्तन्त्रिणी । जीवनमध्यपतितत्वाच्चोदकप्राप्तोपदेशापेक्षत्वाच्च दुर्बला सौर्यादिविकृतिः प्रतन्त्रिणीति प्राप्ते ब्रूमः । कामस्य शीघ्रं प्रवर्त्तकत्वादनुष्ठाने प्रबला विकृतिरेव तन्त्रिणी । यद्यपि विकृतिरेकाहकाला प्रकृतिर्द्व्यहकाला तथापि सह प्रयोगं कृत्वापि चिन्तितम् ।

चतुर्दशाधिकरणमारचयति ।

बर्हिराग्रयणे किञ्चित् प्रसूनं वा सहत्वतः ।
प्राथम्याद्वाग्निसोमेव सन्तापात् कांस्यभोजिवत् ॥ १९ ॥

ऐन्द्राग्नवैश्वदेवद्यावापृथिवीया यागा आग्रयणेष्टौ प्रयुज्यन्ते । तत्रैन्द्राग्नवैश्वदेवयोर्बर्हिर्मात्रं चोदकप्राप्तम् । तत्प्रकृतौ बर्हिर्विशेषस्यानुक्तत्वात् । द्यावापृथिव्ये तु स्वप्रकृत्यनुसारेण प्रसूनं बर्हिरिति स्मर्यते । प्रसूनं पुष्पितं लूनशेषात् स्तम्बात् पुनरुत्पन्नं वा । तत्राग्रयणे यत्किञ्चित् बर्हिर्मात्रं कर्त्तव्यम् । ऐन्द्राग्नवैश्वदेवयोरनेकत्वेन प्राबल्येन च तदानुगुण्यस्य न्याय्यत्वादिति प्राप्ते ब्रूमः । बर्हिरन्तरस्वीकारे द्यावापृथिव्ये प्रमाणप्राप्तः प्रसूनत्वनियमो लुप्येत । प्रसूनस्वीकारे चेन्द्राग्नवैश्वदेवयोर्न किञ्चित् लुप्यते । तस्मादाग्रयणे कांस्यभोजिन्यायेन प्रसूनमेव कर्त्तव्यम् । शिष्यस्य कांस्यभोजनव्रतमस्ति गुरोस्तु तत्राभि-

तयोः सहभोजने यथोपसर्जनमपि शिष्यमनुसृत्य व्रतमलोपयितुं कांस्यमाद्रियते तथात्रापि द्रष्टव्यम्।

पञ्चदशाधिकरणमारचयति।

द्यावा पृथिव्यस्तन्त्री स्यात् सर्वं वा तन्त्रिणोऽग्निमाः।
प्रैषन्यायात् प्रसूनस्य तन्त्रित्वापादकत्वतः॥ २०॥
प्रसूनत्वं नोपदिष्टमविरोधात् समाश्रितम्।
तन्त्रित्वनियतौ युक्तं नातः सर्वेऽप्यतन्त्रिणः॥ २१॥

यथा मैत्रावरुणप्रैषमन्त्रविकारः पशुसम्बन्धी सन् पशोस्तन्त्रित्वमापादयति तथा प्रसूनत्वं द्यावा पृथिव्यसम्बन्धित्वात् द्यावा पृथिव्यस्य तन्त्रित्वमापादयतीति प्राप्ते ब्रूमः। उक्तप्रैषमन्त्रविकारः प्रत्यक्षश्रुतः। इदं प्रसूनत्वमतिदिष्टत्वान्न तन्त्रितामापादयितुं क्षमम्। न च प्राबल्याभावे कथं तदा अर्पणमिति वाच्यम्। ऐन्द्राग्नादिना सह विरोधाभावमात्रेण तदा अर्पणात्। तस्मादेकस्य तन्त्रित्वनियमाभावेनाग्नेयादिवत् सर्वेऽप्यतन्त्रिणः।

इति माधवीये जैमिनीयन्यायमालाविस्तरे
द्वादशाध्यायस्य द्वितीयः पादः।

—०—

अथ तृतीयपादे प्रथमाधिकरणमारचयति।

त्वष्टासमीरष्टरात्रे विकल्पो नियमोऽथवा।
समुच्चयो वा नामातिदेशसाम्याद्विकल्पते॥ १॥
मुख्यत्वेन त्वगेव स्याद्वास एव बहुत्वतः।

योग्यत्वेन व्यवस्थायामुभयोः स्यात् समुच्चयः ॥ २ ॥

अष्टरात्रे विश्वजित् प्रथममहः। तस्मिन् प्रकृतिभूतादेकाहाद्विश्वजितः परिधानार्थे वत्सत्वक् प्राप्नोति। नाम्नातिदेशात्। अवभृथादुदेत्य वत्सत्वचं परिधत्त इति प्रकृतौ विधानात्। ततो ज्योतिर्नामकोऽभिप्लवः षडहः। तत्र प्रकृतेर्ज्योतिष्टोमादहतं वासो नाम्नातिदिश्यते। ततोऽभिजिदष्टममहस्तत्रापि चैकाहाद्वासः प्राप्नोति। तत्र द्वयोर्नामातिदेशयोः समबलत्वादष्टस्वहःसु त्वग्वासो वैच्छया विकल्प्येत इत्याद्यः पक्षः। विकल्पस्याष्टदोषत्वान्नियम इति द्वितीयः। तत्रापि विश्वजितः प्राथम्येन प्रबलतया त्वगेवेत्यपरः पक्षः। इतरेषामह्नां बहुत्वेन प्रबलतया वास एवेत्यपरः पक्षः। कौपीनत्वे वासो योग्यम्। त्वक् तु प्रावरणे योग्या। तस्मात् सर्वानुग्राहकत्वेन समुच्चयेनात्र प्रसङ्गो उपोह्यत इति राद्धान्तः।

द्वितीयाधिकरणमारचयति।

स्वाधर्म्यमनुनिर्वाप्येष्वस्ति नो वा बहुत्वतः।

अस्त्येव तन्त्रमध्ये विहितत्वात् प्रसङ्गिता ॥ ३ ॥

अग्नौ श्रूयते। अग्नीषोमीयस्य पशुपुरोडाशमनु देवसुवां हवींषि निर्वपतीति। तत्र हविषामष्टानां बहुत्वेन पुरोडाशाद्बलवत्त्वात्तन्त्रित्वम्। ततः स्वधर्मा एव ते अनुष्ठेयाः। ननु पुरोडाशधर्मैः प्रसङ्गसिद्धिरिति चेत्। मैवम्। प्रत्यक्षेण पुरोडाशतन्त्रमध्ये विधानेन प्राप्तस्य प्रासङ्गित्वस्य युक्तिमात्रेण वारयितुमशक्यत्वात् स्वाधर्म्यं नास्ति।

तृतीयाधिकरणमारचयति ।

ऋजुत्वादय आघारे विकल्पन्ते न वाग्रिमः ।

एकार्थत्वाददृष्टार्थभेदात् सम्भवतोऽन्तिमः ॥ ४ ॥

दर्शपूर्णमासयोराम्नायते ऋजुमाघारयति सन्ततमाघारयत्यूर्ध्वमाघारयतीति । तेषामृजुत्वादीनामाघारोपकारद्वारा कार्य्यस्यैकत्वाद्विकल्प इति चेत् । मैवम् । दृष्टद्वारभेदाभावेऽप्यदृष्टद्वारभेदात् सहानुष्ठानसम्भवाच्च विकल्पो न ।

चतुर्थाधिकरणमारचयति ।

समुच्चयो यवव्रीह्योर्विकल्पो वात्र पूर्ववत् ।

आद्यो मैवं निरपेक्ष्याददृष्टाभेदतोऽन्तिमः ॥ ५ ॥

अदृष्टदोषनिदानविकल्पपरिहाराय प्रयोगवचनानुग्रहाय च समुच्चयः स्यादाज्याघारधर्मवदिति चेत् । मैवम् । अदृष्टस्य कल्पयितुमशक्यत्वात् । तर्ह्यस्तु दृष्टभेद इति चेत् । एकं पुरोडाशनिष्पादनमन्तरेणान्यस्य कार्य्यस्यादर्शनात् । न च पेषणादौ दृषदुपलयोरिव समुच्चयः शङ्कनीयः । तद्वत् परस्परमापेक्षत्वाभावात् । अत एव व्रीहिभिर्यजेतेत्यत्र निरपेक्षाणां व्रीहीणां यागसाधनत्वं विधीयते । एवं यवैर्यजेतेत्यत्रापि तस्माद्विकल्पः ।

पञ्चमाधिकरणमारचयति ।

वैश्वानरे पार्थिकृते साहित्यं वा विकल्पनम् ।

साहित्यं स्याददृष्टाय विकल्पः स्यात् समाधये । ६ ।

विहितयोर्दर्शपूर्णमासयोः कालादनुष्ठाने प्रायश्चित्तं श्रूयते । वैश्वानरं द्वादशकपालं निर्वपेदमावास्यां

पौर्णमासीं वातिपाद्य अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद् यो दर्शपूर्णमासयाजी सन्नमावास्यां पौर्णमासीं वातिपातयेदिति च। अत्र पूर्ववद् दृष्टप्रयोजनाभावाददृष्टार्थमुभयं समुच्चित्यानुष्ठेयमिति चेत्। मैवम्। यज्ञवैगुण्यसमाधेर्दृष्टप्रयोजनत्वादन्योन्यनिरपेक्षयोर्व्रीहियववद्विकल्पः। एवमृग्यजुःसामविहितस्याननुष्ठानान्निषिद्धस्याचरणाद्वा यज्ञवैगुण्यमात्रस्य समाधानाय निरपेक्षाणि प्रायश्चित्तानि विहितानि। भूः स्वाहेति गार्हपत्ये जुहुयात् भुवः स्वाहेति दक्षिणाग्नौ जुहुयात् स्वः स्वाहेत्याहवनीये जुहुयादिति। तान्येतानि विकल्प्यन्ते प्रत्येकं वैगुण्यसमाधानक्षमत्वात्।

षष्ठाधिकरणमारचयति।

भिन्नस्कन्नादि होमादेर्विकल्पो वा समुच्चयः।
विकल्पः पूर्ववत् मैवमर्थेऽपि विहितत्वतः॥ ७॥

यज्ञपात्रभेदनहविस्कन्दनादिनिमित्तं श्रूयते। भिन्ने जुहोतीत्यादि। तत्र वैगुण्यसमाधानार्थत्वात् पूर्ववद्विकल्प इति चेत्। मैवम्। दोषसंयोगमनुपन्यस्य भेदनादिनिमित्तमुपजीव्य विहितत्वात्। अतो नैमित्तिकानामिव तेषां प्रयोगवचनपरिगृहीतत्वेन समुच्चयः।

सप्तमाधिकरणमारचयति।

अनध्याये मन्त्रपाठः क्रतौ नास्त्यस्ति वा न सः।
तत्पाठस्य निषिद्धत्वादस्ति तत्रानिषेधतः॥ ८॥

पर्वणि नाध्येयमिति निषिद्धत्वादनध्याये क्रतुप्रयोगे मन्त्रपाठो नास्तीति चेन्न। निषेधस्य ग्रहणाध्यापनविषय-

त्वेन क्रतुप्रयोगे तन्निषेधाभावात्। तस्मात् क्रतावनध्याये ऽप्यस्ति मन्त्रप्रयोगः।

अष्टमाधिकरणमारचयति।

स्वरो मन्त्रे भाषिकः किं स्यात् प्रावाचनिकोऽथवा।
ब्राह्मणोक्तेरादिमोऽन्त्यस्तदुक्तेर्लक्षणत्वतः॥ ८॥

तत्तच्छाखायां ब्राह्मणस्वरो भाषिक इत्युच्यते। तदुक्तमाचार्य्यैः। छन्दोगबह्वृचाश्चैव तथा वाजसनेयिनः। उच्चनीचस्वरं प्राहुः सवै भाषिक उच्यत इति। सोऽयं भाषिकः क्रतौ मन्त्रेषु प्रयोक्तव्यः। ब्राह्मणेनोक्तत्वान्मन्त्रविनियोगस्य लिङ्गेन सिद्धत्वात् स्वरविशेषविधानाय ब्राह्मणे मन्त्र उपादीयते इति प्राप्ते ब्रूमः। न हि ब्राह्मणे मन्त्रः पठ्यते। किन्तु पठनसिद्धस्वराद्युपेतं मन्त्रकाण्डसमुत्पन्नं मन्त्रमुपलक्षयितुं तदुपलक्षणसमर्थानि मन्त्रोपक्रमसदृशानि कानिचिदक्षराण्युच्चार्य्यन्ते इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्त इत्येवमेषाभिप्रायं द्योतयितुं क्वचिच्छब्दान्तरेणोपलक्ष्यते। तद्यथा। सावित्राणि जुहोति प्रसूत्या इति यत्र लिङ्गसिद्धो विनियोगस्तत्र ब्राह्मणमनुवादकमस्तु। तस्मात् प्रावचनिकः स्वरः क्रतौ प्रयोक्तव्यः।

नवमाधिकरणमारचयति।

ब्राह्मणोत्पन्नमन्त्रस्य त्रैस्वर्यं भाषिकोऽथवा।
आद्योऽन्य मन्त्रवत् मैवं स्वरान्तरविवर्जनात्॥ १०॥

मानस्तोऽसीत्ययं मन्त्रो ब्राह्मण एवोत्पन्नस्तं प्रोक्षेदार्मस्त्योऽसीत्याम्नानात्। न चास्य मन्त्रस्य कश्चित् प्रावचनिकः स्वरोऽस्ति। तस्माद्भाषिकः स्वरः।

दशमाधिकरणमारचयति।

यदा कदाचिन्मन्त्रान्ते वा कर्मानियमाद्भवेत्।
आद्यो मैवं कृत्स्नजन्यस्मृतेरङ्गत्वतोऽन्तिमः॥ ११॥

ईषेत्वेति मन्त्रः। शाखाच्छेदने करणम्। इमाम गृभ्णन् रशनामृतस्येति रशनादाने इत्यादि मन्त्रेषु बहुधा संशयः। किं मन्त्रादौ कर्म कर्त्तव्यं उतेमाम गृभ्णन् रशनामृतस्येत्येवंविधस्य कर्मप्रकाशकमन्त्रस्योच्चारणकाले किं वा यस्य कस्यचित्पदस्य काले पाहोस्विन्मन्त्रान्ते अथवा किञ्चित्कालं विलम्बयेति। तत्र नियामकाभावा यदा कदाचिदिति प्राप्ते ब्रूमः। कृत्स्नमन्त्रजन्यार्थस्मारणं कर्मणोऽङ्गम्। तच्च समाप्तिः पूर्वं नोदेति विलम्बे तूपमन्नं स्मरणं विनश्यति। ततः परिशेषान्मन्त्रान्ते कर्म सन्निपतेत्।

एकादशाधिकरणमारचयति।

मन्त्रादौ किं वसोर्धारा मन्त्रान्ते वात्र संस्थिते।
आद्यहोमेषु मान्तत्वाद्द्वादशान्तेषु तत्कृतिः॥ १२॥

अग्नौ किञ्चित् कर्म विहितम्। सन्ततां वसोर्धारां जुहोतीति। तत्र सान्तत्यमविच्छिन्नत्वम्। तच्च कर्ममन्त्रयोः सहोपक्रमे सति उपपद्यते। तस्मान्मन्त्रादौ कर्म सन्निपतत इति प्राप्ते ब्रूमः। तामन्वसोर्धाराख्ये कर्मणि द्वादश द्वादशानि जुहोतीति श्रुतम्। द्वादशभिर्मन्त्रवाक्यैः सम्पाद्यमेकमाहुतिस्वरूपं द्वादशं तद्यथा वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसितिश्च मे धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे श्रावश्च मे श्रुतिश्च मे ज्योतिश्च मे

स्रुवश्च मे इत्येतैर्द्वादशभिर्मन्त्रवाक्यैरेकाहुतिर्होतव्या। ईदृशा उत्तराहुतयः प्राणश्च मे अपानश्च मे इत्यादिभिर्नि-ष्पाद्यन्ते। एतेषु च होमद्वादशकेषु मध्ये विलम्बाभावः सान्तत्यम्। नतु मन्त्रकर्मणोः सहोपक्रमः। तस्मात् पूर्व-न्यायेन मन्त्रान्ते कर्मसन्निपातस्य नास्ति कश्चिद्विघ्नः।

द्वादशाधिकरणमारचयति।

आघारे मन्त्रमान्तत्यं धारा वा सन्ततागिमः।

कर्मैकत्वान्नाज्यधारा नैरन्तर्यस्य सम्भवात् ॥ १२ ॥

सन्ततमाघारयतीत्यत्र पूर्ववदाहुतिनैरन्तर्यं न भवति। आहुतेरेकत्वात्। अतो मन्त्रसाहित्यस्यैव सन्ततशब्दार्थ-त्वात्। मन्त्रादौ कर्मोपक्रम इति चेत् मैवम्। स्रायमाणाज्य विन्दुनैरन्तर्यस्य शब्दार्थत्वात्। न च प्रयाजा-द्याहुतिष्वपि नैरन्तर्यमस्तीति शङ्कनीयं तत्र विच्छिद्य विच्छिद्य बिन्दुपातेऽपि कर्मवैकल्याभावात्। अत्र तु न तथेति वैषम्यम्। तथा सत्याघाराय यदाज्यं जुह्वां गृहीतं तत् सर्वं शनैरविच्छेदे नाहवनीये पातयेदिति सन्ततश-ब्दार्थः। यदि मन्त्रकर्मणोः सहोपक्रमः स्यात् तदानीमनेन मन्त्रेणेति तृतीया श्रुत्योक्तं पूर्वकालत्वलक्षणं मन्त्रस्य कर-णत्वं हीयेत। तस्मात् पूर्ववन्मन्त्रान्ते कर्मसन्निपातः।

त्रयोदशाधिकरणमारचयति।

पूषाद्यकार्थमन्त्राणां साहित्यं वा विकल्पना।

आद्यः शक्यत्वतो मैवं मन्त्रान्ते सन्निपाततः ॥ १४ ॥

पुरोडाशविभागे त्रयो मन्त्राः श्रुताः। पूषावो विभ-

[illegible] वो विभजत्विति। तत्र

चित्यानुष्ठातुं शक्यत्वात् । मैवम् । प्रथममन्त्रान्ते कर्मणः सन्निपाते सति मन्त्रान्तरे प्रयोजनाभावात् । तस्माद्विकल्पः । व्रीहियवयोर्निर्णीतस्यैव विकल्पस्यायं प्रपञ्चः ।

चतुर्दशाधिकरणमारचयति ।

चतुर्भिरभ्रिमित्यत्र विकल्पो वा समुच्चयः ।

विकल्पः पूर्ववन्मैवं समूहे करणत्वतः ॥ १५ ॥

मन्त्रो श्रूयते चतुर्भिरभ्रिमादत्त इति । पूर्वोक्त-विभागमन्त्रवत् प्रतिमन्त्रं पृथक्करणं नास्ति । चतुःसंख्यया सह समूहे करणत्वप्रतीतेः । तस्मात् मन्त्रान्ते कर्मसन्नि-पातस्य बाधेनैव समुच्चयः स्यात् । न च पूर्वस्यैकैकस्य मन्त्रस्यान्ते सन्निपातो न स्यादिति शङ्कनीयम् । वाच-निकसंख्यया न्यायसिद्धस्य तस्य बाधितत्वात् ।

पञ्चदशाधिकरणमारचयति ।

प्रथमन्त्रौ समुच्चेयौ विकल्पो वा चतुष्टवत् ।

आद्य उक्तिद्वयान्मैवं समुच्चित्यानुदीरणात् ॥ १६ ॥

उरुप्रथस्वेति पुरोडाशं प्रथयति चतो यज्ञपतिः प्रथतामिति पुरोडाशं प्रथयतीति ब्राह्मणेन पुरोडाश-प्रथने द्वौ मन्त्रौ विनियुक्तौ । तस्य च मन्त्रविनियोगस्य मन्त्रलिङ्गेनैव सिद्धत्वाद् ब्राह्मणवचनद्वयं चतुः संख्यावत् समुच्चये पर्यवस्यतीति चेन्मैवम् । तस्मिन् वचनद्वये मन्त्रयोः परस्परनैरपेक्ष्य प्रतिभासेन समुच्चयस्यायुक्तत्वात् । अतो लिङ्गसिद्ध एवार्थोऽनूद्यत इति व्रीहियववद्विकल्पः ।

षोडशाधिकरणमारचयति ।

उद्दिवेत्युच्छ्रयस्वेति विकल्पो वा समुच्चयः ।

विकल्पः स्मारकत्वैक्यादाकारान्यत्वतोऽन्तिमः ॥ १७ ॥

यूपस्योच्छ्रयणे करणभूत एषो मन्त्रोऽध्वर्युणा पठ्यते। उद्दिवं स्तभानान्तरिक्षं पृणपृथिवीमुपरेण दृंहेति उच्छ्रीयमाणाय यूपाय प्रेषितेन होत्रा मन्त्रः पठ्यते। उच्छ्रयस्व वनस्पते वर्ष्मन् पृथिव्या अधीति। अनयोर्मन्त्रयोर्यूपोच्छ्रयमस्मारणमेकमेव कार्य्यम्। तस्माद्विकल्प इति चेन्मैवम्। करणमन्त्रः उच्छ्रयणं करोमीत्येवं स्मारयति। होत्रस्तु क्रियमाणमुच्छ्रयणमनुवदन्नध्वर्य्योर्यूपोच्छ्रयणं कर्त्तव्यमित्येवं स्मृतिं जनयति। तत्र स्मार्य्यस्योच्छ्रयणस्यैकत्वेऽपि कर्त्तव्यमित्यस्य करोमीत्यस्य च स्मृतिप्रकारस्यान्यत्वात् कार्य्यैक्याभावेन समुच्चयः।

समदशाधिकरणमारचयति।

उच्छ्रयस्व स सिद्धस्येत्यादीनां किं विकल्पनम्।

समुच्चयो वा कार्य्यैक्यादाद्योऽनुस्मृतयेऽन्तिमः ॥ १८ ॥

उच्छ्रयस्वेत्यृगेका। स सिद्धस्य श्रूयमाण इति द्वितीया। ऊर्ध्व ऊषु ण इति तृतीया। ऊर्ध्वानः पाहीति चतुर्थी। ता एताः क्रियमाणमनुवदन्त्यो होत्रा पठ्यन्ते तासां यूपोच्छ्रयणकर्त्तव्यता स्मारणस्य कार्य्यस्यैकत्वाद्विकल्प इति चेत्। मैवम्। प्रथममन्त्रेणोत्पन्नाया स्मृतेरुत्तरोत्तरमनुस्मृतेः पृथक् प्रयोजनत्वात्। तस्मात् समुच्चयः।

इति माधवीये जैमिनीयन्यायमालाविस्तरे द्वादशाध्यायस्य तृतीयः पादः समाप्तः।

---

चतुर्थपादस्य प्रथमाधिकरणमारचयति।

सारस्वतीमनूच्येति विकल्पोऽथ समुच्चयः।

जपैक्यादादिमोऽन्त्यः स्यात् प्रकारस्य विभेदतः॥ १॥

दीक्षितस्य वाङ्नियमनात् पूर्वं जपाय मन्त्राः श्रूयन्ते। सारस्वतीमनूच्य वाग्यच्छेदिति। एवमाम्ना वैष्णवी बार्हस्पत्ये उदाहार्ये। अतएव सूत्रकारः। अथवै वैष्णवा माम्ना-वैष्णवीं सारस्वतीं बार्हस्पत्यामुत्तमामनूच्य वाग्यच्छेदिति। तत्रानुवचनशब्दाभिधेयस्य जपकार्यस्यैकत्वाद् विकल्प इति प्राप्ते ब्रूमः। जपस्यादृष्टार्थप्रकारभेदे सति कार्य-नानात्वात् समुच्चयः। एवं जपमन्त्रवत् स्तुत्याशीरभिधान-मन्त्रेषु सजातीयैः समुच्चयो द्रष्टव्यः।

द्वितीयाधिकरणमारचयति।

इदं वादिद्वयोः किं स्यात् साहित्यं वा विकल्पनम्।

साहित्यं पूर्ववन्मैवं देवताबोधनैक्यतः॥ २॥

ऐन्द्राबार्हस्पत्ये कर्मणि इदं वामास्ये हविः प्रियमिन्द्रा-बृहस्पतीत्यादिके याज्यानुवाक्ये द्विविधे आम्नाते। तयोः सारस्वत्यादिवत् समुच्चय इति चेत् मैवम्। दृष्टप्रयोजनस्य देवताबोधनस्यैकत्वात्। तस्माद् विकल्पः।

तृतीयाधिकरणमारचयति।

पुरोऽनुवाक्यया याज्या विकल्प्या वा समुच्चयः।

पुरे वाद्यः समाख्यानाद् वचनाच्च समुच्चयः॥ ३॥

देवताप्रकाशनकार्यस्यैकत्वाद् याज्ययोर्यथा विकल्पः तथैवैकयुग्जगतयोरिति चेत्। मैवम्। पुरोऽनुवाक्येति-समाख्याया उत्तरकालीनयाज्या मन्तरेणानुपपत्तेः। किञ्च

पुरोऽनुवाक्यामनूच्य याज्यया जुहोतीति प्रत्यक्षेण हविः प्रदानकार्य्यभेदोक्तिपुरःसरं साहित्यं विधीयते। तस्मात् समुच्चयः।

चतुर्थाधिकरणमारचयति।

क्रयणेष विकल्पः स्यात् साहित्यं वाग्रिमो यतः।
कार्य्यैक्यमानतेर्लाभाद्दशोक्तेश्च समुच्चयः॥ ४॥

अजया क्रीणाति हिरण्येन क्रीणाति वाससा क्रीणातीत्यादिना बहूनि सोमक्रयसाधनानि द्रव्याण्याम्नातानि। तेषां कार्य्यैक्याद् विकल्प इति चेन्मैवम्। बहुद्रव्यैर्विक्रेतुरानतेः सौलभ्याद्दशभिः क्रीणातीति संख्योक्तेश्च समुच्चयः।

पञ्चमाधिकरणमारचयति।

गुदोपयजने किं स्याद् विकल्पोऽथ समुच्चयः।
आद्यः स्यादर्थकर्मत्वान्न शेषप्रतिपत्तितः॥ ५॥

अग्नीषोमीये गुदे नोपयजतीति श्रूयते। एकादशिनेषु तच्चोदकप्राप्तम्। तत्रोपयजनस्यार्थकर्मत्वं गुदेनेति तृतीया श्रुत्या प्रतीयते। तस्य चार्थकर्मण एकेन सिद्धत्वादेकादशानां गुदानां विकल्प इति चेन्मैवम्। प्रयाज्यशेषन्यायेन तृतीया श्रुतेर्विपरिणामे सति शेषप्रतिपत्तिसंस्कारविधानात्। तस्मात् समुच्चयः।

षष्ठाधिकरणमारचयति।

एका देया समुच्चेयं विकल्पं वाद्य आनतेः।
सौलभ्या दन्तिमो नैरपेक्ष्यात् संख्यान्तरादपि॥ ६॥

आधाने श्रूयते। एका देया षट् देया द्वादश देया

इत्यादि। तत्र सोमक्रयन्यायेनानतेः सौलभ्यात् समुच्चय इति चेन्न। संख्यानां व्रीह्यादिवत् परस्परनैरपेक्ष्यावगमात् समुच्चये श्रूयमाणाभिः संख्यान्तरस्य दुर्वारत्वाच्च। तस्माद् विकल्पः।

सप्तमाधिकरणमारचयति।

समुच्चयो जाघनीनां न वाऽसौ गुणवन्न तत्।

प्रकृतौ नियमादर्थकर्मातोऽत्र तथा त्वतः॥ ७॥

एकादशिनादिगणेषु जाघन्या पत्नी संयाजनं चोदकप्राप्तम्। तत्र प्रतिपत्तिकर्मत्वाज्जाघनीनां गुणानामिव समुच्चय इति चेन्नैवम्। दर्शपूर्णमासयोः पत्नीसंयाजकत्वेऽर्थकर्मण्याज्यजाघन्योर्द्वयोर्विकल्पेन विहिते ते चोभे अग्नीषोमीयपशौ चोदकेन प्राप्ते तत्र जाघन्यायां प्राप्तायां पुनरपि जाघन्या पत्नीः संयाजयन्तीति विहितम्। स च पुनर्विधिः स्ववैयर्थ्यपरिहारायातिदेशप्राप्तमर्थकर्मत्वं वारयित्वा प्रतिपत्तिकर्मत्वं प्रापयतीति पूर्वपक्षोक्तस्य विकल्पेनातिदिष्टाया जाघन्या नियमेन पुनर्विधेयतायेत्वाद्वाऽर्थकर्मत्वं निवारणीयमिति सिद्धान्तनीयम्। ततः प्रकृतावग्नीषोमीयपशावर्थकर्मत्वेन विकृतिष्वर्थकर्मत्वादर्थकर्मण्यैकजाघन्या नित्यत्वे दृष्टान्तानभावाज्जाघनीनां विकल्पः।

अष्टमाधिकरणमारचयति।

नित्योखाग्नौ काम्यवह्निः संयुज्येताथ बाधकः।

कार्यभेदादादिमोऽन्त्यः कामेनान्यस्य मज्जनात्॥ ८॥

अग्निचयने कर्तव्यमुखां निष्पाद्य तस्यामुखायामग्नि-

ध्रियते स नित्योऽग्निः। तत् प्रकरणे काम्योऽग्निः पठ्यते। हस्ताग्रात् ज्वलतो ब्रह्मवर्चसकामस्याहुत्यावदध्यादिति। तत्र नित्यस्याग्नेर्होमः कार्य्यः। काम्यस्य तु फलाय धारणम्। अतः कार्य्यभेदात् समुच्चय इत्येवं प्राप्ते ब्रूमः। फलाय धृतेनाग्निना होमस्यापि प्रसक्तसिद्धे र्नित्यो बाध्यते। तथा सति कामिनो बह्नन्तरमकामिनो नित्योऽग्निरिति व्यवस्थितो विकल्पः।

नवमाधिकरणमारचयति।

सोऽग्निराहवनीयो नो वाद्य आहुतियोगतः।
अन्योऽन्याश्रयतो नैवं संस्काराच्चेन्न सोऽत्र हि ॥ ८ ॥

स पूर्वोक्तः काम्यो वह्निराहवनीयो भवितुमर्हति। कुतः। तन्निर्वर्त्तनीयस्याहुतियोगस्य तस्मिन् सम्भवात्। आगत्य हूयतेऽस्मिन्नित्याहवनीयः। हूयते चात्र काम्याहुतयः। तस्मादाहवनीय धर्माः गतश्री धारणादयस्तत्र कर्त्तव्याः। ते च कल्पसूत्रकारेण दर्शिताः। नक्तमाहवनीयं धारयति नित्यो गतश्रिय इति चेत्। नैवम्। अन्योऽन्याश्रयत्वप्रसङ्गात्। सिद्धे ह्याहवनीयत्वे तत्र होमविधिः। यदाहवनीये जुहोतीति सिद्धे होमाधारत्वे पश्चादाहवनीयादिकल्पनेति परस्पराश्रयत्वम्। यद्याधानसंस्कारादाहवनीयत्वम्। तर्ह्यत्रास्य संस्कारस्याभावान्नाहवनीयत्वम्।

दशमाधिकरणमारचयति।

अस्त्वाधानादिनो वात्र सर्वशेषत्वतोऽस्ति तत्।
न संस्कृतस्थानपातात्त्वयनस्याप्यसम्भवात् ॥ १० ॥

अत्र पूर्वोक्ते वह्नावाधानादिकमस्ति। कुतः। आधा-

नस्य सर्वकर्मशेषत्वात्। नैतद्युक्तम्। आधानादिभिः संस्कृतं नित्यमग्निं बाधित्वा तस्य स्थानेऽवस्थितत्वेनाग्न्युत्पादकसंस्कारानुपयोगात्। न च ज्वलतो हुताशनादाहृतस्यारणिमन्थनेनोत्पत्तिः सम्भवति। तस्मान्नास्याधानादि॥ १०

एकादशाधिकरणमारचयति।

धृतिर्विकल्पितोऽग्न्यस्य किं वा नैवास्ति धारणम्।

निषेधात् कल्प्यविधितयार्थो न प्राप्तिवारणात्॥ ११॥

अग्निचयने योऽयं नित्य उख्योऽग्निस्तस्य सार्वकालिकं धारणं विकल्पितम्। कुतः। विधिनिषेधयोरुभयोः सद्भावात्। प्रतिषेधस्तावदेवं श्रूयते। न प्रतिसमिद्धो यत् प्रतिसमिन्द्ध्याद्भ्रातृव्यमस्मिन् जनयेदिति। सोऽयं प्रतिषेधः प्राप्तिमन्तरेणानुपपन्नः प्रापकविधिं कल्पयति। तस्माद्विकल्प इति चेत् न। निषेधस्यान्यथाप्युपपन्नत्वात्। आहवनीयविषयं नित्यधारणङ्कर्तायथा यद्विहितम्। तच्चोदकेनोख्याग्नौ प्रापितत्वात् प्रतिषिध्यते। तथा सति विधेरकल्पितत्वात् केवलेन प्रतिषेधेन धारणाभाव एव प्रतिनियतः।

द्वादशाधिकरणमारचयति।

शुक्रस्पर्शोऽधिकं सत्रे सर्वेषामुत कस्यचित्।

अविशेषादादिमोऽन्त्यस्तावतैवार्थसिद्धितः॥ १४॥

शुक्रं यजमानोऽन्वारभते यजमानसम्मितो द्रष्टा भवतीति विहितं यत्तत् सत्रे सर्वेषां यजमानानां भवेत्। कुतः। यजमानस्य सर्वाविशिष्टत्वादिति चेत्। नैवम्।

एकेन क्षते सति प्रयोजनस्य शुक्रग्रहसंस्कारादेः सिद्धत्वात्। न ह्येते यजमानसंस्कारार्थाः येन प्रतियजमानमावर्त्तेरन्। तस्मादेक एव कुर्य्यात्।

त्रयोदशाधिकरणमारचयति।

अहीने सत्रवच्छुक्रस्पृगैक्ये स नियम्यते।

न वाद्यः सम्भवात् मैवं विशेषानवधारणात्॥ १५॥

यथा सत्रे यजमानेष्वेक एव शुक्रग्रहं स्पृशति तथा अहीनेष्येक एवेति पूर्वन्यायेन स्थिते सति क एकः किं नियतः उत यः कोऽपीति संशये सति नियमस्य सत्रे वक्ष्यमाणत्वादिहापि नियमः इति मन्दः पूर्वपक्षः। विशेषस्यावधारयितुमशक्यत्वाद्यः कोऽपीति सिद्धान्तः।

चतुर्दशाधिकरणमारचयति।

कश्चिद्गृहपतिर्वा स्यात् सत्रे कश्चिदहीनवत्।

इतरेषां तदार्त्विज्यादविलम्बार्थमन्तिमः॥ १६॥

पूर्वोक्तेनाहीनन्यायेन सत्रे यः कोऽपि शुक्रस्पर्शादिकं कुर्य्यादिति चेत्। मैवम्। गृहपतिव्यतिरिक्तानां तदानीमार्त्विज्ये कार्य्ये विनियुक्तानां शुक्रस्पर्शाद्यसम्भवात्। विलम्बे तु आर्त्विज्य शुक्रस्पर्शयोर्विहितमेककालीनत्वं हीयेत। तस्मादविलम्बार्थं गृहपतिरेव तत् कुर्य्यात्।

पञ्चदशाधिकरणमारचयति।

अञ्जनाद्या गृहपतेः सर्वेषां वा समाख्यया।

आद्यो नो फलिसंस्काराः सर्वेषां फलिनामतः॥ १७॥

यञ्जनाभ्यञ्जनादयो गृहपतेर्युक्ताः संस्काराधिक्ये न गृहपतित्व समाख्या उत्पन्नत्वादिति चेत् मैवम्। फलित्व-

प्रयोजका एते संस्काराः फलित्वञ्च सर्वेषां यजमानानाम्। यत्तु गृहपतेः फलाधिक्यं श्रूयते भूयिष्ठामृद्धिमाप्नोतीति तद्वाचनिकं नतु संस्काराधिक्यकृतम्। समाख्या त्वन्यरे-थापि संस्काराधिक्यमृत्विजामिव कर्मकरत्वादुपपद्यते। तस्मात् सर्वेषामङ्गान्याद्याः कार्य्याः।

षोड़शाधिकरणमारचयति।

याजमानार्त्विज्यकर्मणोर्विकदा प्राप्तिस्तत्र याजमानं बलवच्चोदकप्राप्तत्वादिति चेत्। मैवम्। ये यजमानास्त ऋत्विज इत्यार्त्विज्यस्य प्रत्यक्षविहितत्वात्। तस्मादार्त्विज्यं बलवत्।

सप्तदशाधिकरणमारचयति।

आर्त्विज्यं किं त्रिवर्णस्य विप्रस्यैवाथवा यमः।

विद्यावत्त्वात्तद्याद्यं ब्राह्मणस्यैव तत् स्मृतेः॥ १८॥

विप्रक्षत्रियवैश्यानामधीतवेदानां विद्यावत्त्वादार्त्विज्य-मस्तीति चेत्। न। विप्रस्यैवार्त्विज्यस्मरणात्। तथा च याज्ञवल्क्यः। प्रतिग्रहोऽधिको विप्रे याजनाध्यापने तथेति। एवमेव स्मृत्यन्तराण्युदाहरणीयानि। तस्माद्विप्र-स्यैवार्त्विज्यम्।

इति माधवीये जैमिनीयन्यायमालाविस्तरे
द्वादशाध्यायस्य चतुर्थः पादः समाप्तः।

---

वेदानां स्थितिकृत्पुरा हरिहरोऽभूत् सूत्रकृज्जैमिनि-
स्तद्भाष्यं शबरोऽभ्यधात्तदितवांस्तद्विस्तरं माधवः।

सोऽयं नित्यकलत्रपुत्रजनकप्रश्राधिपत्यश्रियुति-
र्दीर्घायुः सहबन्धुभिर्विजयतामाचन्द्रमातारकम् ॥ १ ॥

इति श्रीमन्निकायाख्यमीमांसामण्डलप्रतिवसन्तसोम-
याजिभट्टश्रीमाधवविरचिते जैमिनीयन्याय-
मालाविस्तरे द्वादशाध्यायः समाप्तः ।

॥ सम्पूर्णम् ॥

---

# मीमांसापरिभाषा ।

श्रीकृष्णयज्वकृता ।

---

बि, ए, उपाधिधारिणा

श्रीजीवानन्द-विद्यासागर भट्टाचार्य्येण

संस्कृत्य

प्रकाशिता

---


कलिकाता नगरे

सरस्वती यन्त्रे मुद्रिता ।

इं १८७५

फलवाक्यम्। फलाय गुणवाक्यम्। सगुणकर्मोत्पत्तिवाक्यमित्यादिभेदात्।

तत्र येन वाक्येनेदं कर्म्म कर्त्तव्यमिति बोध्यते तत् कर्मोत्पत्तिवाक्यम् यथाग्निहोत्रं जुहोति इति, अत्राग्निहोत्रहोमः कर्त्तव्यतया विधीयते इति कर्मोत्पत्तिवाक्यम्।

विहिते कर्म्मणि तदङ्गतया द्रव्यदेवतादिविधायकं वाक्यं गुणवाक्यम्। यथा दध्ना जुहुयादिति गुणवाक्यमिदम्। कर्म्माङ्गतया विहितत्वमेव दध्नादेर्गुणत्वम्। अत्र होमस्योद्देश्यत्वं नाम मानान्तरप्राप्तत्वे सति विधेयान्वयितया निर्द्देश्यत्वम्। तस्यैव मानान्तरप्राप्तस्य पुनः कथ्यमानरूपत्वमनुवाद्यत्वम्। दध्यादिगुणान्वयितया प्राधान्यञ्च दध्यादेर्मानान्तराप्राप्तत्वादनेन विधेयत्वं होमसाधनत्वाच्च होमापेक्षया गुणत्वम्। पुरुषेणानुष्ठीयमानत्वाद्धोमादेर्यत्वञ्चेति। अत्र मानान्तरप्राप्तत्वं मानान्तरज्ञातत्वम्। अप्राप्तत्वञ्चाज्ञातत्वमिति बोध्यम्।

उत्पन्नस्य कर्म्मणः फलाकाङ्क्षायां फलसम्बन्धबोधको विधिः फलविधिः। यथाग्निहोत्रं जुहुयात् स्वर्गकाम इति। अत्र यः स्वर्गं कामयते स तत्साधनत्वेनाग्निहोत्रनामकं होमं भावयेत् कुर्यादिति अग्निहोत्रवाक्योत्पन्नस्य कर्म्मणः फलसम्बन्धो बोध्यत इति फलवाक्यमिदम्।

प्राप्तं कर्म्माश्रित्य फलाय गुणविधौ फलाय गुणवाक्यं यथा दध्नेन्द्रियकामस्य जुहुयादिति। अत्राग्निहोत्रवाक्योत्पन्नं होममाश्रित्येन्द्रियफलाय दधिरूपो गुणो विधीयते। होमाश्रितेन दध्ना इन्द्रियरूपं फलं भावयेदिति।

होमाश्रितेन होमकारकीभूतेनेत्यर्थः। अयमेव गुणफलविधिः गुणकामविधिरपि चोच्यते।

द्रव्यदेवतादिगुणविशिष्टकर्म्मविधायकं वाक्यं सगुणकर्म्मोत्पत्तिवाक्यम्। यथा 'सोमेन यजेते'ति। अत्र सोमलतीविशिष्टो यागो विधीयते। विशिष्टविधावपि विशेषणस्य अर्थाद्विधिः। क्वचित् कर्म्मोत्पत्तिवाक्यमेव फलसम्बन्धबोधकमपि भवति। यथा 'उद्भिदा यजेत पशुकामं' इति अतोद्भिन्नामको यागो वाक्यान्तराविहित एव पशुकामस्य पशुफलाय विधीयत इत्येवमेवेदं वाक्यं फलसाधनयागकर्म्मविधायकम्। प्रधानविधिरेवाङ्गविधिभिरेकवाक्यतया महावाक्यतामापन्नः सन् सर्व्वाङ्गविशिष्टप्रधानप्रयोगविधायकत्वात् प्रयोगविधिरुच्यते। यथा अग्निहोत्रं जुहुयात् स्वर्गकाम इत्यत्राग्निहोत्रहोमेन स्वर्गं भावयेदित्यर्थः। प्रतीयते भावयेत् कुर्य्यादिति यावत्। अत्र कथमनेन होमेन स्वर्गं कुर्य्यादिति कथम्भावाकाङ्क्षा जायते यथा कुठारेण द्वैधीभावं कुर्य्यादित्युक्ते: भवत्याकाङ्क्षा। कथमनेन द्वैधीभावं कुर्य्यादिति। तत्रोद्यमननिपतनादिरूपेणेति गम्यते तद्वदत्राप्यग्निं प्रणयत्यग्निषु समिध इत्यादौ। गोत्याद्यङ्गविधिविहितप्रणयनसमिदाधानापतनप्रोक्षणादिकाङ्गकलापजनितोपकारसहितेनाग्निहोत्रहोमेन स्वर्गं कुर्य्यादिति प्रकारकल्पितेन महावाक्येन सर्व्वाङ्गसाङ्गाग्निहोत्रप्रयोगो विधीयत इत्येतादृशः प्रयोगविधिः। अङ्गजातमेवेत्यभाव इतिकर्त्तव्यता चेति चोच्यते अत्राग्निहोत्रहोमः प्रधानप्रणयनादिकं सर्व्वम् अङ्गम्।

नन्विदमनुपपन्नम् । आशुतरविनाशिनां कर्म्मणां कालान्तरभाविस्वर्गादिफलसाधनत्वानुपपत्तेरिति चेन्नैवम् । विहितनिषिद्धकर्म्मणां तत्तद्वाक्यैस्तत्तत्फलसाधनत्वेऽवगते आशुतरविनाशिनां कर्म्मणां कालान्तरभाविफलसाधनस्योपपत्त्यर्थमन्तरापुण्यपापरूपमपूर्वं कल्पते । ततश्च यागादेरपूर्वद्वारा स्वर्गसाधनत्वं न साक्षात्, तदेव फलापूर्वं तत्करणत्वञ्च प्राचीदिच्याङ्गविशिष्टस्य प्रधानस्य भवति न प्रधानमात्रस्य प्रधानमात्रादेवफलापूर्वजनने फलस्यापि तत एव सिद्धेरङ्गानामानर्थक्यापत्तेः ।

ननु सर्व्वाङ्गविशिष्टस्य प्रधानस्यापूर्वजनकत्वमुक्तम् । आशुतरविनाशिनः प्रधानस्याङ्गसाहित्याभावादिति चेन्न । प्रधानकर्म्मणः स्वरूपेणाङ्गसाहित्याभावेऽपि उत्पत्त्यपूर्वद्वारा साहित्यसम्भवात् । प्रधानस्य सर्वाङ्गसाहित्यसिद्ध्यर्थं प्रधानकर्म्म परमापूर्वयोर्मध्ये प्रधानमात्रजन्यमुत्पत्तिनामकं किञ्चिदपूर्वमस्तीत्यङ्गीकारात् । एवमङ्गानामपि परस्परसाहित्यानामेव प्रधानोपकारकत्वात्तेषां स्वरूपेण साहित्यभावात्, तत्तदुत्पत्त्यपूर्वद्वारा साहित्यं बोध्यम् । अङ्गानां प्रधानोपकारकत्वं नाम प्रधानस्य फलापूर्वजननसामर्थ्याभिमुखीकरणमेव । दर्शपौर्णमासयोस्तु विशेषः । 'यदाग्नेयोष्टाकपालोऽमावस्यायाञ्च पौर्णमास्याञ्चाच्युतो भवती" त्याग्नेय यागो विहितः । ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छदित्यग्नीषोमीय यागो विहितः 'उपांशुयागमन्तरा यजतीति" उपांशुयागः तावन्नूतामग्नीषोमावाज्यस्यैवनावुपांशु पौर्णमास्यां यजन्तीति वाक्यात्

पौर्णमास्यां विहितः। एतानि पौर्णमास्यां प्रधानानि। एषामाग्नेयाग्नीषोमीयोपांशुयागानां तत्तद्वाक्यावगत पौर्णमासीकालसम्बन्धं निमित्तीकृत्य 'य एवं विद्वान् पौर्णमासीं यजते' इति विद्वद्वाक्ये पौर्णमासीपदेनैकवचनान्तेन समुदायरूपेणानुवादः। तेन वेदे यत्र पौर्णमासशब्दः तत्र तत्राग्नेयादिसमुदायोपस्थितिः। ननु यदाग्नेय इति वाक्ये यागवाचकपदस्याश्रवणात् कथं यागविधायकत्वमिति चेन्नैवम्। अग्निर्देवता अस्य पुरोडाशस्येति अर्थे विहितदेवतातद्धितान्त आग्नेयशब्दः। तस्य पुरोडाशपदसामानाधिकरण्याद्द्रव्यदेवतासम्बन्धोऽवगतः। स यागमन्तरा न सम्भवति द्रव्यदेवतासम्बन्धस्य यागादन्यत्र क्रियायामसम्भवात्। यागक्रियायामेव सम्भवो वाच्यः। देवतोद्देशेन द्रव्यत्यागस्य यागरूपत्वाङ्गीकारात्। अतः श्रुतद्रव्यदेवतासम्बन्धानुमितो यागो यजेतेति कल्पितपदेन विधीयते। अग्निदेवत्यपुरोडाशद्रव्यकामावास्यादिकालकर्त्तव्ययागेनेष्टं भावयेदिति। एवं यत्रयत् द्रव्यदेवतासम्बन्धमात्रं श्रूयते सौर्य्यं चरुं निर्वपेदित्यादौ तत्र द्रव्यदेवतासम्बन्धानुमितो यागो विधीयत इति न कश्चिद्दोषः।

ननूपांशुयाजवाक्ये यजिश्रवणेऽपि विधिप्रत्ययलिङादेरभावात् कथं विधायकत्वमिति चेन्नैवं यजतीत्यस्य यजेतेति विपरिणामेन विधायकत्वसम्भवात् एवं यत्र लिङादिर्न श्रूयते 'व्रीहीन् प्रोक्षति' 'समिधो यजति' इत्यादौ तत्र विपरिणामो बोध्यः। केचित्तु यजतीत्यस्य पञ्चमलकारत्वाङ्गीकारात् विधायकत्वसम्भव इत्याहुः। तथा ऐन्द्रं द-

अमावास्यायां ऐन्द्रं पयोमावस्यायामिति वाक्यविहितौ सान्नाय्ययागौ यदाग्नेय इति वाक्यविहिताग्नेयश्चामावास्यायां प्रधानानि। एषां त्रयाणां 'य एवं विद्वानमावास्याञ्च यजते' इति वाक्ये अमावस्यामिति नाम्ना द्वितीयैकवचनान्तेन समुदायरूपेणानुवादः। तेन वेदे यत्र दर्शशब्दोऽमावस्याशब्दो वा श्रुतस्तत्र यागसमुदायोपस्थितिः। त्रिकस्य त्रिकस्यामावास्यापौर्णमासीभ्यां समुदायरूपेण विद्वद्वाक्येऽनुवादस्य प्रयोजनन्तु दर्शपौर्णमासाभ्यां स्वर्गकामो यजेतेत्यादौ द्विवचनोपपत्तिः। अन्यथा षण्णामाग्नेयादि यागानां बहुत्वाद्दर्शपौर्णमासैरिति बहुवचनं स्यात्।

मानान्तरेण प्राप्तार्थस्य पुनः श्रवणमनुवादः। तथा फलवदाग्नेयादिसन्निधावाम्नातानि प्रयाजाज्य भागानुयाज्यादीनि षण्णां यागानामङ्गभूतानि। एवं स्थिते 'दर्शपौर्णमासाभ्यां स्वर्गकामो यजेते'त्यस्यायमर्थः—दर्शपौर्णमासाभ्यां समुदायाभ्यां परस्परसहिताभ्यां स्वर्गापूर्वं कुर्यादिति। तत्र कथं कालद्वयवर्त्तिनोः समुदाययोः परस्परसाहित्यमित्याकाङ्क्षायां स्वरूपेण साहित्याभावेऽपि त्रिकात्रिकादेकैकमपूर्वं जायते। तद्द्वारा द्वयोः समुदाययोः साहित्यमित्युच्यते। एकैकस्य त्रिकस्य त्रिकस्यापि त्रिकापूर्वजनकत्वं कथमित्याकाङ्क्षायां प्रयाजानुयाजादिपूर्वोत्तराङ्गकलाप विशिष्टस्यैकैकस्य त्रिकस्य समुदायापूर्वजनकत्वमुच्यते। एकैकत्रिकस्य सर्वाङ्गसाहित्यं स्वरूपेण न सम्भवतीति त्रिभिर्यागैस्त्रीण्युत्पत्त्यपूर्वाणि जायते तद्द्वारा सर्वाङ्गसाहित्ये अङ्गानामपि प्रयाजादीनां स्वरूपेण प्रधान-

साहित्याभावात्तत्तदुत्पत्त्यपूर्वद्वारा साहित्यं वाच्यम्। तथा च प्रधानजन्योत्पत्त्यपूर्व्वाणां प्रयाजादिजन्योत्पत्त्यपूर्वैः साहित्यं यदस्ति तदेव प्रधानानामङ्गविशिष्टत्वरूपसाङ्गत्वम् एवञ्च पौर्णमास्यामाग्नेयादिजन्यैस्त्रिभिरपूर्वैः प्रयाजादिजन्योत्पत्त्यपूर्वसचिवैः समुदायापूर्वमेकं जन्यते। तथा दर्शेऽपि आग्नेयैन्द्रिद्वयजन्यैस्त्रिभिरपूर्वैरङ्गोत्पत्त्यपूर्वसचिवैरेकं त्रिकापूर्वं जन्यते। ताभ्यान्त्रिकापूर्वाभ्याम् आग्नेयाद्युत्पत्त्यपूर्वत्रितयजन्याभ्यां फलजनकीभूतमहापूर्वं फलापूर्वनामकं जन्यते। ततश्च फलमिति। तथा च सर्वाङ्गोपकृताभ्यां दर्शपौर्णमासाभ्यामपूर्वद्वारा स्वर्गं कुर्य्यादिति फलापूर्वनिष्पत्तये साङ्गप्रधानकर्त्तव्यताबोधको विधिः प्रयोगविधिरिति सिद्धम्।

पुनरपि त्रिविधः। अपूर्वविधिर्नियमविधिः परिसङ्ख्याविधिश्चेति। तत्र यो विधिरत्यन्ताप्राप्तमर्थं प्रापयति स अपूर्वविधिः, यथा दर्शपौर्णमासप्रकरणे ब्रीहीन् प्रोक्षतीति। एतद्विध्यभावे दर्शपौर्णमासीयब्रीहिषु प्रोक्षणं कथमपि न प्राप्नोति। एतद्विधिसत्त्वे तु तत्सम्बन्धिब्रीहिषु प्रोक्षणं प्राप्नोत्येवेत्यत्यन्ताप्राप्तप्रोक्षणप्रापकत्वादयमपूर्वविधिः।

यो विधिः पक्षे प्राप्तमर्थं नियमयति स नियमविधिः तत्रैव ब्रीहीनवहन्तीति। एतद्विध्यभावे दर्शपौर्णमासिकेषु ब्रीहिषूत्पत्ति-वाक्यावगतपुरोडाशोपयोगि-तण्डुल-निष्पत्त्यनुकूलवैतुष्यकार्य्यायावहननवत् कदाचिन्नखविदलनमपि प्राप्नुयादिति तस्मिन् पक्षेऽवहननस्य प्राप्त्यभावात् कार्य्यान्यथोपपत्तेरवहननस्य पाक्षिकी प्राप्तिः स्यात् सत्यस्मिन्

वधौ अवहननेनैव वैतुष्यं कार्यमिति नियमे सति विदलनं तद्भावेन निवर्त्तत इति नियमविधिरयम्। न च वैतुष्यस्य नखविदलनेनापि सम्भवादवहननियमो व्यर्थः प्रयोजनाभावादिति वाच्यम्। अवघातेनैव वैतुष्यकरणे किञ्चिददृष्टं जन्यते इति नियमादृष्टाङ्गीकारात्। नियमेन दृष्टकार्यलाभेऽप्यदृष्टस्योत्पत्तेः। तच्चापूर्वं यागोत्पत्त्यपूर्वद्वाराफलापूर्वे उपयुज्यते तेन नियमापूर्वाभावे फलापूर्वमेव नोत्पद्यत इति कल्पनान्नियमापूर्वस्य न वैयर्थ्यम्। एवं व्रीहिसोमादिनियमविधिषु बोध्यम्।

'द्वयोः समुच्चित्यप्राप्तावितरनिवृत्तिफलको विधिः परिसङ्ख्याविधिः।' यथा चयनप्रकरणे।—'इमामगृभ्णन् रशना मृतस्येत्यश्वाभिधानीमादत्ते' इत्यश्वरशनाग्रहणाङ्गत्वेन मन्त्रविधिः। एतद्विध्यभावे हि रसनाग्रहणप्रकाशको मन्त्रो रसनादानप्रकाशनसामर्थ्यरूपाल्लिङ्गादश्वरशनादान इव गर्दभरशनादानेऽपि नियमेन प्राप्नुयात्। सत्यस्मिन् विधौ अनेन मन्त्रेणाश्वरशनामेवाददीत न तु गर्दभरशना सा तु तूष्णीमेव ग्राह्येति गर्दभरशनानां मन्त्रनिवृत्तिर्भवतीति द्वयोः समुच्चित्यप्राप्तावितरनिवृत्तिफलकत्वादयं परिसङ्ख्याविधिः। पूर्वं दर्शपौर्णमासाङ्गत्वं प्रयाजादीनामुक्तम्।

तत्राङ्गत्वबोधकप्रमाणानि श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थानसमाख्या-भेदेन षट्। तत्र दध्ना जुहुयादित्यग्निहोत्रवाक्यप्राप्तं होमं जुहुयादित्यनेनोद्दिश्य तत् करणत्वेन तृतीया श्रुत्या दधि विधीयत इति श्रुत्या दध्नोऽङ्गत्वम्।

लिङ्गं नाम सामर्थ्यम्। तच्च द्विविधम्। अर्थगतं शब्द-

गतश्चेति। आद्यं यथा स्रुवेणावद्यतीत्यवदानसामान्यश्रवणत्वावगमेऽपि स्रुवस्य सामर्थ्यरूपाल्लिङ्गादाज्यसान्नाय्यादिद्रवद्रव्यस्यावदानविशेषाङ्गत्वं स्रुवेण पुरोडाशाद्यवदानस्य कर्त्तुमशक्यत्वात्। शब्दगतं तु लिङ्गमर्थप्रकाशनसामर्थ्यम्। यथा अग्नये जुष्टं निर्वपामीति मन्त्रस्य निर्वपप्रकाशनसामर्थ्यरूपात् लिङ्गान्निर्वापाङ्गत्वम्। यस्य मन्त्रस्य यत् प्रकाशनसामर्थ्यं तस्य तदङ्गत्वं पदान्तरसमभिव्याहारो वाक्यम्। यथा इषेत्वेति छिनत्तीति अत्र छेदनाङ्गत्वेन इषेत्वेतिमन्त्रवाक्येन विधीयते। यद्वा अग्नये जुष्टमित्यत्रैव अग्नये जुष्टमित्यादिपदानां निर्वपामीत्यनेनैकवाक्यतापन्नत्वान्निर्वपाङ्गत्वम्। प्रकरणं नाम परस्पराकाङ्क्षा। यथा दर्शपौर्णमासाभ्यां स्वर्गकामो यजेतेति अत्र दर्शपौर्णमासाभ्यां स्वर्गापूर्वं कुर्य्यादित्युक्ते भवत्याकाङ्क्षा कथमाभ्यां स्वर्गापूर्वं कर्त्तव्यमिति तथा फलवदाग्नेयादिसन्निधौ समिधो यजति तनूनपातं यजति आज्यभागौ यजतीत्यादिभिः प्रयाजादयः फलरहिताः श्रुतास्तेषां स्ववाक्येषु फलाश्रवणात् भवति प्रयोजनाकाङ्क्षा किमेतेषां प्रयोजनमिति ततश्च प्रयाजादीनां प्रयोजनाकाङ्क्षायां दर्शपौर्णमासयोः कथम्भावाकाङ्क्षायां परस्पराकाङ्क्षालक्षणेन प्रकरणेन प्रयाजादीनां सर्वेषां दर्शपौर्णमासाङ्गत्वं निश्चीयते॥

स्थानं नाम सन्निधिः। यथा सान्नाय्यपात्रसन्निधौ शुन्धध्वमिति मन्त्रस्य पाठात् सन्निधानात् सान्नाय्यपात्रप्रोक्षणाङ्गत्वम्।

समाख्या संज्ञा। यथा अध्वर्युकाण्डप्रतिपादितं कर्म-

गाते आध्वर्यवसमाख्यावशादध्वर्योः कर्तृत्वेनाङ्गत्वम्।
यथा 'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः' इत्या-
दिषु काम्येष्टिसमाख्या तेषु ऐन्द्राग्न्यादियागेषु काम्येष्टि-
याज्यानुवाक्याकाण्डसमाख्यावशादुभावामिन्द्राग्नी इत्या-
दीनां याज्यानुवाक्यात्वेन विनियोगः। विनियोगानामङ्गत्वे-
नान्वयः।

श्रुत्यादीनामेकत्र समावेशे पूर्वपूर्वस्य प्राबल्यम् उत्तरो-
त्तरस्य दौर्बल्यम्। यथा 'कदाचनस्तरीरसीत्यैन्द्र्या गार्ह-
पत्यमुपतिष्ठत इत्यग्निहोत्रप्रकरणे श्रूयते तत्र मन्त्रस्य इन्द्र-
प्रकाशनसामर्थ्यरूपात् लिङ्गादिन्द्रोपस्थानाङ्गत्वे प्राप्ते ऐ-
न्द्र्येति तृतीयाश्रुत्या गार्हपत्यमिति द्वितीयाश्रुत्या च गा-
र्हपत्योपस्थानाङ्गत्वेन विधिना लैङ्गिक इन्द्रोपस्थाने विनि-
योगो बाध्यते श्रुतिर्हि स्वतो विनियोजिका लिङ्गन्त्विन्द्रप्रका-
शनसामर्थ्यमालोच्य 'ऐन्द्र्येन्द्रमुपतिष्ठते' इति श्रुतिकल्पना-
द्वारा विनियोजकमिति वाच्यम्। तच्चात्र न सम्भवति।
यत्र श्रुतिविनियोगो नास्ति 'अग्नये जुष्टं निर्वपामीत्यादौ
तत्र मन्त्रस्य निर्वापप्रकाशनसामर्थ्यमालोच्य अनेन मन्त्रेण
निर्वापं कुर्य्यादिति श्रुतिकल्पनाद्वारा लिङ्गं विनियोजकं
भवत्येव, श्रुतिकल्पनाप्रतिबन्धकाभावात्। तथा 'स्योनन्ते
सदनं करोमि तस्मिन् सीदेत्यत्र तस्मिन्निति तच्छब्दस्य पूर्व-
वाक्यार्थसापेक्षतया एकवाक्यत्वभानाद्वाक्यप्रमाणेन द्वयोरे-
कमन्त्रत्वं भाति लिङ्गेन भिन्नमन्त्रत्वं भाति आद्यस्य सदन-
प्रकाशन सामर्थ्यात्। तस्मिन् सीदेत्यस्य सादनप्रकाशक-
त्वात्। तत्र वाक्यापेक्षया लिङ्गस्य प्राबल्याद्वाक्यं बाधित्वा

लिङ्गेन स्योनन्त इत्यस्य सदनाङ्गत्वं तस्मिन् सीदेत्यस्य सादनाङ्गत्वमिति निर्णयः। स्योनन्त इत्यस्य तस्मिन् सीदेत्यनेनैकवाक्यत्वबलाद्यथाकथञ्चित्सादनसामर्थ्यरूपलिङ्गं कल्पयित्वा अनेन विशिष्टमन्त्रेण सादनं कुर्य्यादिति श्रुत्या स्योनन्तः इत्यस्य शीघ्रं सदने विनियोगे सति तेनैव मन्त्रस्य नैराकाङ्क्षाद्वाक्यप्रमाणात् लिङ्गं कल्पयित्वा श्रुतिकल्पना प्रतिबध्यते विलम्बितत्वादिति लिङ्गेन वाक्यस्य बाधः। एवं वाक्येन प्रकरणस्य, प्रकरणात् क्रमस्य क्रमात्समाख्यायाः बाधो वेदितव्यः। तथा श्रुत्या वाक्यादेरपि बाधः। तदेवमङ्गताबोधकप्रमाणानि श्रुत्यादीनि निरूपितानि।

तत्राङ्गत्वं पारार्थ्यमिति यावत्। परोद्देशेन प्रवृत्तकृतिव्याप्यत्वं पारार्थ्यं प्रयाजादीनां दर्शपौर्णमासोद्देशेन प्रवृत्तपुरुषकृतिव्याप्यत्वात् स्वर्गकामकृतिः दर्शादेः प्रयाजाद्युद्दिश्य प्रवृत्तकृतिविषयत्वाभावान्नातिव्याप्तिः। केवलप्रयाजानुद्दिश्य कस्यचिदपि पुरुषस्याप्रवृत्तेः। तान्यङ्गानि द्विविधानि। सन्निपत्योपकारकाणि, आरादुपकारकाणीति चेति। यान्यङ्गानि साक्षात्परम्परया वा प्रधानयागशरीरं निष्पाद्य तद्द्वारा तदुत्पन्नापूर्वोपयोगीनि तानि सन्निपत्योपकारकाणि। यथा व्रीह्यादिद्रव्याणि तत्संस्कारकावहननप्रोक्षणादीनि अग्न्यादिदेवतातत्संस्कारकयाज्यानुवाक्यापठनादीनि च। अत्र प्रोक्षणादेर्व्रीहिगतातिशयद्वारा अवहननादेस्तुषविमोकादिरूपदृष्टद्वारा व्रीह्यादीनां पिष्टद्वारा पुरोडाशनिष्पादकत्वं तद्द्वारा यागशरीरनिष्पादकत्वं याज्यानुवाक्यादेर्देवतासंस्कारद्वारा देवतायाश्च यागा-

गशरीरनिवर्त्तकत्वं तद्द्वारा तदुत्पत्त्यपूर्वोपयोगित्वञ्च। यागस्य देवतोद्देशेन द्रव्यत्यागरूपत्वात्। द्रव्यदेवते हि यागस्वरूपमिति सिद्धान्ताच्च। एतान्येव सामवायिकानीत्युच्यन्ते॥

आत्मसमवेतापूर्व्वजनकान्यारादुपकारकाणि। यथा प्रयाजःव्यभगानूयाजादीनि। एतानि द्रव्यगतदेवतागतं वा संस्कारं न जनयन्ति। किन्त्वात्मगतमदृष्टं जनयन्तीत्यारादुपकारकाणि। तत्र सामान्यतः कर्म्म द्विविधम्। अर्थकर्म्म, गुणकर्म्म चेति। तत्रात्मगतापूर्व्वजनकं कर्म्मार्थकर्म्म। यथा अग्निहोत्रं दर्शपौर्णमासप्रयाजादिकम्॥

गुणकर्म्म संस्कारजनकम्। तच्च द्विविधम्। उपयुक्तसंस्कारकम्, उपयोक्ष्यमाणसंस्कारकञ्च। तत्र उपयुक्तसंस्कारकं प्रतिपत्तिकर्म्म। उपयुक्तस्य आकीर्णकरस्य द्रव्यस्य विहितदेशे प्रक्षेपः प्रतिपत्तिरिति लक्षणात्। यथा इडाभक्षणकृष्णविषाणप्रासनचतुरवत्तहोमादिकम्‌ नन्विडाभक्षणस्य प्रधानयागोपयुक्ताकीर्णकरपुरोडाशद्रव्यप्रक्षेपात्मकत्वात् प्रतिपत्तित्वं युक्तम्। होमस्य तु यागोपयुक्तद्रव्यसंस्कारकत्वाभावात् कथं प्रतिपत्तित्वम्। होमस्य यागसमानकालीनत्वेन होमसंस्कार्य्यस्य चतुरवत्तादेरुपयुक्तत्वाभावादिति चेदत्राहः। उपयुक्तसंस्कारमात्रं प्रतिपत्तिः न तु प्रधानयागोपयुक्तत्वम्। तथा सति पशोर्विशसनानन्तरं वपाहृदयाद्युद्धरणकालकर्त्तव्यहोलोहितशकृन्निरसनस्य प्रतिपत्तित्वाभावप्रसङ्गात्। यागोपयुक्तद्रव्यप्रक्षेपरूपत्वाभावात्। तथा कृष्णविषाणप्राशनस्यापि प्रतिपत्तित्वं न

स्यात्। यागाङ्गभूतकण्डूयनोपयुक्तत्वेऽपि यागोपपत्त्या-भावात्। अतो यत्र वचनोपयोगमात्रं विवक्षितं यत्र क्वचिदुपयोगः तत्राप्यस्ति वक्षोहृदयादुद्धरणेनोपयुक्त-पशोः सम्बन्धिनः सकृल्लोहितस्याकीर्णवारस्य प्रतिपत्त्यपे-क्षत्वात्। एवं यथा कथञ्चिदुपयोगो होमस्थलेऽप्यस्ति॥

तथाहि, प्रतिपत्तिस्त्रिधा—प्रधानोत्तरकाला, प्रधान-समकाला, प्रधानपूर्व्वकाला चेति। तत्राद्या इडाभक्षणा-दिका। द्वितीया होमादिका। तथाहि—दर्शपूर्णमासप्रक-रणे श्रूयते—'सकृदुपस्तृणाति' 'द्विर्हविषोवद्यति' 'सकृदभि-घारयति' 'चतुरवत्तञ्जुहोति।' तत्र चतुरवत्तवाक्ये होमा-नुवादेन चतुरवत्तद्रव्यं तत्साधनत्वेन न विधीयते। न च यागहोमयोरभेद इति वाच्यम्। देवतोद्देशे द्रव्यत्यागस्य यागशब्दार्थत्वात्। प्रक्षेपविशिष्टस्य यागस्य होमशब्दार्थ-त्वात्। तत्राग्नेयचोदनया यागस्य प्राप्तत्वेऽपि प्रक्षेपा-प्राप्त्या प्राप्तत्वेनानुवादासम्भवात्। किन्तूपस्तरणद्विरव-दानाभिघारणवाक्यैः प्राप्तं चतुरवत्तमुद्दिश्य तत्संस्कार-त्वेन प्रक्षेपो जुहोतीत्यनेन विधीयते। स च संस्कारः प्रति-पत्तिरूप एव। अग्नये जुष्टमभिघारयामीत्यादि निर्देशे-र्यागाङ्गभूताग्न्यादिदेवतार्थतया यथाकथञ्चिदुपयुक्तस्य पुरो-डाशस्य प्रतिपत्त्यपेक्षया यद्दावदानकर्म्मकप्रक्षेपस्य प्रति-पत्तिकर्म्मत्वौचित्यात्। स च संस्कारः प्रधानसमकालः। होमो हि वषट्कृते जुहोतीति विधानात्। वषट्का-रोत्तरञ्चैव अध्वर्युकर्त्तव्यः यागोऽपि तस्मिन्नेव यत्रे या-गस्य करणार्थत्वे वषट्कारेण कारितः सन् यजमानेना-

ष्टँय इति तयोर्योगपद्यसम्भतात् । तदिदं सर्व्वप्रधाधिकरणवार्त्तिके स्थितम् । प्रधानपूर्व्वकाला प्रतिपत्तिर्यथा—शकलं विध्यति लोहितं निरस्यतीति शकलं प्रधानं लोहितनिरसने । इदमपि पश्वावनालम्भात् लोहितशकतोः कर्त्तव्यमित्यधिकरणे स्थितम् ॥

उपयोच्यमाणसंस्कारोऽप्यनेकविधः । साक्षाद्विनियुक्तसंस्कारः । साक्षाद्विनियुक्तस्य यदुपकारकं तत्संस्कारः । विनियोच्यमाणसंस्कारश्चेति । तत्राद्यो यथा—'वत्समालभेतेति । दोहाङ्गत्वेन साक्षाद् विनियुक्तस्य गोद्रव्यस्योपकारको वत्सस्तत्संस्कारकमिदमालम्भनम् । तृतीयो यथा—'तप्ते पयसि दध्यानयतीति' 'अवत्ता वैश्वदेव्यामामिक्षेति वाक्येन तच्छब्देन निर्दिश्य वैश्वदेवयागाङ्गत्वेन विनियोच्यमाणे यत्पयस्तत्संस्कारकत्वाद्विनियोच्यमाणसंस्कारकं दध्यानयनम् । पशुपुरोडाशयागस्तूपयुक्तोपयोच्यमाणदेवता संस्कारार्थः । त्यागांशे अदृष्टार्थश्च अत्र तत्संस्कार्य्याग्निषोमदेवताया वपायागे उपयुक्तार्थत्वात् । हृदयाद्यङ्गयागेषु उपयोच्यमाणत्वाच्च । स्विष्टकृद्यागे द्रव्यांशे देवतांशे च उपयुक्तसंस्कारार्थः त्यागांशे अदृष्टार्थश्च सूक्तवाक् साधनप्रमाणमपि तथैव । उत्तमप्रयाजो । यक्ष्यमाणदेवता संस्कारत्वात्तदंशे उपयोच्यमाणसंस्कारः इतरांशे अदृष्टार्थः हृदयादिर्हविर्योगात्पूर्व्वं क्रियमाणो वसाहोमोऽपि वसांशे प्रतिपत्तिरितरांशे अदृष्टार्थ इत्यादूह्यम् । केचित्तु उपयोच्य माणसंस्काराभिन्नसंस्कारकर्म्मत्वं प्रतिपत्तिकर्म्मत्वम् । चतुरवत्तद्रव्यस्य होमेन भस्मीभूतस्य होमे

ऽपयोरुत्तमाङ्गत्वाभावात्। तद्भिन्नत्वं होमेऽस्तीति लक्षण सङ्गतिः। अत्रायं विशेषः। अर्थकर्म्मणि द्रव्यापेक्षया कर्म्मणा प्राधान्यम्। कर्म्मणि द्रव्यस्य गुणत्वम्। यथा अग्निहोत्रादौ द्रव्यादेर्गुणत्वं, गुणकर्म्मणि द्रव्यस्य प्राधान्यं, द्रव्ये च कर्म्मणो गुणत्वं; ब्रीहीन् प्रोक्षति अवहन्तीत्यादौ द्वितीयया ब्रीहीणां क्रिया साध्यत्वप्रतीतेः क्रियापेक्षया द्रव्यस्य प्राधान्यं प्रोक्षणादिक्रियायास्तदपेक्षया गुणत्वमिति॥

पुनरपि गुणकर्म्म चतुर्विधम्। उत्पत्त्याप्तिविकृतिसंस्कृति भेदात्। तत्रोत्पत्तिसंस्कारो यथा अग्नीनादधीतेति-मन्त्र विशेषैः सर्व्वारेषु निधापितापि आहवनीयादय उत्पद्यन्त इत्याहवनीयाद्युत्पत्तिहेतुभूतसंस्कारजनकत्वादाधानस्य उत् पत्तिसंस्कारत्वम्। आप्तिसंस्कारो यथा 'स्वाध्यायोऽध्ये-तव्य इति अध्ययनेन स्वाध्याय आप्यत इत्याप्तिसंस्कारोऽयम् विकृतिर्यथा-'ब्रीहीन् प्रोक्षतेत। अत्र प्रोक्षणस्य ब्रीहिग-तातिशयरूपसंस्कृतिजनकत्वात् संस्कृतिरूपिगुणकर्म्मत्वम्। अत्र आधानमध्ययनञ्च स्वतन्त्रं गुणकर्म्म न तु क्रत्वङ्गम्। प्रोक्षणादिकं सर्व्वं क्रत्वङ्गम् गुणकर्मेति ध्येयम्॥

अर्थकर्म्म त्रिविधम्। नित्यनैमित्तिककाम्यभेदात्। तत्र 'यावज्जीवमग्निहोत्रं जुहोति' 'सायं जुहोति" 'प्रातर्जुहोति' जीवता पुरुषेण सायं प्रातः कालयोः नियमेन कर्त्तव्यतया अवगतमग्निहोत्रादिकं नित्यम्। अग्नये पथिकृते पुरोडा-शमष्टाकपालं निर्व्वपेदिति दर्शपूर्णमासातिपत्तिनिमित्तक पथि कृदिष्ट्यादिकं नैमित्तिकम्। नित्यनैमित्तिक योरकरणे प्रत्यवाय एव। करणे फलं नास्तीति केचित्।

न्ये तु दुरितनिवृत्तिः फलमस्ति । नित्यनैमित्तिकैरेव ख्याणो दुरितक्षयमित्यादिवाक्यैः प्रत्यवायनिवृत्तेः फलत्वेन श्रूयमाणत्वात् । नचैवं तयोरपि काम्यत्वापत्तिः फलवत्त्वादिति वाच्यम् । फलकामनापूर्व्वकानुष्ठानाभावात् । तत्तद्विधिवाक्ये फलकाममुद्दिश्य तदर्थफलसाधनत्वेन विधानाभावाच्च काम्यत्वानुपपत्तेः ॥

काम्यमपि कर्म्म त्रिविधम् । केवलमैहिकफलकम्, आमुष्मिकम्, ऐहिकामुष्मिकफलकञ्चेति । तत्राद्यं यथा—कारीर्य्यादि । तत्तत्समयवर्त्ति शुष्यत्सस्यसञ्जीवनहेतुवृष्टिकामिना क्रियते । न कालान्तरभाविवृष्टिकामेन जन्मान्तरीयवृष्टिकामेन वा । केवलामुष्मिकफलकं यथा—स्वर्गार्थदर्शपूर्णमासादिकं स्वर्गस्य इहलोकभोग्यत्वाभावात् । ऐहिकामुष्मिकसाधारणफलकं यथा—'वायव्यं श्वेतमालभेत भूतिकाम इति भूत्यादिफलकमित्यत्र विस्तारः । ननु दर्शपूर्णमासादिकर्म्मणां व्रीह्यादिद्रव्याणाञ्च प्रत्यक्षत्वेन लौकिकत्वात् । कथं वेदस्यालौकिकार्थ बोधकत्वमिति चेन्न, कर्म्मणां प्रत्यक्षत्वेऽपि तेषां स्वर्गादि फलसाधनतया कर्म्मकर्त्तव्यताबोधकस्य वेदस्यालौकिकार्थ बोधकत्वात् । एवं व्रीह्यादीनां यागादिक्रियासाधनत्वं न प्रत्यक्षवेद्यमिति तद्बोधकस्यापि वेदवाक्यस्यालौकिकार्थबोधकत्वमिति न दोषः । इदानीं विधिवाक्यस्य विधायकत्वप्रकारः कथ्यते । तत्र स्वर्गकामो यजेतेत्यत्र यजिधातोरुपरितने त-प्रत्यये अर्थद्वयमस्ति । आख्यातत्वं लिङ्त्वं चेति । तत्र आख्यातत्वञ्च सर्व्वलकारसाधारणम् । तदवच्छेदेन लिङ्प्रत्ययः

पुरुषप्रवृत्तिरूपाम् अर्थभावनां प्रतिपादयति । सा चार्थ-
भावना किं? केन? कथमिति अंशत्रयविशिष्टा । तथाहि
यजेतेत्यत्र प्रथमं प्रत्ययेन भावयेदिति प्रतीयते । सुबन्ताभि-
हितानां सर्व्वेषां कारकाणां तिङन्तार्थक्रियान्वयनियमे
सति तिङन्तार्थस्य प्राधान्यात् । तत्र प्रकृत्यर्थापेक्षया
प्रत्ययार्थस्य प्राधान्यात् । प्रथम प्रत्ययार्थभावनाय उपस्थि-
तिर्युक्ता । ततः करोति-समानार्थकं भावयतेः सकर्म्मकत्वात
कम्भावयेदिति कर्म्माकाङ्क्षायां भिन्नपदोपात्तोऽपि स्वर्गो
भाव्यत्त्वेनान्वेति । दुःसाध्यात्मकस्य यागस्य ईप्सिततम-
स्वरूपकर्म्मत्वायोग्यत्वात् । स्वर्गस्य त्वानन्दात्मकत्वेन
ईप्सिततमतया कर्म्मत्वेनान्वययोग्यत्वात् । ततश्च स्वर्गं
भावयेदिति बोधो भवति । ततः केनेति करणाकाङ्क्षायां समा-
न पदोपात्तो यागः करणत्वेनान्वेति । यागेन स्वर्गं कुर्या-
दिति । ततःकथ यागेन सर्गं कुर्य्यादिति कथम्भावाकाङ्क्षायां
अग्न्यन्वाधानावहननादिजन्यदृष्टोपकारेण प्रयाजादिजाति-
तादर्थ्योपकारेण सहितेन यागेन स्वर्गं कुर्य्यादिति । अग्न्य-
न्वाधानप्रयाजादिकमङ्गजातमितिकर्त्तव्यतयान्वेति कथम्भा
वाकाङ्क्षा पूरकत्वमिति कर्त्तव्यतात्वम् । यथा ओदनकामः
पचेदित्यत्र लिङा भावना प्रतीयते । किं भावयेदित्या-
काङ्क्षायाम् ओदनोभाव्यत्वेनान्वेति । केनेत्याकाङ्क्षायां पाके-
नेति लभ्यते । कथमित्याकाङ्क्षायां तण्फुत्कारसहितेनेति ।
ततश्च तण्फुत्कारादयुपकृतेन पाकेन तेजः संयोगेन ओदन-
म्भावयेदिति वाक्यार्थः सम्पद्यते तद्वदेऽपि बोध्यः । स एवं
लिङ्त्वात्र चोदेन शब्दभावनां प्रेरणाख्यामभि धत्ते ।

।कोऽपि गामानयेदित्याचार्य्यवाक्यश्रवणानन्तरम् यमाचार्य्यमाङ्गामानयेति प्रेरयतीति प्रेरणाख्यव्यापारं ात्वैव शिष्यो गवानयने प्रवर्त्तते इत्यन्वयव्यतिरेकाभ्यां रणाज्ञानं प्रवृत्तिकारणं प्रेरणाज्ञानस्य चान्वयव्यतिरे-ाभ्यां लिङादिश्रवणजन्यत्वावधारणात्, लिङादेः प्रेर-ायां शक्तिर्लोके गृह्यते इति वेदेऽपि तत्रैव शक्तिकल्पनौचि-यात्। इयांस्तु विशेषः-लोके गवानयनादिं प्रत्यनुकूल-रणाख्यो व्यापारः प्रयोक्तृपुरुषगताभिप्रायविशेषः, वेदे तु ायोक्तृपुरुषाभावात् लिङादि शब्दनिष्ठ एव स इत्यङ्गीक्रियते अतएव शब्दनिष्ठव्यापारत्वाच्छाब्दीभावनेत्युच्यते यागहो-मादिविषयप्रवृत्तिहेतुत्वात् प्रवर्त्तना प्रेरणेति चोच्यते ।

सैषा शब्दभावनापि अंशत्रयविशिष्टा---तत्र पुरुष प्रवृत्तिरूपार्थी भावना भाव्यत्वेनान्वेति। अध्ययनावगत लिङादिकं करणत्वेनान्वेति। अर्थवादप्रतिपाद्यप्राश-स्त्यज्ञानादा मितिकर्त्तव्यतात्वेनान्वेति। तत्र साङ्गवेदा-ध्येतारोऽधीतव्याकरणनिगमनिरुक्तादिवशाद व्युत्पत्तिमन्तः पुरुषा अध्ययनगृहीतस्वाध्यायगतलिङादिभिः प्राशस्त्यज्ञा-नसचिवैर्यागाद्यर्थस्य कर्त्तव्यत्वेन बुध्वा यागादीनशुतिष्ठे-रन् इति शाब्दीभावनाबोधः। अनुष्ठानं कुर्युरित्यर्थ अनु-ष्ठाने प्रवृत्तिः, तेन पुरुषप्रवृत्तौ शब्दभावना-भाव्यत्वमस्त-तम्। इयञ्च शब्दभावना ज्योतिष्टोमादि प्रातिस्विकयागेषु स्वरूपेण प्रतीयमानापि कर्त्तव्यत्वेन न प्रतीयते। न चात्रा-र्थभावनाया एव विधेयत्वमिति वाच्यम्। 'स्वाध्यायोऽध्येत-व्यः' इति वाक्यस्यार्थभावनाया एव सकलविधिवाक्यस्य

शब्दभावनारूपत्वात्। तथाहि—अधिपूर्व्वकादिङ्ध्ययने इति धातोः कर्म्मणि तव्यःस्वध्यायो विहितकर्म्म च स्वाध्याय प्रधानं, तत्संस्कारमध्ययनं गुणकर्म्म। व्रीहिसंस्कारप्रोक्षणादिवत् अध्ययनजनितग्रहणसंस्कारविशिष्टस्वाध्यायस्य प्रयोजनाकाङ्क्षायां स्वाध्यायगतलिङादिविशिष्टवाक्यसामर्थ्यलभ्य यदनुष्ठानौपयिकयागादिरूपार्थज्ञानं तदेव दृष्टत्वात् तत्कर्म्मानुष्ठानद्वारा स्वर्गादिरूपालौकिकश्रेयः साधनत्वाच्च प्रयोजनं कर्मावबोधं विना कर्म्मानुष्ठानयोगात् न त्वदृष्टं प्रयोजनं, दृष्टफले सम्भवत्यदृष्टफलकल्पनायोगात्। तथाच स्वाध्यायविधिनैव स्वाध्यायगतविधिवाक्यगतलिङादिप्रतिपादिताः सर्व्वाः शब्दभावनाः अंशत्रयविशिष्टाः कर्त्तव्यत्वेन विधीयते। साङ्गवेदाध्ययनव्युत्पन्नाः पुरुषाः अध्ययनगृहीतस्वाध्यायगतलिङादिभिरर्थवादावगतप्राशस्त्यरूपाङ्गसचिवैः फलवद्यागादिकर्त्तव्यतां बुध्वा यागादीननुतिष्ठेयुरिति, अनुतिष्ठेयुः प्रवृत्तिं कुर्युरित्यर्थः। तत्र पुरुषप्रवृत्तेर्भाव्यत्वेनान्वयात्; अध्ययनावगतलिङादेः करणत्वेनान्वयात्, प्राशस्त्यज्ञानस्येतिकर्त्तव्यतात्वेनान्वयात्. शब्दभावनाया अपि अंशत्रयवैशिष्ट्यम्। अर्थभावनाया इव दृष्टं तत्र समीहितस्वर्गादिभाव्यकत्वमानमपि विधिवशादेव प्रवर्त्तनायाङ्गविधिः, यागादेः पुरुषार्थसाधनत्वे तत्र पुरुषं प्रवर्तयितुं शक्नोतीति स्वाभाव्यपुरुषप्रीतिविषयस्य यागादेः पुरुषाभिलषितस्वर्गादिसाधनत्वमापादयति। अन्यथा स्वप्रवर्त्तनात्वमेव न स्यात्। प्रवृत्तिहेतुव्यापारस्यैव प्रवर्त्तनत्वात्। तडादिस्थले तु

प्रवर्त्तनात्मकविधेरभावादर्थभावनायाः पुरुषार्थभाव्यत्व-नियमो नास्ति।

भावनात्वं नाम भवितुः प्रयोजकव्यापारत्वम्। तत्रार्थभावनायाम्। भवितुर्जायमानस्य स्वर्गादेः प्रयोजकव्यापारत्वात् लक्षणसङ्गतिः। शब्दभावनायामपि पुरुषप्रवृत्तिरूपस्य भवितुः प्रयोजकव्यापारत्वात् लक्षणसङ्गतिः। ननु 'ज्योतिष्टोमेन स्वर्गकामो यजेदित्यत्र यागेन स्वर्गं भावयेदित्यर्थवर्णने ज्योतिष्टोमपदस्य कथमन्वयः?–इति चेन्न, भावनाकरणत्वेनाभिमतयागनामत्वेनान्वयात् = ज्योतिष्टोमनामकेन यागेनेति। कथं तन्नामत्वमिति चेन्न, ज्योतिराख्यास्त्रिविदादिस्तोमा अस्मिन् सन्तीति व्युत्पत्त्या यागनामत्वात्। यागस्य त्रिविदादिस्तोमसम्बन्धः केनावगम्यते? इति चेन्न, त्रिवृत् पञ्चदशः सप्तदशः स्तोमा इति वाक्यान्तरेण एतच्छब्दार्थस्य तत्सम्बन्धावगमात्, एवं शास्त्रोक्तैस्तत्प्रख्यादिभिर्हेतुभिस्तत्र नामत्वं बोध्यम्, शास्त्रे हि तत्प्रख्यतद्व्यपदेशयौक्तिकवाक्यभेदैश्चतुर्भिर्नामत्वं प्रतिपादितम्। तथाहि–'अग्निहोत्रं जुहोतीत्यत्र 'अग्निहोत्रशब्देन अग्निदेवतारूपो गुणो न विधीयते। अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोतीति वाक्यविहितेन मन्त्रेण देवतायाः प्राप्तत्वात्, किन्तु अग्निप्रख्यापकम् अग्निप्रापकं यच्छास्त्रान्तरम् 'अग्नीर्ज्योतिर्ज्योतिरग्निरित्यादिकं तेन प्राप्तमग्निसम्बन्धं निमित्तीकृत्य अग्नये होत्रं होमोऽस्मिन्निति बहुव्रीहिणा अग्निहोत्रपदस्य होमनामधेयत्वम्। न च होमस्य वाचिन्याम् अर्थभावनायां करणत्वात् तन्नामत्वे अग्निहो-

त्वेनेति तृतीया स्यात्। ज्योतिष्टोमेनेति वदिति वाच्यम्। द्वितीयाया एव लक्षणया करणार्थकत्वात्-'नासाधितं करणमिति' न्यायेन असाधितस्य करणत्वायोगात। अर्थात् प्रासहोमगतसाध्यत्वानुवादकत्वेन वा द्वितीयोपपत्तेरिति तत्प्रख्यन्यायात् यागनामधेयं न तु यागाङ्गत्वेन श्येनपक्षिरूपगुणविधिः, यथाह वै-'श्येनो निपत्यादत्ते य एवमेवायं द्विषन्तभ्रातृव्यं शत्रुं निपत्यादत्त इत्युपमानोपमेयव्यपदेशानुपपत्तिप्रसङ्गात्, श्येनपक्षी यथा पक्ष्यन्तरं निपत्यादत्ते एवमयमपि श्येननामकः कर्मविशेषो भ्रातृव्यं शत्रुं निपत्यादत्ते इति व्यपदेशः। कर्मनामत्वपक्ष एव युज्यते, यागाङ्गतया श्येनपक्षिविधौ स्वस्य स्वेनैव उपमानोपमेयभावः स्यात्। स चायुक्तः; तस्मात् श्येनपदं नामधेयम्। ततश्चाभिचरन् शत्रुवधकामः श्येननामकेन यागेन अभिचारं भावयेदिति वाक्यार्थः।

नन्वेवमप्यभिचारस्यापि वेदोक्तत्वात् आभिचारिके कर्म आस्तिकानामपि प्रवृत्तिः स्यादिति चेन्न। वेदोक्तोऽप्यभिचारो वेदविहितो न भवति, फलत्वात्। फलं न विधेयं किन्तु फलमुद्दिश्य तत्साधनत्वेन कर्मैव विधेयमिति सिद्धान्तात्। अतोऽभिचारस्याविहितत्वेन प्रत्यवायजनकत्वम्। एवम् उद्भिदा यजेत पशुकाम इत्यत्र पशुरूपफलाय विधित्सितस्य यागस्य उद्भित्पदं नामधेयं, न तु यथाकथञ्चित् प्राप्तयागमुद्दिश्य तदङ्गतयोद्भिद्रूपगुणविधिर्द्रव्यादिवदुद्भिन्नामकस्य गुणस्य अप्रसिद्धत्वात्। यागे तूद्भिद्यते फलमनेनेति यौगिकवृत्तिसम्भवात् यागनामत्वम्। ननु उद्भिद्यते भूमो अनेनेति

योगवशेन खनित्त्रादा वप्युद्भिदः प्रयोगसम्भवात खनित्त्रादिगुणविधिः किन्नस्यादिति चेन्न,एतादृशस्थले गुणविधिः क्वापि वक्तुं न शक्यते' विरुद्धत्त्रिकद्वयसमावेशाख्यदोषसङ्गात् ।

तथाहि—'उद्भिदा यजेत पशुकाम इत्यत्र मानान्तरेणाप्राप्तस्य यागस्यानुवादासम्भवात् पशुकर्म्मकभावनायां करणत्वेन यागो विधेयः यागेन पशून् भावयेदिति' ततश्च यागस्य विधेयत्वं फलं प्रति शेषतया प्रतीयमानत्वाद् गुणत्व शेषतया अङ्गतयेत्यर्थः । फलसिद्ध्यर्थं पुंसानुष्ठेयत्वात् उपादेयत्वमिति विधेयत्वगुणत्वोपादेयत्वात्मकमेकं त्रिकम् यागे अस्ति,तथा यागोद्देशेनोद्भिद्गुणविधित्सितगुणापेक्षा प्राधान्यम् उद्देश्यत्वं मनु वाद्यत्वमिति द्वितीयं त्रिकम् तदेतत् त्रिकद्वयपरस्परविरुद्धम् एकस्मिन् यागे प्रसज्येत । अतो न गुणविधिः । न च सोमेन यजेतेत्यत्र विरुद्धत्रिकादिकम् विनैकसोमशब्दस्य सोमयागे लक्षणामङ्गीकृत्य सोमवता यागेनेष्टं भावयेदिति सोमविशिष्टयागविधानाद् यथा सोमरूपगुणविधिः तद्वदुद्भित्पदस्यापि मत्वर्थलक्षणयाऽत्रोद्भिद्गुणविशिष्टयागविधिः स्यादिति वाच्यम् । सोमादौ गत्यन्तराभावान्मत्वर्थलक्षणाया विशिष्टविध्यङ्गीकारादुद्भिदादौ नामत्वेनगतिसम्भवाद्विशिष्ट विध्यङ्गीकारायोगात् तस्माद्योगवशादुद्भिदादीनानां मत्त्वम्; तथा चित्रया यजेत पशुकाम इत्यत्र चित्रापदं प्राजापत्य नामधेयम् दधिमधुघृतमापोधानास्तण्डुलास्तत्संसृष्टं प्राजपत्यमिति सामानाधिकरण्याद्योदध्यादिद्रव्यषट्कस्य प्रजा

प्रतिदेवतासम्बन्धः श्रुतः तेनानुमितो यागो विधीयते विहितस्य यागस्य फलाकाङ्क्षायां 'चित्रया यजेतेति वाक्यं' फलसम्बन्धविधायकं तत्र फलार्थत्वेन पुनर्विधिरिति तस्य प्राजापत्ययागस्य दध्यादिविचित्रद्रव्यकत्वात् चित्रापदम् नामधेयम्, नत्वग्नीषोमीयं पशुमालभेतेतिवाक्यप्राप्तं पशुयागं यजेतेत्यनूद्य चित्रत्वस्त्रीत्वगुणद्वयविधानम् मानान्तरप्राप्तकर्मोद्दिश्य तत्रानेकगुणविधाने वाक्यभेदात्। तदुक्तम् 'प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः' इति, मानान्तरप्राप्तकर्मत्वे नैकदेवताष्टाकपालपुरोडाशाभावा-स्त्पौर्णमास्याद्यनेकगुणविशिष्टो द्रव्यदेवतासम्बन्धेनानुमितो यागो विधीयत इति सिद्धान्तात्। तदुक्तम् 'अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः' इति।

अथ यथा पशुना यजेतेत्यत्र मानान्तरप्राप्तयागमुद्दिश्य तथा पशुनेत्येकपदोपात्तानां पशुद्रव्यतद्गतलिङ्गसङ्ख्यादीनां त्रयाणां वाक्यभेदं विनैव विधिरङ्गीकृतः तद्वदत्राप्येक पदोपात्तचित्रात्वस्त्रीत्वविशेषितपशुद्रव्यकारकस्य विधानान्न वाक्यभेदः अतएव तत्र विधेयस्य पशोरुपादेयत्वात् तद्गतमेकत्वं यागाङ्गतया विवक्षितमित्येकेनैव पशुना यष्ट-व्यम्। 'ग्रहं सम्मार्ष्टी'त्यत्र उद्देश्यगतत्वादेकत्वमविवक्षित-मिति सिद्धान्तप्रवादः कथम्? ग्रहं सम्मार्ष्टीत्यत्र ग्रहमिति द्वितीयया ग्रहस्येप्सिततमत्वेनोद्देश्यत्वात् प्रयोजनवत्त्वाच्च प्राधान्यं गम्यते। संमार्गस्तु ग्रहं प्रति गुणभूतः 'प्रतिप्रधानं गुण आवर्त्तनीय' इति न्यायात् यावन्तो ग्रहास्तेषां सर्वेषां संमार्ग इति निश्चये सति, कति ग्रहाः सम्मार्जनीयाः इति

बुभुत्साया अभावादुद्देश्यगतमेकत्वं श्रूयमाणमप्यविवक्षितम्
यद्ग्रयते नेदमुद्देश्यगतं किन्तु स्वयं विधेयं,ग्रहं संमृज्यात्
तच्चैकमिति तथा सति बोधीयभेदाद्वाक्यभेदः स्यात्।
तथा बुभुत्साया अभावात् विधिनायोगाच्चोद्देश्यगता सङ्ख्या
न विवक्षिता. उद्देश्यगतमपि विशेषणं किञ्चिद्विवक्षितं,
यस्य विशेषणस्य विवक्षां विना उद्देश्यप्रतीतिर्न पर्यवस्यति
यदा तत्रैव ग्रहत्वं विवक्षितं तद्विवक्षां विना उद्देश्य-
स्वरूपस्य ज्ञातुमशक्यत्वात्। तेन पञ्चजातीयसाधनसोम-
यागापूर्वार्थत्वाच्चमसेषु न संमार्गइति स्थितम्। 'पशुना
यजेतेत्यत्र यागम् प्रति पशुर्विधेयत्वाद् गुणभूतः,प्रतिगुणं
प्रधानावृत्तिर्नास्तीति कियता पशुना यागः कर्त्तव्यः?
इत्याकाङ्क्षायाम् एकवचनेन प्रतीयमानं विधेयगतमेकत्वं
विवक्षितम्, बुभुत्सितत्वात्। किञ्च लिङ्गसङ्ख्याविशेषितस्य
पशुद्रव्यरूपकारकस्य एकपदोपात्तस्य विधेयत्वाद्विधेयपशु-
द्वारा तद्गतलिङ्ग सङ्ख्यादेरपि एकपदोपात्तस्य विधेयत्वाद्वि-
धेयपशुद्वारा तद्गतलिङ्गसङ्ख्यादेरपि क्रियाङ्गत्वादेकत्वम् वि
वक्षितम् अथवा तृतीयया विभक्त्याभिहिततया करणकारक
शक्त्याश्रयतात् क्रतयोः प्रातिपदिकार्थपशुद्रव्येण सम्बन्धमना
दृत्य तदेव साक्षात् क्रियाङ्गत्वेन विधाने सति पश्चादरुणै
कहायनीन्यायेन परस्परमन्वयः। यागाङ्गत्वेनाभिहितो पः
स एकः पुमांश्चेति। यथा—'अरुण्या पिङ्गाक्ष्या एकहायः
गवा सोमं क्रीणातीत्यत्र कारकाणां क्रियान्वयनियम
करणविभक्तिभिरारुण्यपिङ्गाक्षीत्यादीनां चतुर्णां परस्पर
नन्वितानामेव सोमक्रयणाङ्गत्वेन अन्वये सति अरुण्यादे

णस्यामूर्त्तस्य सतः क्रियासाधनत्वायोगात् क्रियासाधनैक-हायनीगोपरिच्छेदकत्वेन पश्चात् परस्परं पार्ष्टिकान्वयः-- या एकहायनी गौः सा पिङ्गाक्षी अरुणेति। तद्वत् तदेव-मुद्देश्यगतविशेषणमविवक्षितम्, उपादेयगतं विवक्षितमिति स्थितम्। एवञ्च चित्रपदेन चित्रा-स्त्रीत्वोभयविशेषितपशु-कारकस्य यजेतेति, यदानुदितेऽग्नीषोमीयपशुयागं विधातुं शक्यत्वात् कथं नामत्वमिति चेन्न, तथा सति प्रकृतस्य प्राजापत्ययागस्य फलसम्बन्धाकाङ्क्षस्य हायनमप्रकृताग्नी-षोमीययागस्य कल्पना च न स्यात्। तत् द्वयमयुक्तम्। तस्माच्चित्रापदं कर्मनामधेयम्, एवं तत्प्रख्यादिभिरन्यत-रेण सर्वकर्मनामत्वमूह्यम्॥

इत्थं विधिवाक्यस्य प्रामाण्यं विचारितम्॥

## अथ अर्थवादविचारः।

अर्थवादानान्तु स्वार्थपरत्वे प्रयोजनाभावादध्य-यनविधिवशेन फलवदर्थज्ञानार्थत्वस्यावश्यकत्वाद्विधेयग-तप्राशस्त्यप्रतिपादनद्वारा विधिवाक्यतया प्रामाण्यम्। स चतुर्विधः—निन्दाप्रशंसा-परकृति-पुराकल्पभेदात्।

तत्र निन्दार्थवादो यथा— 'अ-सत्रं वा एतद् यदच्छ-न्दोमम् अश्रुजं हि रजतं यो बर्हिषि ददाति पुरास्य सम्वत्सराद् गृहे रुदन्ति।'

प्रशंसा यथा—'शोभतेऽस्य मुखं य एवं वेद वायुर्वै क्षे-पिष्ठेत्येवमादिः।

परैरिदं महता पुरुषेण कर्म कृतमिति प्रतिपादको-

ऽर्थवादः पर कृतिः, यथा—'अग्निर्वा अकामयतेत्यादिः ।

परप्रवक्तृकार्य्यादिप्रतिपादकः पुराकल्पः, यथा—तम शपद् धिया धियात्वा च ध्यासुरित्यादिः ।

तत्र, निन्दार्थवादस्य विधेयान्यनिन्दाद्वाराविधेयप्राशस्त्यपरत्वम् अस्रजमित्यादिरजतनिन्दाद्वाराय विधेयभूतरजतदाननिषेधप्राशस्त्यपरत्वे विरोधाभावात् इतरेषां त्रयाणां साक्षात् प्राशस्त्यपरत्वमेव । वायुर्वा इत्यर्थवादस्य वायुः क्षिप्रगामित्वादतीव प्रशस्तदेवता, अतस्तद्दैवत्यं कर्म्म प्राशस्त्यमिति विधेयदेवतावगतप्राशस्त्यप्रतिपादनद्वारा विध्येकवाक्यत्वम् । अग्निर्वा अकामयतेत्यस्य अग्निदेवत्यो यागः पूर्वकाले अग्निना कृतत्वात् प्रशस्तः आधिक्यत्वादिदानीमपि अन्यैर्यजमानैरवश्यं कर्त्तव्यमिति विधेयकर्म्मगतप्राशस्त्यद्वारं विध्येकवाक्यत्वम् । एवमन्यत्रापूह्यम् । क्वचित् कार्य्यान्तरमप्यस्ति, यथा—'अक्ताः शर्करा उपदधातीति'विधावक्ता इतिपदेन द्रवद्रव्यसामान्यं प्रतीयं तत्र द्रव्यं किमिति सन्देहे 'तेजो वै घृतमित्यर्थवादार मन्त्राणामध्ययनविधिना कृत्स्नस्वाध्यायस्य फलवदर्थज्ञा नार्थत्वमेव नत्वदृष्टार्थत्वं दृष्टे सम्भवत्यदृष्टकल्पनायोगात् प्रयोगकाले कर्म्मज्ञानं विना कर्म्मानुष्ठानायोगात् कर्मो पयिकमर्थज्ञानं मन्त्रैः क्रियते । न चोपदेष्टृवचनादिन प्यर्थस्मरणसम्भवादनुष्ठानोपपत्तिरिति वाच्यम् । मन्त्रैरेवार्थं स्मृत्वानुष्ठाने सति फलं भवति नान्यथेति नियमाङ्गीकारात् । नियमेनादृष्टस्याङ्गीकारात् तदभावे त

न्याद्दष्टलोपे तन्मूलं न सिध्यतीति कल्पनात्।

नन्वेवं मन्त्राणां स्वस्वप्रकाश्येऽर्थे विनियोग इति फलितं विनियोगो नाम शेषत्वे नान्वयः'शेषत्वेनाभाङ्गत्वं; ततश्च 'इमामगृभ्णन् रशनामिति मन्त्रस्य रशनाग्रहणसामर्थ्यमस्तीति रशनाग्रहणप्रकाशनसामर्थ्यरूपात् लिङ्गादेव रशनाग्रहणाङ्गत्वोपपत्तेः, 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते' इति वचनं किमर्थमिति? चेत्—न, परिसङ्ख्यार्थं स्यात्। चयनप्रकरणे अश्वरशनाग्रहणं गर्दभरशनाग्रहणञ्चेति द्वयमस्ति, तत्र लिङ्गादश्वरशनायां मन्त्रप्राप्तावुच्यमानायां लिङ्गाविशेषाद्गर्दभरशनायामपि मन्त्रः, अतो अश्वरशनायामेव मन्त्रः कार्य्यः न गर्दभरशनायामिति मन्त्रनिवृत्तिरूपपरिसङ्ख्यार्थोऽयं विधिः।

सा च परिसङ्ख्या त्रिदोषा स्वार्थत्यागः—परार्थस्वीकारः, प्राप्तबाधश्चेति। तत्राश्वाभिधानीमादत्त इति वाक्यस्य अनेन मन्त्रेणाश्वरशनादानं कुर्य्यादिति स्वार्थः, स च त्यक्तः; गर्दभरशनातो मन्त्रनिवृत्तिः परार्थः, स च स्वीकृतः; गर्दभरशनायामपि लिङ्गात् प्राप्तस्य मन्त्रस्य अनेन बाधश्चेति त्रिदोषा परिसङ्ख्या गत्यभावादङ्गीकृता गत्यन्तरे सति सा न युक्ता।

एवमष्टदोषदुष्टविकल्पोऽप्यगतिकोऽङ्गीकृतः। यथा यदाग्नेयोऽष्टाकपालः संस्कृतः पुरोडाशो यागाङ्गत्वेनावगतः। तत्र अपूपविशेषस्य पुरोडाशप्रकृतिद्रव्याकाङ्क्षायाम् अनियमेन

यत्र कस्यचिद्द्रव्यस्य प्राप्तौ 'व्रीहिभिर्यजेतेति'वाक्यात् व्रीहयो नियम्यन्ते, एवं 'यवैर्यजेते'तिवाक्याद्यवा अपि नियम्यन्ते। तयोरेकार्थत्वाद्विकल्पः। एवम् 'अतिरात्रे षोडशिनं गृह्णातीति प्रतिषेधात् ग्रहणाभावो विहितः, तयोर्ग्रहणाग्रहणयोः परस्परविरुद्धयोः एकस्मिन् प्रयोगे अनुष्ठानासम्भवात् क्वचित् प्रयोगे ग्रहणानुष्ठानं प्रयोगान्तरे तदभावानुष्ठानमिति तत्रापि विकल्पः।

स चाष्टदोषदुष्टः। तथाहि, पूर्वं व्रीहिप्रयोगे यवशास्त्रस्य स्वार्थानुष्ठापकत्वलक्षणप्रामाण्यपरित्यागः, अननुष्ठापकत्वलक्षणाप्रामाण्यस्वीकारः, ततो द्वितीयप्रयोगे यवानुष्ठाने पूर्वं त्यक्तं यत् प्रामाण्यं तत्स्वीकारः, स्वीकृतं यद प्रामाण्यं तत्परित्यागश्चेति यवशास्त्रे चत्वारो दोषाः। एवं पूर्वं यवप्रयोगे व्रीहिशास्त्रस्य स्वार्थानुष्ठापकत्वलक्षणप्रामाण्यपरित्यागः, अननुष्ठापकत्वलक्षणं यदप्रामाण्यं तत्स्वीकारः, पुनर्द्वितीयप्रयोगे व्रीह्यनुष्ठाने व्रीहिशास्त्रस्य त्यक्तप्रामाण्यस्वीकारः, स्वीकृताप्रामाण्यपरित्यागश्चेति व्रीहिशास्त्रे चत्वारो दोषाः। इत्यष्टदोषदुष्टो विकल्पः।

क्वचिदेकार्थत्वादेककार्यकारित्वादित्यर्थः, यथा व्रीहियवादौ, तत्र व्रीहियवयोरेकस्य पुरोडाशनिष्पादनक्षमत्वाद्विकल्पः। क्वचित् वचनबलात्, यथा 'बृहत्पृष्ठं भवतीति बृहन्नामसाध्यं पृष्ठनामकं स्तोत्रं विहितं, 'रथन्तरपृष्ठं भवतीति रथन्तरनामसाध्यं पृष्ठस्तोत्रान्तरं विधीयते। स्तोत्र प्रयाजादिवदपूर्वार्थत्वादर्थकर्मसामानामुपकारकत्वात् ए-

कर्म' स्तोत्रसाधनीभूतस्तोत्रियातराभिव्यक्तिरूपसंस्कारद्वारा साम्नां स्तोत्रसाधनत्वाङ्गीकारात 'प्रगीतमन्त्रसाध्यमित्यादिगुणिनिष्ठगुणाभिधानं, स्तोत्रं—प्रगीतमन्त्रसाध्यं सामाभिव्यक्त्यक्षरसाध्यमित्यर्थः। 'अप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं, शस्त्रं—गानक्रियाविशेषः साम, स्तोत्रसाधनीभूतऋचः स्तोत्रीयाः' तद्गतत्रिवृत्पञ्चदशत्वादिसङ्ख्याविशेषः स्तोमः—इत्येतेषां भेदः। तथाच-बृहद्रथन्तरपृष्ठयोः भिन्नापूर्व्वार्थत्वेन एकार्थत्वाभावेऽपि 'बृहता पृष्ठं कार्यं, 'रथन्तरं वा पृष्ठं कार्य्य'मिति वचनबलादेव विकल्पः। क्वचित् व्यवस्थितविकल्पः, द्वितीयप्रयाजादिकर्म्मणि,-नाराशंसतनूनपात् मन्त्रयो एकार्थत्वाद्विकल्पः, स च राजन्यवशिष्ठातां नाराशंसो द्वितीयप्रयाजस्तनूनपादन्येषामिति वाक्यात व्यवस्थित इति व्यवस्थितविकल्पः।

तदेवं चोदनापरपर्य्यायाणां विधिवाक्यानाम् अंशत्रयविशिष्टभावना विधायकत्वात् प्रामाण्यम्। उद्भिदादीनां नामतयाऽर्थवादानां विधेयप्राशस्त्यपरतया मन्त्राणामनुष्ठेयार्थस्मारकतया प्रामाण्यमिति कृत्स्नस्य वेदस्यालौकिके धर्माऽधर्मार्थ्ये प्रामाण्यं स्थितम्।

स्मृतीनामपि मन्वादिप्रणीतानां वेदमूलकत्वात्स्मार्त्तादिष्टकादौ प्रामाण्यम्। 'औदुम्बरी सर्वा वेष्टयितव्ये'ति प्रमाणम्' उद्गाता स्पृशन् गायेदिति प्रत्यक्षश्रुतिविरुद्धत्वात्। सर्ववेष्टने सति स्पर्शस्य असम्भवात् कर्त्तुमशक्यत्वात्।

तथा शिष्टाचारोऽपि स्मृतिद्वारा श्रुतिमूलकत्वात् प्रामा-

ण्यम्। मातुलसुता परिणयनादिशिष्टाचारस्याप्रमाण 'मातुलस्य सुतामूढ़े'त्यादिस्मृत्या निषिद्धत्वेन स्मृतिविरुद्ध-त्वात्। तदेव श्रुतिस्मृत्याचाराणां धर्माधर्मयोः प्रामाण्यमु-क्तम्। सच धर्मः परस्परं भिन्नः। भेदकप्रमाणानि तु शब्दान्तरादीनि। तथाहि यागदानहोमानां यजतिददा-तिजुहोतीत्यपर्यायशब्दप्रतिपाद्यत्वाच्छब्दान्तराद्भेदः। स्व स्वत्वनिवृत्तिपूर्वकं परस्वत्वापादानम्। समिधोयजतो त्यादीनां पञ्चानां वाक्यानां मध्ये एकस्य कर्मविधायक त्वमन्येषां तस्मिन् कर्मणि गुणविधायकत्वमित्यत्र नियाम-काभावात्सर्वेषां सर्वविधायकत्वे स्थिते विहितस्य कर्मणः पुनर्विधानं व्यर्थमिति पुनर्विधानसामर्थ्यात् पूर्ववाक्यविहि तकर्मापेक्षयोत्तरोत्तरवाक्यविहितस्य कर्मणो भेदः सिध्यती त्येतादृशस्थलेऽभ्यासविशेषम्. पुनःश्रुतिरूपाद्यजतिपदाभ्यासात कर्मभेदः। तिस्र आहुतीर्जुहोतीत्यत्र जुहोतिपदाभ्यासा भावेऽपि जुहोतीत्यष्टहोमे त्रित्वसङ्ख्यान्वयात्परस्परभिन्ना स्तिस्रो होमा इति सङ्ख्यातः कर्मभेदः। अथैष ज्योतिर एव विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजे तेति ज्योतिष्टोमप्रकरणे श्रुतानामपि ज्योतिराख्यानां या गानां ज्योतिष्टोमापेक्षया भेदः। भिन्नसंज्ञावशादेव त ग्राणां परस्परं भेद इति संज्ञया कर्मभेदः। तप्ते पयसि दध्यानयति वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनमि त्यत्र सा वैश्वदेवीति वाक्यविहिते देवतामिक्षाद्रव्यम स्यास्त्वमिता या ... यदेन, वाजिनमित्यत्रापि वाजिदे

